## ॥ अथैतरेयोपतिषत् सभाष्या प्रारभ्यते ॥ १६ ॥

ॐ नमोनारायणाय ॥ अथैतरेयोपनिषद्भाष्यम् ॥ ॥ ॐ ॥ नारायणंनिखिलपूर्णगुणैकदेहंसर्वज्ञम
च्युतमपेतसमस्तदोषम् ॥ प्राणस्यसर्वचिदचित्परमेश्वरस्यसाक्षादधीश्वरमियांशरणंरमेशम् ॥ प्रादुर्बभू
वभगवांस्तपसेनरायानारायणोब्जजसुतस्यविशालनाम्नः ॥ तस्मिन्गतेध्वरमभूत्सुरविप्रसंघोनिश्चेतनस्तद
नुपद्मभवोमुमस्तौत् ॥ तेनस्तुतःसभगवान्गिरिशेंद्रमुख्यान्सर्वानबोधयदजेनसहैवतेथ ॥ दासत्वमापुर
तएवमहत्सुराणांदासत्वतःसमहिदासइतिप्रसिद्धः ॥ शृण्वत्सुतेषुभगवानवदद्रमायैदिव्यांश्रुतिंसपरमोतिमु
दैतरेयीम् ॥ सावह्वृचैःप्रपठिताचतुराननास्याद्यस्यांरहस्यमुदितंपरमंहिविष्णोः ॥ महाभूतिःश्रुतिःसैषाम

**अथैतरयोपनिषत्॥हरिःॐ एषपंथाएतत्कर्मैतद्ब्रह्मैतत्सत्यंतस्मान्नप्रमाद्येत्तन्नातीयान्नह्यत्या
यन्पूर्वेयेत्यायंस्तेपराबभूवुस्तदुक्तमृषिणाप्रजाहतिस्रोअत्यायमीयुर्न्य१न्याअर्कमभितोविवि
श्रे । बृहद्धतस्थौभुवनेष्वंतःपवमानोहरितआविवेशेतिप्रजाहतिस्रोअत्यायमीयुरितियावैता
इमाःप्रजास्तिस्रोअत्यायमायंस्तानीमानिवयांसिवंगावगधाश्चेरपादान्यन्याअर्कमभितोविवि
श्रइतिताइमाःप्रजाअर्कमभितोनिविष्टाइममेवाग्निंबृहद्धतस्थौभुवनेष्वंतरित्यदउएवबृहद्भुवने**

हाभूतिर्यतोहरिः ॥ विशेषेणात्रकथितःसर्वज्ञःशाश्वतःप्रभुरित्यृक्संहितायाम् ॥ एषएवसदापंथाभगवा
न्पुरुषोत्तमः ॥ नित्यंस्वप्राप्तिहेतुत्वात्कर्तृत्वात्कर्ममातृतः ॥ ब्रह्मैषगुणपूर्णत्वात्सत्यंसाधुस्वरूपतः ॥ का
पितंविस्मरेन्नैवत्यक्त्वातंनेतरंव्रजेत् ॥ पूर्वेनैनंतत्यजुर्हिब्रह्माद्यास्तेनसंस्तुतेः ॥ मुक्ताश्रीश्चतदत्यागान्नि
त्यमुक्तागुणाधिका ॥ विहायस्ययनात्प्रोक्तावयांसीतिपिशाचकाः ॥ वर्तितज्ञानतोवंगानरास्तौरवनंस
दा ॥ अन्नरूपैर्गृध्रवोहिवंगावगधनामकाः ॥ राक्षसाअसुराईरपाद्राइतिसमीरिताः ॥ धर्मोज्ञानंचवै

पतिरेवच ॥ अहमुक्थमितिह्येतांविद्यामनुभवत्यसौ ॥ पृथक्पृथक्कृतस्यांगान्युक्थानिजगदीशितुः ॥ अ
ग्निवातदिनेशानामुत्थानानिपृथक्पृथक् ॥ वदनंनासिकानेत्रमित्येतानिपरात्मनः ॥ तृचाशीतिर्विभिन्नस्य
शस्त्रस्यान्नत्वहेतुतः ॥ विष्णोस्तृचाशीतिवत्स्यात्प्रसिद्धान्नमितिस्फुटम् ॥ अन्नाभिमानिदेवश्चतृचाशीत्या
श्चदेवता ॥ सोमएवततश्चान्नमशीतयइतीरितम् ॥ अदनाघ्राणदृष्ट्याख्यभोगत्रयविभागतः ॥ मुखना
साचक्षुषांतद्भोग्यमन्नंहरेःश्रुतम् ॥ अरणंगमनंयस्मादर्कःशीघ्रगतित्वतः ॥ श्येनएवतदाकाराचितिरर्कपदो
दिता ॥ सुपर्णप्रतिमासायत्तदारूढोजनार्दनः ॥ तस्मात्तस्यार्कइतिसाप्रोच्यतेवैदिकैःपदैः॥योसौचितिगतो
वींद्रःसोग्निवातरविष्वपि ॥ तथावाक्प्राणचक्षुष्षुतस्मात्तेर्काःप्रकीर्तिताः ॥ तेषुस्थितेसुपर्णेचरूपभेदैःपृथ

तस्यवागर्कोन्नमशीतयोन्नेनहीदंसर्वमश्नुतेनासिकेएवोक्थंयथांतरिक्षंतथातस्यप्राणोर्कोन्न
मशीतयोन्नेनहीदंसर्वमश्नुतेतदेतद्ब्रह्मस्यविष्टपंयदेतन्नासिकायैविनतमिवललाटमेवोक्थंयथा

क्पृथक् ॥ स्थितोविष्णुस्तदर्कास्तेतस्मादेवप्रकीर्तिताः ॥ व्याप्तत्वाज्जीवदेहेषुमुखेविष्णोर्मुखंस्मृतम् ॥ ना
सयोर्नासिकाविष्णोरक्ष्णोरेवतदक्षिणी ॥ जीववाक्प्राणचक्षुष्षुतद्भागाद्यस्ततःस्थिताः ॥ विष्णोर्वाग्भार्गवो
रामोप्राणोस्यनरकेसरी ॥ चक्षुस्तुकपिलोविष्णुरग्न्यादीनांचकारणम् ॥ जीववागादिसंस्थंचसुपर्णमधिसं
स्थिताः ॥ अविशेषोपिभगवान्पूर्णैश्वर्यस्वरूपतः ॥ अंगांगित्वेनैकएवस्वानंदानुभवेस्थितः ॥ सएवव्यूह्य
चात्मानंपृथग्रूपइवस्थितः ॥ सुपर्णनामाभगवान्सुपर्णेचव्यवस्थितः ॥ अग्न्यादिषुचतन्नामावासुदेवःससं
स्थितः ॥ अन्ननामासएवान्नेचेष्टयन्सर्वमास्थितः ॥ अन्नेस्थितःसएवेशोह्यन्नदातृगतिप्रदः ॥ तस्यांतरिक्ष
गस्यैवनियमादनुपक्षिणः॥ पतंतिधावयंत्यश्चनरादींश्चनरादयः ॥ परस्यविष्णोर्धामत्वात्सूर्योब्रध्नइतीरितः॥

निहितश्चैवतल्लोकोनासिकायांनतस्थले ॥ पृथिव्यांसंस्थितोविष्णुःस्त्रीरूपेणद्युलोकतः ॥ पतितंसर्वमेवा
त्तितथादिविचसंस्थितः ॥ इतोगतंसर्वमत्तिद्युनामाभगवान्परः ॥ भोग्यत्वादाद्यइत्युक्तएवामाद्यात्तृरूप
वान् ॥ एकएवपरोविष्णुरत्तान्यैरुपजीव्यतः ॥ आद्योभवतिचान्येषांनोपजीव्योभवेद्यथा ॥ हरिःससर्व
जीवानांनभुज्यंतेयथामुना ॥ सर्वेलोकास्तथाकर्तुंनैवेष्टेकश्चनकश्चित् ॥ २ ॥ सएवभगवान्विष्णुःप्रजा

द्यौस्तथातस्यचक्षुरर्कोन्नमशीतयोन्नेनहीदंसर्वमश्नुतेसमानमशीतयोध्यात्मंचाधिदैवतंचा
न्नमेवान्नेनहीमानिसर्वाणिभूतानिसमनंती३अन्नेनेमंलोकंजयत्यन्नेनामुंतस्मात्समानमशीत
योध्यात्मंचाधिदैवतंचान्नमेवतदिदमन्नमन्नादमियमेवपृथिवीतोहीदंसर्वमुत्तिष्ठतियदिदंकिं
चयद्धकिंचेदंप्रेता३इतदसौसर्वमत्तियदुकिंचातःप्रैती३तदियंसर्वमत्तिसेयमित्याद्यान्यत्ता
हवाआद्योभवतिनतस्येशेयंनाद्याद्यद्वैनंनाद्युः ॥ २ ॥ अथातोरेतसःसृष्टिःप्रजापते
रेतोदेवादेवानांरेतोवर्षंवर्षस्यरेतओषधयओषधीनांरेतोन्नमन्नस्यरेतोरेतोरेतसोरेतःप्रजाःप्रजा
नांरेतोहृदयंहृदयस्यरेतोमनोमनसोरेतोवाग्वाचोरेतःकर्मतदिदंकर्मकृतमयंपुरुषोब्रह्मणोलोकः
सइरामयोथद्धीरामयस्तस्माद्धिरण्मयोहिरण्मयोहवाअमुष्मिँल्लोकेसंभवतिहिरण्मयःसर्वेभ्यो

पतिरितीरितः ॥ तस्माज्जाताःसर्वदेवाब्रह्माद्यास्तेभ्यएवच ॥ वृष्टिःसंजायतेतस्याःसर्वाओषधयोभवन् ॥
ओषधीभ्योन्नमन्नाच्चरेतोरेतसएवच ॥ सर्वाःप्रजाःप्रजायंतेसंकल्पोहृदयाभिधः ॥ प्रजाभ्योजायतेत
स्माद्विकल्पाख्यंमनस्तथा ॥ विकल्पाद्वाक्प्रचारश्चवाचानामादिवेदनात् ॥ कर्मसंजायतेतस्मात्कर्मणश्च
जगत्पुनः ॥ कर्माभिमान्ययंजीवःपरस्यब्रह्मणोहरेः ॥ आवासस्थानमुद्दिष्टोविशेषात्सइरामयः ॥ इच्छा

नुरूपंतुसुखमिरेत्येवप्रकीर्तितम् ॥ इच्छानंदप्रभूतत्वात्सएवचहिरण्मयः ॥ हिरुक्सुखंहिरण्यंस्याद्धाम्नानं
दात्पृथग्यतः ॥ आधिक्यार्थेमयडयस्मादधिकानंदरूपकः ॥ उत्सृज्यकर्मजंरूपंनिजानंदैकरूपकः ॥ ए
वंनारायणंजानन्सर्वलोकैककारणम् ॥ तल्लोकेदृश्यतेभूतैर्मुक्तैरानंदरूपकः ॥ २ ॥ तमिमंप्रथमज्ञानिपुरु
षंचतुराननम् ॥ वासुदेवाभिधंब्रह्मप्रापप्रपदयोःपुरा ॥ यस्मात्प्रपेदेभगवान्प्रपदाचतुराननम् ॥ तस्मात्प्रपद
नादेवप्रपदंनामकीर्तितम् ॥ चतुर्मुखाकारवतांनृणांपादतलोपरि ॥ प्रपदाख्यावर्ततेतोनतुपश्वादिनांक्वचि
त् ॥ अयादूर्ध्वंततोविष्णुःप्रपदादूरुमत्रच ॥ स्थितऊरूचतावास्तामूरूर्ध्वगमनाद्धरेः ॥ किंचिदूर्ध्वंततोग

भूतेभ्योददृशेयएवंवेद॥३॥तंप्रपदाभ्यांप्रापद्यतब्रह्मेमंपुरुषंयत्प्रपदाभ्यांप्रापद्यतब्रह्मेमंपुरुषं
तस्मात्प्रपदेतस्मात्प्रपदेइत्याचक्षतेशफाःखुराइत्यन्येषांपशूनांतदूर्ध्वमुदसर्पत्ताऊरूअभवतामु
रुगृणीहीत्यब्रवीत्तदुदरमभवदुर्वेवमेकुर्वित्यब्रवीत्तदुदरोभवदुदरंब्रह्मेतिशार्कराक्ष्याउपासतेहृ
दयंब्रह्मेत्यारुणयोब्रह्माहैवता२इऊर्ध्वंत्वेवोदसर्पत्तच्छिरोश्रयतयच्छिरोश्रयततच्छिरोभवत्त
च्छिरसःशिरस्त्वंताएताःशीर्षञ्छ्रियःश्रिताश्चक्षुःश्रोत्रंमनोवाक्प्राणःश्रयंतेस्मिञ्छ्रियोयए

त्वावायुनासहकेशवः ॥ वायुमाहोरुगरणंकुर्वत्रस्थितइत्यपि ॥ उर्वेवगरणंचक्रेवायुर्यत्रस्थितःसदा ॥ त
त्स्थानमुदरंनामपुनराहजनार्दनः ॥ उरुस्थानंनिवासंमेकुरुविस्तारसंयुतम् ॥ तथाकरोत्सवायुश्चतदुरोऽभूदु
रुत्वतः ॥ उरोमध्येचहृदयंतत्रावासोहरेःसदा ॥ सूक्ष्मदृष्टियुतायेतुमुनयःशार्कराक्ष्यकाः ॥ उदरेतेपरंब्रह्म
वासुदेवमुपासते ॥ हृत्स्थमेवपरंविष्णुंध्यायंत्यारुणयःसदा ॥ उदरस्थंचहृद्रंचतेउभेब्रह्मतत्परम् ॥ एकमेव
यतस्तस्मादुभयेस्यपितद्विदः ॥ ततऊर्ध्वंगतोविष्णुर्वायुनासहदैवतैः ॥ स्थितोमूर्धनिदेवेशःश्रितोसावितित

च्छिरः ॥ तत्रप्राणात्मनावायुर्मनोरूपेणशंकरः ॥ शेषःसुपर्णइंद्रश्चमनांस्येवपृथक्पृथक् ॥ अहंभावम
नोरुद्रःशेषोऽसौपांचरात्रकम् ॥ वैदिकंगरुडश्चेंद्रोयज्ञादिविषयंमनः ॥ श्रोत्रंचंद्रोरविश्चक्षुर्वागग्निःपरिकी
र्तितः ॥ एतेदेवास्तदन्येचसर्वप्राणिषुसंस्थिताः ॥ उपासतेमहाविष्णुंपरमात्मानमच्युतम् ॥ वाचाहिंसाम
कुर्वंस्तेविनिंदंतःपरस्परम् ॥ तेविष्णोराज्ञयावोचन्नुत्क्रमामपृथक्पृथक् ॥ देहादब्जभवस्यास्माद्यस्मिन्नु

वमेतच्छिरसःशिरस्त्वंवेदताअहिंसंताहमुक्थमस्म्यहमुक्थमस्मीतिताअब्रुवन्हंतास्माच्छरी
रादुत्क्रामामतद्यस्मिन्नउत्क्रांतइदंशरीरंपतस्यतितदुक्थंभविष्यतीतिवागुदक्रामदवदन्नश्न
न्पिबन्नास्तैवचक्षुरुदक्रामदपश्यन्नश्नन्पिबन्नास्तैवश्रोत्रमुदक्रामदशृण्वन्नश्नन्पिबन्नास्तैव
मनउदक्रामन्मीलितइवाश्नन्पिबन्नास्तैवप्राणउदक्रामत्तत्प्राणउत्क्रांतेऽपद्यततदशीर्यताशा
रीतीरँतच्छरीरमभवत्तच्छरीरस्यशरीरत्वंशीर्यतेहवाअस्यद्विषन्पाप्माभ्रातृव्यःपरास्यद्विषन्पा
प्माभ्रातृव्योभवतियएवंवेद ताअहिंसंतेवाहमुक्थमस्म्यहमुक्थमस्मीतिताअब्रुवन्हंतेदंपु
नःशरीरंप्रविशामतद्यस्मिन्नःप्रपन्नइदंशरीरमुत्थास्यतितदुक्थंभविष्यतीतिवाक्प्राविशदशय
देवचक्षुःप्राविशदशयदेवश्रोत्रंप्राविशदशयदेवमनःप्राविशदशयदेवप्राणःप्राविशत्तत्प्राणेप्रप

त्क्रांतएवहि ॥ शरीरंपद्यतेश्रेयान्सनइत्यवधार्यताम्॥ततःक्रमेणचाग्न्याद्यानिष्क्रांतास्तेषुसर्वशः ॥ निष्क्रां
तेषुनवैपातःशरीरस्याभवत्क्वचित् ॥ वायावुत्क्रांतयेवैतच्छरीरमपतत्क्षितौ ॥ उदासीनवदास्तांतौकेशवश्चा
ब्जसंभवः ॥ तेषांबलपरीक्षार्थंवाय्वादीनांचसर्वशः ॥ पुनस्तेप्राविशन्सर्वेवह्निसूर्यौशशीशिवः ॥ नोत्थान

मभवत्तेषुप्रविष्टेष्वपिसर्वशः ॥ वायौप्रविष्टेतूत्थानंकायस्यासीत्तदैवच ॥ उच्चैःस्थितत्वादुक्थोभूद्वायुरेव ततःप्रभुः ॥ उच्चत्वंचगुणाधिक्यंत्वमुच्चोसीतितेब्रुवन् ॥ भृत्यावयंतवैवस्मत्वमस्माकंपतिःसदा ॥ स्पर्धा महेत्वद्बलेनत्वयानान्येनकेनचित् ॥ इत्यूचुर्वींद्रशेषेणशक्रचंद्रादिकाःपृथक् ॥ वायुःससंस्तुतस्तैश्चप्रस न्नोभूद्दिवौकसाम् ॥ ४ ॥ तस्माच्छ्रुत्वापरंब्रह्मदेवानारायणाभिधम् ॥ शिष्यप्रशिष्यादिषुचतेनयन्वायु नोदितम् ॥ वायुमप्यनयन्सर्वेयशसातद्गुणोक्तितः ॥ येयेगुणान्विजानंतिवायोस्तानाविशन्मरुत् ॥ तत्र

न्नउदतिष्ठत्तदुक्थमभवत्तदेतदुक्थंप्राणएवप्राणउक्थमित्येवविद्यात्तंदेवाअब्रुवंस्त्वमुक्थम सित्वमिदंसर्वमसितववयंस्मस्त्वमस्माकमसीतितदप्येतदृषिणोक्तंत्वमस्माकंतवस्मसीति ॥ ४ ॥ तंदेवाःप्राणयंतसप्रणीतःप्रातायतप्रातायतीइँतत्प्रातरभवत्समागादितीइँत त्सायमभवदहरेवप्राणोरात्रिरपानोवागग्निश्चक्षुरसावादित्यश्चंद्रमामनोदिशःश्रोत्रंसएषप्रहि तांसंयोगोध्यात्ममिमादेवताअदउआविरधिदैवतमित्येतत्तदुक्तंभवत्येतद्धस्मवैतद्विद्वानाह हिरण्यदन्वैदोनतस्येशेयंमह्यंनदद्युरितिप्रहितांवाअहमध्यात्मंसंयोगंनिविष्टंवेदैतद्धतदनीशा

तत्रप्रविष्टत्वात्प्रततोसौबभूवह ॥ प्रततत्वात्प्रातरितितस्यनामाभवद्विभोः ॥ संगतश्चाभवज्जीवचितारूपां तरेणसः ॥ संगतत्वात्सायमितितद्रूपंनामतोभवत् ॥ वायोस्ततःपुनरध्यात्मंप्राणापानाभिधंद्वयम् ॥ अध्या त्ममग्निर्वागाख्यश्चक्षुःसूर्यःप्रकीर्तितः ॥ यज्ञादिसाधनेयत्तुमनश्चंद्रःप्रकीर्तितः ॥ मित्रोयमश्चवरुणःकु ॥ ४ ॥
बेरश्चदिगीश्वराः ॥ श्रोत्राभिमानिनःसर्ववैदिकश्रवणोचितम् ॥ श्रोत्रंचंद्रस्तथास्मार्ततांत्रिकश्रवणोचि तम् ॥ यमएवषडंगानांविषयश्रवणोचितम् ॥ श्रोत्रंतुवरुणःकाम्यशास्त्रार्थंमित्रएवच ॥ श्रोत्रंयन्नी

तिशास्त्रार्थंकुबेरश्चप्रकीर्तितः ॥ विष्णुनाप्रहितानांहिसंयोगोध्यात्ममेषहि ॥ शिवादीनांचसर्वेषांमन
स्त्वंकथितंपुरा ॥ एतास्सर्वादेवताहिब्रह्मवायुसुपर्णकाः ॥ शेषशंकरशक्राश्चचंद्रसूर्ययमाअपि ॥
अग्निश्चमित्रावरुणौकुबेराद्याश्चसर्वशः ॥ अधिदैवंसएवैकआधिक्यात्पुरुषोत्तमः ॥ देवमात्रास्तद
न्येतुसआविःपुरुषोत्तमः ॥ पूर्णज्ञानस्वरूपत्वादेतावत्कथितंभवेत् ॥ तात्पर्यात्सर्ववेदैश्चतज्ज्ञानन्नवद
न्मुनिः ॥ हिरण्यदन्नामवैदोभूतेषुहिसुरान्नते ॥ मदभीष्टंममादातुंनैवेष्टेकश्चनांजसा ॥ विष्णुनाप्रहि
तानांहिदेवानामहमुत्तमम् ॥ वेदसंयोगमध्यात्मंततोमुक्तौयथेष्टभुक् ॥ स्यान्नैवात्रास्तिसंदेहःस्वेच्छा
विहृतिरेवच ॥ मन्निषेधेनशक्तोस्तिप्रीतादेवाहिमेसदा ॥ अधिदैवेनसहिताविष्णुनाप्रभविष्णुना ॥

न्नानिहवाअस्मैभूतानिबलिंहरंतियएवंवेदतत्सत्यंसदितिप्राणस्तीत्यन्नंयमित्यसावादित्यस्त
देतत्त्रिवृत्त्रिवृदिवचक्षुःशुक्लंकृष्णंकनीनिकेतिसयदिहवाअपिमृषावदतिसत्यंहैवास्योदितं

एतद्धितेनकथितंमुनिनातत्त्ववेदिना ॥ विष्णुप्रहितदेवानांयोगमध्यात्ममंजसा ॥ वेदतंचनियोक्तारमु
पास्तेविष्णुमव्ययम् ॥ एतादृशोपासनायायोग्यःसन्सततंसुधीः ॥ स्वस्वाम्यन्यानिभूतानिहरेयुर्ब
लिमस्यहि ॥ मुक्तस्यवैष्णवेलोकेमुक्तानिचनसंशयः ॥ इत्येतद्ध्यानयोगाश्चमुनयोदेवतास्तथा ॥
मानुषाज्ञानमात्रेणस्वावरैःपूज्यतामियुः ॥ मुक्तामुक्तैर्मुक्तियोग्याइतिशास्त्रस्यनिर्णयः ॥ सएषभगवा
न्विष्णुःसत्यमित्यभिधीयते ॥ सर्वोत्तमत्वात्पूर्णत्वात्सर्वज्ञत्वात्तथैवच ॥ देवतात्रयमन्यच्चपृथक्सच्च्य
मितीर्यते ॥ शेषवींद्रशिवादिभ्यउत्तमत्वात्सदैवहि ॥ वायुःसदितिसंप्रोक्तोजीवेषुतुसुपूर्णतः ॥ तीति
ब्रह्मासमुद्दिष्टःसएवान्नाभिमानवान् ॥ अन्नंप्रजापतिरितिश्रुतिरन्याह्यभाषत ॥ अतिनादात्सदावेदै

रप्यन्नंसचतुर्मुखः ॥ यमित्यादित्यउद्दिष्टोयमयेद्यत्प्रकाशनात् ॥ देवतात्रयमेतत्तुसहितंसत्त्यमुच्यते ॥
शुक्लकृष्णकनीनासुचक्षुषोप्येतआस्थिताः ॥ एवंसत्यपदार्थंहिविज्ञायोपास्तआदरात् ॥ योग्यस्तस्याउ
पासायानैवासत्येनदुष्यति ॥ देवतामुनयश्चैवयोग्याअस्याअपिस्फुटम् ॥ मनुष्याणांज्ञानमात्राद्दोषोना
तितरांभवेत् ॥ ५ ॥ तस्यनारायणस्यैवसर्ववेदात्मिकाहिवाक् ॥ तंतिरूपाजगद्बंधेनामब्रह्मादिकंचयत् ॥
विप्रक्षत्रियवैश्यादिरूपंचाखिलमेवतु ॥ दामतेनैवबध्नातिसकलंजगदच्युतः ॥ सर्वेहिनामवंतोत्रसर्वेवेदोदि
ताअपि ॥ वेदात्मिक्यायतोवाचाविष्णुर्वदतिसोखिलम् ॥ यएतद्विष्णुवाचैवबद्धंनामाख्यदामभिः ॥

भवतियएवमेतत्सत्यस्यसत्यत्वंवेद ॥ ५ ॥ तस्यवाक्तंतिर्नामानिदामानितदस्येदंवाचातं
त्यानामभिर्दामभिःसर्वंसितंसर्वंहीदंनामानीश्ँसर्वंवाचाभिवदतिवहंतिहवाएनंतंतिसंबद्धाय
एवंवेदतस्योष्णिग्लोमानित्वग्गायत्रीत्रिष्टुम्मांसमनुष्टुप्स्नावान्यस्थिजगतीपंक्तिर्मज्जाप्राणो
बृहतीसच्छंदोभिश्छन्नोयच्छंदोभिश्छन्नस्तस्माच्छंदांसीत्याचक्षतेछादयंतिहवाएनंछंदांसि

ज्ञात्वाजगदुपास्तेतुयोग्यःसंस्तदुपासने ॥ तंप्रत्येवाखिलान्येवभूतानिसहदैवतैः ॥ बलिंहरंतिपंचाथभूता
न्येनंवहंतिच ॥ योग्यश्चास्याउपासायायोग्योब्रह्मपदस्ययः ॥ भूतयुक्तेरथेतस्मात्सतिष्ठतिसुरार्चितः ॥
मुक्तःसंश्चतदन्येषांज्ञानमात्राद्विमुक्तिगैः॥स्वावरैःसेव्यतैवस्यात्कैश्चिदेवक्कचित्कचित्॥ तथैववायुनाबद्धंज
गदेतत्ततोवरम् ॥ सुपर्णशेषगिरिशशक्रसूर्याद्यमंजसा ॥ विष्णोर्वायोश्चलोमादौछंदांस्येवाश्रितानिच ॥ वि
ष्णोर्विमुक्तवायोश्चलोमाद्यंतुचिदात्मकम् ॥ लोमप्राणादिभेदश्चनैवकश्चिच्चिदात्मनि ॥ छन्नश्छंदोभिरेवं
सकेशवस्तेनचाभिधा ॥ छंदांसीत्येवतेषांहियएवंविदुपासकः ॥ निवारयंतिपापेभ्यश्छंदांसिकिमुकेशवः ॥

योग्याअस्याश्चविद्यायाभृग्वाद्यादेवतास्तथा ॥ छंदस्सुसंस्थितोविष्णुर्गोपायत्येवतद्विदः ॥ मंत्रोप्यर्थमिमंप्राहापश्यंगोपामितिस्मह ॥ एषगोप्ताहिसर्वस्यवायुस्थःपुरुषोत्तमः ॥ छंदस्सुसंस्थितोवायुर्वायौचसजनार्दनः ॥ वायुश्चवायुसंस्थश्चकदाचिन्नैवतिष्ठतः ॥ वायुर्हिनित्यसंचारीसदासर्वप्रवृत्तिमान् ॥ चोदितःकेशवेनैवतत्स्थेनामितशक्तिना ॥ आसमंतात्पराक्तापिपंचभूतेभ्यईश्वरः ॥ वायुस्तत्स्थोहरिश्चैवचरत्यमितपौरुषः ॥ सध्रीचीनासुपूर्वादिदिक्ष्वेतौचतसृष्वपि ॥ नित्यदावसतःकोणदिक्ष्वथासुविषूचिषु ॥ अंतश्चसर्व

पापात्कर्मणोयस्यांकस्यांचिद्दिशिकामयतेयएवमेतच्छंदसांछंदस्त्वंवेदतदुक्तमृषिणाऽपश्यंगोपामित्येषवैगोपाएषहीदंसर्वंगोपायत्यनिपद्यमानमितिनह्येषकदाचनसंविशत्याचपराचपथिभिश्चरंतमित्याचह्येषपराचपथिभिश्चरतिससध्रीचीःसविषूचीर्वसानइतिसध्रीचीश्चह्येषविषूचीश्चवस्तइमाएवदिशआवरीवर्तिभुवनेष्वंतरित्येषह्यंतर्भुवनेष्वावरीवर्त्यथोआवृतासोवतासोनकर्तृभिरितिसर्वंहीदंप्राणेनावृतंसोयमाकाशःप्राणेनबृहत्याविष्टब्धस्तद्यथायमाकाशःप्राणेनबृहत्याविष्टब्धएवंसर्वाणिभूतान्यापिपीलिकाभ्यःप्राणेनबृहत्याविष्टब्धानीत्येवविद्यात् ॥ ६ ॥

लोकेषुचरतोलोकसाक्षिणौ॥हस्तयोरेतयोरेवनित्याक्षीणंवसुस्थितम्॥तद्व्यसत्त्वंबलंवायोरनंतंकिमुतद्धरेः ॥ वायोराधारभूतस्यताभ्यांहिक्रतुनामकाः ॥ आवृताःसर्वजीवाहियथैवकनकावटाः ॥ आच्छाद्यंतेवित्तवद्भिस्ताभ्यामेवंचचेतनाः ॥ आवृतामहदाद्यास्तुदेहेतिष्ठंतिचैतयोः ॥ विष्टब्धाश्चैवसर्वेपिजीवाआकाशएवच ॥ सवायुःप्रकृतिश्चैवविष्टब्धौकेशवेनहि ॥ बृहत्त्वाद्बृहतीत्येवतयोर्नामप्रकीर्तितम् ॥ वायुकेशवयोःप्राणनामसर्वप्रणायनात् ॥ विशेषतोबृहत्प्राणोभगवांस्तत्रकेशवः ॥ इतिविद्यात् ॥ ६ ॥

तस्यविष्णोरंगानामथवैभवम् ॥ उच्यतेतस्यवाचाहिसृष्टावग्निःक्षितिस्तथा ॥ शुश्रूषार्थंतस्यपृथ्वीजनयत्योषधीःप्रभोः ॥ ताःपचत्यग्निरुद्युक्तआहृताआहृताःपुनः ॥ आहरेतिवचोस्यापिशृण्वंत्येवमहर्षयः । मुखजत्वात्तयोर्विष्णोर्मुखंजनकमिष्यते ॥ आस्यभोग्यंततोविष्णोरन्नंतौकुरुतःसदा ॥ सर्वैर्यद्भुज्यतेचान्नंतत्रतत्रस्थितोहरिः ॥ तद्भुक्तेतस्तदर्थंहितावन्नंकुरुतस्सदा॥विष्णोर्वाग्विभवंवेदयउपास्तेचसर्वदा ॥ यो

अथातोविभूतयोस्यपुरुषस्यतस्यवाचासृष्टौपृथिवीचाग्निश्चास्यामोषधयोजायंतेग्निरेनास्वदयतीदमाहरतेदमाहरतेत्येवमेतौवाचंपितरंपरिचरतःपृथिवीचाग्निश्चयावदनुपृथिवीयावदन्वग्निस्तावानस्यलोकोभवतिनास्यतावल्लोकोजीर्यतेयावदेतयोर्नजीर्यतेपृथिव्याश्चाग्नेश्चयएवमेतांवाचोविभूतिंवेदप्राणेनसृष्टावंतरिक्षंचवायुश्चांतरिक्षंवानुचरंत्यंतरिक्षमनुशृण्वंतिवायुरस्मैपुण्यंगंधमावहत्येवमेतौप्राणंपितरंपरिचरतोंतरिक्षंचवायुश्चयावदन्वंतरिक्षंयावदनुवायुस्तावानस्यलोकोभवतिनास्यतावल्लोकोजीर्यतेयावदेतयोर्नजीर्यतेंतरिक्षस्यचवायोश्चयएवमेतांप्राणस्यविभूतिंवेदचक्षुषासृष्टौद्यौश्चादित्याश्चद्यौर्हास्मैवृष्टिमन्नाद्यंसंप्रयच्छत्यादित्योस्यज्योतिःप्रकाशंकरोत्येवमेतौचक्षुःपितरंपरिचरतोद्यौश्चादित्यश्चयावदनुद्यौर्यावदन्वादित्यस्तावा

ग्यःसंस्तदुपासायाःसभूम्यग्निसमन्वितः ॥ समंतयोर्व्याप्तिमांश्चतद्वन्मुक्तश्चनित्यदा ॥ अनष्टलोकोवसतिसमीपेकेशवस्यच ॥ योग्याअस्याउपासायाःपृथिव्यग्निपदस्ययं ॥ योग्यास्तेवैमुख्यतयातदन्येयत्रतौस्थितौ ॥ तत्रचर्तुंसमर्थाःस्युर्मुक्तिप्राप्ययदृच्छया ॥ कादाचित्कोपासनेतुतावत्येषांचयोग्यता ॥ वेदनंस्वापरोक्ष्येणमुख्यंभवतिनान्यथा । एकदेशविदोयस्मात्परोक्षज्ञानिनोऽखिलाः । आपरोक्ष्यंभवेद्यस्मान्नैवो

पासास्तेकचित् ॥ तस्माद्रुपासापूर्वंतुयोपरोक्षंप्रपश्यति ॥ सएववेदनान्यस्तुयोग्यस्यैवापरोक्षदृक् ॥ त
स्माद्योग्यस्योक्तफलमन्येषांकिंचिदेवहि ॥ प्राणादिभ्यश्चवाय्वाद्याएवंविष्णोःप्रजज्ञिरे ॥ ब्रह्मशेषसुप
र्णेंद्रशिवाद्याआपईरिताः ॥ तेविष्णोर्मनसाजाताःसर्वेचाबभिमानिनः ॥ वैश्वदेव्यस्ततोह्यापोवरुणश्च
मनोभवः ॥ प्राणिनांपूर्तपुण्येषुश्रद्धारूपमनोधिपः ॥ एवंहिसर्वदेवाहिविष्णवंगेभ्यःप्रजज्ञिरे ॥ स्वो

नस्यलोकोभवतिनास्यतावल्लोकोजीर्यतेयावदेतयोर्नजीर्यतेदिवश्चादित्यस्यचयएवमेतांच
क्षुषोविभूतिंवेदश्रोत्रेणसृष्टादिशश्चचंद्रमाश्चदिग्भ्योहैनमायंतीशँदिग्भ्योविशृणोतिचंद्रमा
अस्मैपूर्वपक्षापरपक्षान्विचिनोतिपुण्यायकर्मणेएवमेतेश्रोत्रंपितरंपरिचरंतिदिशश्चचंद्रमाश्च
यावदनुदिशोयावदनुचंद्रमास्तावानस्यलोकोभवतिनास्यतावल्लोकोजीर्यतेयावदेषांनजीर्य
तेदिशांचचंद्रमसश्चयएवमेतांश्रोत्रस्यविभूतिंवेदमनसासृष्टाआपश्चवरुणश्चापोहास्मैश्रद्धां
सन्नमंतेपुण्यायकर्मणेवरुणोस्यप्रजांधर्मेणदाधारैवमेतेमनःपितरंपरिचरंत्यापश्चवरुणश्चयावद
न्वापोयावदनुवरुणस्तावानस्यलोकोभवतिनास्यतावल्लोकोजीर्यतेयावदेतेषांनजीर्यतेऽपां
चवरुणस्यचयएवमेतांमनसोविभूतिंवेद ॥ ७ ॥ आपाः३इत्यापइतितदिदमापएवेदंवै

त्पत्त्यंगंचतेविष्णोःशुश्रूषंतेपृथक्पृथक् ॥ विष्णोर्विषयधर्मेषुज्ञानादिषुचतुर्मुखः ॥ श्रद्धांददातिभूतानांवै
दिकश्रवणेविपः ॥ तांत्रिकेशेषरुद्रौचशक्रोयज्ञादिकर्मणि ॥ वायुर्गंधवहश्चास्यभक्तिज्ञानप्रदस्तथा ॥
भूतानांतस्यविषयेत्वंतरिक्षंचकर्मणः ॥ तदीयस्यैवभोगार्थंजीवानांश्रुतिचारदम् ॥ अंतरिक्षंचविघ्नेशःसूर्य
स्तत्कर्मसिद्धये ॥ भूतानांज्योतिषोदाताद्यौरप्यन्नाद्यदायिनी ॥ ७ ॥ आपइत्येवदेवानांब्रह्मादीनांकथं

भवेत् ॥ नामेपृत्यच्छल्लक्ष्मीस्तंमहिदासंजनार्दनम् ॥ आपइत्येवनामैषांभवतीत्याहसप्रभुः ॥ इदंमदाख्यं
यद्ब्रह्मह्यापइत्यभिधीयते ॥ आपूर्णत्वाद्गुणैःसर्वैस्तन्मूलमखिलस्यच ॥ तूलभूतंतदन्यत्तुपिताह्येषजनार्द
नः ॥ पुत्राब्रह्मादयःसर्वैनैवायंवृक्षमूलवत् ॥ स्वतंत्रत्वाज्जगन्नाथःपितृत्वात्परमेशितुः॥तन्नामापइतिह्येतद्ब्र
ह्मरुद्रादिनांभवेत् ॥ यथायदवइत्येवरघवःकुरवस्तथा ॥पुत्रनामपितुश्चस्यात्तत्तंत्रत्वात्सुतस्यहि ॥ यथा
पितामहाद्याश्चपितरोनामकीर्तिताः ॥ तथापिमुख्ययावृत्त्याव्यवहारव्यवस्थितिः ॥ आपइत्येवदेवानांस
र्वेषांप्रददौहरिः ॥ स्वकीयमेवमन्यानिपृथक्पृथगदात्प्रभुः ॥ नारायणादिनामानिददौनान्यस्यकेशवः ॥

मूलमदस्तूलमयंपितैतेपुत्रायत्रह्वक्वचपुत्रस्यतत्पितुर्यत्रवापितुस्तद्वापुत्रस्येत्येतत्तदुक्तंभव
त्येतद्धस्मवैतद्विद्वानाहमहिदासऐतरेयआहंमांदेवेभ्योवेदाओमद्देवान्वेदेतःप्रदानाद्ध्येतइतः
संभूताइतिसएषगिरिश्चक्षुःश्रोत्रंमनोवाक्प्राणस्तंब्रह्मगिरिरित्याचक्षतेगिरतिहवैद्विषंतंपाप्मा

एवंसभगवान्विष्णुर्महिदासाभिधःप्रभुः ॥ जानन्नित्योदितज्ञानादाहदेवीमिदंवचः ॥ देवपर्यंतमाव्याप्तिं
वेदाहंममसर्वदा ॥ मत्पर्यंतंतथाव्याप्तिंदेवानामपिसर्वशः ॥ मयिदेवास्तेषुचाहमितिविद्धिवरानने ॥ मयै
तानिप्रदत्तानिपदानिब्रह्मपूर्वकाः ॥ अधितिष्ठंतिसत्ताद्याअप्येतेषांमदाज्ञया ॥ ज्ञानकर्मबलेहाद्यामद्द
त्ताइतिकिंवदे ॥ संभृतामत्तएवैतेसएषभगवान्गिरिः ॥ गिरणात्सर्वभूतानांचक्षुर्नामास्यदर्शनात् ॥ सर्व
श्रोतृत्वतःश्रोत्रंमनोमंतृत्वहेतुतः ॥ प्राणनामाप्रणेतृत्वात्तमेनंगुणपूर्तितः ॥ गिरणाच्चाखिलस्यास्यप्राहु ॥ ७ ॥
र्ब्रह्मगिरिंप्रभुम् ॥ यएवंवेदतंविष्णुमापरोक्ष्येणशाश्वतम् ॥ गिरत्येवाखिलंपापंभ्रातृवत्सहसंस्थितम् ॥

पराभवतिपाप्मास्यद्वेष्टानिरयगःसदा ॥ असनाद्भगवान्सोसुःसर्वस्यापिजनार्दनः ॥ प्रकृष्टानंदरूपत्वात्प्रा
णइत्यभिधीयते॥सएषभूतिनामापिज्ञानैश्वर्यादिभूतिदः ॥ अज्ञानादिप्रदातृत्वात्सएवाभूतिनामकः॥सुख
ज्ञानादिगुणदंपूर्णंसर्वगुणैःप्रभुम् ॥ उपासतेतंवाय्वाद्यादेवास्तस्माच्चतेऽखिलाः ॥ बभूवुःसुखसज्ज्ञानपूर्वैः
सर्वगुणैर्युताः ॥ देवानामपिसर्वेषांप्रधानोद्यापिमारुतः ॥ स्थित्वासुप्तेषुविष्णुंतंभूर्भूरित्येवशंसति ॥ भूःश

नंभ्रातृव्यंपरास्यद्विषन्पाप्माभ्रातृव्योभवतियएवंवेदसएषोसुःसएषप्राणःसएषभूतिश्चाभूति
श्चतंभूतिरितिवेदाउपासांचक्रिरेतेबभूवुस्तस्माद्धाप्येतर्हिसुप्तोभूर्भूरित्येवप्रश्वसित्यभूतिरि
त्यसुरास्तेहपराबभूवुर्भवत्यात्मनापरास्यद्विषन्पाप्माभ्रातृव्योभवतियएवंवेदसएषमृत्युश्चैवा
मृतंचतदुक्तमृषिणाऽपाङ्प्राङेतिस्वधयागृभीतइत्यपानेनह्ययंयतःप्राणोनपराङ्भवत्यमर्त्यो
मर्त्येनासयोनिरित्येतेनहीदंसर्वंसयोनिमर्त्यानिहीमानिशरीराणीऽँअमृतैषोदवताताशश्वंता
विषूचीनावियंतान्यन्यंननिचिक्युर्ननिचिक्युरन्यमितिनिचिन्वंतिहैवेमानिशरीराणीऽँअमृ
तैवैषादेवतामृतोहवाअमुष्मिँल्लोकेसंभवत्यमृतःसर्वेभ्योभूतेभ्योददृशेयएवंवेद ॥ ८ ॥ इत्यै
तरेयोपनिषत्सुद्वितीयारण्यकेप्रथमोध्यायः ॥ २ ॥ १ ॥

ब्दार्थोभूतिरितिवैपरीत्येनचासुराः ॥ अभूतिकारकोस्माकमैश्वर्यादिगुणोज्झितः ॥ इत्येवोपासतेतस्मा
त्पराभूताश्चसर्वशः ॥ ज्ञानैश्वर्यादिभिर्हीनाःपेतुरंधेतमस्यथ ॥ यएवंवेदतंविष्णुंभूतिदंभूतिरूपिणम् ॥
भावाभावंचदेवानांदैत्यानांचैवमेवतु ॥ ज्ञानैश्वर्यादिभिःसोपिभवेत्तस्यपरात्मनः ॥ प्रसादात्तस्यपा
प्माचपराभवतिसर्वशः ॥ सएषभगवान्विष्णुर्मृत्युदोमोक्षदस्तथा ॥ सएवजीवनकरोयदापानेनसंघ

तम् ॥ प्राणंनियमयत्यस्मिञ्छरीरेपुरुषोत्तमः ॥ शरीराद्बहिरेतौतुयदानिःसारयत्यजः ॥ तदामृत्युप्रद
श्चायंमुक्तानामपिजीवनम् ॥ प्राणादेवहितत्रापिप्राणाधारोजनार्दनः ॥ अवाक्प्राक्सदागच्छेद्वायुरानं
दरूपिणा ॥ अनेनैवगृहीतोहिप्राणोऽपानेनसंयुतः ॥ अनेनहरिणायस्मान्नियतोनपराग्भवेत् ॥ अम
र्त्यस्तत्प्रसादेनवायुर्देहैःसहस्थितः ॥ अनित्याअपिदेहास्तेशश्वत्संत्याविमोक्षतः ॥ स्थूलसूक्ष्मविभा
गेनकिमुवायुर्जगत्प्रभुः ॥ नानागतीतुतावेतौवायुःप्राप्नोतिकेशवम् ॥ शरीरंतुविनष्टंस्यात्पंचत्वमुपग
च्छति ॥ जडंतज्जडतामेतिचेतनावायुदेवता ॥ चेतनेशंहरिंयातिविरुद्धगमनौचतौ ॥ ऊर्ध्वंगच्छतिदे
वःसदेहोधःपततिक्षितौ ॥ दृश्यमेतच्छरीरंचाप्यदृश्यावायुदेवता ॥ यएवंवेदतंवायुममृतंसर्वनायक
म् ॥ पूर्णानंदेनहरिणागृहीतंतद्वशंसदा ॥ समुक्तोलोकमाप्नोतिविष्णोर्मुक्तैश्चदृश्यतइतिच ॥ ब्रह्मपं
थाःसत्यंकर्मेतितस्यनारायणस्यवासुदेवाद्याःक्रमेणचतस्रोमूर्तयः ॥ नासिकायांयन्नेत्रयोर्मध्येविनत
मिवकिंचिन्नतस्थानंतत्सूर्यलोकस्थानीयंविद्यात् ॥ तथेतिनिर्णयः ॥ ईरामयइतिदैर्घ्यमवधारणा
र्थम् ॥ दैर्घ्यंप्लुतंचहिंकारोबिंदुरप्यवधारणइतिशब्दनिर्णये ॥ ब्रह्माहैवता३इते ॥ देशतःकालतो
र्थाच्चबलतोगुणतस्तथा ॥ स्वरूपतोपिनैवस्याद्भेदोत्यल्पोपियत्रहि ॥ केवलैश्वर्ययोगेनयत्रसंख्यादिवद्भ
वेत् ॥ स्वरस्पर्शविभागेनतत्रोक्तिःस्याद्विभक्तिषु ॥ अचिंत्यात्तुतथैश्वर्यादेकोपिबहुरूपवान् ॥ प्रकाशये
द्यतोविष्णुःसर्वत्राप्यविशेषवान् ॥ नविशेषोहिरूपाणांमत्स्यादीनांकथंचन ॥ नैश्वर्येनबलेचैवनानंदादि
गुणेष्वपीत्यादिशब्दनिर्णयवचनात् ॥ द्विवचनमत्रव्यवहारमात्रमितिताइत्युक्तम् ॥ संहितायांयत्रदैर्घ्यंप
देयत्रनविद्यते ॥ उक्तार्थस्यमहाधिक्यंश्रुतेस्तत्रविवक्षितमित्यतोब्रह्माहेतिदैर्घ्यमपिपरब्रह्मत्वविवक्षया ॥

अदउएवनारायणाख्यमधिदैवतमन्यानिदैवतमात्राणि ॥ स्थानांतरेन्येषामप्यधिदैवत्वकथनंकर्मजदेवा
द्यपेक्षया ॥ मुख्याधिदैवतंनारायणएव ॥ तस्योष्णिग्लोमानीत्यादिलोमसूष्णिगित्याद्यर्थे ॥ सप्तसुप्रथमे
तिसूत्रात् ॥ सच्छंदोभिश्छन्नइतिवाक्यशेषात् ॥ ब्राह्मणोस्यमुखमासीदित्यादिवच्च ॥अंगेषुयस्यच्छंदांसि
देवालोकामखाअपि ॥ तद्वशानियतानित्यंनमस्तस्मैपरात्मनइतिचस्कांदे ॥ अस्मैपुण्यायकर्मणइत्येतमु
द्दिश्यजीवानांपुण्यकर्मकर्तुम् ॥ तैर्हिंसुत्यादिकर्माणिकृतानिश्रोत्रेणशृणोतिभगवान् ॥ दिग्भ्योप्यन्यएव
विशृणोतिजीवः ॥ अन्येषांजीवानांश्रवणजंभोगंस्वश्रोत्रेणदिग्भिरननुगृहीतेनैवभगवान्भुंक्ते ॥ नचजी
ववागादिनापृथिव्यग्न्यादिकंसृष्टमित्यत्रकिंचिन्मानमस्ति ॥ मुखादिंद्रश्चाग्निश्चेत्यादिनाभगवतःसकाशा
द्धिसर्वेषांसृष्टिःप्रसिद्धा ॥ सृष्टिभेदादन्यथावचनम् ॥ नचमुख्यकारणांगीकारेऽविरोधेऔपचारिकंकार

हरिःॐ एषइमंलोकमभ्यार्चत्पुरुषरूपेणयएषतपतिप्राणोवावतदभ्यार्चत्प्राणोह्येषयएषतप

णमंगीकर्तुंयुक्तम् ॥ अतिप्रसंगात् ॥ नहियत्किंचित्कारणत्वमस्तीत्येतावताब्राह्मणस्यचंडालःपितेत्युच्य
ते ॥ पितृत्वंचात्रोक्तंवाचंपितरमित्यादिना ॥ मनुष्याणांतुयत्कर्मनदेवोत्पत्तिकारणम् ॥ दैवतैरुपकारस्तु
क्रियतेनरकर्मणाम् ॥ देवानांकर्मणैवैतेजायंतेसर्वमानुषाः ॥ प्रधानत्वान्नदेवानांन्रकर्मोत्पत्तिकारणमिति
चब्रह्मांडे ॥ आहमहिदासऐतरेयइतितुसर्वस्यवचनस्यतदीयत्वज्ञापनार्थंनतुसन्निहितस्यैव ॥ यथेंद्रंकुत्स
मित्यादि ॥ यथाचपूर्वंतुबादरायणोहेतुव्यपदेशादिति ॥ ८ ॥ ॥ इतिश्रीमदानंदतीर्थभगवत्पादाचार्य
विरचितेश्रीमन्महैतरेयोपनिषद्भाष्येद्वितीयप्रघट्टकेप्रथमोध्यायः ॥ २ ॥ १ ॥ ॥ ॥
ॐ ॥ एषनारायणोदेवोवायुनासहैवेमंलोकमभ्यार्चत् ॥ ब्रह्मादिशरीरेषुप्रविवेश ॥ पुरुषइत्यंतर्यामिरू

धाःप्रभुः ॥ प्रकृष्टानंदरूपत्वात्प्राणइत्यभिधीयते ॥ अहेयत्वादहंनामास्म्यसनान्मिनुतेरपि ॥ ततोवेत्ती
तिचत्वंसपूर्णत्वात्सर्वनामकः ॥ सर्वाणिबहुरूपत्वात्सर्वरूपेषुपूर्तितः ॥ प्रभूतत्वाद्भूतनामासर्वरूपप्रभूततः ॥
बहुरूपःसभूतानीत्युक्तोविष्णुस्सनातनः ॥ सर्वैश्वर्यस्वरूपत्वादेषइत्यभिधीयते ॥ सएवसूर्यसंस्थःसन्लो
कंतपतिकेशवः ॥ सर्वनामवतस्तस्यममान्नंमित्रमुच्यते ॥ अन्नाभिमानिनीसाक्षाच्छ्रीरेवप्रमदोत्तमा ॥
सान्नमित्युच्यतेविष्णोर्भोग्यत्वान्मित्रमेवच ॥ दक्षभागस्थितेनत्वाद्दक्षिणंनामसोच्यते ॥ तस्याइनोहि
विष्णुःसदक्षभागेस्थितःसदा ॥ यस्याभिमानिन्यन्नस्यलक्ष्मीःसादेवतोत्तमा ॥ वैश्वामित्रंतदन्नंतुऋक्स
हस्रात्मकंमतम् ॥ विश्वामित्रेणदृष्टत्वाद्वैश्वामित्रमितीर्यते ॥ इंद्राविष्टःकोयमितिशंकांपरिहरन्हरिः ॥ आ
दित्यसंस्थितोविष्णुस्तपन्नस्मीतिचोचिवान् ॥ त्वांजानीयामितिप्रश्नंविश्वामित्रस्यकुर्वतः ॥ अभिप्राय
द्वयंह्यस्तिशक्राविष्टोनचापरः ॥ हरेरितितुमेतर्कस्तेजोबाहुल्यतोजनि ॥ तस्यतर्कस्यसत्यत्वंज्ञातव्यंप्रथमं
मया ॥ द्वितीयंयदिविष्णुःस्याज्ज्ञातव्योमेविशेषतः ॥ इत्यभिप्रायमस्यैवज्ञात्वाविष्णुःसनातनः ॥ अभिप्रा
यद्वयस्यापिपरिहारंहरिर्ददौ ॥ प्राणोवाअहमित्यादिनामसंदर्भमुक्तवान् ॥ विशेषज्ञानसिद्ध्यर्थंनाम्नामु
क्तिःपरात्मनः ॥ इंद्राविष्टःकोयमितिशंकानुत्त्यर्थमेवच ॥ तपन्नेवास्मीत्यवदत्तपंतंवेदसोपिहि ॥ नारायणं
सूर्यगतंगायत्र्योपासकोहिसइतिब्रह्मांडे ॥ उपनिषण्णमिंद्रंदृष्ट्वापित्वामेवजानीयामितिवरस्वीकारादिंद्रादे
वचेंद्राविष्टोभगवानत्रोक्तइतिज्ञायते॥इंद्रंतुजानात्येवहिविश्वामित्रः ॥भगवंतमपिस्वरूपतआगतंजानात्ये
व॥विशेषज्ञानप्रार्थनेप्राणोवाअहमस्म्यृषइत्यादिकमेवपूर्यते ॥ एषतपन्नेवास्मीतिव्यर्थम्॥प्राणोह्येषयएष
तपतीत्युक्तत्वात् ॥ सएतेनरूपेणसर्वादिशोविष्टोस्मीत्यादिनाप्याविष्टस्यविष्णुत्वंकिंचिज्ज्ञायते ॥ तथाप्ये

तेनेतितृतीयात्वात्करणत्वाशंकाभवति ॥ तस्यमइतिवैयधिकरण्यमितिच ॥ अतोभगवन्नामानिपृथगु
क्त्वाहंविष्णुरित्येषतपन्नेवास्मीत्युवाच ॥ इंद्रशरीरमेवपश्यतोविश्वामित्रस्यतर्कमात्रतोभगवानितिकिंचि
ज्ज्ञानतइतिज्ञायते ॥ नचेंद्रस्यप्राणशब्दाभिधेयत्वंचविद्यते ॥ अजस्यनाभावध्येकमर्पितमित्युक्तस्य
पद्मनाभस्यहियोदेवानांनामधाएकएवेतिसर्वदेवाभिधानत्वमुक्तम् ॥ इंद्रेहींद्रशब्दोपिनमुख्यतोवर्तते ॥
परमैश्वर्याभावात् ॥ इंद्रशब्दोपिविष्णावेववर्तते ॥ सहिपरमेश्वरः ॥ यमिंद्रमाहुर्वरुणंयमाहुर्यंमित्र
माहुर्यमुसत्यमाहुरितिश्रुतेश्च ॥ इंद्रंमित्रंवरुणमग्निमाहुरथोदिव्यःससुपर्णोगरुत्मानित्यादिश्रुतेश्च ॥ स
प्तार्धगर्भाभुवनस्यरेतोविष्णोस्तिष्ठंतिप्रदिशाविधर्मणीत्यादिनाविष्णुरेवहितत्रप्रस्तुतः ॥ नामानिविश्वाभि
नसंतिलोकेयदाविरासीदन्तस्यसर्वम् ॥ नामानिसर्वाणियमाविशंतितंवैविष्णुंपरममुदाहरंतीतिश्रुतिः ॥ यो
देवानांनामधाएकएवेत्यवधारणान्नान्यस्यसर्वनामत्वम् ॥ सचविष्णोर्नान्यः ॥ पद्मनाभत्वादेव ॥
श्रियोवायोरपिननारायणादिनामवत्त्वम् ॥ एकोवासुदेवस्तत्सदृशपरोनस्तइतिहिश्रुतिः ॥ एकोनारायण
आसीत्तत्समोवाधिकोवानास्तीतिच ॥ येनावृतंखंचदिवंमहींचयेनादित्यस्तपतितेजसाभ्राजसाच ॥ य
मंतःसमुद्रेकवयोवयंतियदक्षरेपरमेप्रजाइत्युक्तस्यसमुद्रशायिनएवनारायणस्यतदेवर्तंतदुसत्यमाहुस्तदेव
ब्रह्मपरमंकवीनामितिपरब्रह्मत्वावधारणाच्चविष्णोःपरंसदृशंवानास्त्येव ॥ अतस्तदत्रोच्यतइत्यपिनवक्त
व्यम् ॥ परोमात्रयातन्वावृधाननतेमहित्वमन्वश्नुवंति ॥ नतेविष्णोजायमानोनजातोदेवमहिम्नःपरमंत
मापेत्यादेश्च ॥ नकिरिंद्रत्वदुत्तरोनज्यायांअस्तिवृत्रहन् ॥ नकिरेवायथात्वमित्याद्यपिसर्वनामकत्वात्त
स्यैव ॥ किमेकंदैवतंलोकेकिंवाप्येकंपरायणमित्यादिप्रश्नस्यापि ॥ परमंयोमहत्तेजःपरमंयोमहत्तपः ॥

परमंयोमहद्ब्रह्मपरमंयःपरायणम् ॥ पवित्राणांपवित्रंयोमंगलानांचमंगलम् ॥ दैवतंदेवतानांचभूतानां योऽव्ययःपिता ॥ यतःसर्वाणिभूतानिभवंत्यादियुगागमे ॥ यस्मिंश्चप्रलयंयांतिपुनरेवयुगक्षये ॥ तस्यलोक प्रधानस्यजगन्नाथस्यभूपते ॥ विष्णोर्नामसहस्रमित्येवभारतेपरिहाराच्च ॥ मेन्नंदक्षिणमित्युक्त त्वाच्चविष्णुरेवेतिज्ञायते ॥ सहिविष्णुर्दक्षिणामित्रउक्तोहरिवंशेषुधन्याश्चर्याध्याये ॥ दक्षिणाभिःसहै वैतन्मदधस्ताज्जगत्सदा ॥ धन्याश्चर्योहमेवैकोमित्रंमेदक्षिणारमा ॥ इत्यवादीद्धरिर्भूपाधन्योसीत्युदितो मयेतिनारदवचनम् ॥ नचबृहतीसहस्राभिमानिनींदेवींविनाचेतनमात्रस्यमुख्यमित्रत्वंयुज्यते ॥ मिनो तित्रायतेचेतिमित्रमित्यभिधीयते ॥ तस्माद्योयंविजानातिसमित्रंतस्यनान्यथेतिभारते ॥ उक्थायुत्वा च्चविष्णुरेवात्रोक्तइत्यवगम्यते ॥ बृहतीसहस्रंह्युक्थनामकंमुख्यतः ॥ महाव्रतनियुक्तंयदृक्सहस्रंहरेः प्रियम् ॥ तदुक्थमितिसंप्रोक्तंतेनेयोविष्णुरेवहि ॥ तस्मादुक्थायुरित्युक्तऐश्वर्यादिंद्रउच्यते ॥ तस्मादु क्थायुरिंद्रेतिविष्णुर्यज्ञेषुपूज्यतइतिगारुडे ॥ विष्णुर्ह्युक्थायुरिंद्रइत्युच्यते ॥ यज्ञेष्वन्यइंद्रःपृथकूचो च्यते ॥ यमिंद्रमाहुर्वरुणंयमाहुर्यंमित्रमाहुर्यमुसत्यमाहुरित्युक्त्वातस्मैत्वातेभ्यस्त्वेतिभेदवचनाच्च ॥ स त्यइतिवायुः ॥ सदितिप्राणइतिश्रुतेः ॥ सदेवसत्यमित्युक्तंसत्योवायुरुदाहृतः ॥ साधुत्वंसत्यताप्रोक्ता साधुर्वायुर्हिसर्वतइतिशब्दनिर्णये ॥ प्रियधाम्नउपसमीपेगमनंनामतद्धामप्राप्तिकारणभगवत्प्रसादप्रा प्तिः ॥ अन्यथोपशब्दोऽव्यर्थःस्यात् ॥ नचतदेवभगवतःप्रियंधामविश्वामित्रेणप्राप्तम् ॥ बृहतीसहस्रेप्रथ मेसालोक्यंप्रददौहरिः ॥ द्वितीयेस्वपुरप्राप्तिंतृतीयेंतःपुरस्यच ॥ तथास्वविषयंज्ञानंविश्वामित्रेददौप्रभुरि तिचगारुडे ॥ नचेंद्रादिभिरैक्यमत्रोच्यते ॥ प्राणस्तथानुगमादितिचविष्णोरेवप्राणशब्दाभिधेयत्वमु

क्त्वा ॥ नवक्तुरात्मोपदेशादितिचेदध्यात्मसंबंधभूमाह्यस्मिन्निति वक्तुर्बृहतीसहस्रंशंसितुर्विश्वामित्रस्यें
द्रेणस्वात्मोपदेशःक्रियतइतिपक्षोनिराकृतोहिभगवतासूत्रेषु ॥ अध्यात्मसंबंधशब्देनावेशोविष्णोरिंद्रेवि
वक्षितोभगवता ॥ अन्येष्वंतर्यामिरूपेणसंबंधोस्त्येव ॥ अस्मिन्निंद्रेतुविशेषावेशस्तात्कालिकः॥ अधिका
त्मनःपरमात्मनःसंबंधोऽध्यात्मबंधः॥ नहिस्वात्मनास्वस्यसंबंधोभवति ॥ यद्यध्यात्ममात्रमत्रोच्यतइतिवि
वक्षितंतर्ह्यध्यात्मभूमेत्येवस्यात्संबंधशब्दोव्यर्थः ॥ तस्मादिंद्रादिजीवेभ्योविष्णोर्भेदएवात्रभगवतोविवक्षि
तः ॥ शास्त्रदृष्ट्यातूपदेशोवामदेववदितिशास्तुरंतर्यामिणोविष्णोःसर्वशरीरस्थितत्वात्सर्वनामाभिधेयत्वं
चोक्तमहंमनुरभवंसूर्यश्चेत्यादिवत् ॥ नहिमनुसूर्यादिर्भवतिवामदेवस्तेषांपक्षेपि ॥ सर्वप्रवृत्तिहीनतांहि
तेमोक्षंवदंति ॥ अत्रचाहंभूमिमददामार्यायेत्यादिनाप्रवृत्तिरेवोच्यते ॥ नचवामदेवेनमन्वादिकर्मक्रियते
कदापि ॥ अतीतार्थश्चायंदृश्यतेभूमिमददामित्यादिना ॥ नहिपूर्वंवामदेवेनतानिकर्माणिकृतानि ॥ भगवा
न्विष्णुर्हींद्रायभूमिमददात् ॥ सएवचसर्वेष्वंतर्यामित्वेनस्थित्वानामप्रवृत्तिनिमित्तानिसर्वकर्माणिकुर्वन्न
वबोधसूरिर्नियमनादिभिर्मनुसूर्यादिसर्वनामाभवति ॥ यदिभेदस्यपूर्वमपिमिथ्यात्वमंगीक्रियतेतर्हिभूमि
दानादिसर्वकर्मणांमन्वादित्वस्यापिमिथ्यात्वादहंमनुरभवमित्यादिकंसर्वमनर्थकमेवभवति ॥ जीवेश्वरभि
दाचैवजीवभेदःपरस्परम् ॥ जडेश्वरभिदाचैवजडभेदस्तथैवच ॥ जडजीवभिदाचैवसत्योयंभेदपंचकः ॥
नकदाचिन्निवर्त्योयंमुक्तौसंसारएवच ॥ यएतदन्यथाब्रूयुस्तेहियांत्यधरंतमइतिभविष्यत्पर्वणि ॥ अस
त्यमप्रतिष्ठंतेजगदाहुरनीश्वरम् ॥ ईश्वरोहमहंभोगीसिद्धोहंबलवान्सुखी ॥ एतांदृष्टिमवष्टभ्यनष्टात्मानोऽ
ल्पबुद्धयः ॥ आसुरींयोनिमापन्नामूढाजन्मनिजन्मनि ॥ मामप्राप्यैवकौंतेयततोयांत्यधमांगतिमित्यादि

च ॥ नचप्राणोवाअहमस्म्यृषइत्यादावहमस्म्यादिशब्दोस्मच्छब्दार्थस्थः ॥ एषतपन्नेवास्मीत्युपरितन
स्यवैयर्थ्यात् ॥ प्राणोह्येषयएषतपतीत्युक्तत्वात् ॥ अतोहमस्मीत्यादिचभगवन्नामैव ॥ नचजीवैक्यव
चनमत्रप्रस्तुतम् ॥ तावाएताःसर्वाऋचःसर्वेवेदाःसर्वेघोषाएकैवव्याहृतिःप्राणएवेतिसर्वनामाभिधेयत्वंभ
गवतउक्त्वातत्रैवप्रमाणत्वेनविश्वामित्रंह्येतदहरित्याद्याख्यायिकोक्ता ॥ तस्मात्सर्वांतर्यामित्वात्सर्वगुण
त्वात्सर्वशक्तित्वाच्चसर्वनामवत्त्वमेवविष्णोरुच्यतेनतुसर्वस्वरूपत्वम् ॥ उक्तंचभारते ॥ स्रष्टृत्वाच्चैवपातृ
त्वान्नियमाच्चप्रकाशनात् ॥ सर्वत्वमुक्तंविष्णोस्तुनतुसर्वस्वरूपतइति ॥ पुरुषएवेदंसर्वंयद्भूतंयच्चभव्यमि
तिपुरुषेणैवेदंसर्वंव्याप्तंयद्भूतंयच्चभव्यम् ॥ आतृणादाकरीषात्सर्वंभगवानितिमिथ्यादृष्टिरेवेतिचश्रुतिः ॥
हिरण्मयोहवाअमुष्मिँल्लोकेसंभवतिहिरण्मयःसर्वेभ्योभूतेभ्योददृशेयएवंवेदअमृतोहवाअमुष्मिँल्लोकेसंभ
वत्यमृतःसर्वेभ्योभूतेभ्योददृशेयएवंवेदसएतेनप्रज्ञेनात्मनास्माल्लोकादुत्क्रम्यामुष्मिन्स्वर्गेलोकेसर्वान्का
मानाप्त्वामृतःसमभवत्समभवदित्यादिनामुक्तानामपिभेदस्यैवोक्तेश्च ॥ नहिभेदाभावेसर्वेभ्योभूतेभ्योददृ
शइतियुज्यते ॥ नचामुक्तैःसर्वभूतैर्मुक्तोदृश्यते ॥ एकत्वेतुददृशइत्येतावतापूर्यतेसर्वेभ्योभूतेभ्यइतिव्य
र्थम् ॥ नचतेषांपक्षेस्वयमपिस्वात्मानंपश्यति ॥ कर्तृकर्मविरोधइतिहितेवदंति ॥ अतःसर्वश्रुतिविरोधएव
जीवेश्वरैक्यांगीकारे ॥ नचकर्तृकर्मविरोधोनामास्तीत्यत्रकिंचिन्मानम् ॥ श्रुत्यनुभवसिद्धत्वाच्चस्वदर्श
नादेः ॥ नचतेषांपक्षेप्रज्ञेनसर्वज्ञेनपरमात्मनासर्वकामावाप्तिर्नामांगीक्रियतेशरीरादुत्क्रांतस्यज्ञानिनः ॥
तस्माद्वेदविरुद्धवादिनएवतेपि ॥ नचशून्यवादिनःकश्चिद्विशेषोदृश्यते ॥ नहिसर्वावाच्यंसर्वाज्ञेयंशून्यंचे
तिकश्चिद्विशेषः ॥ केनापिशब्देनावाच्यस्यलक्षणायामपिप्रमाणंनास्ति ॥ क्षीरमाधुर्यादयोपितैरेवशब्दै

रुच्यंते ॥ विशदंक्षीरमाधुर्यंस्थिरमाज्यस्यतीक्ष्णकम्॥गुडस्यपनसादीनांनिर्हारीत्यभिधीयतइतिशब्दनिर्ण
ये ॥ नचसर्वगुणदोषक्रियाविनिर्मुक्तस्यास्तित्वमपिकुत्रचिद्दृष्टम् ॥ अतःशून्यवादिनएवतेपि ॥अस्तीत्ये
वोपलब्धस्यतत्त्वभावःप्रसीदतीत्यादिनाप्रसादादिगुणाश्चभगवतोदृश्यंते ॥ यस्यब्रह्मचक्षत्रंचोभेभवत
ओदनइत्यादिनाकर्माणिच ॥ तस्मिन्देवाःश्रिताःसर्वइत्यादिगुणाश्चतत्रैवोक्ताः ॥ अक्षण्वंतःकर्णवंतः
सखायोमनोजवेष्वसमाबभूवुः ॥ आदघ्नासउपकक्षासउत्वेह्रदाइवस्नात्वाउत्वेददृश्रइतिमुक्तानामपिता
रतम्यंचोक्तम् ॥ श्रुत्वाविष्णुंकर्णफलंप्राप्तत्वात्कर्णसंयुताः ॥ अक्षण्वंतोदर्शनाच्चविष्णोर्मुक्ताश्चयेग
णाः ॥ तारतम्यंचतेषांहिश्रुतावुदितमंजसा ॥ क्षीरसागरदघ्नास्तुकेचित्तिष्ठंतिमुक्तिगाः ॥ उपस्थिता
ब्रह्मवनंकेचिदश्वत्थमंडलम् ॥ ऐरेह्रदेकेचिदपिदेवाएवपरंहरिं ॥ नागभोगशयंमुक्तादद्दृश्रेधिकमोदिनः ॥
सागरादिस्थिताविष्णुंपश्यंतिकश्चिदेवहीतिब्रह्मसारे ॥ यत्रब्रह्मापवमानछंदस्यां ३ वाचंवदन् ॥ ग्राव्णा
सोमेमहीयतेसोमेनानंदंजनयन्निंद्रायेंदोपरिस्रव ॥ यत्रज्योतिरजस्रंयस्मिँल्लोकेस्वर्हितम् ॥ तस्मिन्मांधे
हिपवमानामृतेलोकेअक्षितइंद्रायेंदोपरिस्रव ॥ यत्रराजावैवस्वतोयत्रावरोधनंदिवः ॥ यत्रामूर्यह्वतीरा
पस्तत्रमाममृतंकृधींद्रायेंदोपरिस्रव ॥ यत्रानुकामंचरणंत्रिनाकेत्रिदिवेदिवः ॥ लोकायत्रज्योतिष्मंत
स्तत्रमाममृतंकृधींद्रायेंदोपरिस्रव ॥ यत्रानंदाश्चमोदाश्चमुदःप्रमुदआसते ॥ कामस्ययत्राप्ताःकामा
स्तत्रमाममृतंकृधींद्रायेंदोपरिस्रव ॥ इत्यादिनाब्रह्मसूर्ययमादीनांसर्वदेवानांदिवोदेव्याअवरोधभूतानांस
र्वदेवीनांगंगाद्यब्देवतानांचवेदव्याख्यानंसोमयागादिकंकामचरणंचमुक्तानांभेदेनावस्थितानामुच्यते ॥
मुक्ताश्चात्रोच्यंतइतिप्रतीयते ॥ अमृतंकृधीतिवचनात् ॥ अमुक्तानांस्वेस्वेलोकेऽवस्थानंहितेषाम् ॥

मुक्तानांहिविष्णुलोकेवस्थानंदेवानाम् ॥ मुक्तःप्रतिज्ञानात् ॥ संकल्पादेवचतच्छ्रुतेः ॥ जगद्व्यापारवर्जम् ॥ भोगमात्रसाम्यलिंगाच्च ॥ अनावृत्तिःशब्दादनावृत्तिःशब्दात् ॥ इत्यादिमुक्तसूत्रेभ्यश्चमुक्तानांविष्णोर्भेदोभोगादिकंचसर्वंप्रतीयते ॥ ग्राव्णासोमेमहीयतइतिब्रह्मणोन्यमुक्तैःपूज्यत्वंचप्रतीयते ॥ नचसूत्रेषुनिश्चितार्थस्यौपचारिकत्वंवक्तुंयुज्यते ॥ निर्णयात्मकत्वात्तेषाम् ॥ अतिप्रसंगश्चोपचारादिकल्पने ॥ ब्रह्मसूत्रपदैश्चैवहेतुमद्भिर्विनिश्चितैरितिनिश्चितानिब्रह्मसूत्राणि ॥ बहुनात्रकिमुक्तेनयावच्छ्वेतंनगच्छति ॥ योगीतावन्नमुक्तःस्यादेषशास्त्रस्यनिर्णयइतिचादित्यपुराणे ॥ नचनिर्णायकानिभगवद्वाक्यान्यपहायमानुषवाक्यैरेवतेषामुपचारत्वादिकल्प्यम् ॥ नचभोगरहितामुक्तिर्नामान्यास्तीत्यत्रकिंचिन्मानम् ॥ भुंजतेपुरुषंप्राप्ययथादेवग्रहादयः ॥ तथामुक्तावुत्तमायांविष्णुमाविश्यभुंजते ॥ विष्णो

तद्वाइदंबृहतीसहस्रंसंपन्नंतस्ययानिव्यंजनानितच्छरीरंयोघोषःसआत्मायऊष्माणःसप्राणः

र्वशाश्चतेसर्वेसर्वदादुःखवर्जिताः ॥ नतुविष्णुगुणान्सर्वेभुंजतेतेकदाचन ॥ बाह्यभोगान्भुंजतेचतारतम्येनकांश्चन ॥ विष्णोर्देहाद्बहिश्चापिनिर्गच्छंतियथेष्टतइतिस्कांदे ॥ इदंज्ञानमुपाश्रित्यममसाधर्म्यमागताः ॥ सर्गेपिनोपजायंतेप्रलयेनव्यथंतिचेतिभगवद्वचनम् ॥ तस्मान्मुक्तैरपीज्यमानःसर्वस्माद्भिन्नःसर्वोत्तमःसर्वनामासर्वशक्तिःसर्वगुणसंपूर्णोनारायणःसर्ववेदादिषूच्यतइतिसिद्धम् ॥ २ ॥ यावतीभिर्ऋग्भिःशंसिताभिःषट्त्रिंशत्सहस्राण्यक्षराणिभवंति ॥ यस्मात्कस्मादपिच्छंदसस्तावत्यःशंसनीयास्तदासंपादितंबृहतीसहस्रंभवति ॥ तत्रयाव्यंजनाभिमानिदेवतासैवसर्वप्राणिनांशरीराभिमानिदेवतास्वायंभुवोमनुः ॥ घोषाभिमानिदेवतासर्वजीवाभिमानीब्रह्मा ॥ ऊष्माभिमानीवायुः ॥ व्यंजनानां

शरीरस्यचाभिमानीमनुःस्मृतः ॥ घोषाणांसर्वजीवानामभिमानीचतुर्मुखः ॥ ऊष्माभिमानीवायुश्चप्र
तिपाद्योजनार्दनः ॥ एतेषामधिपंविष्णुंबृहत्युक्थस्यदेवताम् ॥ उपास्यैववसिष्ठोऽभूद्वसिष्ठःशक्रएवच॥
एतांविद्यांकौशिकायभरद्वाजायचादरात् ॥ एतद्विद्याबलेनैवविद्याधीशेनबंधुना ॥ यज्ञेष्वाहूयतेनित्यमिं
द्रोविष्णुप्रसादतः ॥ षट्त्रिंशद्रूपवान्विष्णुर्व्यंजनेषुचसंस्थितः ॥ तान्येवविष्णुरूपाणिरात्रीणामपिदेव
ताः ॥ एकैकंचसहस्रंतद्व्यंजनेषुचरात्रिषु ॥ रूपंविष्णोःस्थितंव्यूह्यषट्त्रिंशतिसहस्रधा ॥ षट्त्रिंशतिसह
स्राणिस्वरगाणिहरेरपि ॥ तान्येवाह्नांदेवतानिरूपाणिपरमात्मनः ॥ द्वासप्ततिसहस्राणिरूपाण्येवंरमाप
तेः ॥ शताब्दानामहोरात्रदेवतान्युत्तमानिच ॥ बृहतीसहस्रवर्णानामपिध्यात्वाखिलान्यपि ॥ शतवर्षह

तद्धस्मवैतद्विद्वान्वसिष्ठोवसिष्ठोबभूवततएतन्नामधेयंलेभएतदुहैवेंद्रोविश्वामित्रायप्रोवाचैत
दुहैवेंद्रोभरद्वाजायप्रोवाचतस्मात्सतेनबंधुनायज्ञेषुहूयतेतद्वाइदंबृहतीसहस्रंसंपन्नंतस्यवाएत
स्यबृहतीसहस्रस्यसंपन्नस्यषट्त्रिंशतमक्षराणांसहस्राणिभवंतितावंतिशतसंवत्सरस्याह्नांस

रिध्यानफलमाप्नोतिपूरुषः ॥ एवंज्ञात्वापिसंपाद्यबृहतीनांसहस्रकम् ॥ ज्ञानान्नारायणस्यैवप्रकृष्टज्ञान
संततेः ॥ सएवमेमयोविष्णुःप्रकृष्टज्ञानरूपकः ॥ प्राधान्यंमयशब्दोयंवक्तिविष्णोःसदैवहि ॥ प्रधा
नोस्यहरिर्यस्मात्प्रज्ञारूपोधिदेवता ॥ ब्रह्मामृतंचतेनायंब्रह्मादिमयउच्यते ॥ सर्वोत्तमस्वरूपत्वाद्विष्णु
रुक्तःसदेवता ॥ ब्रह्मपूर्णगुणत्वाच्चनित्यत्वादमृतंतथा ॥ एतादृशंतुयोविष्णुंप्रधानंवेत्तिसर्वदा ॥ प्रज्ञा
दिभिर्गुणैःस्वस्मात्परेभ्यश्चसदाधिकम् ॥ प्रज्ञादेवब्रह्मामृतमयःसपरिकीर्तितः ॥ प्रज्ञादिमयएवंसभूत्वा
देवानुक्रमेणच ॥ एतिमारुतपर्यंतान्मारुतेनचकेशवम् ॥ संपादनाच्चविद्यायाअस्याःपरतएवच ॥ द्वा

सप्ततिसहस्राणिरूपाणिहरिमापतेः ॥ बृहतीसहस्रसंस्थानिस्वरव्यंजनभेदतः ॥ तान्येवपुरुषस्थानिय
स्मात्पुरुषसंस्थितम् ॥ बृहतीसहस्रंतच्छंस्यंव्यज्यतेनद्युतेनरम् ॥ द्वासप्ततिसहस्राणितान्येवाहर्निशासु
च ॥ विष्णुरूपाणिसूर्येपित्वहोरात्रंहिसूर्यगम् ॥ तस्माद्योयमहंनामासदाहेयत्वहेतुतः ॥ सएवासौ
सूर्यसंस्थःसाक्षान्नारायणःप्रभुः ॥ योसौसूर्यगतोविष्णुःसोहेयोभास्करादिभिः ॥ एवंमनुष्यजीवेषुसू
र्यादिषुचसंस्थितः ॥ एकएवपरोविष्णुरितिजीवसमीपगम् ॥ ईक्षेन्नारायणंदेवंसर्वजीवेश्वरेश्वर
मित्यैतरेयसंहितायाम् ॥ संपन्नस्यपरस्तादेवानंतरमेव ॥ नपुनःकर्मांतरेणशरीरारंभएवंविदोभव

हस्राणिभवंतिव्यंजनैरेवरात्रीराप्नुवंतिस्वरैरहानितद्वाइदंबृहतीसहस्रंसंपन्नंतस्यवाएतस्यबृह
तीसहस्रस्यसंपन्नस्यपरस्तात्प्रज्ञामयोदेवतामयोब्रह्ममयोऽमृतमयःसंभूयदेवताअप्येतियएवं
वंवेदतद्योहंसोसौयोसौसोहंतदुक्तमृषिणासूर्यआत्माजगतस्तस्थुषश्चेत्येतदुहैवोपेक्षेतोपेक्षेत
॥ ४ ॥ इत्यैतरेयोपनिषत्सुद्वितीयारण्यकेद्वितीयोध्यायः ॥ २ ॥ २ ॥

ति ॥ प्रज्ञामयोदेवतामयइत्यादिपृथक्पृथङ्मयशब्दोनिरुद्धादिचतुर्मूर्तीनामपिपरस्परसाम्येनसर्व
जीवेभ्यआधिक्यंज्ञातव्यमितिदर्शयितुम् ॥ अंतर्यामिस्वरूपेणज्ञापयन्ननिरुद्धकः ॥ प्रज्ञेत्युक्तोद्योतना
च्चप्रद्युम्नोदेवतोदितः ॥ अमंकरोतियच्छास्त्रमृतंस्वस्मिन्पुनःपुनः ॥ संकर्षणोमृतंतस्माद्वासुदेवस्तुबृंह
णात् ॥ जीवानांमुक्तिदानेनब्रह्मेतिकथितःप्रभुः ॥ एवमेकोपिभगवांश्चतुर्धासमुदीरितइत्यादिचातु
रात्म्ये ॥ संभूयेत्यत्रसमित्युपसर्गाद्बृहतीसहस्रसंपादनानंतरंभगवदाधिक्यंपुनराधिक्येनज्ञायतइत्युक्तंभ
वति ॥ भगवदाधिक्यमधिकंज्ञात्वादेवताअपिक्रमेणप्राप्नोति ॥ द्वासप्ततिसहस्राणांरूपाणांपर्युपास

नात् ॥ आधिक्यंज्ञायतेविष्णोर्नितरांहिपुनःपुनः ॥ प्राप्नोतिदेवताश्चैवकेशवांताःक्रमेणतु ॥ योग्याअ
स्याश्चविद्यायादेवाऋषयएवचेत्यादिसत्तत्त्वे ॥ बृहतीसहस्रस्थितानिविष्णुरूपाणिपुरुषेस्थितानिपुरुषै
रहेयत्वादहंनामकानितान्येवसूर्येस्थितानियान्येवसूर्येस्थितानितान्यपिसूर्यादिभिरहेयत्वादहंनामकानित
देवोक्तं नारायणाख्यंपरंब्रह्मैवसर्वदाउपसमीपईक्षेत ॥ नात्रजीवेश्वराभेदोविवक्षितः ॥ उपसमीपेई
क्षेतेतिसमीपेदर्शनवचनात् ॥ नचनिरर्थकत्वमुपसर्गस्यांगीकर्तुंयुक्तम् ॥ नह्यार्षेषुवेदादिषुव्याकरणनि
रुक्तादिषुचोपसर्गाणांवैयर्थ्यमंगीकृतंकुत्रचित् ॥ उक्तंचभगवताव्यासेन ॥ नानर्थकःस्वरोवापिवर्णो
वाकुत्रचिद्भवेत् ॥ पदंवाक्यंकुतश्चस्यान्नाल्पार्थमपिकुत्रचित् ॥ उच्चाराद्यर्थमपिवानास्तिकिंचित्स्वरा
दिकम् ॥ महार्थमेवसर्वंहिवेदेवावैदिकेपिवेति ॥ सुकरंचसर्वपदानामनर्थकल्पनंयैश्चवाक्यैरर्थवत्त्वंप्रती
यतेतेषामप्यनर्थकत्वमेवस्याद्विशेषाभावात् ॥ नचमानुषवाक्येनवेदपदानामानर्थक्यंकल्प्यम् ॥ जीवे
श्वरैक्यांगीकारेयोहंसोसावित्येवपूर्यतेपुनर्योसौसोहमितिव्यर्थम् ॥ नह्यस्यतेनैक्येतस्यानेनभेदशंकाभव
ति ॥ अस्यतस्येतिभेदांगीकारेनाभेदोमुख्यः ॥ किंतुतदधीनत्वमेवान्यस्यभवतिस्नेहविशेषोवा ॥ चै
त्रोमैत्रोमैत्रश्चैत्रइतिवत् ॥ तत्रत्वुभयस्नेहापेक्षयापुनर्वचनंयुज्यते ॥ अभ्यासत्वेह्येकप्रकारेणप्रयोगो
दृष्टः ॥ अत्रहिप्रयोगद्वैविध्यंदृश्यते ॥ एकप्रकाराबहुशोवागभ्यासइतीरितः ॥ अर्थांतरार्थाद्विविधाप्र
युक्तेतिहिनिर्णयइतिगारुडे ॥ अहंशब्दस्याहेयत्वांगीकारेनराहेयत्वंसुराहेयत्वंचोच्यतइतिनवैयर्थ्यम् ॥
अइतिब्रह्मतत्रागतमहमितिनवाअहमिमंविजानातितस्योपनिषदहमित्यादौविष्णोरेवाहेयत्वेनाहंनामकत्व
प्रसिद्धेः ॥ अहंशब्दस्यास्मच्छब्दार्थकत्वेहमिमंनजानातीतिनयुज्यते ॥ तस्यभूरितिशिरोभुवरितिबाहूइ

त्यादिनाक्षिसंस्थोभगवानेवस्रहंशब्दोदितः ॥ नहिजीवस्याक्षिणिपृथक्शिरोबाह्वादिकंविद्यते ॥ हृदिस्थितमेवहितस्यस्वरूपम् ॥ जागरितेप्यक्ष्यादिषुविशेषसन्निहितंभवतिदीपप्रकाशवत् ॥ अवस्थितिवैशेष्यादितिचेन्नाभ्युपगमाद्धृदिहि ॥ गुणाद्वालोकवदितिचसूत्रात् ॥ आदित्येहिरण्मयःपुरुषस्तस्ययथाकप्यासंपुंडरीकमेवमक्षिणीइत्यादिसूर्येस्थितस्यविष्णोरूपमुक्त्वास्थितस्यापितस्यैतस्यतदेवरूपमितिकथनाच्च ॥ सएषएवैतस्मादर्वाञ्चोलोकास्तेषांचेष्टइत्यादिलोकाधिपत्यकथनाच्च ॥ नहिकश्चिद्भिक्षुकःपातालाद्यधिपतिरित्यत्रकिंचिन्मानम् ॥ तस्माद्भगवानेवाहेयत्वादहंनामा ॥ चक्षुर्मित्रस्यवरुणस्याग्नेः ॥ जगतस्तस्थुषश्चात्मेत्यादिजीवेभ्योभेददर्शनाच्च ॥ यच्चाप्नोतियदादत्तेयच्चात्तिविषयानिह ॥ यच्चास्यसंततोभावस्तस्मादात्मेतिभण्यतइतिभारते ॥ देवताअपिएतिप्राप्नोतीत्येवचार्थः ॥ लयश्चेद्देवतास्वप्येतीतिस्यात् ॥ नचविनाशःपुरुषार्थः ॥ मयट्शब्दस्यभगवत्प्राधान्यार्थत्वानंगीकारेसंभूयदेवताअप्येतीतिलयश्चयुज्यते ॥ उपासनायास्तुसंपन्नस्यपरस्तादियुक्तत्वात्पूर्वमेवसिद्धिः ॥ सर्वस्माद्भिन्नमीशेशंजीवाभेदेनयःस्मरेत् ॥ सयात्यंधंतमोघोरंनित्यातिशयदुःखदम् ॥ सर्वोत्तमंतुयोविष्णुंभिन्नंजानातिसर्वतः ॥ नित्यानंदमसौयातिवासुदेवप्रसादतइतिचैतरेयसंहितायाम ॥ अतःसर्वव्यतिरिक्तःसर्वोत्तमःसर्वगुणसंपूर्णोनारायणइतिसिद्धम् ॥ सर्वप्रमाणसिद्धत्वंवक्तुमाध्यायमूलतः ॥ अध्यायांतेद्विरुक्तिःस्यात्पूर्वोक्तस्यावधारणइतिशब्दनिर्णये ॥ ४ ॥ ॥ इतिश्रीमदानंदतीर्थभगवत्पादाचार्यविरचितेश्रीमन्महैतरेयोपनिषद्भाष्येद्वितीयप्रपाठकेद्वितीयोऽध्यायः ॥ २ ॥ २ ॥

ॐ ॥ योसौनारायणोदेवःपरमात्मासनातनः ॥ नित्याततगुणत्वात्सआत्मेत्युक्तःसदाश्रुतौ ॥ नारायणादिरूपेणपंचधावस्थितःसदा ॥ सर्वस्योत्थापकत्वात्सउक्थमित्यभिधीयते ॥ बृहतीसहस्ररूपेचसउक्थेपंचधास्थितः ॥ पंचभेदंहितच्छस्त्रंतृचाशीतित्रयंचयत् ॥ पूर्वापरंतृचाशीत्याइतिपंचात्मकंहितत् ॥ प्रथमेपंचकाद्भागेस्थितोनारायणःस्वयम् ॥ ऋक्त्र्याशीतिकेपूर्वेगायत्रीच्छंदआत्मके ॥ वासुदेवःस्थितोनित्यमृगशीतित्रयेतथा ॥ द्वितीयेबृहतीच्छंदस्यसौसंकर्षणःस्थितः ॥ यस्यावेशबलेनैवजीवःसंकर्षणोपरः ॥ पृथिवींबिभर्तिसततंतत्प्रसादात्तवैभवः ॥ तृतीयायांतृचाशीत्यामुष्णिक्छंदसिकेशवः ॥ प्रद्युम्नरूपीसततं

हरिःॐ ॥ ॥ योहवाआत्मानंपंचविधमुक्थंवेदयस्मादिदंसर्वमुत्तिष्ठतिससंप्रतिवित्पृथिवीवायुराकाशआपोज्योतींषीत्येषवाआत्मोक्थंपंचविधमेतस्माद्धीदंसर्वमुत्तिष्ठत्येतमेवाप्येत्ययनंह्वैसमानानांभवतियएवंवेदतस्मिन्योन्नंचान्नादंचवेदाहास्मिन्नन्नादोजायतेभवत्यस्यान्नमापश्चपृथिवीचान्नमेतन्मयानिह्यन्नानिभवंतिज्योतिश्चवायुश्चान्नादमेताभ्यांहीदंसर्वमन्नम

स्थितोयस्यैवसन्निधेः ॥ कामःप्रद्युम्ननामाभूत्तत्प्रसादात्तवैभवः ॥ उक्थस्यैवांत्यभागेतुसोनिरुद्धोहरिःस्थितः ॥ कामपुत्रोनिरुद्धाख्यांयदावेशेनलब्धवान् ॥ एवंपंचात्मकंविष्णुंबृहत्युक्थस्यदेवताम् ॥ योवेदसम्यग्वेत्तासतानिरूपाणिवैहरेः ॥ स्थितानिपंचभूतेषुपृथिव्याद्यभिधानिच ॥ तदावेशात्पृथिव्यादिनामभूतेषुपंचसु ॥ पृथुत्वात्पृथिवीनामाभूमौनारायणःस्थितः ॥ बलज्ञानस्वरूपत्वाद्वायुनामासएवच ॥ वायौसंकर्षणोनित्यंस्थितआकाशनामकः ॥ व्याप्तत्वाद्वासुदेवस्तुसदाकाशेस्थितः प्रभुः ॥ अनिरुद्धस्तथैवाप्सुबद्धरूपोव्यवस्थितः ॥ अप्नामापालनान्नित्यंप्रद्युम्नोज्योतिषिस्थितः ॥ ज्यो

तिर्नामाद्योतनाच्चबहुरूपःपृथक्पृथक् ॥ यद्यप्यस्यहरेःसर्वरूपाण्यप्यखिलैर्गुणैः ॥ पूर्णान्यथापिचै
केकरूपेषुसपृथग्गुणैः ॥ व्यवहारान्पृथग्देवःकरोतीवहिलीलया ॥ तस्मात्पृथगिवास्येतिनामविष्णोःपरा
त्मनः ॥ सर्वत्रसर्वनाम्नोपिव्यवहारार्थमीर्यते ॥ एतस्माद्धिहरेर्नित्यंजगदुत्तिष्ठतिप्रभोः ॥ मुक्तौलयेच
तंयातिसचसर्वाश्रयःप्रभुः ॥ यएवंवेत्तितंविष्णुमुपास्तेचापरोक्षतः ॥ समुक्तःसमजातीनामाश्रयश्चभवि
ष्यति ॥ सजातीनामुत्तमत्वपदयोग्याहियेसुराः ॥ ब्रह्मेंद्राद्यास्तेहियोग्याःसाक्षादस्मिन्नुपासने ॥ अन्ये
षांज्ञानमात्रेणयोग्यमाधिक्यमाप्यते ॥ संकर्षणश्चप्रद्युम्नस्तत्रभोक्तृषुसंस्थितौ ॥ भोक्तृशक्तिप्रदौनि

स्यावपनमाकाशआकाशेहीदंसर्वंसमोप्यतआवपनंहवैसमानानांभवतियएवंवेदतस्मिन्योन्नं
चान्नादंचवेदाहास्मिन्नन्नादोजायतेभवत्यस्यान्नमोषधिवनस्पतयोन्नंप्राणभृतोन्नादमोष
धिवनस्पतीन्हिप्राणभृतोदंतितेषांयउभयतोदंताःपुरुषस्यानुविधांविहितास्तेन्नादाअन्नमितरे

त्यंभोक्तारौचविशेषतः ॥ नारायणानिरुद्धौतौभोग्यवस्तुषुसंस्थितौ ॥ तर्पकौसर्वलोकानांतस्माद्भोग्यौ
नचर्व्यतः ॥ अवकाशप्रदोनित्यंवासुदेवोनभःस्थितः ॥ एवंपंचात्मकंविष्णुंयउपास्तेसदैवतु ॥ अवका
शप्रदःसोपिस्वजातीनांभविष्यति ॥ भोक्ताचाप्यायकश्चैवतस्यविष्णोःप्रसादतः ॥ ब्रह्मेंद्राद्याःस्वजातीश
पदयोग्याअमुष्यच ॥ योग्याउपासनस्यस्युस्तदन्येज्ञानमात्रके ॥ संकर्षणश्चप्रद्युम्नोजंगमेषुव्यवस्थि
तौ ॥ नारायणानिरुद्धौतुस्थावरांतर्गतौप्रभू ॥ तत्राप्याकाशगोनित्यंवासुदेवोनिरंजनः ॥ प्राणानांभ
रणान्नित्यंप्राणभृन्नामतद्धरेः ॥ नह्यन्यःप्राणभर्तास्तितमृतेपुरुषोत्तमम् ॥ ओषणाच्चनिधानाच्चसएवौ
षधिनामकः ॥ वननीयपतित्वाच्चसएवहिवनस्पतिः ॥ अन्नेस्थित्वात्तृप्तिदत्वंतस्याद्यत्वमपीष्यते ॥

पुरुषस्यहरेर्येतुसदाकारेणसंस्थिताः ॥ देवगंधर्वमर्त्याद्यास्तेषुसंकर्षणोहरिः ॥ प्रद्युम्नश्चस्थितोनित्यंपुरु
षाकृतिरेवतु ॥ तौभोक्तारौचभोग्यानांभोजकावखिलस्यच ॥ नारायणानिरुद्धौतुतथान्यपशुषुस्थि
तौ ॥ वृषभाश्वादिरूपेणतृप्तिदावखिलस्यच ॥ वाहनोपानदादीनामारोढारोनरादयः ॥ यतःसंकर्षण
श्चैवप्रद्युम्नस्तेषुसंस्थितौ ॥ ततस्तयोर्हिसंचारउपरीवभविष्यति ॥ आकाशगोवासुदेवःपंचमोत्राप्युपा
स्यते ॥ वाहनादियुतोमुक्तौभवेदेतदुपासकइत्यैतरेयसंहितायाम् ॥ आत्मशब्दाच्चनभूतमात्रमत्रोच्यते ॥
नचमुख्यार्थंपरित्यज्योपचारार्थोंगीकर्तव्योविरोधाभावे ॥ सर्वनामवत्त्वंच्चभगवतःश्रुत्यैवोपपादितंपूर्व

पशवस्तस्मात्तइतरान्पशूनधीवचरंत्यधीवह्यन्नेन्नादोभवत्यधीवहसमानानांजायतेयएवंवेद
॥ १ ॥ तस्ययआत्मानमाविस्तरांवेदाश्नुतेहाविर्भूयओषधिवनस्पतयोयच्चकिंचप्राणभृत्स
आत्मानमाविस्तरांवेदौषधिवनस्पतिषुहिरसोदृश्यतेचित्तंप्राणभृत्सुप्राणभृत्सुत्वेवाविस्तरामा

त्र ॥ वपनीरोमकरणावकाशप्रदानबीजवर्धनेष्विति चधातुः ॥ तस्मिन्पंचकेयोन्नमन्नदंचवेदसोस्मिन्स्व
जातियूथेविशेषेणान्नादआजायतेह॥तस्मिन्वेदअस्मिन्नाजायतइतिपृथक्पृथक्पुनःपुनर्विशेषणादुपासक
स्यस्वजातिसन्निधानाच्चस्वजाताविति ज्ञायते ॥ क्षीराब्धिशयनंविष्णोरूपंयत्पुरुषाभिधम् ॥ संकर्षण
श्चप्रद्युम्नस्तदाकारौनृषुस्थितौ ॥ नारायणानिरुद्धौतुपश्वाकारौपशुस्थितावितिसत्तत्त्वे ॥ गुणवैशेष्या
भावेनवाहनादिषुचरणमात्रादधीवचरंतीत्यादाविवशब्दः ॥ १ ॥ आविर्भावंतारतम्याद्योवेदपरमात्मनः ॥
सतस्यैवविशेषेणप्रीतियोगाद्भविष्यति ॥ स्थावरंजंगमंचैवभूयस्त्वेनाश्नुतेहरिः ॥ आविर्भूतस्तेषुस
दासम्यक्स्वात्मानमेवच ॥ तारतम्यात्सन्निहितंसर्वभूतेषुकेशवः ॥ वेत्त्येकएवविष्णोर्यद्विशेषावेशनंसदा ॥

जंगमेषुचवृक्षेषुनैवतादृक्शिलादिषु ॥ तस्माद्वृक्षादिषुरसश्चित्तंचलनवत्सुच ॥ दृश्यतेनशिलाद्येषुसन्निधिर्नहितादृशी ॥ शिलाद्येषुस्थितोविष्णुर्भारदार्ढ्यादिकारणम् ॥ नैवचित्तादिकस्यातोवृक्षाद्याउत्तमास्ततः॥विशेषोयंपदार्थानांनतुविष्णोःकथंचन॥यत्रविष्णुर्गुणाधिक्यंदर्शयेद्वस्तुतद्वरम्॥गुणपूर्णोहिसर्वत्रस्वयंविष्णुःसनातनः॥वृक्षेभ्योप्यधिकंविष्णुर्जंगमेषुप्रकाशितः॥तेभ्योपिपुरुषेविष्णुर्गुणाधिक्यप्रकाशकइत्यादिच॥यआत्मानंपरमात्मानमाविस्तरांआविर्भावतारतम्येनवेदसतस्यविष्णोरेव॥सर्वेषांतदीयत्वेपिप्रियत्वा

त्मातेषुहिरसोदृश्यतेनचित्तमितरेषुपुरुषेत्वेवाविस्तरामात्मासहिप्रज्ञानेनसंपन्नतमोविज्ञातंवदतिविज्ञातंपश्यतिवेदश्वस्तनंवेदलोकालोकौमर्त्येनामृतमीप्सत्येवंसंपन्नोथेतरेषांपशूनामशनापिपासेएवाभिविज्ञानंनविज्ञातंवदंतिनविज्ञातंपश्यंतिनविदुःश्वस्तनंनलोकालोकौतएतावंतोभवंतियथाप्रज्ञंहिसंभवाः ॥ २॥ सएषपुरुषःसमुद्रःसर्वंलोकमत्तियद्धकिंचाश्नुतेत्येनंमन्यतेयद्यंतरिक्षलोकमश्नुतेत्येनंमन्यतेयद्यमुंलोकमश्नुवीतात्येवैनंमन्येतसएषपुरुषःपंचविधस्तस्ययदुष्णंतज्ज्योतिर्यानिखानिसआकाशोथयल्लोहितंश्लेष्मारेतस्ताआपोयच्छरीरंसापृथिवीयः

त्तदीयत्वविशेषणम् ॥ ओषधिवनस्पतयोयच्चकिंचप्राणभृत्तत्सर्वंशिलादिभ्योभूयस्त्वेनतेष्वाविर्भूतोश्नुतेभगवान्॥सएवचनारायणःसम्यक्स्वात्मानमाविस्तरांवेद ॥ अनचेष्टायामितिधातोश्चेष्टावत्त्वमेवप्राणभृत्त्वंपश्वादीनाम्॥ज्ञानानुसारेणह्युत्पत्तयःसंभवाः ॥२॥ योस्मिन्पुरुषेपश्वादिभ्यआधिक्येनसन्निहितोभगवान्सएषपुरुषःसमुद्रःसमुद्रिक्तोन्येभ्यः ॥ सजीवोयद्यपिभगवत्प्रसादात्सर्वलोकाधिपोभवतिसर्वलोकानतीत्ययत्किंचिदलौकिकंमोक्षाख्यमप्यश्नुतेतथापितमेनमात्मशब्देनप्रस्तुतंविष्णुमत्येवमन्यतेऽधिकमेव

मन्यतेस्वात्मनःसर्वस्माच्चमुक्तोपिनतेनसाम्यंतद्भावंवामन्यते ॥ कृष्णोमुक्तैरिज्यतेवीतमोहैः ॥ मुक्तानांप
रमागतिः ॥ अमृतस्यैषसेतुरित्यादिवाक्याच्च ॥ यद्यपिदेवलोकाधिपत्यंतद्योग्यस्यविष्णुर्ददातितदप्यश्नु
वीतैव ॥ बहुगणिकादिपरिवाररूपमशुचीदंपदमित्यादिबुद्ध्यानापह्नुवीत ॥ एनंभगवंतमतिमन्येतैवसर्वथा
स्वतःसर्वस्माच्चाधिकमेवमन्येत ॥ यद्यमुंलोकमश्नुतेप्राप्नोतिअश्नुवीतभुंजीत ॥ पृथिवीलोकाधिपत्येपि
विष्णोराधिक्यंसत्पुरुषोमन्यतइतिप्रत्यक्षसिद्धत्वान्नपृथगुक्तम् ॥ अतिशब्दाद्यद्धकिंचेतिप्रथमोक्तोमो
क्षइतिसिद्धम् ॥ अंतरिक्षप्राप्तेरल्पत्वान्मोक्षेस्वतःसिद्धत्वाच्चातिमन्यतइतिसिद्धवचनमेवकृतम् ॥ स्वर्गा

प्राणःसवायुःसएषवायुःपंचविधःप्राणोपानोव्यानउदानःसमानस्ताएतादेवताःप्राणापानयोरे
वनिविष्टाश्चक्षुःश्रोत्रंमनोवागितिप्राणस्यह्यन्वपायमेताअपियंतिसएषवाचश्चित्तस्योत्तरोत्तरि
क्रमोयद्यज्ञःसएषयज्ञःपंचविधोग्निहोत्रंदर्शपूर्णमासौचातुर्मास्यानिपशुःसोमःसएषयज्ञानांसंप

दिप्राप्तेरधिकैश्वर्याद्भगवत्समोहंभगवत्त्वरूपइतिवामंतुंशान्तिरस्तीत्यैवैनंमन्येतेतिसावधारणविधिः ॥ न
चमन्यतइतिकाममात्रम् ॥ मनुअत्रबोधनइतिधातोः ॥ नह्यवबोधएवकामः ॥ अन्यथाराज्यंजानन्नपि
राज्यकामइतिस्यात् ॥ नचमन्यतेमन्येतेतिद्विविधःप्रयोगस्तस्मिन्पक्षेयुज्यते ॥ नचसर्वलोकमतीत्याश्न
तोमुक्तस्यमुक्तेरन्यत्रकामोविद्यते ॥ सर्वलोकाधिकंचमुक्तिंविनानान्यत् ॥ तस्मान्मुक्तैरमुक्तैरपि
भगवान्सर्वोत्तमत्वेनचिंत्यइतिसिद्धम् ॥ पुरुषस्थपंचभूतेषुपंचरूपोहरिःस्थितः ॥ प्रद्युम्नादिस्वरूपे
णज्योतिरादौपृथक्पृथक् ॥ सएवचपुनर्वायौपंचधावस्थितःप्रभुः ॥ प्राणादिरूपेवसतिह्यनिरुद्धादि
रूपवान् ॥ अनिरुद्धःसप्रद्युम्नस्तथासंकर्षणःप्रभुः ॥ वासुदेवोनारायणःपंचरूपइतिक्रमात् ॥ पं

चरूपोपिभगवान्यस्माद्वायौविशेषतः ॥ स्थितस्तेनचखादिभ्योवायुरेवविशिष्यते ॥ अतएवपृथिव्यादि स्वरूपामनआदयः ॥ देवाःप्राणाश्रितानित्यंगच्छंतिप्राणमन्वपि ॥ पृथिवीमयंमनस्तत्रशेषवींद्रशिवेंद्र काः ॥ कामानिरुद्धौदेवगुरुमनोदेवाःसचंद्रकाः ॥ श्रोत्रमाकाशरूपंचमित्रधर्मजलाधिपाः कुबेरश्चदि शांदेवाःश्रोत्रदेवाइतिश्रुता ॥ज्योतीरूपंतथाचक्षुश्चक्षुर्देवोरविःस्मृतः ॥ किंचित्तेजोयुतावाक्कविशेषेणत्व बात्मिका ॥ उपचीयतेततःसाद्भिस्तदभावेचशुष्यति ॥ तृषितस्यहिवागेवपूर्वंमंदाप्रवर्तते ॥ वाग्देवतेत तोवह्निरुमाचापिप्रकीर्तिते ॥ चक्षुष्टमग्नेःश्रोत्रत्वंचंद्रस्यापिसहोच्यते ॥ स्वाहायाअपिवाक्त्वंचपर्जन्य

न्नतमोयत्सोमएतस्मिन्ह्येताःपंचविधाअधिगम्यंतेयत्प्राक्सवनेभ्यःसैकाविधात्रीणिसवनानि यदूर्ध्वंसापंचमी ॥ ३ ॥ योहवैयज्ञेयज्ञंवेदाहन्यहर्देवेषुदेवमध्यूळ्हंससंप्रतिविदेषवैयज्ञेयज्ञो हन्यहर्देवेषुदेवोध्यूळ्होयदेतन्महदुक्थंतदेतत्पंचविधंत्रिवृत्पंचदशंसप्तदशमेकविंशंपंचविंशमि

स्यमनःस्थितिः ॥ द्वितीयमेतदास्थानंश्रुतिवाक्यप्रमाणः ॥ शेषवींद्रशिवादीनांमनआदिस्वरूपिणाम् ॥ आश्रयोवायुरेवैकस्तस्यनारायणःस्वयम् ॥ तस्माद्वायुवशानांहिवाक्चित्तादिस्वरूपिणाम् ॥ देवानांक्र मवृत्तिभ्योजातेयज्ञेपिकेशवः ॥ अग्निहोत्रादिकेनित्यमनिरुद्धादिरूपकः ॥ पंचधावस्थितःसोमेपंचरू पोव्यवस्थितः ॥ सवनत्रयात्पूर्वकेचसवनत्रितयेपरे ॥ अनिरुद्धादिरूपेणक्रमेणैवव्यवस्थितः ॥ तमेतं परमंविष्णुंमुक्तोप्यत्येवमन्यते ॥ अधिकंह्येवतस्मात्तंमन्येतान्योपिसर्वदेत्यादिच ॥ पंचरूपभगवद्धाना र्थमेवचैतत्पंचविधत्वंहर्वत्रोक्तम् ॥ २ ॥ यज्ञेषुयज्ञनामानंयाज्यत्वात्पुरुषोत्तमम् ॥ अधिरूढंतथाहस्सु चाहर्नामानमेवतु ॥ अहार्यत्वाद्धिदेवेषुदेवंसर्वोत्तमत्वतः ॥ एवंचसर्वनामानंसर्वेषुस्थितमच्युतम् ॥ स्तो

मादिषुचयोवेदससम्यग्विदितिश्रुतः ॥ यएषउक्थनामासौसर्वोत्थापनकोहरिः ॥ महांश्चपरिपूर्णत्वात्स
हस्रबृहतीस्थितः ॥ अहरह्वांसयज्ञानांयज्ञोदेवाधिकोपिसः ॥ अनिरुद्धादिरूपेणसविष्णुःपंचधास्थितः ॥
स्तोमसामचितिच्छंदश्शौस्त्रेष्वपिपृथक्पृथक् ॥ एकैकमेवतद्रूपमनिरुद्धादिपंचकैम् ॥ प्रस्तावादिष्वपि
विभुःपंचधैवव्यवस्थितः ॥ प्रस्तावादीन्पंचकृत्वस्तस्मादेवप्रकुर्वते ॥ पंचरूपंतमेवैकंस्तोतुमेवपृथक्पृथ
क् ॥ तत्रयेस्तोभशब्दाश्चसंस्थिताबहुकोटयः ॥ पृथक्पृथक्तेपिविष्णोःप्रादुर्भावान्प्रचक्षते ॥ अनंतरू
पोहिहरिःशब्दोप्येषह्यनंतधा ॥ विष्णोःसहस्रनाम्नस्तुयत्तद्रूपसहस्रकम् ॥ बृहतीसहस्रमेतच्चतद्व्यक्तिहि
पृथक्पृथक् ॥ सहस्रशब्दोप्यमितंयतोवक्त्यमितान्यतः ॥ नामानिविष्णोरुच्यंतेसहस्रमितिचाख्य

तिस्तोमतोगायत्रंरथंतरंबृहद्भद्रंराजनमितिसामतोगायत्र्युष्णिग्बृहतीत्रिष्टुब्द्विपदेतिच्छंद
स्तःशिरोदक्षिणःपक्षउत्तरःपक्षःपुच्छमात्मेत्याख्यानंपंचकृत्वःप्रस्तौतिपंचकृत्वउद्गायतिपंचकृ

या ॥ अनंतनामवचनेत्वशक्तत्वात्सहस्रकम् ॥ नाम्नांपृथगिदंप्रोक्तमनंततनुवाचकम् ॥ विष्णोरनं
तरूपाणामुक्त्यापंचशतद्वये ॥ आसीत्सहस्रमित्याख्यासहस्रमुख्यतोमितम् ॥ ब्रह्मयावत्तावतीत्वागि
तिवेदप्रमाणतः ॥ सहैवानंतरूपैस्तुसरणेनसहस्रकम् ॥ नाम्नासहसृतेरेवरूपाणांवासहस्रता ॥ बृह
तीसहस्रंचैतस्माद्रूपानंताभिधायकम् ॥ पृथक्पृथग्घिनामार्थाऋचएताःप्रकीर्तिताः ॥ सर्वनामात्मकं
तस्मादृक्सहस्रमिदंहरेः ॥ सर्वरूपाण्यतोविष्णोःसंस्तुतान्यमुनैवहि ॥ मत्स्यकूर्मक्रोडसिंहबटुभार्गवरा
घवाः ॥ कृष्णबुद्धौचकल्कीतिरूपाणांदशकंहरेः ॥ पंचभेदविभिन्नेनह्यृक्सहस्रेणशंस्यते ॥ रूपाणांपं
चकंपूर्वमपरंपंचकंहरेः ॥ प्रस्तावाद्यैरानिधनैःस्तूयतेसामभक्तिभिः ॥ तानिरूपाण्यस्यदशसर्वरूपात्म

कानिच ॥ दशनामानिचास्यैवसर्वरूपाभिधान्यपि ॥ पंचकंसामभक्तीनामृक्सहस्रंचतद्द्वयम् ॥ स्ता
वकंसर्वरूपाणामतएवरमापतेः ॥ दशेतिसर्वनामैतत्प्रथितंमुख्यतःश्रुतौ ॥ शंरूपंभगवंतंयद्द्याद्यक्त्यास
मस्तशः ॥ दशेत्यमितनाम्नांतदाख्यारूपेषुशंददे: ॥ सर्वनामार्थवचनात्पंचकद्वितयस्यच ॥ अभूद्दशे
तिवैनामतस्मादेतद्दशाखिलम् ॥ दशैवमूलसंख्याचतद्विभेदाःशतादयः ॥ ऋक्सहस्रमिदंतस्मादनंतगुण
मच्युतम् ॥ अनंतशक्तिममितरूपनामानमेवच ॥ वक्तिच्छंदस्त्रयंचात्रतृचाशीतित्रयात्मकम् ॥ अ
शनादित्रिकंतच्चभूत्वाविष्णुमुपैतिच ॥ सर्वच्छंदोभिधश्चैवसर्वदेवाभिधस्तथा ॥ सर्वमुन्यभिधश्चैवसर्व

त्वःप्रतिहरतिपंचकृत्वउपद्रवतिपंचकृत्वोनिधनमुपयंतितत्स्तोभसहस्रंभवत्येवंह्येताःपंचविधा
अनुशस्यंतेयत्प्राक्तृचाशीतिभ्यःसैकाविधातिस्रस्तृचाशीतयोयदूर्ध्वंसापंचमीतदेतत्सहस्रंत
त्सर्वंतानिदशदशेतिवैसर्वमेतावतीहिसंख्यादशदशतस्तच्छतंदशशतानितत्सहस्रंतत्सर्वंतानि

वस्त्वभिधोहरिः ॥अनंतपूर्णगुणकस्तस्माज्ज्ञेयोरमापतिः ॥ मुख्यतोस्यांचविद्यायांयोग्यएकश्चतुर्मुखः ॥
एकदेशपरिज्ञातेत्वन्येयोग्याःशिवादयइतिच ॥ त्रिविधोह्यनिरुद्धोसावध्यात्मादिविभेदतः ॥ अतस्त्रि
वृदितिप्रोक्तस्तथापंचदशात्मकः ॥ प्रद्युम्नःपंचभूतेषुह्यध्यात्मादिविभेदतः ॥ लिंगसप्तदशस्थत्वात्तावा
न्संकर्षणःश्रुतः ॥ सप्तधातुषुसंस्थःसन्नध्यात्मादिविभेदतः ॥ एकविंशोवासुदेवोमनआदिचतुष्टये ॥ गु
णत्रयेचप्रकृतावध्यात्मादिविभेदतः ॥ मूलरूपेणचसहपंचविंशात्मकःप्रभुः ॥ नारायणस्त्वचिंत्यात्मा
सएकोपिह्यनंतधा ॥ गायकानांत्राणकोसौगायत्रमनिरुद्धकः ॥ प्रद्युम्नोहिरथारूढस्तेनचोक्तोरथंत
रम् ॥ बृहद्रूपोबृहन्नामातथासंकर्षणःप्रभुः ॥ भद्रंतुवासुदेवोसौभद्रमोक्षप्रदोयतः ॥ नारायणोराजनंस्या

द्राजयत्येषमोक्षिणः ॥ गायत्रीत्वनिरुद्धोसौत्रिकालेगीयतेयतः ॥ उष्णिगुष्णस्वरूपत्वात्प्रद्युम्नोग्न्यादि संस्थितः ॥ स्त्रीरूपोबृहतीनामाबृहत्संकर्षणःप्रभुः ॥ वासुदेवस्तथात्रिष्टुप्त्रिवेदैःस्तूयतेयतः ॥ नारायण स्तुस्त्रीरूपोद्विधैवासौव्यवस्थितः ॥ द्विपदेतिततोनामसर्वच्छंदोभिधाइमे ॥ वनितातनवःप्रोक्तामध्यंना रायणःप्रभुः ॥ वासुदेवोस्यपुच्छंचवामदक्षौचपक्षकौ ॥ संकर्षणश्चप्रद्युम्नःक्रमादेवंप्रकीर्तितौ ॥ अनि रुद्धःशिरश्चैवतथैकोपिहिपंचधा ॥ प्रस्तावनामानिरुद्धोरक्षन्संस्तूयतेयतः ॥ सृजन्जगच्चरमयाप्रद्युम्न स्तत्रगीयते ॥ उद्गीथनामातेनासौजगदुद्गमनेनवा ॥ संहारात्प्रतिहाराख्यस्तथासंकर्षणःप्रभुः ॥ मोचयि

**त्रीणिच्छंदांसिभवंतित्रेधाविहितंवाइदमन्नमशनंपानंखादस्तदेतैरामोति ॥ ४ ॥ तद्वाइदंबृह तीसहस्रंसंपन्नंतद्धैतदेकेनानाच्छंदसांसहस्रंप्रतिजानतेकिमन्यत्सदन्यद्ब्रूयामेतित्रिष्टुप्सहस्र मेकेजगतीसहस्रमेकेऽनुष्टुप्सहस्रमेकेतदुक्तमृषिणानुष्टुभमनुचर्चूर्यमाणमिंद्रंनिचिक्युःकवयो मनीषेतिवाचिवैतदैंद्रंप्राणंन्यचायन्नित्येनत्तदुक्तंभवतिसहेश्वरोयशस्वीकल्याणकीर्तिर्भवि**

त्वासमीपंहिद्रावयेद्वासुदेवकः ॥ तेनोपद्रवनामासौनिधीयंतेयतोखिलाः ॥ मुक्तानारायणेदेवेतेनासौनिध नाभिधइत्यादिच ॥ स्तूयमानत्वात्स्तोमः समत्वात्साम छंद्यत्वाच्छंदः ॥ ४ ॥ तदिदमुक्तप्रकारेणैवबृह तीसहस्रंसंपन्नंभवति ॥ तदेकेनानाच्छंदसांसहस्रंशंसितव्यमेवबृहतीसहस्रसंपादनमविवक्षितमितिप्रति जानते ॥ केचित्त्रिष्टुप्सहस्रमेवशंसितव्यमिति ॥ अनुष्टुप्सहस्रमेवेतिवदंतोऽनुष्टुप्प्रशंसात्मिकामृचंदर्शयं ति ॥ बीभत्सूनांजगद्भर्तुमिच्छूनाम् ॥ अपांसयुजंसहैवचरंतंचाहुः ॥ विष्णुंहंसस्वरूपिणंअनुष्टुभंचर्चूर्य माणंपुनःपुनर्वदंतंपरमेश्वरंददृशुश्च ॥ मेघसंस्थंहंसरूपंतंविष्णुंपरमेश्वरम् ॥ विरिंचशिवपूर्वेभ्योन्टासिंहानु

ष्टुभंपराम् ॥ उच्चारयंतमर्थांश्चव्याचक्षाणंसमततः ॥ ददृशुर्मुनयोदिव्याआचार्यंब्रह्मशर्वयोः ॥ एवंवायुं
चददृशुस्तत्रहंसस्वरूपिणम् ॥ शिवादिभ्योव्याहरंततामेवानुष्टुभंपरामित्यादिच ॥ वागाख्यायामनुष्टुभ्यु
च्चार्यमाणायांहिमुनयोविष्णुंददृशुः ॥ अतोब्रह्मादयोपिविष्णोःसकाशादनुष्टुबर्थंसर्वदाशृण्वंतोतिज्ञायतेऽ
तोनुष्टुबेवच्छंदसांवरेतिचोक्तंभवति ॥ अनुष्टुभांसहस्रंतुयःशंसीतातएवतु ॥ भवितुंचेश्वरःसस्याद्वा
वोमुक्तिर्नचान्यथा ॥ यशस्वीसप्रसिद्धःस्याच्छुभकीर्तिश्चसर्वदा ॥ स्वच्छंदमृत्युताचस्यात्तस्ये
त्याहैतरेयकः ॥ महैतरेयोभगवांस्तन्नेत्याहरमापतिः ॥ नानाछंदःप्रशंसादिप्रमाणरहितत्वतः ॥

तोरीश्वरोहतुपुशयुषःप्रैतोरितिहस्माहाक्तस्मोह्येषआत्मायद्वागभिहिप्राणेनमनसेस्यमनोवा
चानानुभवतिबृहतीमभिसंपादयेदेषवैक्तस्नआत्मायद्बृहतीसोयमात्मासर्वतःशरीरैःपरिवृतस्त
द्यथायमात्मासर्वतःशरीरैःपरिवृतएवमेवबृहतीसर्वतश्छंदोभिःपरिवृतामध्यंह्येषामंगानामात्मा

परिहारायचापूर्णमैतरेयमुनेशृणु ॥ त्वंतुमंत्रमुदाहृत्ययस्मादेतदवोचथाः ॥ तस्माद्वक्ष्याम्युत्तरंतेप्रि
यःशिष्योसिमेयतः ॥ उमैववागितिप्रोक्तासानुष्टुबभिमानिनी ॥ अकृत्स्नासाततोनैवब्रह्मेत्युक्ताकथंच
न ॥ वागिंद्रियाभिमानिन्यांनहिब्रह्मवचःक्वचित् ॥ वायुनाप्राणरूपेणमनोरूपशिलेनच ॥ अभ्यस्य
मानोनुभवेत्पुमान्वाचातुनक्वचित् ॥ अभिमानीबृहत्यास्तुवायुरेवयतःप्रभुः ॥ तस्मादेषाछंदसांहिवरिष्ठा
बृहतीस्मृता ॥ पूर्णोहिवायुर्देवानांतस्माद्ब्रह्मेतिचोच्यते ॥ माहात्म्याधिक्यतश्चैवबृहतीत्येवनामतत् ॥
अंगेभ्यएवसंभूतान्यन्यच्छंदांसिचाब्जजात् ॥ मध्यात्तुबृहतीजातातस्मात्सामध्यमुच्यते॥पठ्यतेतेनमध्ये
साछंदसांप्रवरासती ॥ छंदांस्यन्यान्यंगवत्स्युर्मध्यवद्बृहतीपरा ॥ सप्तच्छंदांसिचैवंहिप्रतिमावैष्णवीम

ता ॥ गायत्रीदेवतात्वंचलक्ष्म्यायत्राभिधीयते ॥ बृहतीदेवतातत्रभगवान्पुरुषोत्तमः ॥ आधिक्यंछंदसांयत्रगायत्र्यास्तुविवक्षितम्॥तत्रतत्पुत्रकोवायुर्बृहतीदेवतामता ॥ ऋचामाधिक्ययोगार्थंनांगीकर्तव्यमत्रतत्॥प्रधानत्वाद्बृहत्यास्तुजगत्याद्यंनयुज्यते ॥ संपादनाद्बृहत्यास्तुमुक्तोभवितुमीश्वरः ॥ स्यात्प्रसिद्धःसुकीर्तिश्चच्छंदोमृत्युर्गुणाधिकः॥इतिप्राहस्वयंविष्णुर्महिदासाभिधःप्रभुरित्यादिच॥इतोन्यत्सत्किमित्याह्वर्नानाछंदस्त्ववादिनः ॥ अन्यत्सद्रूपमित्याह्वस्त्रिष्टुब्वादिनएवते॥ऐंद्रंप्राणंपरमेश्वरसहितंवायुम् ॥ प्राणेन मनसाच ॥ अभिइस्यमानोऽभ्यस्यमानः॥ तृतीयोतिशयेइतिसूत्रादकारस्येकारः॥ मथनान्मिथिलोज्जा

**मध्यंछंदसांबृहतीसहेश्वरोयशस्त्रीकल्याणकीर्तिर्भवितोरीश्वरोहतुपुरुषायुषःप्रैतोरितिहस्माहकृत्स्नोह्येषआत्मायद्बृहतीतस्माद्बृहतीमेवाभिसंपादयेत्॥५॥तद्वाइदंबृहतीसहस्रंसंपन्नंतस्यवाएतस्यबृहतीसहस्रस्यसंपन्नस्यैकादशानुष्टुभांशतानिभवंतिपंचविंशतिश्चानुष्टुभआत्तं**

तःसहनात्सिंहउच्यते ॥ हत्वादस्यूनित्यादिवच्च ॥ अभ्यस्यमानःअभितःक्षितःक्षिप्यमाणोविषयेषुबहुशः ॥ कृत्स्नआत्माकृत्स्नप्रतिमाविष्णोः ॥ एकापिप्रतिमाविष्णोर्बृहतीछंदसांवरा ॥ अन्यच्छंदोभिधायतस्यात्प्रतिमामध्यमेवतदितिच ॥ एवंब्रह्मादिभिःश्रूयमाणानुष्टुबपिबृहत्याअंगमितिबृहत्याएवाधिक्यमुक्तंभवति ॥ ५ ॥ बृहतीसंपादनेनुष्टुप्छंसनमात्रात्पंचविंशोत्तरशतानुष्टुबाधिक्यंचभवति ॥ अतआधिक्याद्बृहतीसंपादनमेववरम् ॥ तस्यात्रैवांतर्भावात् ॥ जगत्यादिकंत्वधिकत्वेपिबृहतीवन्माहात्म्याभावादेवोपेक्ष्यते ॥ वाचमष्टापदीमहमित्यनुष्टुभोबृहतीसंपादनवचनाच्च ॥अष्टचतुरक्षराण्यनुष्टुप् ॥ तस्याएवबृहतीसंपादनेनवस्रक्तयोभवंति॥ ऋचावाग्ऋग्रूपेणवाग्रूतंस्पृष्टासत्यरूपंविष्णुंस्पृष्टाभवति ॥ इंद्र

स्यपरमेश्वरस्यविष्णोःसंबंधीनितरांप्रियत्वाद्यःप्राणदेवतावायुःतस्यप्रतिमारूपमिदंबृहतीसहस्रम् ॥ स
चवायुर्विष्णोर्मुख्यप्रतिमा ॥ तस्माद्विष्णोरेवप्रतिमाबृहतीसहस्रम् ॥ तस्मात्तस्यैवबृहतीसहस्रत्वेनसंप
न्नस्यपंचविंशोत्तरैकादशशतानुष्टुप्त्वेनसंपादनेबृहतीदैवतप्राणरूपाद्वायोरनुष्टुब्देवतायावागूपायाउमा
याउत्पत्तिःसंस्मृताभवत्येवंजानतः ॥ ततश्चोमायाअपिभगवत्प्रतिमात्वाद्विष्णुप्रतिमास्थापकएवभव
त्येतत्सर्वंसम्यग्ध्यायन् ॥ विष्णुरेवबृहत्याःप्राणस्याधिष्ठातृदेवता ॥ प्रतिमाधिष्ठितदेवतावत् ॥ तस्मा

वैभूयसाकनीयस्तदुक्तमृषिणावाचमष्टापदीमहमित्यष्टौहिचतुरक्षराणिभवंतिनवस्रक्तिमिति
बृहतीसंपद्यमानानवस्रक्यृतस्पृशमितिसत्यंवैवागृचास्पृष्टेंद्रात्परितन्वंममइतितद्यदेवैतद्बृहती
सहस्रमनुष्टुप्संपन्नंभवतितस्मात्तदैंद्रात्प्राणाद्बृहत्यैवाचमनुष्टुभंतन्वंसंनिर्मिमीतेसवाएषवाचः
परमोविकारोयदेतन्महदुक्थंतदेतत्पंचविधंमितममितंस्वरःसत्यानृतेइत्यृग्गाथाकुंब्यातन्मितं
यजुर्निगदोवृथावाक्तदमितंसामाथोयःकश्चगेष्णःसस्वरओमितिसत्यंनेत्यनृतंतदेतत्पुष्पफलं

द्बृहत्याःसकाशादनुष्टुप्संपादनेतस्यैवविष्णोःप्रतिमांतरंतस्मादेवनिर्मितंभवति ॥ अतएवेंद्रात्परितन्वंमम
इत्युक्तम् ॥ बृहतीस्थविष्णोर्बलादेवतत्संपद्यते ॥ सहितस्याःषट्त्रिंशदक्षरादित्वमपिनियमयतितत्प्र
सादाद्वायुश्च ॥ वायुरेवयद्भगवन्नियतोनियमयतितस्मादिंद्रात्परीत्यस्यैंद्रात्प्राणादितिव्याख्याकृता ॥
यावत्सहस्रंबृहतीतावच्छंसेदनुष्टुभाम् ॥ छंदसांवातदन्येषांबृहतीत्वंस्मरेत्ततः ॥ तेनसर्वगतोविष्णुःसर्व
स्मादधिकोर्चितः ॥ भवेदेवंजानतस्तुकृताचप्रतिमाभवेत्॥तथावायोरपिकृतावायुर्हिप्रतिमाहरेः॥ तस्मा
द्वायुकृतंसर्वंक्रियतेविष्णुनैवहि ॥ बृहतीसहस्रंसंपन्नमेकादशशतंपुनः॥अनुष्टुभांस्मरेत्पंचविंशोत्तरमुदा

रथीः॥तेनवायोरुमोत्पत्तिःसम्यग्ज्ञानात्स्मृताभवेत्॥ततोद्वितीयप्रतिमाविष्णोरेवकृताभवेत्॥विष्णुनानुप्र
विष्टौयदुमावायुश्चतद्वशावित्यादिच ॥ स्रक्तयोविभागाः॥स्रक्तिरंशोविभागश्चाविदलंचेतिकथ्यतइतिश
ब्दनिर्णये॥सवाएषवाचःपरमोविकारः॥अकाराख्यवाग्विकारेषूत्तमोबृहतीसहस्राख्यः ॥ अकारःप्रथमं
नामविष्णोःसर्वगुणान्ब्रुवन्॥सर्वदोषविरुद्धत्वाद्गुणानामस्यतामपि॥विष्णोर्वदतिजीवेभ्योजडेभ्यश्चैवस
र्वदा॥अभावंचैवदोषाणांसर्वेषांकेशवेवदेत्॥सम्यग्वक्तृत्वतस्तस्मादकारोमुख्यनामहि ॥ तदर्थानेकदेशेन
शब्दाःसर्वेपिचोचिरे॥व्याख्याव्याख्येयरूपत्वंविकारत्वमिहोदितम् ॥ विकारत्वंचनान्यत्स्यान्नित्यावेदाय

वाचोयत्सत्यंसहैश्वरोयशस्वीकल्याणकीर्तिर्भवितोःपुष्पंहिफलंवाचःसत्यंवदत्यथैतन्मूलंवाचो
यदनृतंतद्यथावृक्षआविर्मूलःशुष्यतिसउद्वर्तत एवमेवानृतंवदन्नाविर्मूलमात्मानंकरोतिसशुष्य
तिसउद्वर्ततेतस्मादनृतंनवदेद्दयेतत्वेनेनपराग्वाएतद्रिक्तमक्षरंयदेतदोमितितद्यत्किंचोमित्याहा
त्रैवास्मैतद्रिच्यतेसयत्सर्वमोंकुर्याद्रिच्यादात्मानंसकामेभ्योनालंस्यादथैतत्पूर्णमभ्यात्मंयन्ने

तोखिलाः ॥ वाचकेषुतथाविष्णोःसहस्रबृहतीमयम् ॥ उक्थमुत्तममुद्दिष्टंव्याख्याकारस्यसापरा ॥ अ
न्येपिशब्दाःसर्वेपिह्यकारार्थाभिधायिनः ॥ एषांपरममुख्यंतत्तदेतत्पंचधास्थितम ॥ व्याख्यानमेवाका
रस्यसहैवोक्थेनसर्वशः ॥ मितामितेस्वरस्सत्यमनृतंचेतिपंचधा ॥ तस्मादकारएवायंसर्ववागात्मकःश्रुतः॥
तस्यैवव्यक्तिरूपोयंसर्ववेदादिविस्तरः ॥ तस्मात्सर्वगुणान्विष्णोरकारोवक्तियत्प्रभोः ॥ तद्व्यक्तयोपिशब्दा
येसर्वेविष्णुगुणब्रुवाः ॥ अकारस्यतथोपाशोरभिमानीतुमारुतः ॥ देहेंद्रियांतःकरणनाम्नोस्यद्विविधस्य
च ॥ स्थूलसूक्ष्मशरीरस्यसर्वेषामभिमानिनी ॥ भारत्युच्चोदितस्यापिह्यकारस्याभिमानिनी ॥ तस्मा

दुच्चादुपांशुर्हिजपादिषुफलाधिकः ॥ वायुःपतिर्हिभारत्याउपांशोर्दैवतामतः ॥ अकारस्यविकारोयमों
कारइतिकथ्यते ॥ अधिकोच्चत्वमानंहितस्यार्थःसमुदीरितः ॥ अकारेणैवतत्सर्वमुक्तमाधिक्यवत्कृतः॥
अधिकोच्चस्वरूपोसौमाताचाधिकएवहि ॥ एकार्थत्वादकारोसौनकारत्वमुपागतः ॥ दीर्घीभूतःपुनस्ते
नैवाकारेणसहस्थितः ॥ अभाववाच्यकारस्यह्यर्थौरेफःक्षयंवदन् ॥ सोप्यकारेणसहितोदीर्घत्वंसमु
पागतः ॥ अभाववाच्यकारःसएकार्थाद्वत्यभावयोः ॥ यकारत्वंगतस्तस्मान्नोरेफस्योत्तरत्वतः ॥
णत्वंगतोह्यकारोसौनोविरुद्धार्थवाचकः ॥ अन्यत्वात्सर्वजीवेभ्योजडेभ्यश्चसदैवहि ॥ सर्वदोषोज्झित
त्वाच्चसर्वतोप्यधिकत्वतः ॥ निरासनाच्चदोषाणांस्वभक्तेभ्यःसमंततः ॥ सर्वदोषविरुद्धोरुगुणपूर्णस्वरू

लिसयत्सर्वंन्नेतिब्रूयात्पापिकास्यकीर्तिर्जायेतसैनंतत्रैवहन्यात्तस्मात्कालएवदद्यात्कालेनद
द्यात्तत्सत्यानृतेमिथुनीकरोतितयोर्मिथुनात्प्रजायतेभूयान्भवतियोवैतांवाचंवेदयस्याएषवि

पतः ॥ नारायणइतिप्रोक्तोह्यकारार्थोयमेवहि ॥ तस्मादकारबीजेयंविष्णोर्नारायणाभिधा ॥ प्रण
वश्चततोकारःप्रधानंनामचक्रिणः ॥ अकारनामानान्योस्तितमृतेपुरुषोत्तमम् ॥ ब्रह्मरुद्रादिनामानि
ब्रह्मादिष्वप्यमुख्यतः ॥ वर्ततेनत्वकारोयंवर्ततेकेशवंविना ॥ नारायणादिनामानिनृणांनामक्रियास्व
पि ॥ विहितान्यकारोनैनायंविहितस्तमृतेप्रभुम् ॥ वायुर्ब्रह्मापिचाकारदेवतेनतुनामिनौ ॥ यथावेदा
भिधेयोन्योवेदाख्यादेवतापरा ॥ एवंनामाभिमानीतुवायुर्वाच्योजनार्दनः ॥ तस्मादइतिनामैत्तद्विष्णोः
केवलमेवहि ॥ विशेषतोस्यव्याख्यानंबृहतीनांसहस्रकम् ॥ तस्मात्प्रीतोभवेद्विष्णुःशंसनादस्यसर्वदा ॥
तस्माद्यज्ञेपिवाशंसेदयज्ञेपिरहःपुमान् ॥ ध्यात्वानारायणंदेवंविष्णोरन्नंहितत्परमित्यादिब्रह्मसारे ॥ पर

मविकारेणसहविकारमात्रस्यापिप्रस्तुतत्वात्तदेतत्पंचविधमितिपरामर्शः ॥ स्वराणांनियमोयत्रऋचो नामैवताःस्मृताः ॥ अन्यामिताक्षरायास्तुतागाथाःपरिकीर्तिताः ॥ खंडवाक्यानिकुंब्याःस्युरसमा निपरस्परम् ॥ यज्ञांगंयजुरुद्दिष्टंनिगदंवाक्यमात्रकमित्यादिशब्दनिर्णये ॥ अकारार्थत्वान्नकारस्यकिं चिन्मूलमिव ॥ तस्मान्मूलत्वादकारार्थोपिज्ञेयएव ॥ नायोग्यानांसम्यग्वाच्यइतिस्वल्पएवप्रकाशितोस्मा भिः ॥ वाचउद्वर्तनाशक्तेःस्वयमेवोद्वर्तते ॥ यद्धिदेवतासुकरोतितदात्मन्यापतति ॥ तस्माद्द्रव्यदानंज्ञानदा नंवाकालेपात्राद्यनुसारेणैवकुर्यात् ॥ अकारस्योंकारतात्वकारलोपेनैवजातेतिसत्यमोंकारः ॥ अकार

कारःससंप्रतिविदकारोवैसर्वावाक्सैषास्पर्शोष्मभिर्व्यज्यमानाबह्वीनानारूपाभवतितस्यैयदु पांशुसप्राणोथयदुच्चैस्तच्छरीरंतस्मात्तत्तिरइवतिरइवह्यशरीरमशरीरोहिप्राणोथयदुच्चैस्तच्छ रीरंतस्मात्तदाविराविर्हिशरीरम् ॥ ६ ॥ तद्वाइदंबृहतीसहस्रंसंपन्नंतद्यशःसइंद्रःसभूतानामधि पतिःसयएवमेतमिंद्रंभूतानामधिपतिंवेदविस्रसाहैवास्माल्लोकात्प्रैतीतिहस्माहमहिदासऐतरे

स्यादौस्थितत्वेनचयथार्थरूपत्वात् ॥ उकारादिविकारसहितत्वात्पुष्पफलात्मकश्च ॥ अकारस्यार्थरूपः सन्नेवचभगवांस्तमेवोंकारोवक्ति ॥ अतश्चसत्यमोंकारः ॥ यमर्थमकारोवक्तितमेववक्तीति ॥ नकारस्त्व च्छिरस्कत्वान्मूलभूतस्याकारस्यांतेस्थितिरूपत्वादयथास्थितेरसत्यरूपः ॥ तथाप्यकारस्यचैकार्थत्वा न्मूलभूतश्च ॥ तस्मादकारस्यैवृथावागादिकमपिव्याख्यानम् ॥ तस्माद्विजानतःसर्वमपिभगवन्नामैव ॥ ६ ॥ विद्यांतरोपदेशार्थंतद्वाइदंबृहतीसहस्रमितिपुनःपुनःपरामर्शः ॥ तदिदंबृहतीसहस्रंतद्यशस्तस्यना रायणस्ययशः ॥ यस्यनारायणस्यैतद्यशःसभगवानेवेंद्रनामा ॥ सहियत्प्रथमतइंद्रोबभूवस्वेच्छयायज्ञ

नामा ॥ तस्मात्तमेववेदाइंद्रशब्देनवदंतिमुख्यतः ॥ इदिपरमैश्वर्यइतिधातोश्चतस्यैवहिपरमैश्वर्यम् ॥ अन्येषांतुद्वादशानांतेनदत्तमेवेंद्रत्वंनतुमुख्यतः ॥ अतोविष्णावेवेंद्रशब्दंप्रयुंक्तेश्रुतिः ॥ मत्सिसोमंवरुणंमत्सिमित्रंमत्सींद्रमिंदोपवमानविष्णुमिति ॥ नचेंद्रंविष्णुंचेतिपृथगन्वयःक्रियते ॥ तदावरुणादिषुपृथक्पृथङ्मत्सिशब्ददर्शनादत्रापिपृथङ्मत्सिशब्दोदृश्येत ॥ नहिसर्वेषांपृथङ्मत्सिशब्ददर्शनेएकस्यैवान्यथात्वंयुज्यते ॥ नचात्रद्वित्वगमकंचकारादिकंविद्यते ॥ तस्मात्प्रातर्भगंपूषणंब्रह्मणस्पतिमित्याद्यप्येकस्यैवविष्णोर्विशेषणम् ॥ यत्रचैवंभूतेष्वेकत्वेविरोधोदृश्यतेतत्रतेनैवविरोधेनद्वित्वंभवति ॥ अन्यथैकत्वमेव ॥ योदेवानांनामधाएकएवेतिचोक्तम् ॥ बहुरूपत्वाद्बहुवचनंचविष्णोरेवयुज्यते ॥ तस्मान्मुख्यतोविष्णावेवेंद्रादिशब्दाअन्येषामुपचारतः ॥ मत्सिमहामिंद्रमिंदोमदायेत्यन्येंद्रस्यपृथगुक्तेश्चमत्सींद्रमिंदोपवमानेतिपूर्वो

यःप्रत्येंद्रोभूत्वैषुलोकेषुराजतितदाहुर्यदनेनरूपेणामुंलोकमभिसंभवतीइँअथकेनरूपेणेमं

क्तइंद्रोविष्णुरेवेतिसिद्धम् ॥ महत्त्वंचतस्यादितिपुत्रत्वेऽग्रजत्वमात्रंनतुसामर्थ्यतः ॥ महपूजायामितिधातोः ॥ पूज्योह्यग्रजोभवति ॥ आयोविवायसचथायदैव्यइंद्रायविष्णुःसुकृतेसुकृत्तरः ॥ वेधाअजिन्वत्रिषधस्थआर्यमृतस्यभागेयजमानमाभजदितींद्रस्यपरमदैवंजनकोयज्ञभागादिप्रदाताविष्णुरेवहिश्रूयते ॥ इंद्रश्चयजमानः ॥ तस्मात्तत्प्रसादादवताराग्रजत्वमेवतस्यमहत्त्वम् ॥ अन्येंद्रोह्यहंप्रथमःपिबेयमहंप्रथमःपिबेयमितिवायुनाविवदमानआजौपराजितोवायुंप्रसादयित्वाचतुर्थैवायुनासहग्रहमाप॥ विष्णुस्तुक्रतुंसचंतमारुतस्यवेधसइतिवायोरपिविधाताश्रूयते ॥ डुधाञ्धारणपोषणयोरितिधातोर्विशेषेणधारणपोषणकर्ताहिवेधाः ॥ तस्माद्भगवतएवैतद्यशोबृहदुक्थादिकम् ॥ ऋक्सहस्रात्मकंवि

ष्णोर्यशइंद्राभिधस्यहि ॥ इंद्रोहिप्रथमोविष्णुर्यज्ञनामाजगत्पतिः ॥ तत्प्रसादादथेंद्रत्वंद्वादशा
न्येप्रपेदिरे ॥ पुरंदरस्त्वेकएववासुदेवप्रसादतः ॥ द्विवारमिंद्रतामापतस्माद्द्वादशतेपरे ॥ अयजत्वा
ददित्यांतुमहेंद्रोनामचाभवत् ॥ महाव्रतंकर्मकृत्वाचैवनाम्नामहेंद्रकः ॥ महत्त्वंमुख्यतोविष्णोर्न
ह्यन्यस्यकदाचन ॥ एवंयोवेदतंविष्णुंविस्रस्तोबंधतोखिलात् ॥ अस्माल्लोकाद्धरेर्लोकमेतिना
स्त्यत्रसंशयः ॥ इत्याहभगवान्विष्णुर्महिदासस्वरूपकः ॥ श्वेतद्वीपादिकात्प्राप्यसइंद्राख्योहरिःस्वयम् ॥
महिदासाभिधोभूत्वालोकेष्वेषुविराजति ॥ तत्रपृच्छंतिकेचित्तुयद्येषभगवान्हरिः ॥ महिदासादिरूपेण
भूमिष्ठोरमतेप्रभुः ॥ तदायदास्त्रियाविष्णूरमतेनित्यसत्सुखः ॥ कयास्त्रियारतिंकुर्यान्नह्यन्यरतिरच्युतः ॥

**लोकमाभवतीइँतद्यदेतत्स्त्रियांलोहितंभवत्यग्नेस्तद्रूपंतस्मात्तस्मान्नबीभत्सेताथयदेतत्पुरुषे**
**रेतोभवत्यादित्यस्यतद्रूपंतस्मात्तस्मान्नबीभत्सेतसोयमात्मेममात्मानममुष्माआत्मनेसंप्रय**

स्त्रीरूपेतत्स्वयंस्वस्मिन्रमतेसावितीदृशम् ॥ वाच्यंतत्रचभूमिष्ठरूपेणतुदिविस्थितम् ॥ स्त्रीरूपंकिमसौग
च्छेदथयद्येवमत्रच ॥ स्त्रीरूपंपृथिवीसंस्थंकेनरूपेणसंव्रजेत्॥नह्यन्यगम्योभगवान्स्त्रीरूपोपिजनार्दनः॥
इतिपृष्टःस्वशिष्यैःसमहिदासोऽवदद्धरिः ॥ स्त्रीषुयल्लोहितंलोकेतत्राग्निस्थोजनार्दनः ॥ स्त्रीरूपःसोग्निनामै
वज्वलज्ज्वालासमप्रभः ॥ तस्माद्विष्णोःसन्निधानाद्भर्ताभार्याशरीरगात् ॥ नबीभत्सेतैवरक्तात्तथापुंरेत
सिस्थितः ॥ आदित्येसंस्थितोविष्णुरादेरादित्यनामकः ॥ तस्मान्नरेतसोभार्याबीभत्सेतपतिस्थितात् ॥
पुंरूपोभगवान्विष्णूरेतसिस्थोद्युमत्प्रभः ॥ तस्माद्यद्भूमिगंविष्णोःस्त्रीरूपंतत्स्वयंहरिः ॥ प्रादुर्भावगतोद्या
द्विविस्थितपुमात्मनः ॥ सूर्यगस्यतथापुंसोरेतसिस्थस्यचात्मनः ॥ देवीषुयल्लोहितगंस्त्रीरूपंपरमात्मनः ॥

तत्ससूर्यगतोविष्णुःपुंरेतस्थस्यचात्मनः ॥ द्याद्भूमिगतस्यैवरूपद्वयमिदंततः ॥ परस्परंसंभवतिविष्णोर्नि
त्यसुखात्मकम् ॥ प्रादुर्भावस्थितंरूपंयच्चभूमौपुमात्मकम् ॥ विष्णोस्तदपिदेवीषुस्थितःस्त्रीरूपकात्म
ना ॥ एवमन्योन्यतोविष्णूरतःस्वस्मिन्नचान्यतः ॥ रमयारममाणोपितत्स्थेनैवस्त्रियात्मना ॥ रमतेना
न्यतःक्वापिरतिर्विष्णोःसुखात्मनः ॥ रमयारमणंतस्माद्रमायारतिपात्रता ॥ नैवास्यारतिदातृत्वंविष्णो
र्नह्यन्यतोरतिरित्यादिच ॥ सएवमहिदासइंद्रनामाप्राप्येमंलोकमत्रभूत्वाप्रादुर्भूयमनुष्यदृष्टिगोचरतां
प्राप्यैषुलोकेषुराजति ॥ नात्रप्रेत्यशब्दोमरणवाची ॥ किंतुप्रेतांयज्ञस्यशंभुवेत्यादिवत्प्राप्तिवाच्येव ॥
नहिमृतःपुनरेषुलोकेष्वेवराजति ॥ नचयशोमात्रराजनेनस्वस्यराजनंभवति ॥ भिन्नपदार्थत्वात् ॥

च्छत्यसावात्मामुमात्मानमिममस्माआत्मनेसंप्रयच्छतितावन्योन्यमभिसंभवतोनेनाहरूपे

यद्वाएतिचप्रेतिचेतिचेत्यादौप्राप्त्यर्थेपिवेदेषुप्रसिद्धत्वाच्च ॥ लक्ष्मणःप्रेत्यसुग्रीवंबभाषेरामचोदितमि
तिस्कांदे ॥ यदनेनरूपेणामुंलोकमभिसंभवति ॥ अनेनमहिदासादिरूपेणामुंलोकंदिविष्ठंस्वरूपम् ॥
लोक्यतइतिस्वरूपवाचीलोकशब्दः ॥ आत्मानमेवलोकमुपासीतेतिवत् ॥ यच्छब्दःकिंशब्दार्थे ॥
अनेनरूपेणतद्रूपमभिसंभवतिकिम् ॥ उभयोरपिपरिहारदर्शनादस्यापिप्रश्नत्वमवगम्यते ॥ यतश्चोदेतिसू
र्यइत्यादिवत् ॥ रंगस्तुप्रश्नविषयस्यदुरवगमत्वंप्रकाशयति ॥ दुर्गमेप्रश्नविषयेप्रश्नोरंगयुतोभवेदितिश
ब्दनिर्णये ॥ केनरूपेणेमंलोकमाभवति ॥ केनस्वरूपेणभूमिष्ठेनात्मनएवस्त्रीरूपेणविष्णुःसंबध्यते ॥ सो
यंमहिदासादिप्रादुर्भावरूपइदंभूमिष्ठस्त्रीरूपंलोहितगनंचस्वकीयमेवरूपममुष्मैदिविष्ठायस्वपुरुषरूपाय
प्रयच्छतिदेवरेतःस्थितायच॥ देवीलोहितस्थितमात्मनःस्त्रीरूपंमहिदासादिरूपेभ्योमानुषरेतःस्थितरूपेभ्य

श्वदिविष्ठैश्चविष्णवादिस्वरूपैःप्रयच्छतिच ॥ तानिभूमिष्ठत्वेनदिविष्ठत्वेनद्विविधत्वात्तावित्युच्यंते ॥ अग्ने
स्तद्रूपमग्निनाम्नोविष्णोःप्रतिमातत्सन्निधानात् ॥ एवमादित्यनाम्नोविष्णोः॥ नह्यग्न्यादिस्वरूपमेवलोहिता
दि॥ नचलौकिकस्त्रीपुरुषसंबंधमात्रमत्रोच्यते ॥ अप्रस्तुतत्वात्तस्य ॥ भगवानेवह्यत्रप्रस्तुतः ॥ असावात्मे
त्यात्मशब्दाच्चभगवानेवेतिज्ञायते ॥ आत्मशब्दःपरेविष्णौनान्यत्रक्कचिदिष्यते ॥ गुणपूर्त्यभिधायीसना
न्यस्यगुणपूर्णता ॥ अमुख्यात्मानएवातोब्रह्माद्याःसर्वएवहीत्यादिचब्रह्मांडे ॥ यदक्षरंपंचविधंसमेति ॥
सत्यस्यसत्यमनुयत्रयुज्यतइत्यादिनोक्तार्थविषयोदाहृतैःश्लोकैरपिभगवतएवस्वरूपाणांपरस्परयोगस्यो
क्तत्वात् ॥ गायत्र्युष्णिग्बृहतीत्यादिनाभगवतएवपंचविधस्यस्त्रीरूपस्यमहिदासादिपंचपुंरूपाणांचप्रस्तु

णामुंलोकमभिसंभवत्यमुनारूपेणेमंलोकमाभवति ॥ ७ ॥ तत्रैतेश्लोकाः यदक्षरंपंचविधंस
मेतियुजोयुक्ताअभियत्संवहंति। सत्यस्यसत्यमनुयत्रयुज्यतेतत्रदेवाःसर्वएकंभवंति॥यदक्ष

तत्वाच्च ॥ ७ ॥ यन्नारायणादिरूपेणपंचविधमक्षरंपरंब्रह्मतत्स्वस्मिन्नेवस्त्रीपुंरूपेणसमेति ॥ स्त्रीपुंरूपेण
युजोदेवाअश्वरूपेणरथेयुक्ताःसंतोयन्नारायणाख्यंपरंब्रह्माभिसंवहंति ॥ तदेतत्सत्यस्यसत्यंनारायणाख्यं
ब्रह्मयत्रानुयुज्यतेयस्मिन्स्वरूपएवस्त्रीपुंरूपेणयुज्यते ॥ तत्रतस्मिन्नेवपरेब्रह्मणिनारायणाख्येसर्वदेवाए
कीभवंतिमुक्ताःसंतोमिलिताभवंति ॥ नायमेकीभावोनामस्वरूपैक्यम् ॥ किंत्वेकस्थानेवासोत्यनुकूल
लचित्तताच ॥ एकीभूयनृपाःसर्वेववृषुःपांडवंशरैः ॥ एकीभूतातुसासेनापांडवानभ्यवर्ततेत्यादिवत् ॥ न
चैकीभावशब्दःस्वरूपैकत्वविषयेप्रयुज्यमानःकुत्रचिद्दृष्टः ॥ एकःपुरुषोपियदाद्विधाभूत्वाएकीभवतीत्यु
च्यतेतदापिस्थानैक्यमेव ॥ स्वरूपैक्यस्यपूर्वमेवसिद्धत्वात् ॥ नचाज्ञातएकत्वेपुनर्ज्ञातेऐक्यंप्राप्तइ

तिप्रयोगोदृश्यते ॥ किंतुज्ञातइत्येवप्रयुज्यते ॥ तस्माद्भावसहितएकशब्दोनस्वरूपवाची ॥ नहिपू
र्वंभिन्नस्यपश्चात्स्वरूपैक्यंभवतिकिंतुसंसर्गएवभवति ॥ तस्मादत्रापिसंसर्गएवविवक्षितः ॥ यदक्षरं
पंचविधंसमेतीत्युक्तस्यसत्यस्यसत्यमनुयत्रयुज्यतइतिपरामर्शकृत्वातत्रदेवाःसर्वएकंभवंतीत्युच्यतेत
स्मान्नपुनरुक्तिः ॥ यस्मादक्षरान्नारायणाख्यात्सस्वयमेवभगवान्प्रादुर्भावरूपीस्त्रीपुंरूपेणयुक्तआगच्छ
ति ॥ तात्पर्यार्थंतस्यैवार्थस्यपुनरभ्यासः ॥ वियूयविचार्यनामायत्तान्येवनामार्थभूतान्येवविष्णोर्माहा
त्म्यादीन्यन्वविंदन् ॥ ततश्चाधिकंसमतृप्यन् ॥ शृतेपरिपक्वेसतिज्ञाने ॥ यस्मिन्विष्णौनामानिज्ञात्वात

रादक्षरमेतियुक्तंयुजोयुक्ताअभियत्संवहंति । सत्यस्यसत्यमनुयत्रयुज्यतेतत्रदेवाःसर्वएकं
भवंति ॥ यद्वाचओमितियच्चनेतियच्चास्याःक्रूरंयदुचोल्बणिष्णु । तद्वियूयाकवयोऽन्वविंद
न्नामायत्तासमतृप्यञ्छृतेधि ॥ यस्मिन्नामासमतृप्यञ्छृतेधितत्रदेवाःसर्वयुजोभवंति । तेन
पाप्मानमपहत्यब्रह्मणास्वर्गंलोकमप्येतिविद्वान् ॥ नैनंवाचास्त्रियंब्रुवन्नैनमस्त्रीपुमान्ब्रुवन् ॥ पु

स्मिन्ज्ञानेपरिपक्वेसमतृप्यन्तस्मिन्नेवदेवाःसर्वयुजोभवंतीत्यवधारणार्थंपुनर्वचनम् ॥ सर्वयुजोभवंतिमनो
वाक्कर्मभिस्तत्रैवयुक्ताभवंति ॥ अर्थतःकठिनंक्रूरमुल्बणंश्रवणाप्रियमितिशब्दनिर्णये ॥ अस्त्रीपुमान्ब्रुवन्
अस्त्रीपुमांसंब्रुवन् सप्तसुप्रथमेतिसूत्रात् ॥ स्वातंत्र्येविभक्तिव्यत्ययइतिच ॥ स्वतंत्रोहिभगवान्तत्प्रेरितएव
तंवदतीत्यभिप्रायः ॥ वदन्वदतिवदन्नेववदति ॥ वदन्नेवनवदति ॥ भवत्येवहिभगवान्स्त्रीरूपःपुंरूपश्च ॥
तस्माद्वदत्येव ॥ अप्रसिद्धत्वान्नवदतिच ॥ स्त्रीरूपश्चैवपुंरूपोयस्मान्नारायणःस्थितः ॥ पुमान्स्त्रीचेतिवा
च्योतोवैलक्षण्यान्नचोच्यते ॥ विष्णोर्नपुंसकाकारोनैवास्तिकचनप्रभोः ॥ तथाप्यरागाकृष्टत्वात्तच्छब्दे

रपिकथ्यतइतिगारुडे॥ नारायणादिरूपेणपंचधैवहरिःस्थितः॥ तन्नामभिश्चस्त्रीरूपैःसमेतिस्वैःसकेशवः॥
यत्स्यंदनंवहंत्येतेदेवाभार्यासमन्विताः॥ अधिदैवेतथाध्यात्मेजीवदेहात्मकंरथम्॥ ससूर्यःसूर्यभार्याचच
क्षुर्द्वयसमाश्रितौ॥ वहतोश्वात्मकौदेहंनारायणरथात्मकम्॥ सोमश्चरोहिणीचैवदक्षवामश्रुतिस्थितौ॥
उभयोःपक्षयोःस्थित्वावहतोश्वात्मकौतयोः॥ उद्धारणार्थमेतेषामुमावाचिसमास्थिता॥ नागाकारेवर
शित्वमगमद्वैष्णवेरथे॥ मनःस्थितःशिवश्चात्रमनोनामामहाबलः॥ अभवत्सारथिर्विष्णोर्विष्णुर्वायुश्च
तंरथम्॥ प्रकृष्टानंदरूपत्वात्प्राणाख्यावधितिष्ठतः॥ तावेवचाश्विनामानौहयास्यौजगदीश्वरावित्यादि
गारुडे॥ तस्योपनिषत्सत्यस्यसत्यमितिप्राणावैसत्यंतेषामेषसत्यमितिचश्रुतिः॥ सर्वसाधुगुणत्वात्तुवायुःस
त्यइतीर्यते॥ तस्यापिसत्यतादातासाधुपूर्णगुणोहरिः॥ सत्यस्यसत्यएतस्मात्स्त्रीपुंरूपःसकेशवः॥ यस्मि
न्स्वात्मनियुक्तःसरमतेस्त्रीपुमात्मना॥ मुनिगंधर्वपित्राद्यैर्नतत्प्राप्यंकथंचन॥ आप्नुवंतिसुराःसर्वेतद्रूपंजा
ज्वलत्सदा॥ अर्धनारीपुमाकारंतस्यवामस्थितानिच॥ स्त्रीरूपाणितुसर्वाणिविष्णोरत्यद्भुतानिच॥
विष्णोर्यानितुपुंरूपाण्यास्थितान्यस्यदक्षिणे॥ तान्यस्यैवतुरूपाणियुज्यंतेत्रपरस्परम्॥ एषनारायणोदे
वोह्यर्धनारीपुमात्मकः॥ सर्वेदेवास्सभार्याश्चतंप्राप्यपुरुषोत्तमम्॥ एकीभावंस्वभार्याभिरर्धनारीपुमात्म
ना॥ प्राप्यैवोपासतेविष्णुंमुक्ताःसंसारसागरात्॥ मोदंतेचरमंतेचविभागंचेच्छयामुयुः॥ बहुधाच
भवंत्येतेस्त्रीपुमात्मपृथक्कृतः॥ प्रसादाद्वासुदेवस्यभागःस्त्रीपुंस्वरूपिणः॥ तेनैवनियतानित्यंतद्वशास्तत्प
रायणाः॥ रमंतेनान्यगम्योसौदेशोविष्णोःपरात्मनः॥ स्त्रीपुंरूपेणयुक्तंतद्विष्णवाख्यंपरमक्षरम्॥ अक्ष
रादेवपरमात्पुंसोनारायणाभिधात्॥ आगच्छंतितदैतेचदेवाभार्यासमन्विताः॥ वहंत्यश्वादिरूपेणरथस्थं

परमंवपुः ॥ तत्सर्वैर्देवैःप्राप्यंचनान्यैःकथमपिकिंचित् ॥ मितादिपंचरूपंयद्वाक्यंलोकेश्रवाश्रुतौ ॥ नारा
यणस्यनामैतदितिजानंतिदेवताः ॥ मनोवाक्कर्मभिस्तस्माद्योगमाप्स्यंतितत्रते ॥ सर्वशब्दान्हरौनेतुंकस्य
देवान्ृतेबलम् ॥ वाच्यंतास्तारतम्येनविष्णुनामार्थवेदिनः ॥ सम्यग्वेत्तामारुतोत्रतस्मान्मुक्तेभ्यएवच ॥
सुरेभ्योधिकमानंदंनित्यंभुंक्तेहरेरन्वित्याद्यर्धनारीनारायणतंत्रे ॥ एवंसर्वेशब्दाभगवद्वाचकाइत्युक्त्वाअ
कारोविशेषतोनारायणवाचकइत्याह ॥ अइतिब्रह्मेति ॥ इतिशब्दोभिधानांतेयत्रवैशेषिकंहितत् ॥
नामस्यादितिमेसाक्षान्निर्णयःसमुदाहृतइतिशब्दनिर्णयेतत्रागतमहमिति ॥ यस्थादइत्ययंशब्दःप्रस्तुत
स्याभावंविरोधिनमन्यंचवदतितस्मात्प्रत्यक्षत्वाज्जीवजडात्मकस्यजगतएवानुक्तावपिप्रस्तुतरूपत्वात्तदन्य
स्तद्विरोधीतन्नदृश्यमानदोषवर्जितश्चाकारशब्दार्थइतिसिध्यति ॥ मनसिप्रस्तुतत्वादवचनेपिप्रस्तुतमेवेदं
मांसंनब्रुवन्नेनंवदन्वदतिकश्चन॥अइतिब्रह्मतत्रागतमहमितितद्वाइदंबृहतीसहस्रंसंपन्नंतस्य
सर्वम् ॥ दृष्टसंबंधित्वाददृष्टंसर्वमपिप्रस्तुतंभवति ॥ भगवांस्त्वइतिपृथग्विवक्षितत्वादेवनप्रस्तुतसमुदा
ये ॥ नचशून्यस्याशब्दार्थता ॥ शून्यांगीकारेह्यकारस्याभावताख्यएकएवार्थइतिसिद्ध्यति ॥ विष्णो
रंगीकारेत्वभावतान्यताविरोधितेतित्रयोप्यर्थाःसम्यगेवसिध्यंति ॥ तस्मादकारस्यभगवानेवमुख्यार्थोन
शून्यम् ॥ एकदेशार्थत्वात् ॥ तस्मादमुख्यार्थत्वादन्ययुक्तेनैवाकारेणाभावइतितदुच्यतेनत्वइत्येवके
नचित्कचित् ॥ नचतथाप्रयोगोस्ति ॥ तस्मात्पारतंत्र्याल्पगुणत्वादिसर्ववस्तुस्वभावविरुद्धस्वभावंस्वतंत्रं
पूर्णगुणंसर्वजीवजडेभ्योन्यदज्ञानदुःखाल्पत्वपारतंत्र्योत्पत्तिनाशादिसर्वदोषविवर्जितंब्रह्मैवाशब्दार्थः ॥
पूर्णंहिब्रह्मशब्दस्यार्थः ॥ नचदोषयुक्तस्यपूर्णता ॥ नचजीवजडाद्यपूर्णवस्त्वभिन्नस्यपूर्णत्वंभवति ॥ त

स्मादकारशब्दार्थएवब्रह्मशब्दार्थः ॥ तदेतदुक्तमः इतिब्रह्मेति ॥ अः इतिपृथक्त्वेनवचनंतत्समधिकंवाकिमपिनास्तीतिदर्शयितुम् ॥ विद्दतावपिसर्गःस्यात्संहितायांचयत्रहि ॥ समानोत्तमहीनत्वमुच्यतेवस्तुनोंजसेतिशब्दनिर्णये ॥ अः इतिब्रह्मपूर्णवस्तूच्यते ॥ तत्रागतमहमिति ॥ तत्राकारस्यपूर्णवाचित्वेऽहमेवसोकारवाच्यइत्याहमहिदासरूपोभगवान्नारायणः ॥ अहमेकएवपरिपूर्णः ॥ अन्येषांसर्वेषांमदधीनत्वादल्पत्वादिति ॥मुक्तेभ्यःप्रलयेलीनेभ्यश्चसर्ववस्तुभ्यःसदाविभिन्नएव भवानितिदर्शयितुंचअः इतिपृथग्वचनम्॥तच्चोक्तंवाक्यनिर्णये॥मुक्ताअपिनविष्णुत्वंयांतितत्समतामपि ॥ आधिक्यंकुतएवस्यान्मुक्तानांमुक्तिदातृतः॥कुतएवप्रलीनानांप्रलयेतुतदात्मता ॥ ब्रह्मशर्वेंद्रपूर्वाणांमुक्तावपिनविष्णुता॥यदातदातुसंसारेक्तद्रूपत्वमिष्यते ॥ अन्योसौसर्वतोविष्णुःस्वातंत्र्याद्गुणपूर्तितः ॥ सर्ववस्तुस्वभावस्यविरुद्धोरुस्वभावकः ॥ पारतंत्र्याल्पताज्ञानजनिनाशादिवर्जितः ॥ अकारेणततोविष्णुःसंहितायांपदात्मना ॥ बह्वृचोपनिषत्प्रोक्तस्तेनैवपरमात्मना ॥ महिदासावतारेणसोहमेवंविधस्त्विति ॥ मत्तोन्योनहिपूर्णोस्तियतोकारश्चपूर्णताम् ॥ वक्तितस्मादकारोयंमामेववदतिस्फुटम् ॥ नाभाववाच्यकारःस्यादर्थत्रययुतोयतः ॥ एकार्थात्माभ्रभावःस्यान्निषेधैकस्वरूपतः ॥ अन्यताचनिषेधश्चविरुद्धत्वमितित्रयः ॥ अकारार्थाभ्रभावस्तुनिषेधैकस्वरूपतः ॥ एकदेशेस्वरूपत्वान्नाकारेणैवभण्यते ॥ किंत्वभावइतित्वेवतेनाकारोदितोहरिरिति ॥ नचनिषेधस्वरूपेविरुद्धताचान्यताचास्तीत्येतावतापूर्णार्थताभवति ॥ तदार्थत्रयकल्पनस्यवैयर्थ्यात् ॥ उक्तंहिशब्दनिर्णये ॥ विरुद्धतानिषेधान्यभावयुक्तेहिकेवलः ॥ अकारोवर्ततेतेषामेकार्थात्मन्यभावके ॥ वर्ततेभावइत्येवनत्वइत्येवकेवलइति ॥ तस्मान्नारायणएवाकारवाच्यइतिसिद्धम् ॥ यतोकारःसदावि

ष्णोर्वाचकत्वेनसंस्थितः ॥ तस्माद्वर्णत्रयात्मायंप्रणवोपित्रयात्मकम् ॥ हरिमेवसदावक्तिनैवान्यंकंच नकचित् ॥ सृष्टिकर्ताब्रह्मनामायोसृजच्चतुराननम् ॥ अंतर्यामीविरिंचस्यसोकारार्थोजनार्दनः ॥ वैकुंठ लोकआस्तेसद्वितीयवपुषाहरिः ॥ उकारवाच्यःसविभुर्नृसिंहोरुद्रनामकः ॥ रौद्रत्वात्सशिवस्यापिस्र ष्टासंहारकारकः ॥ अंतर्यामीशिवस्यापिमकारार्थःप्रकीर्तितः ॥ एवंत्रियात्मकंविष्णुंप्रणवोयंत्रियात्म कः ॥ एवंपृथगिवाचष्टेबिंदुर्वक्त्यनिरुद्धकम् ॥ प्रद्युम्नाद्यान्नादपूर्वाःसर्वान्नारायणात्मकान् ॥ पद्मनाभा दिकाएवमूर्तीर्नारायणोत्तराः ॥ प्रणवोयंवदत्यष्टौतस्मान्नान्याभिधायकइतितत्त्वसारे ॥ षट्त्रिंशतिसह स्राणिबृहत्युक्थार्णगानितु ॥ स्त्रीरूपाणिहरेस्तावदह्नामप्यभिमानिषु ॥ सूर्यरूपेषुरूपाणिपुमाकाराणि सर्वशः ॥ एतैःपुरुषगैरूपैर्बृहत्युक्थव्यवस्थितैः ॥ कदाचिद्भगवान्विष्णुःपुमाकाराणितानिच ॥ कृत्वासू र्यगतान्येवस्त्रीरूपाणिविधायच ॥ तान्याप्नोतिचपुंरूपैस्तैरेवाक्षरगानिच ॥ स्त्रीरूपाणिजगन्नाथःप्राप्नो त्यात्मेच्छयाप्रभुः ॥ पुंरूपप्रमदारूपस्वरूपैरमतेस्वयम् ॥ एकीकृत्यचतान्येवद्विरूपोरमतेतथा ॥ सएवर मतेमायांस्थितात्मस्त्रीतनौहरिः ॥ प्राणस्योत्पत्तिकामःसन्ननेच्छामारनामकइत्यर्धनारीनारायणतंत्रे ॥ वायोरुत्पत्तिकामोमायांरमायांरमतइत्यनकाममारः ॥जीवस्थितेनाक्षरगेनाक्षरनाम्नास्वरूपेणजीवाख्य सूर्यस्थितमहराख्यंस्वरूपमाप्नोतितेनचाक्षराख्यंस्वरूपमाप्नोति ॥ यदक्षरादक्षरमेतियुक्तमित्यस्यव्या ख्यानरूपत्वाच्चैतदवसीयते ॥ पुमांसंस्त्रियंचवदन्नेवनवदतीत्युक्तत्वादुभयात्मकंरूपंप्रतीयते ॥ अस्त्रीपुमा नितिब्रुवन्नपिनवदतीत्युक्तत्वाच्चस्त्रीत्वंपुंस्त्वंचप्रतीयतेविष्णोः ॥ नचनपुंसकरूपंभगवतःकुत्रचिदुक्तम् ॥ प्रसिद्धमेवचरूपद्वयम् ॥ अतोनपुंसकेवदन्नपिनवदतीतिनतद्वदनुषज्यते ॥ नपुंसकरूपेप्रमाणाभावादेव ॥

लौकिकस्त्रीपुंविलक्षणत्वादस्त्रीपुमानित्यपिवदन्तितिभवति ॥ स्त्रीपुंरूपद्वयंविष्णोर्नतृतीयंकथंचन ॥ साक्षान्नपुंसकस्तस्मान्मुक्तिभागीनतुकचिदितिब्रह्मांडे ॥ नचरक्षइतिनपुंसकशब्दमात्रेणरावणादयोनपुंसकाभवंति ॥ भवतीतिपदाभावादनकाममारइतिभगवन्नामैवेतिज्ञायते ॥ ऋषज्ञानइतिह्यस्माद्धातोःसर्वज्ञ एकराट् ॥ वेदद्रष्टापरमऋषिर्हियास्यःपुरुषोत्तमः ॥ मंत्राणांप्रथमोद्रष्टासर्वेषांयतएवतु ॥ ऋषिणोक्तमितिप्राहुर्मंत्रोक्तंब्राह्मणान्यतः ॥ तत्प्रसादाद्धितपसापश्चान्मंत्रान्प्रपेदिरे ॥ ब्रह्माद्याब्राह्मणंपश्चात्तैर्दृष्टमृषिभिःपृथक् ॥ मंत्राश्चोपनिषच्चैवनाकृत्वासुमहत्तपः ॥ प्रथमंतद्द्वयास्येनदृष्टंकेनचिदीक्ष्यते ॥ विनापृथक्पोदृश्येद्ब्राह्मणंमुनिभिर्यतः ॥ मंत्राश्चोपनिषच्चैवब्राह्मणादुत्तमास्ततः ॥ तत्राप्युपनिषच्छ्रेष्ठायुक्ताव

**वाएतस्यबृहतीसहस्रस्यसंपन्नस्यषट्त्रिंशतमक्षराणांसहस्राणिभवंतितावंतिपुरुषायुषोह्नां सहस्राणिभवंतिजीवाक्षरेणैवजीवाहरामोतिजीवाह्नाजीवाक्षरमित्यनकाममारोथदेवरथस्तस्य**

स्थाधिगम्यतइत्यादिप्रमाणविवेके ॥ तेनरथेनाध्यात्मशरीराख्येनाधिदैवंरथरूपेण ॥ ऋभवइत्यत्रदेवानांसाधारणंनाम ॥ आदित्यावसवोरुद्राविश्वेऋभवइत्यपि ॥ सर्वदेवसमाख्याचद्वादशाष्टादिकेष्वपीतिशब्दनिर्णये ॥ निर्मितोदैवतैःसर्वैर्विष्णुनावायुनासह ॥ अधिष्ठितोरथोदिव्यःसोध्यात्मंदेहनामकः ॥ सम्यग्योगोयदातस्यमनोवाक्कर्मभिर्भवेत् ॥ देहाख्यस्यरथस्यैवतदानारायणात्प्रभोः ॥ विविधंवासवत्वात्तुविवस्वन्नामकाच्छुभम् ॥ संसारवारकंज्ञानंदिवोदुहितृनामकम् ॥ विष्णुतत्त्वापरोक्षाख्यमहनीद्वेचशोभने ॥ ज्ञानावस्थामुक्त्यवस्थेत्युभेएवाहनीपरे ॥ जायंतेदेवतास्त्वेषांभारतीवायुरेवच ॥ जीवन्मुक्तेश्चमुक्तेश्चदातारूपद्वयीप्रभुः ॥ सर्वस्त्रीणामुत्तमत्वाद्द्यौर्नामाश्रीरुदाहृता ॥ दुहितास्याभारतीतुनित्याहेयस्वरूपतः ॥

अहरित्युच्यतेवायुर्ज्ञानात्मत्वात्तथैवच ॥ अधिदैवेरथेप्येतेविष्णोर्लक्ष्म्यांप्रजज्ञिरे ॥ रथेनतेनदेवेशौवि
ष्णुवायूजगत्पती ॥ आयातमितिहिवैतौप्रार्थयेद्यज्ञकर्मणि ॥ अन्यथाप्यर्थयेदेतौज्ञानेच्छुःपुरुषःसदा ॥
जपेन्मंत्रद्वयंनित्यमानेननिमिषस्तथा ॥ रक्षणंवांसमीपेस्यान्ममेत्यध्यात्ममेवच ॥ हयास्यत्वाच्चाश्विनौ
तावित्याहपरमाश्रुतिः ॥ ऐंद्राग्नेयादिकाश्चैवंसर्वेमंत्राहरिंपरम्॥वदंतिमुख्यतोनान्यंसर्वनामानमच्युतम् ॥
अथवावायुदेवस्थंपृथक्संस्थंचकेशवम् ॥ मंत्रोद्विवचनोवक्तितथाबहुवचस्त्वपीत्याद्यैतरेयसंहिताया
म् ॥ सुखंददतइतिसुदिने ॥ विवस्वतोविष्णोःसकाशाद्दिवोदुहिताअहनीचजायेते ॥ अहनीइति
द्विवचनेनद्वित्वेसिद्धेप्युभेइतिवचनमध्यात्माधिदैवतयोरुभयोरपिवचनार्थम् ॥ नचसूर्यरथोत्रवर्ण्य
ते ॥ नचाहोरात्रेअहनीइत्युच्येते ॥ सूर्यस्याश्विनामाभावात् ॥ सप्ताश्वत्वाच्चतद्रथस्य ॥ च

**वागुद्धिःश्रोत्रेपक्षसीचक्षुषीयुक्तेमनःसंग्रहीतातदयंप्राणोधितिष्ठतितदुक्तमृषिणाऽऽतेनयातं**

तुरश्वत्वंचात्रोच्यते ॥ श्रोत्रेपक्षसीचक्षुषीयुक्तेइत्यध्यात्मसंबंधाच्च ॥ नचरात्रौसुदिनमितिप्रयोगोदृष्टः॥
असुदिनस्यापिततएवजातत्वाद्यर्थविशेषणताच॥अस्मिन्पक्षेतुलौकिकाहर्व्यावृत्त्यर्थंसुदिनेइतियुज्यते ॥
जीवन्मुक्तिश्चमुक्तिश्चहिमुख्येसुदिने ॥ सयआत्मानमेवलोकमुपास्तेनहास्यकर्मक्षीयतेऽस्माद्ध्येवात्मनो
यद्यत्कामयतेतत्तत्सृजतइतिज्ञानावस्थायांमुक्तौभोगबाहुल्यकारणत्वात्साविमुक्तिवत्सुदिनम् ॥ नहिमु
क्तावाधिक्यार्जनमस्ति ॥ नहीयतेयत्रगत्वायत्रगत्वानवर्धतइतिवचनात् ॥ अतोज्ञानोत्पत्तिसमनंतरमे
वमुक्तौनपुनरार्जनमस्तीतिकिंचित्कालंज्ञानित्वेनावस्थानमपिसुदिनमेव ॥ ज्ञानात्पूर्वंतुपतनसंशयादेवन
सुदिनम् ॥ नचाश्विरथोवर्ण्यते ॥ नह्यश्विरथयोगादहनीजायेते ॥ एकरासभयुक्तोहितद्रथः ॥ तद्रासभो

नासत्यासहस्रमितिवचनात् ॥ नचविवस्वच्छब्दोश्विनोर्विद्यते ॥ योदेवानांनामधाएकएवेतिविष्णोःसर्वनामानिप्रसिद्धानिच ॥ युजोयुक्ताअभियत्संवहंतीत्यादिनातस्यैवप्रस्तावाच्च ॥ अतोविष्णुरेवमुख्यतःसर्वनामोक्तइतिसिद्धम् ॥ ८ ॥ इतिश्रीमदानंदतीर्थभगवत्पादाचार्यविरचितेश्रीमन्मैहतरेयोपनिषद्भाष्येद्वितीयप्रघट्टकेतृतीयोऽध्याय ॥ २ ॥ ३ ॥

ॐ ॥ एकोनारायणस्त्वासीत्प्रलयेरमयासह ॥ नित्याततगुणत्वात्सआत्मेतिश्रुतिषूदितः ॥ इदंसर्वमपेक्ष्या

मनसोजवीयसानिमिषश्चिज्जवीयसेतिजवीयसेति ॥ ८ ॥ इत्यैतरेयोपनिषत्सुद्वितीयारण्यकेतृतीयोऽध्यायः ॥ २ ॥ ३ ॥

हरिःॐ ॥ आत्मावाइदमेकएवाग्रआसीन्नान्यत्किंचनमिषत्सईक्षतलोकान्नुसृजाइतिसइमाँल्लोकानसृजतांभोमरीचीर्मरमापोदोंभःपरेणदिवंद्यौःप्रतिष्ठांतरिक्षंमरीचयःपृथिवीमरोया

सौकालतोगुणतस्तथा ॥ अग्र्यएवसमस्तेभ्यस्तद्वशत्वाद्रमापिसा ॥ विद्यमानापिनायस्थागुणैरूनाननतोयतः ॥ नब्रह्मानशिवश्चासीन्नैवान्यच्चमिषत्क्वचित् ॥ सुप्तास्तत्रयतोजीवाःसर्वेब्रह्मशिवादिकाः ॥ असुप्ताश्रीश्चमुक्ताश्चस्वतंत्रोन्मेषवर्जनात् ॥ अनुन्मेषाएवनेपिस्वतंत्रोन्मेषएकराट् ॥ नारायणोनचान्योस्तिपूर्णोन्मीलद्गुणात्मकः ॥ पराधीनेनवित्तेनभुंजन्नपिहिभिक्षुकः ॥ वित्तवानितिनैवोक्तस्तथाश्रीर्मुक्ति

गाअपि ॥ मिषंतोप्यन्यतंत्रत्वान्नमिषंतःकथंचन ॥ सर्वदाप्येकएवायंस्वतंत्रोनापरःक्वचित् ॥ का
लाख्यत्वंवक्तुमस्यप्रलयेस्थितिरुच्यते ॥ सऐच्छद्भगवान्विष्णुःस्रष्टुंलोकाभिमानिनः ॥ लोकाभिधा
नवद्देवाञ्जडलोकांश्चशाश्वतः ॥ सलोकेभ्यःपूर्वतनानराख्यान्महदादिकान् ॥ ब्रह्मशर्वादिकान्सृष्ट्वा
जडैस्सहजनार्दनः ॥ दिवमाकाशमुर्वींचससृजेथद्विसप्तकान् ॥ इतिसृष्ट्वासलोकांस्तुपुनस्तानेवलोक
पान् ॥ अंडांतःस्रष्टुमैच्छच्चतेषांपूज्यत्वसिद्धये ॥ अम्नामकेभ्यस्तेभ्यःसपूर्वसृष्टेभ्यएवतु ॥ सर्वजीवा

अधस्तात्ताआपःसईक्षतेमेनुलोकालोकपालान्नुसृजाइतिसोद्भ्यएवपुरुषंसमुद्धृत्यामूर्च्छयत्त
मभ्यतपत्तस्याभितप्तस्यमुखंनिरभिद्यतयथांडंमुखाद्वाग्वाचोग्निर्नासिकेनिरभिद्येतांनासि
काभ्यांप्राणःप्राणाद्वायुरक्षिणीनिरभिद्येतामक्षीभ्यांचक्षुश्चक्षुषआदित्यःकर्णौनिरभिद्येतांक

धिकत्वात्तुब्रह्माणंपुरुषाभिधम् ॥ अंशेनोद्धृत्यरुद्राद्यैःसहचैनमयोजयत् ॥ तथैवाचेतनानांचभागानुद्धृ
त्यपिंडवत्॥चेतनाचेतनंराशिमेकस्थंविदधेप्रभुः॥पुनरैच्छज्जगन्नाथस्तस्यांगोत्पत्तिमच्युतः॥ अंडवन्मुख
मस्यासीत्प्रथमंतुशिरोभिधम्॥ भिन्नमास्यंपुनस्तस्यविष्णोरेवेच्छयाप्रभोः॥ तत्रवाङ्नामकंरूपंवह्नेरासी
त्पुरातनम्॥तस्यैवाथद्वितीयंचयदग्निरितिगीयते ॥ तथैवनासिकातोभून्मुख्यवायोःसुतोमरुत् ॥ प्राणोवा
युरितिद्वेधाचक्षुषोभूत्तथारविः ॥ द्विरूपएवकर्णाभ्यांमित्रधर्माप्यवित्तपाः ॥ दिग्देवताद्विरूपेणबभूवुः

सर्वएवच ॥ हृदयाद्रुद्रांडानंतशिवचंद्राःपृथक्पृथक् ॥ मनोबुद्ध्यभिमानाश्चतन्नामानश्चजज्ञिरे ॥ त्वच
श्चरोमनामानोवृक्षनामानएवच ॥ द्विविधाःपारिजाताद्याबभूवुर्ब्रह्मदेहतः ॥ हस्ताभ्यांद्विविधःशक्रःपद्भ्यां
तत्सूनुरेवच ॥ यज्ञस्त्वजनिपायोश्चयमोनिर्ऋतिरेवच ॥ रेतोम्नामाद्द्विरूपस्तुशिवएवचगुह्यतः ॥ अपानो
मृत्युरितिचमुख्योनाभेस्तुमारुतः ॥ १ ॥ एवंरूपद्वयेनापिस्तुवंतोविष्णुमव्ययम् ॥ दिव्यांबराःकुंडलिनः

र्णाभ्यांश्रोत्रंश्रोत्राद्दिशस्त्वङ्निरभिद्यतत्वचोलोमानिलोमभ्यओषधिवनस्पतयोहृदयंनिर
भिद्यतहृदयान्मनोमनसश्चंद्रमानाभिर्निरभिद्यतनाभ्याअपानोऽपानान्मृत्युःशिश्नंनिरभिद्यत
शिश्नाद्रेतोरेतसआपः ॥ १ ॥ ताएतादेवताःसृष्टाअस्मिन्महत्यर्णवेप्रापतंस्तमशनापिपासा
भ्यामन्ववार्जत्ताएनमब्रुवन्नायतनंनःप्रजानीहियस्मिन्प्रतिष्ठिताअन्नमदामेतिताभ्योगामा
नयत्ताअब्रुवन्नवैनोयमलमितिताभ्योश्वमानयत्ताअब्रुवन्नवैनोयमलमितिताभ्यःपुरुषमान
यत्ताअब्रुवन्सुकृतंबतेतिपुरुषोवावसुकृतंताअब्रवीद्यथायतनंप्रविशतेत्यग्निर्वाग्भूत्वामुखंप्रा
विशद्वायुःप्राणोभूत्वानासिकेप्राविशदादित्यश्चक्षुर्भूत्वाक्षिणीप्राविशद्दिशःश्रोत्रंभूत्वाकर्णौप्रा

प्राविशन्नुदकार्णवम् ॥ तदाशनापिपासाख्यंद्विरूपंमारुतंपुनः ॥ तस्मिन्देवसमूहेतुविष्णुःप्रावेशयत्प्रभुः ॥
तेब्रुवन्देहिनोवासंयत्रचान्नमदामहे ॥ गोरूपमेभ्योब्रह्माणंददौनारायणःप्रभुः ॥ तत्रप्रविश्यतेदेवानालमि
त्यब्रुवन्पुनः ॥ अश्वरूपंविरिंचंचपुनरेवावदत्प्रभुः ॥ तद्रूपेपिप्रविश्यैवनालमित्यब्रुवन्पुनः ॥ पूर्वस्रष्टंपु

माकारंब्रह्मणोदात्पुनर्हरिः ॥ ततूदृष्ट्वैवालमित्यूचुर्विशतेतिसचाब्रवीत् ॥ विविशुश्चयथोत्पन्नाःसर्वेदेवाश्च
तुर्मुखम् ॥ अशनापिपासामानीतुद्विरूपोमारुतोवदत् ॥ कुर्वाज्ञामावयोश्चैवयथात्वच्छासनानुगौ ॥ नि
त्यंभवावेतिहरिःसर्वत्रप्रविशेत्यमुम् ॥ आहतस्माद्देवतानांसर्वासांभागभुङ्मरुत् ॥ एकएवप्राणनामाना
भिस्थोपिसएवतु ॥ अशनापिपासापानश्चमृत्युश्चेतिचतुर्विधः ॥ एकएवमहान्वायुःसर्वदेवेषुसंस्थितः
॥ २ ॥ पुनरैच्छत्केशवोसावन्नमेभ्यःसृजाइति ॥ अवाख्यादेवताःपूर्वंसृष्टाब्रह्मादिकाःपुनः ॥ ददर्शसुवि

विशन्नोषधिवनस्पतयोलोमानिभूत्वात्वचंप्राविशंश्चंद्रमामनोभूत्वाहृदयंप्राविशन्मृत्युरपानो
भूत्वानाभिंप्राविशदापोरेतोभूत्वाशिश्नंप्राविशंस्तमशनापिपासेअब्रूतामावाभ्यामभिप्रजानी
हीतितेअब्रवीदेतास्वेववान्देवतास्वाभजाम्येतासुभागिन्यौकरोमीतितस्माद्यस्यैकस्यैचदेव
तायैहविर्गृह्यतेभागिन्यावेवास्यामशनापिपासेभवतः॥२॥ सईक्षतेमेनुलोकाश्चलोकपालाश्चा
न्नमेभ्यःसृजाइतिसोपोभ्यतपत्ताभ्योभितप्ताभ्योमूर्तिरजायतयावैसामूर्तिरजायतान्नंवैतत्त

शालाभ्यांनेत्राभ्यांपुष्करेक्षणः ॥ तद्दर्शनात्तदिच्छातस्तासांदेहोभवत्पृथक् ॥ सर्वासामपिदेहैकदेशे
भ्योमिलितंशुभम् ॥ सर्वैरधिष्ठितंचैवविरिंचेनविशेषतः॥दिव्यावयवसंपन्नमेकमेवसुलोचनम् ॥ भोग्यभो
क्तात्मनानास्तितस्यदुःखंकथंचन ॥ तेहिदेवाःस्वयंभोग्याःस्वयंभोक्तारएवच ॥ क्रीडंतेमोदिनोनित्यंत
थाप्यन्नात्मकस्त्वसौ ॥ क्रीडयापाक्रमत्किंचित्तंतदासौचतुर्मुखः ॥ अत्तुंवागादिभिःसर्वैरैच्छन्नाप्य

शकत्तदा ॥ जानन्नपिक्रीडयैवतारतम्यंप्रकाशयन् ॥ एवंचकारब्रह्मासक्ताज्ञानंलोककर्तरि ॥ क्षुत्पिपा
सादयश्चैवदेवानांभोगसाधकाः ॥ नतुपीडाकरास्तेषामैश्वर्यादिगुणोन्नतेः ॥ अन्नमूर्तिततोब्रह्माप्रधानेनै
ववायुना ॥ अपानाख्येनात्तुमैच्छत्तदैवाशकदाशुसः॥तस्माद्वोक्तैकएवासौसर्वस्यान्नस्यमारुतः॥तत्प्रसा
दात्परेश्नंतिकिंचित्किंचिन्नचाखिलम्॥आयूरूपोखिलानांचदेवानांवायुरेवहि॥अन्नदेवस्यचायुःसतस्मा

देनत्सृष्टंपराङत्यजिघांसत्तद्वाचाजिघृक्षत्तन्नाशक्नोद्वाचाग्रहीतुंसयद्धैनद्वाचाग्रहैष्यदभि
व्याहृत्यहैवान्नमत्रप्स्यत्तत्प्राणेनाजिघृक्षत्तन्नाशक्नोत्प्राणेनग्रहीतुंसयद्धैनत्प्राणेनाग्रहैष्यद
भिप्राण्यहैवान्नमत्रप्स्यत्तच्चक्षुषाजिघृक्षत्तन्नाशक्नोच्चक्षुषाग्रहीतुंसयद्धैनच्चक्षुषाहैष्यदृष्ट्वाहै
वान्नमत्रप्स्यत्तच्छ्रोत्रेणाजिघृक्षत्तन्नाशक्नोच्छ्रोत्रेणग्रहीतुंसयद्धैनच्छ्रोत्रेणाग्रहैष्यच्छ्रुत्वाहै

द्देवोत्तमोमरुत् ॥ आयुःशब्दोज्ञानवाचीगतिवाचीचयत्ततः ॥ चेष्टामोक्षज्ञानदातासुराणांमारुतस्ततः ॥
अन्योन्यगुणदातृत्वात्समानौब्रह्ममारुतौ ॥ तस्मान्मोक्षेसुखेज्ञानेविष्णुभक्त्यादिकेष्वपि ॥ सर्वेभ्यश्चा
धिकौतौहितयोर्विष्णुःपरस्सदा ॥ देवतानांप्रवेशात्तुपूर्वमेवजनार्दनः ॥ इत्थमैक्षतदेवेशोब्रह्माद्यायदिमांवि
ना ॥ क्रियादिषुसमर्थाःस्युर्नमेविष्णवभिधाभवेत् ॥ सर्वचेष्टयितृत्वाच्चविशिष्टबलतस्तथा ॥ विष्णुरि
त्यभिधामह्यंसानयुक्तादिवौकसाम् ॥ स्वतंत्रत्वेततःसर्वेमद्वशाएवनान्यथा ॥ तस्मादेषांप्रवृत्त्यर्थंप्रवेक्ष्ये

सहवायुना ॥ इतिमत्वाविरिंचस्यशरीरंप्रविवेशसः ॥ मूर्धन्यनाड्याप्रथमंब्रह्मवायुसमन्वितः ॥ अग्न्यादय
स्ततःपश्चात्प्रविष्टास्तन्नियोजिताः ॥ प्रपदाभ्यांतथान्येनरूपेणप्रविवेशसः ॥ बिभर्तिदेहंतेनैवमूर्धाविष्टे
नचेष्टयन् ॥ नारायणोवासुदेवइतिद्वेधाव्यवस्थितः ॥ मूर्धाविष्टोवासुदेवस्तस्यचावसथास्त्रयः ॥ अक्षि
कंठोहृदित्येवतएवस्वमनामकाः ॥ आमोत्यत्रस्वयंविष्णुरतःस्वामाःप्रकीर्तिताः ॥ अनिरुद्धादिरूपेणत्रि
धातेषुव्यवस्थितः ॥ दाताऽवस्थात्रयस्यास्यजीवस्यक्रमशोविभुः ॥ सुषुम्नायांवासुदेवोमूर्धन्येवव्यव
स्थितः ॥ तस्यामेवब्रह्मनाड्यांस्थितोनारायणःप्रभुः ॥ सएवभगवान्विष्णुःप्रादुर्भावात्मनापुनः ॥ जातोम
त्स्यादिरूपेणसर्वभूतेषुचाविशत् ॥ असुराणांनिहंतारंज्ञानादिगुणदंतथा ॥ चेष्टाप्रदंचभूतेषुनमदन्यंवदत्य
पि ॥ इतिमत्वाजगन्नाथोदैत्यनिग्रहणेच्छया ॥ ज्ञानदानार्थमपितुप्रादुर्भूतोभुविप्रभुः ॥ तथाजीवेषुसर्वे
षुप्रविष्टःप्रेरणेच्छया ॥ कोह्यन्यस्तमृतेविष्णुमेतत्कर्मकरिष्यति ॥ ससर्वगुणसंपूर्णंसर्वगंनित्यमव्ययम् ॥
एतदेवस्वरूपंसत्वपश्यदवतारगम् ॥ तस्मात्सर्वावताराश्चसर्वजीवेषुसंस्थिताः ॥ प्रादुर्भावाःसर्वगुणैःपूर्णाए
वसदास्थिताः ॥ पश्यंतिचतथानित्यंनिर्दोषोरुस्वसंविदा ॥ गुणपूर्णस्वरूपस्यत्वापरोक्ष्येणदर्शनात् ॥
सर्वदेवह्यसौविष्णुरिंद्रोनामतोमतः ॥ ब्रह्मादीनांहिसर्वेषांतत्प्रसादेनजायते ॥ जानंतिनस्वतस्तेननेदंद्रास्ते
प्रकीर्तिताः ॥ रमापितत्प्रसादेनजानातिकिमुतापरे ॥ अल्पज्ञानाअल्पगुणाअल्पानंदाश्चतेऽखिलाः ॥
रमाजशंकरेंद्राद्यास्तेनानिंद्राःक्रमेणते ॥ पापैरज्ञाततांदेवामानयंतिसदात्मनः ॥ हर्षेणतेनविष्णुःसइंद्र
इत्यभिशब्द्यते ॥ नेदंद्रताऽसुरादीनांज्ञायेतेतिश्रुतिर्हरिम् ॥ इंद्रइत्येववदतिपारोक्ष्येणोरुसद्गुणमित्याद्यै
तरेयसंहितायाम् ॥ आततगुणत्वादात्मानारायणः ॥ ब्रह्मपंथाःसत्यंकर्मेतितस्यैवपंचरात्रप्रसिद्धेरेवनाम

शिरारब्धत्वाच्च ॥ मुख्यतःकर्मनामातुप्रादुर्भावात्मकोहरिः ॥ अनिरुद्धतनुश्चैवतत्रब्रह्ममितचेष्टितः ॥
कर्माभासाजीवसंघाःसत्यंप्रद्युम्ननामकः ॥ संकर्षणोहरिःपंथाब्रह्मोक्तोवासुदेवकइत्यादिनामनिर्णये ॥
मत्सींद्रमिंदोपवमानविष्णुमित्यादिश्रुतौतस्मिन्नेवप्रसिद्धस्येंद्रशब्दस्यबहुशोभ्यासाच्च ॥ अकारस्यचवि
ष्णावेवप्रसिद्धस्यात्राप्यभ्यासात् ॥ तस्ययथाकप्यासंपुंडरीकमेवमक्षिणीइतिसूर्यमंडलेपुंडरीकाक्षत्वे
ननिर्दिष्टस्यात्रापियएषतपतीत्यादिनाबहुशोभ्यासाच्च ॥ सूर्योहिहिरण्याक्षःसवितादेवआगादिति
पिंगलाक्षःप्रसिद्धः ॥ विरूपाक्षःशिवःसूर्यःसुराचार्योविनायकः ॥ पुंडरीकेक्षणोविष्णुःसहस्राक्षः
सुराधिपइतिचस्कांदे ॥ योदेवानांनामधाएकएव ॥ नामानिसर्वाणियमाविशंतितंवैविष्णुंपरममुदाहरं
ति ॥ यमिंद्रमाहुर्वरुणंयमाहुः ॥ चंद्रसूर्यादयःशब्दाविष्णावेवहिमुख्यतः ॥ उपचारात्तदन्येषांविष्णुनै
वकृताःपुरेत्यादिनातस्यैवसर्वनामवत्त्वाच्च ॥ णकारोबलंषकारःप्राणआत्मेत्यादीनांतेपिविष्णुशब्दव्या
ख्यानेनोपसंहाराच्च ॥ आत्मब्रह्मादयःशब्दास्तमृतेविष्णुमव्ययम् ॥ नवर्ततेतदन्यत्रशृंगिवेरेग्निशब्दवदि
तिचपाद्मे ॥ एकोनारायणआसीन्नब्रह्मानचशंकरः ॥ एकोनारायणआसीन्नब्रह्मानेशानः ॥ वासुदेवो
वाइदमग्रआसीन्नब्रह्मानचशंकरइत्यादिश्रुतिभ्यश्च ॥ अग्रशब्दोगुणाधिक्यवाची ॥ इदंरमाब्रह्मशिवा
दिकंसर्वंजगदपेक्ष्यात्मैवाग्रेविष्णुरेवाग्र्यःसर्वगुणैरित्यर्थः ॥ तत्रहेतुस्तदन्यत्किंचिन्नमिषदासीत् ॥ सर्व
स्याप्युन्मेषणंनासीदित्यर्थः ॥ स्वतउन्मेषणंकस्यापिनास्ति ॥ अस्तिशब्दवदासीच्छब्दोपिसर्वकालसा
धारणः ॥ भगवत्प्रसादादेवसर्वदासर्वंकिंचिदुन्मिषति ॥ स्वातंत्र्येणपूर्णोन्मेषोविष्णुरेव ॥ उन्मेषोगुणसं
पूर्तेरुद्रिक्तानुभवःस्मृतः ॥ तदेवमिषणंनामसद्रूपंमिनुतेयतः ॥ मिषच्चनान्यद्विष्णोर्हिकिमुतोन्मिषदिष्य

ते ॥ उच्चैर्मिषन्हि भगवान्सर्वदेवजनार्दनइतिचसत्तत्त्वे ॥ नास्तिनारायणसमंनभूतंनभविष्यतीतिचभार
ते ॥ सर्वजीवानांरमायाश्चप्रलयेपिविद्यमानत्वादेवनाद्यइतिकालापेक्षयातदधीनमिषत्वादन्येषामग्र्यः
सएवेत्याशयः ॥ तदधीनत्वमेवतेषांसृष्ट्यादिनादर्शयति ॥ स्थूलशरीरस्यपूर्वाभावस्ततएवार्थतःसि
द्ध्यति ॥ प्रलयेप्यखिलंदेवीरमाविष्णुप्रसादतः ॥ जानातिनित्यज्ञानेनमुक्ताध्यानस्थितालयइति
चसत्तत्त्वे ॥ ब्रह्मादीनांशरीरांतरस्यापिप्रलयेनुक्तेरेवाभावःसिद्ध्यति ॥ आत्माब्रह्माग्र्यइत्यादिगुणाग्र्य
त्वंहरेर्वदेत् ॥ कालज्यैष्ठ्यंनयस्मात्तत्सृष्ट्युक्तेरेवसिद्ध्यतीतिवाक्यनिर्णये ॥ गुणाग्र्यतायामेवकालज्यै

वान्नमत्रप्स्यत्तत्त्वचाजिघृक्षत्तन्नाशक्नोत्त्वचाग्रहीतुंसयद्धैनत्त्वचाग्रहैष्यत्स्पृष्ट्वाहैवान्नमत्र
प्स्यत्तन्मनसाजिघृक्षत्तन्नाशक्नोन्मनसाग्रहीतुंसयद्धैनन्मनसाग्रहैष्यद्ध्यात्वाहैवान्नमत्रप्स्यत्त
च्छिश्नेनाजिघृक्षत्तन्नाशक्नोच्छिश्नेनग्रहीतुंसयद्धैनच्छिश्नेनाग्रहैष्यद्विसृज्यहैवान्नमत्रप्स्य

ष्ठ्यस्याप्यंतर्भावाच्च ॥ अंविष्णुंबिभर्तीत्यंभोविष्णुलोकोदिवःपरःमहरादयश्चदिव्यपिभगवान्प्रतिति
ष्ठतीतिप्रतिष्ठा ॥ तेषुसर्वेषुप्रत्यक्षतश्चरतिविष्णुस्तस्मादंभइत्युच्यते ॥ दिवःपरेद्यौश्चांभोनामकाइत्यर्थः ॥
सूर्यमरीचीनांतत्रविशेषेणविततत्वादंतरिक्षंमरीचयः ॥ मरीचीनामयनात् ॥ पृथिव्यांक्षिप्रंमरंतीतिपृथि
वीमरः ॥ भूतेभ्योनंतरंत्वंडंसृष्ट्वाविष्णुःपुराप्रभुः ॥ लोकभेदांश्चचक्रेत्रपश्चाद्ब्रह्माविशेषतः ॥ सम्यक्क
कारलोकांस्तांल्लोककर्ताततःसचेतिब्रह्मवैवर्ते ॥ याअधस्तात्पूर्वमेवसृष्टादेवतास्ताआपइत्युच्यंते ॥
आपाइत्यापइतीतिपूर्वंभगवदंगसृष्टानामेवापूशब्देनोक्तेः ॥ अयंपितैतेपुत्राइतिच ॥ आहंमांदेवेभ्यो

वेदओमद्देवान्वेदेतिच ॥ ब्रह्मवायूचतद्भार्येवींद्रशेषौचतत्स्त्रियौ ॥ शिवस्तद्दयिताशक्रकामौतद्द
यितादयः ॥ सर्वेसुराःक्रमेणैवविष्णोर्जाताअवाख्यकाः ॥ ज्ञानानंदबलाद्येषुविष्णुभक्तौचसर्व
शः ॥ हीनाःशतगुणेनैवक्रमेणानेनतेमताः ॥ तेभ्यश्चऋषयोमर्त्याहीनाएवक्रमेणच ॥ विशेषतस्तुमुक्ता
नांसर्वसंसारबंधनात् ॥ क्रमोयंसम्यगुद्दिष्टोनित्यानंदैकभोगिनाम् ॥ नविशेषोब्रह्मवाय्वोरधिकाराविभे
दतः ॥ नशेषशिवयोश्चैवतत्पत्नीनांचसर्वशः ॥सुपर्णशेषयोश्चैवसाम्यंसर्वगुणेष्वपि ॥ साम्यमेवैतयोःप
त्न्योःसाम्यंशक्रमनोजयोः ॥ एतेतुमहदादीनांसर्वेपिह्यभिमानिनः ॥ पूर्वस्यप्रतिबिंबश्चचरमस्तत्सुतस्त

त्तदपानेनाजिघृक्षत्तदावयत्सैषोन्नस्यग्रहोयद्वायुरन्नायुर्वाएषयद्वायुःसईक्षतकथन्विदंमदृ
तेस्यादितिसईक्षतकतरेणप्रपद्याइतिसईक्षतयदिवाचाभिव्याहृतंयदिप्राणेनाभिप्राणितंयदि
चक्षुषादृष्टंयदिश्रोत्रेणश्रुतंयदित्वचास्पृष्टंयदिमनसाध्यातंयद्यपानेनाभ्यपानितंयदिशिश्ने
नविसृष्टमथकोहमितिसएतमेवसीमानंविदार्यैतयाद्वाराप्रापद्यतसैषाविदृतिर्नामद्वास्तदेतन्ना

था ॥ तद्वशाश्चाखिलाविष्णोर्नविष्णुःकस्यचिद्वशे ॥ महदादिमानिनश्चैतेजातास्तैःसहसर्वशः ॥ एते
लोकाइतिप्रोक्तालोकानामभिमानिनः ॥ तएवलोकपालाश्चयदापश्चात्प्रजज्ञिरे ॥ पश्चाज्जातैर्हिरूपैस्तै
र्लोकस्थान्पालयंत्यलमित्यादितत्त्वसारे ॥ अमूर्च्छयन्मूर्तमकरोत् ॥ अग्निर्वाग्भूत्वेत्यादिनापश्चादै
क्यप्रतीतेरेकस्यैवरूपद्वयंतदितिप्रतीयते ॥ प्रजानीहिप्रकर्षेणानुजानीहि ॥ अन्नदेवताचसर्वदेवतायु
क्तोविरिंचएव ॥ ग्रसनंचैतस्मिन्प्रवेशएवनतुपीडातस्य ॥ एकएवहिब्रह्माभोक्तृभोज्यत्वेनस्थितोभोज्य
रूपेणैकीभूयातितरांमुमोदेत्यर्थः ॥ देवानामुपद्रवाभावाद्भोक्तृत्वशक्तियोजनमेवाशनापिपासाभ्यामन्व

वार्जनम् ॥ वायुरेवचभोक्तृत्वशक्तिरूपः ॥ यद्दिवागादीनामेवाभिव्याहरणादिशक्तिःस्यान्मांविनातर्हिवि
ष्णुत्वंनममस्यात्तस्मात्कोहंभवानीत्याक्षेपः ॥ विशेषेणप्राणयतिसर्वान्सर्वेभ्योविशिष्टश्चेतिहिविष्णुः ॥
णकारोबलंषकारःप्राणआत्मेतिव्याख्यानात् ॥ तस्मान्मत्प्रेरिताएवैतेअभिव्याहारादिशक्ताइत्यभिप्रायः॥
पूर्णानंदस्वरूपत्वान्नंदनोभगवान् ॥ प्रादुर्भावरूपेणजातोपिभगवान्सर्वभूतान्यभितःसर्वकालेषुविशेषेणप
श्यत्येव ॥ इहभूतेषुमत्तोन्यंप्रवर्तकंवदेत्किमित्याक्षेपः॥अहमेवस्वतंत्रःपरिपूर्णगुणइतिकृष्णराघवादिसर्वा
वताररूपोपिसर्वदानुभवत्येव ॥ नायंदशरथाज्जातोनचापिवसुदेवतः ॥ क्वास्याज्ञानंकुतोदुःखंप्रादुर्भावेष्व

दनंतस्यत्रयआवसथास्त्रयःस्वप्नाअयमावसथोयमावसथोयमावसथइतिसजातोभूतान्यभि
व्यैख्यत्किमिहान्यंवावदिषदितिसएतमेवपुरुषंब्रह्मततममपश्यदिदमदर्शमितीइँतस्मादिदं
द्रोनामेदंद्रोहवैनामतमिदंद्रंसंतमिंद्रइत्याचक्षतेपरोक्षेणपरोक्षप्रियाइवहिदेवाःपरोक्षप्रियाइव
हिदेवाः ॥ ३ ॥ इत्यैतरेयोपनिषत्सुद्वितीयारण्यकेचतुर्थोऽध्यायः ॥२॥ ४ ॥

विप्रभोः ॥ प्रादुर्भूतश्चिदानंदशरीरोराघवःस्वयम् ॥ स्तंभाद्वानरदेहाद्वानैवास्यप्राकृतीतनुः ॥ दैत्यानांमो
हनार्थायसोज्ञानाद्यंप्रकाशयेत् ॥ पूर्णचित्सुखरूपोपिसदासर्वावतारगइत्यादिस्कांदे ॥ एतमेवपुरुषंव्या
सकृष्णकपिलराघवादिरूपंततममपश्यत् ॥ ततमंपरिपूर्णतमंब्रह्मापश्यत् ॥ इदंमेस्वरूपमदर्शमेवाहमि
ति ॥ रंगस्त्ववधारणे ॥ रंगोवधारणेचैवसंवादेचप्रयुज्यतइतिपदविवेके ॥ अपश्यदित्यत्रनातीतकालत्वं
विवक्षितम् ॥ अभिव्यैख्यदित्यभिशब्दस्यानुषंगात् ॥ अपश्यत्पश्यतीतिचैककालसंबंधंविनावक्तुमश
क्यत्वात्तथाप्रयोगः ॥ प्रयोगएककालीनःसर्वकालेनुषज्यते ॥ ददर्शविष्णुरित्यादौनित्यचिद्रूपतोहरेरि

त्यादिसत्त्वे ॥ परोक्षप्रियाइवेत्यसुराणांसम्यग्दर्शनेनपतनंदेवानांप्रियंतथाप्यपरोक्षदर्शिन्येवप्रीतिंकुर्वं
तीतीवशब्दः ॥ ३ ॥ इतिश्रीमदानंदतीर्थभगवत्पादाचार्यविरचितेश्रीमन्महैतरेयोपनिषद्भाष्येद्वितीयप्रप
ट्ठकेचतुर्थोऽध्यायः ॥ २ ॥ ४ ॥ ॥ ॥ ॥ ॥
ॐअयंनारायणोदेवःपुरुषेप्रथमंविशेत् ॥ अन्नस्थोन्नेनसहितस्तस्मिन्रेतस्त्वमागते ॥ तस्मिन्स्थितंस्वरूपंस
पुरुषस्थोबिभर्त्यजः ॥ तद्रूपंरेतसासाकंस्वयंपुंस्थितोहरिः ॥ स्त्रियांसिंचतितस्यैवस्थानांतरगतेःप्रभोः ॥ प्र
थमंजन्मविष्णोस्तुसतस्याअंगवत्प्रभुः ॥ नैनांहिनस्त्यानुकूल्यात्सापुत्रंभावयत्यथ ॥ पुत्रस्यभावनासैवत

हरिःॐ ॥ (अपक्रामंतुगर्भिण्यः) ॥पुरुषेहवाअयमादितोगर्भोभवतियदेतद्रेतस्तदेतत्सर्वेभ्यों
गेभ्यस्तेजस्संभूतमात्मन्येवात्मानंबिभर्तितद्यदास्त्रियांसिंचत्यथैनज्जनयतितदस्यप्रथमंजन्म
तत्स्त्रियाआत्मभूयंगच्छतियथास्वमंगंतथातस्मादेनान्नहिनस्तिसास्यैतमात्मानमत्रगतंभाव
यतिसाभावयित्रीभावयितव्याभवतितंस्त्रीगर्भंबिभर्तिसोग्रएवकुमारंजन्मनोग्रेधिभावयतिस
यत्कुमारंजन्मनोग्रेधिभावयत्यात्मानमेवतद्भावयत्येतेषांलोकानांसंतत्याएवंसंतताहीमेलोका
स्तदस्यद्वितीयंजन्मसोस्यायमात्मापुण्येभ्यःकर्मभ्यःप्रतिधीयतेथास्यायमितरआत्माकृतकृ

द्रत्वाद्धरिभावना ॥ संभावितव्यासाचैवभर्त्रापुत्रश्चसादरम् ॥ संभावनंकुमारस्यजानतःकेशवेभवेत् ॥
तस्येत्यर्पणमात्रेणपूजितोहिभवेद्धरिः ॥ पुत्रस्थस्यहरेःपूजांकुर्वतःपृथिवीस्थितिः ॥ स्वर्गस्थस्यापिभवति
पुत्रपुण्यंयतोखिलम् ॥ अत्यल्पपुण्यभाक्सस्यान्नार्चयेत्केशवंयदि ॥ पृथिव्यांजन्मपुत्रस्यद्वितीयंवि
ष्णुजन्महि ॥ एतद्रूपंनिधायैवजीवार्थैधर्मकर्तवे ॥ पितृस्थेनतुरूपेणगच्छत्यन्यत्रकेशवः ॥ पितुरन्यत्र
जननंतृतीयंजन्मतद्धरेः ॥ अंतर्यामितयैवंहिसर्वजीवेषुसंस्थितम् ॥ सर्वदोषोज्झितंविष्णुंकर्तारंसर्वकर्म

णाम् ॥ नित्यानंदंस्वतंत्रंचसर्वज्ञंसर्वतोधिकम्॥योवेददेहबंधात्सविमुक्तोनित्यमुत्तमान् ॥ भोगान्भुंक्तेयथा
योग्यमितिवेदानुशासनमित्यैतरेयसंहितायाम् ॥ नात्रजीवोत्पत्तिमात्रमुच्यते ॥ नहिजीवोत्पत्तिमात्रपरि
ज्ञानादमृतत्वंभवति ॥ ज्ञातमेवसर्वैःपितापुत्रसंबंधमात्रंपश्वादिभिरपि ॥ गर्भेनुसन्नन्वेषामवेदमहंदेवानां
जनिमानिविश्वेत्युक्तार्थउदाहृतमंत्रेदेवजन्मकथनाच्च ॥ विष्णुर्हिपरमोदेवः ॥ तेनैवसहसर्वेपिदेवाजीवदेह
जननेजायंतइव ॥ शरीरप्राप्तिरेवहिजन्मान्येषामपि ॥ अयमेवविशेषोदेवानांदुःखाभोगः ॥ स्वातंत्र्यंच
विष्णोः ॥ आत्मन्येवात्मानंबिभर्तिआत्मानमेवतद्भावयतीत्याद्यात्मशब्दश्चमुख्यतोविष्णावेवयुज्यते ॥ ण
कारोबलंषकारःप्राणआत्मेतिविष्णुशब्दार्थैकदेशवाचित्वाच्चात्मशब्दस्य ॥एतयाद्वाराप्रापद्यतेतितस्यैवश
रीरप्रवेशस्यप्रस्तुतत्वाच्च ॥ जीवशरीरंपरित्यज्यान्यत्रगमनमात्रंविष्णोरप्यस्तीतिप्रेतीत्युक्तेप्यविरोधः ॥ कृ
ष्णराघवादिस्वरूपमेवह्यसौनपरित्यजति ॥ कृष्णोह्यत्यक्तदेहोपित्यक्तदेहवदेवच ॥ लोकानांदर्शयामास
स्वरूपसदृशाकृतिम् ॥ येनरूपेणकंसादीन्जघ्नेतद्रूपमेवहि ॥ पूज्यतेद्यापिशर्वाद्यैर्निर्मितान्याशवाकृतिः ॥
स्वर्गारोहणकालेतुजनास्तेनैवमोहिताः॥यत्तद्रूपंनिजंविष्णोर्दृष्टंसर्वजनैर्भुवि॥अद्यापितद्देवलोकेपूज्यतेसर्व
दैवतैरित्यादिस्कांदे ॥ प्रदर्श्यातप्ततपसामवितृप्तदृशांनृणाम् ॥ आदायांतरधाद्यस्तुस्वबिंबंलोकलोचनमिति
चभागवते ॥प्रेतांयज्ञस्यशंभुवेत्यादिवत्प्रकृष्टगतिवाच्येवायंशब्दः ॥ प्रकृष्टगतित्वादेवचमरणेपिप्रयुज्यते॥
एषामवेदमहमित्यत्रापिजीवभेदएवोक्तः ॥ अन्यथाममजनिमानीत्येवोच्येत ॥ व्यर्थताचैषामित्यादिवि
शेषणानाम् ॥ अवेदमित्यनेनैवस्वस्यसिद्धत्वादहमित्यप्यहेयत्वेनेतिक्रियाविशेषणम् ॥ जन्मजानन्नपिदे
वानांदुःखाद्विहेयरहितत्वेनब्यजानामीत्यर्थः ॥ तस्मादहंमनुरित्यादावप्यहेयगुणंभगवंतमेवाहंशब्दोवक्ति

सर्वांतरत्वात्तस्मिन्नेवाभवमित्युत्तमपुरुषशब्दोपिसर्वोंवर्तते ॥ अहेयत्वादहंविष्णुःसतुसर्वांतरत्वतः ॥ अस्यस्मीत्यादिभिःशब्दैरुच्यतेन्योपिजीवतइतिब्रह्मवैवर्ते ॥ नचमूढव्यवहारएववेदनिर्णयायंभवति ॥ किंतुसर्वेषामनुभवोयुक्तश्चवाक्यांतरंचनिर्णयकारणम् ॥ तस्मात्सर्वजीवादिभ्योन्यःसर्वोत्तमोविष्णुरेवात्रोक्तः ॥ नवेदेषुपदंकिंचिद्वर्णोवाव्यर्थइष्यते ॥ यथायोग्यंचार्थभेदऊह्यःसर्वत्रवेदिभिरितिशब्दनिर्णये ॥ शब्दोरेतोन्नमित्याद्याअपितत्रगतंहरिम् ॥ वदंत्यविष्णुवाचीहिनशब्दःक्वचिदिष्यतइतिच ॥ भावयतिसंभावयति ॥ सोग्रएवसोग्र्योविष्णुरेव ॥ पुत्रसंभावनमपितत्रस्थंविष्णुंसंभावयामीतितत्तस्यैवभवति ॥ एवंभावयतामेवैषपंथाउरुगायइत्याद्यपि ॥ तंपश्यंतिपशवइत्याद्यपिदिव्यपश्वादीनामेव ॥ अन्येषांस्वभा

त्योवयोगतःप्रैतिसइतःप्रयन्नेवपुनर्जायतेतदस्यतृतीयंजन्मतदुक्तमृषिणा गर्भेनुसन्नन्वेषामवेदमहंदेवानांजनिमानिविश्वा ॥ शतंमापुरआयसीररक्षन्नधःश्येनोजवसानिरदीयमितिगर्भएवैतच्छयानोवामदेवएवमुवाचसएवंविद्वानस्माच्छरीरभेदादूर्ध्वउत्क्रम्यामुष्मिन्स्वर्गेलोके

वप्रवृत्तिः ॥ ताएवदेवताःशतंपुरआयसीर्ज्ञानिन्योविशेषतः ॥ अयपयगतावितिधातोः ॥ मानुषानपेक्ष्यपूर्णत्वात्पुरः ॥ विष्णुर्मुख्यतएवपूर्णः ॥ नचशरीरैर्जीवोरक्षितः ॥ मुख्येयुज्यमानेचनामुख्यार्थःकल्प्यः ॥ शमस्यविद्यतइतिशीविष्णुःपूर्णानंदत्वात् ॥ सएवज्ञानत्वाच्छ्येतिश्यः ॥ सोस्यजीवस्येनइतिश्येनः ॥ विष्णुंस्वामिनंज्ञात्वेत्यर्थः ॥ निरदीयंनिष्क्रम्यातीतोस्मिगर्भवासंस्वरानंदोविष्णुरत्रगइतिस्वर्गलोकोविष्णुलोकः ॥ अमृतःसन्सर्वान्कामानाप्त्वातानेवसर्वान्कामान्समभवदनुभवति ॥ अपेक्षितवस्तुस्वीकारआप्तिःसंभवोभोगः ॥ तान्समभवत्ततोमनुष्याअजायंतेत्यादिवत् ॥ मुक्त्यनंतरमेवह्यनुपचरितसर्वकामावाप्तिः ॥

मुख्यएवचार्थःस्वीकार्यः ॥ अमुक्तानांविष्णुलोकगानामपिनसर्वकामावाप्तिः ॥ जयविजयादीनामप्रियदर्शनात् ॥ अतोऽमृतःसन्सर्वान्कामानाप्त्वेत्यर्थः ॥ मुक्तःकामानवाप्नोतिभुंक्तेचैवयथेष्टतः ॥ सर्वानपिनिरातंकःसर्वदाचहरेर्वशइतिसत्तत्त्वे ॥ १ ॥ ॥ इतिश्रीमदानंदतीर्थभगवत्पादाचार्यविरचितेश्रीमन्महैतरेयोपनिषद्भाष्येद्वितीयप्रघट्टकेपंचमोध्यायः ॥ २ ॥ ५ ॥ ॥ ॥ ॥

॥ ॐअयंविष्णुर्हिकिंरूपउपास्योस्माभिरच्युतः ॥ इत्यपृच्छद्रमादेवीमहिदासंजनार्दनम् ॥ आहतांमहिदासोथपूर्णानंदतमस्त्विति ॥ उपास्यस्तादृशोस्यस्वभावःपरमात्मनः ॥ येनजीवोदर्शनादीन्प्रेरितःकुरु

सर्वान्कामानाप्त्वाऽमृतःसमभवत्समभवत् ॥ १ ॥ ( यथास्थानंगर्भिण्यः ) इत्यैतरेयोपनिषत्सुद्वितीयारण्यकेपंचमोऽध्यायः ॥ २ ॥ ५ ॥

हरिःॐ ॥कोयमात्मेतिवयमुपास्महेकतरःसआत्मायेनवापश्यतियेनवाशृणोतियेनवागंधानाजिघ्रतियेनवावाचंव्याकरोतियेनवास्वादुचास्वादुचविजानातियदेतद्धृदयंमनश्चैतत्संज्ञानमा

तेसदा ॥ योविष्णुर्हृदयमितिहृद्रतत्वात्प्रकीर्तितः ॥ मंतृत्वान्मनइत्येवयच्चज्ञानस्वरूपतः ॥ एतत्सन्निहितत्वाच्चपूर्णत्वादेतिकीर्तितः ॥ इतत्वाच्चततत्वाच्चसइतन्नामकेशवः ॥ गुणानामुच्चयोयस्मात्सचइत्येवशब्दितः ॥ सम्यग्ज्ञानस्वरूपत्वात्संज्ञानमितिकीर्तितः ॥ आततज्ञानरूपत्वादाज्ञानंभगवान्हरिः ॥ विविधज्ञानरूपत्वाद्विज्ञानमितिकीर्तितः ॥ प्रकृष्टात्मगुणज्ञानरूपःप्रज्ञानमुच्यते ॥ अविस्मृतित्वान्मेधासदृष्टिर्दर्शनरूपतः ॥ धृतिर्धारणरूपत्वान्मतिर्मासुततत्वतः ॥ मनुनाम्नामजादीनांमनीषेशोयतोहरिः ॥ सर्वप्रेरकरूपत्वाज्जूतिरित्यभिधीयते ॥ सर्वदेशेषुकालेषुस्वरूपेषुचसर्वशः ॥ समंरमतइत्येवस्मृतिर्नामजनार्द

नः ॥ सर्वस्यकृत्निकर्तृत्वात्संकल्पइतिगीयते ॥ क्रतुःससर्वकर्तृत्वादसुरप्यसनाद्धरिः ॥ अमेयानंदरूप त्वात्कामइत्यभिधीयते ॥ अवशःस्वतंत्रत्वात्रयोविंशतिनामकम् ॥ योवेदैवंहरिंसम्यङ्मुच्यतेखिलसं स्रतेः ॥ ब्रह्माशिवश्चशक्रश्चदेवाश्चान्येसमस्तशः ॥ तथैवपंचभूतानिपुण्यपापविमिश्रिताः ॥ क्षुद्रात्मान स्तुयेमर्त्याइतरेअसुराअपि ॥ सर्वंजगदिदंविष्णोर्वशेतिष्ठतिसर्वदा ॥ तेनैवनीयतेनित्यंतस्मिन्नेवप्रतिष्ठित म् ॥ मुक्तायेलोकनामानोनीयंतेतेपिविष्णुना ॥ स्वयंचानन्यनिष्ठत्वात्प्रतिष्ठेत्यभिधीयते ॥ देशतःकाल तश्चैवगुणतश्चातिपूर्तितः ॥ विष्णोर्ब्रह्मेतिनामैतन्मुख्यतोन्यत्रनकचित् ॥ सोलोकनामामुक्तस्तुचितिमा त्रस्वरूपतः ॥ प्रकृष्टज्ञानरूपस्यप्रसादात्परमात्मनः ॥ अस्माद्देहात्समुत्क्रम्यगत्वोर्ध्वंलोकमुत्तमम् ॥

ज्ञानंविज्ञानंप्रज्ञानंमेधादृष्टिर्धृतिर्मतिर्मनीषाजूतिःस्मृतिःसंकल्पःक्रतुरसुःकामोवशइतिसर्वा ण्येवैतानिप्रज्ञानस्यनामधेयानिभवंत्येषब्रह्मैषइंद्रएषप्रजापतिरेतेसर्वेदेवाइमानिचपंचमहाभू

अमृतःसन्विष्णुलोकेभोगान्संप्राप्यपुष्कलान् ॥ भुंक्तेयथेष्टतोनित्यमितिवेदानुशासनमित्याद्यैतरेयसं हितायाम् ॥ जानंत्यापिदेव्यालोकानुग्रहार्थंविशेषज्ञानार्थंचकोयमात्मेतिपृष्टःसभगवानाह ॥ कतरः सआत्मेति ॥ कतरःआनंदतमःयत्रोभयोःप्रयोगोनतत्रैकार्थौतरप्तमावितिशब्दनिर्णये ॥ यत्प्रेरणादयं जीवोदर्शनादीन्करोतिच ॥ रमाब्रह्मादीनामपितत्प्रेरितत्वात् ॥ सर्वेषांदर्शनादिकारणत्वमेकैकमपितस्य लक्षणंभवतीतिवाशब्दःसर्वत्रानुषज्यते ॥ प्रजापतिःशिवःलिंगाभिमानित्वात् ॥ प्रजापतिःशिवःशेषोलिं गमित्यभिधीयते ॥ लिंगाभिमानीलोकस्यस्रष्टागिरिशएवहीतिशैवपुराणे ॥ सममस्त्वनयोर्युद्धमिति

प्राहप्रजापतिः ॥ वाक्यंशिवस्यतच्छ्रुत्वाशक्रोनेत्याहसत्वरइतिभारते ॥ क्षुद्रमिश्राणीवबीजानिशाल्या
दिबीजवत् ॥ भिन्नस्वभावाब्रह्मादयःसर्वजीवाः ॥ ब्रह्माद्याःसर्वएवैतेजीवाभिन्नस्वभावकाः ॥ यथा
शाल्यादिबीजानिभिन्नवीर्याणिसर्वशइतिसत्तत्त्वे ॥ प्रथमेतराणीतिशब्दोमानुषाणांद्वितीयोऽसुरादीना
म् ॥ प्रज्ञानेत्रोऽलोकइति ॥ अलोकशब्देनमुक्तसमुदायउच्यते ॥ ब्रह्मादिस्थावरांतस्यलोकस्यसर्वं
तत्प्रज्ञानेत्रमितिविष्णवधीनत्वस्यपूर्वमेवोक्तत्वात्पुनःप्रज्ञानेत्रोलोकइतिमुक्तविषयमेव ॥ मुक्तोह्यलो
क्यत्वादलोकः ॥ अंडजानिचेत्याद्युक्त्वापुनरश्वागावइत्यादिदेवादीनांमनआदेरेवजातानामपिस्वी

तानिपृथिवीवायुराकाशआपोज्योतींषीत्येतानीमानिचक्षुद्रमिश्राणीवबीजानीतराणिचेतरा
णिचांडजानिचजारुजानिचस्वेदजानिचोद्भिज्जानिचाश्वागावःपुरुषाहस्तिनोयत्किंचेदंप्रा
णिजंगमंचपतत्रिचयच्चस्थावरंसर्वंतत्प्रज्ञानेत्रंप्रज्ञानेप्रतिष्ठितंप्रज्ञानेत्रोलोकःप्रज्ञाप्रतिष्ठाप्र

कारार्थम् ॥ अंडजत्वाद्युत्पत्तिप्रकारोपिविष्णवधीनइतिज्ञापयितुंतत्कथनम् ॥ तथाश्मानस्तृणकाष्ठा
श्चसर्वेदिष्टक्षयेस्वांप्रकृतिंभजंतइतिभारतवचनादश्मादीनामपिप्राणित्वात्तत्स्वीकारार्थंप्राणीति ॥ गमन
पतनस्थिरत्वादयोपिभावाविष्णवधीनाइतिज्ञापयितुंजंगममित्यादिवचनम् ॥ सएतेनेत्यलोकशब्दोक्तो
मुक्तःपरामृश्यते ॥ सकलकर्मबंधमुक्त्यनंतरंहिशरीरादुत्क्रामति ॥ प्रकृष्टज्ञानरूपेणविष्णुनाप्रेरितःप्रज्ञे
नात्मनैवोत्क्रम्यतेनैवसर्वान्कामानाप्त्वातेनैवसर्वान्कामान्सभुंक्तइतिसर्वत्रानुषज्यते॥ प्रज्ञानेत्रोलोकइत्यु
क्तेकथंप्रज्ञानेत्रोमुक्तइत्याकांक्षायांतस्यैवव्याख्यानंसएतेनप्रज्ञेनात्मनेत्यादि ॥ अनुक्तविशेषणानामपि

भगवदधीनत्वज्ञापनार्थंप्रज्ञानेत्रोलोकइतिसामान्यवचनम् ॥ अनारब्धफलानांचप्रारब्धानांचसर्वशः ॥ कर्मणांदाहएवायंमुक्तिरित्यभिधीयते ॥ सतुमुक्तस्ततोदेहादुद्गच्छतिपरात्मना ॥ प्रेरितोविष्णुलोकंचप्राप्यभोगानवाप्यच ॥ भुंक्तेविष्णुप्रसादेननविष्णोरवशःक्वचित् ॥ विष्णुतंत्राइमेसर्वेमुक्ताअपियतोऽखिलाइतिब्रह्मांडे ॥ ब्रह्मेंद्रादिशब्दाविष्णावेवमुख्यतइतितद्याटत्त्याजीवानांस्वीकारार्थमेषइत्यादिशब्दः ॥ सहिभगावान्स्वनेत्रकोपिनानुग्राह्यः ॥ अनुग्राह्यत्वंहिब्रह्मादीनामत्रविवक्षितम् ॥ नेयतानुग्राह्यतापिनसाविष्णोःस्वतोपित्विति शब्दतत्त्वे ॥ १ ॥ इतिश्रीमदानंदतीर्थभगवत्पादाचार्यविरचितेश्रीमन्महैतरेयोपनिषद्भाष्येद्वितीयप्रघट्टकेषष्ठोऽध्यायः ॥ २ ॥ ६ ॥

ज्ञानंब्रह्मसएतेनप्रज्ञेनात्मनास्माल्लोकादुत्क्रम्यामुष्मिन्स्वर्गेलोकेसर्वान्कामानाप्त्वामृतःसमभवत्समभवत् ॥ १ ॥ इत्यैतरेयोपनिषत्सुद्वितीयारण्यकेषष्ठोऽध्यायः ॥ २ ॥ ६ ॥

हरिःॐ । वाङ्मेमनसिप्रतिष्ठितामनोमेवाचिप्रतिष्ठितमाविरावीर्मएधिवेदस्यमआणीस्थश्रुतं

ॐवाङ्मेमनसिप्रतिष्ठिताअवबोधरूपेविष्णौप्रतिष्ठितासचविष्णुर्मेवाचिस्थितः ॥ यदेतद्धृदयंमनश्चेतिविष्णुनामधेयेषूक्तत्वात्॥आविरावीर्मएधिहेविष्णोममाविराविर्भव ॥आणीस्थितआण्यांस्थितविष्णोइतिसंबोधनम्॥आधारःसर्ववेदानांवेदाणीप्राणउच्यते॥तस्मिन्स्थितोहरिर्नित्यमाणीस्थइतिगीयतइतिशब्दतत्त्वे॥ आविरावीरितिदैर्घ्यमतिशयार्थे ॥ आधिक्येधिकमितिसूत्रात् ॥ अणशब्दस्यगतिवाचित्वाच्चलमाणमुच्यते ॥ तस्यधारणेनतद्वानाणी ॥ स्थापकइत्यर्थः ॥ मेश्रुतंमाप्राहासीः ॥ ममविद्यागोचरएवसर्वदाभव ॥ विस्मृतोमाभव ॥ हेविष्णोअनेनत्वद्विषयेणैवाधीतेनाहोरात्रान्संदधामि ॥ सर्वाहोरात्रेष्वपित्वद्विष

याध्ययनमेवकरोमीत्यर्थः ॥ ऋतंयथावदवगतंत्वांवदिष्यामि ॥ सत्यंसाधुगुणैस्ततंसर्वनियंतारंच ॥ तद्वि
ष्णवाख्यंब्रह्ममामवत्विति तस्यैवविष्णोःपरोक्षत्वेनैवप्रार्थनम् ॥ वाङ्मइत्यादिकंखंडंविष्णुप्रार्थनरूपकम्॥
अविघ्नत्वमभीप्सूनांशिष्याणांदृष्टवान्हरिरितिच ॥ १ ॥ इतिश्रीमदानंदतीर्थभगवत्पादाचार्यविरचिते
श्रीमन्महैतरेयोपनिषद्भाष्येद्वितीयप्रघट्टकेसप्तमोऽध्यायः ॥ २ ॥ ७ ॥ इतिद्वितीयप्रघट्टकंसंपूर्णम् ॥२॥
ॐविष्णुनाम्निषकारस्यणकारस्यचसंहिताम् ॥ विष्णोस्तुबहुरूपाणांवाचिकाम्रृषयोविदुः ॥ तौचवर्णौ
हरेःसम्यक्स्वरूपप्रतिपादकौ ॥ बहुधैवस्थितस्यास्यसदैवैकस्वरूपिणः ॥विष्णुनामार्थरूपत्वाद्वेदानामपि

मेमाप्रहासीरनेनाधीतेनाहोरात्रान्संदधाम्यृतंवदिष्यामिसत्यंवदिष्यामितन्मामवतुतद्वक्तारम
वत्ववतुमामवतुवक्तारमवतुवक्तारम् ॥ १ ॥ २६ ॥ इत्यैतरेयोपनिषत्सुद्वितीयारण्यकेसप्त
मोऽध्यायः ॥ २ ॥ ७ ॥

हरिःॐ । अथातःसंहितायाउपनिषत्पृथिवीपूर्वरूपंद्यौरुत्तररूपंवायुस्संहितेतिमांडूकेयआ

सर्वशः ॥ अन्येषामपिशब्दानांसंहिताविष्णुवाचिकाः ॥ तद्वाचकास्तथावर्णाःसर्वेलौकिकवैदिकाः ॥
पृथिवीनामकंरूपंपृथुत्वात्पृथिवीस्थितम् ॥ देवतापूर्ववर्णस्यपूर्वरूपंतदुच्यते ॥ देवतोत्तरवर्णस्यक्रीडना
च्चद्युनामकम् ॥ दिविस्थितंहरेरूपमुत्तररूपमुच्यते ॥ वेदकत्वाच्चायनत्वाद्रूपंयद्वायुनामकम् ॥ विष्णो
स्तद्वर्णयोर्मध्यदेवतेतिप्रकीर्तितम् ॥ संहितानामकंतच्चरूपद्वयसहस्थितेः ॥ वर्णद्वयंविकारंचषकारंकेचि
दब्रुवन् ॥ षकारंमध्यमंत्वेवणकारंकेचिदुत्तरम् ॥ पृथक्करणमेवैषांवर्णयोर्मध्यमुच्यते ॥ उपसर्गमात्रंवी
त्याहुःकेचिन्नामषणुमात्रकम् ॥ षकारंचणकारंचवर्णौपूर्वोत्तरावपि ॥ व्यक्तिरेवोष्मणस्तत्रमध्यमित्य

भिधीयते॥सर्वेप्येतउपादेयाःपक्षानिर्दोषकायतइत्याचैतरेयसंहितायाम् ॥ आकाशस्थआकाशनामाभग
वान्वर्णयोर्मध्यदेवतेतिमाक्षव्यः॥उभयरूपसंहितत्वात्संहितानामकः ॥ समांडूकेयस्तेनमाक्षव्येनापरिहृतः
स्वपक्षइतिमेने॥मेमदीयेनमदुपासितेनास्याकाशस्यपुत्रेणवायुनानसमागादसौमाक्षव्यः ॥ वायुस्थविष्णव
नुपासनात् ॥ यद्यप्याकाशस्थोभगवान्संहितानामकोभवति॥तथापिनवायुस्थस्यासंहितात्वंभवतीत्यपरि
हृतत्वम्॥परिहृतोमांडूकेयपक्षइत्यहंमेनइत्यागस्त्यः ॥आकाशेविष्णूपासनस्याधिकफलत्वात् ॥ पिताह्या
काशोवायोः ॥ भगवतस्तुपक्षःसमत्वमेववाय्वाकाशयोरिति॥ आकाशस्यपितृत्वाद्वायोर्बलाधिकत्वाच्चो

काशःसंहितेत्यस्यमाक्षव्योवेदयांचक्रेसह्यविपरिह्वतोमेनेनमेस्यपुत्रेणसमगादितिसमानेनैत
त्परिह्वतोमेनइत्यागस्त्यःसमानंह्येतद्भवतिवायुश्चाकाशश्चेत्यधिदैवतमथाध्यात्मंवाक्पूर्वरूपंम
नउत्तररूपंप्राणस्संहितेतिशूरवीरोमांडूकेयोथह्यस्यपुत्रआहज्येष्ठोमनःपूर्वरूपंवागुत्तररूपंमन
सावाअग्रेसंकल्पयत्यथवाचान्वाहरतितस्मान्मनएवपूर्वरूपंवागुत्तररूपंप्राणस्त्वेवसंहितेतिस
मानमेनयोरत्रपितुश्चपुत्रस्यचसएषोश्वरथःप्रष्टिवाहनोमनोवाक्प्राणसंहतःसयएवमेतांसंहि

भयोरुपासनास्थानत्वेसाम्यम्॥तस्मादुभावपिग्राह्यौ॥त्वगिंद्रियदेवतात्वेनाकाशात्पूर्वमेववायोःसात्विकाहं
कारजत्वाद्वायोराकाशाद्गुणाधिकत्वम् ॥ तथाप्यत्राकाशस्यपितृत्वंव्याप्तिश्चाधिकेत्युपासनायांसाम्य
म् ॥ अत्रप्राणाख्यस्यप्राणेस्थितस्यविष्णोः ॥ संहितानामत्वेपितापुत्रयोःसाम्यमेव ॥ अन्यत्रतुपुत्रपक्ष
एवबलीयान् ॥ युक्तिमत्त्वात् ॥ मनोवाक्प्राणनामासौमनआदिषुसंस्थितः ॥ विष्णुस्तस्यरथोदेहइंद्रि ॥४०॥
याश्वःप्रकीर्तितइतिच ॥ प्रष्टिःसपृच्छनीयत्वात्परमात्माजनार्दनः ॥ वक्तृत्वाच्चैववाङ्नामामनोमंतृत्वहे

तुतइतिच ॥ प्राणन्नेवप्राणोनामभवति॥ वदन्वाक्पश्यंश्चक्षुःशृण्वन्श्रोत्रंमन्वानोमनस्तान्यस्यैवतानिक
र्मनामान्येवेतिचश्रुतिः ॥ मुक्तिरेवस्वर्गलोकः॥अमुष्मिन्स्वर्गेलोकेसर्वान्कामानाप्त्वेतिप्रस्तुतत्वात् ॥ मुक्तः
प्रकृष्टज्ञानैश्ववेदैर्विष्णूत्थतेजसा ॥ नित्यायुषाचयुक्तःस्यात्संहितारूपविद्धरेरितिच ॥प्रकृष्टत्वेनजननात्प्र
जेतिज्ञानम् ॥ पातिशंसाधनाश्चेतिपशवोवेदाः ॥ परब्रह्मणोविष्णोर्वरणादेवसम्यक्चायितंस्वरूपंतेजःब्रह्म
वर्चसम्॥लौकिकप्रजादिकमपितदिच्छतांयथायोग्यंभवति॥मांडूकेयैर्ऋषिभिरुपासिताएताविद्याः ॥१॥
वराहोवामनःसिंहइतिरूपत्रयंहरेः॥पूर्वोत्तरार्णमध्येषुस्थितमुक्तंसनातनम्॥ मांडूकेयैर्हिशाकल्योवासुदेवा
दिरूपिणम्॥तेषुचोच्चारकेचैवस्थितमाहचतुर्विधम्॥भूमिद्युवृष्टिपर्जन्यनाम्नोर्व्यादिषुसंस्थितम्॥ उर्व्यादी

**तांविदसंधीयतेप्रजयापशुभिर्यशसाब्रह्मवर्चसेनस्वर्गेणलोकेनसर्वमायुरेतीतिनुमांडूकेयानाम्**
**॥ १ ॥ अथशाकल्यस्यपृथिवीपूर्वरूपंद्यौरुत्तररूपंवृष्टिःसंधिःपर्जन्यःसंधातातदुतापियत्रैत**
**द्बलवदनूह्लन्संदधदहोरात्रेवर्षतिद्यावापृथिव्यौसमधातामित्युताप्याहुरितीन्वधिदैवतमथा**

नांचतुर्णांचदेहएवस्थितिंपुनः ॥ अधरार्धस्यचोर्व्याश्वसाम्यमन्यस्यवैदिवा ॥ वाचोवृष्टयैवसाम्यंचपर्ज
न्येनैवचात्मनः ॥ तेषांतेषुस्थितिंचैवविष्णोश्वचतुरात्मनः ॥ आकाशस्यांतराकाशेनृसिंहस्यात्रसंस्थिति
म् ॥ वायोःप्राणात्मतांचैवतत्रदाशरथेःस्थितिम् ॥ सूर्यविद्युद्धुताशानांदृग्घृद्रेतःसुचस्थितिम् ॥ कपिल
स्यचहंसस्यजामदग्न्यस्यतेषुच ॥ स्थितिंवदतिविद्येयमपिमोक्षप्रदायिनीत्यादिच ॥ वर्षणाद्वृष्टिः ॥ परं
जनयतीतिपर्जन्यनामाविष्णुः ॥ संधिनोतीतिसंधिः ॥ धिनुपुष्टावितिधातुः ॥ सम्यग्धारणात्संधाता ॥
वर्षणमेवद्यावापृथिव्योःसंधानम् ॥ पर्जन्यस्थोभगवांस्तुतत्कर्ता ॥ २ ॥ पृथिवीस्थोवराहस्तुसंहितादेव

तोदिता ॥ द्विविष्ठोवामनश्चैवसंप्रोक्तःपददेवता ॥ नृसिंहस्त्वंतरिक्षस्थोभगवान्क्रमदेवता ॥ स्वाध्यायमेवं ध्यात्वायःकरोत्युपवदेन्नतम् ॥ तस्यापवदितायातित्रैलोक्यादघएवहि ॥ नाशमाप्नोतिनिरयेतस्मादपवदेन्नतम् ॥ गच्छस्यधइतिब्रूयादन्यंब्राह्मणतस्तथा ॥ ब्रह्मप्राप्तेर्हियोग्यायोब्राह्मणःसनचेतरइतिचभंजनवर्जितत्वान्निर्भुजंसंहिता ॥ तृणच्छेदनइतिधातोःप्रतृण्णंपदम् ॥ उभयमंतरेणक्रमः ॥ निर्भुजमूलत्वात्पदा

ध्यातमंपुरुषोह्वाअयंसर्वआंदंह्वेविदत्लेभवतइत्याहुस्तस्येदमेवपृथिव्यारूपमिदंदिवस्तत्राय
मंतरेणाकाशोयथासौद्यावापृथिव्यावन्तरेणाकाशस्तस्मिन्हास्मिन्नाकाशेप्राणआयत्तोयथामु
ष्मिन्नाकाशेवायुरायत्तोयथामूनित्रीणिज्योतींष्येवमिमानिपुरुषेत्रीणिज्योतींषियथासौदि
व्यादित्यएवमिदंशिरसिचक्षुर्यथासावन्तरिक्षेविद्युदेवमिदमात्मनिहृदयंयथायमग्निःपृथिव्या
मेवमिदमुपस्थेरेतएवमुहस्मसर्वंलोकमात्मानमनुविधायाहेदमेवपृथिव्यारूपमिदंदिवःसयएव
मेतांसंहितांवेदसंधीयतेप्रजयापशुभिर्यशसाब्रह्मवर्चसेनस्वर्गेणलोकेनसर्वमायुरेति ॥ २ ॥
अथातोनिर्भुजप्रवादाःपृथिव्यायतनंनिर्भुजंदिव्यायतनंप्रतृण्णमंतरिक्षायतनमुभयमन्तरेणा
थयद्येनंनिर्भुजंब्रुवन्तमुपवदेदच्योष्ठावराभ्यांस्थानाभ्यामित्येनंब्रूयादथयद्येनंप्रतृण्णंब्रुवन्त

दीनांतद्विषयप्रवादाअपिनिर्भुजप्रवादाइत्येवोच्यंते ॥ पृथिवीस्थितपृथिवीनामकविष्णवायतनंपृथिव्यायतनमित्यादि ॥ अवराभ्यांपृथिव्यंतरिक्षाभ्यांच्युतोसीति ॥उत्तराभ्यामंतरिक्षद्युभ्याम् ॥ क्रमस्वाध्यायकृद्यस्तंविशेषेणननिंदयेत् ॥ लोकत्रयादपिभ्रष्टोयस्मात्तंनिंदकोभवेदितिच ॥ तस्मादतिदुष्टत्वात्तन्निंदकोनास्त्येवेत्युक्तंतस्यनास्त्युपवादइति ॥ तंकृष्णंपुंडरीकाक्षंकोनुयुध्येतबुद्धिमानित्यादिवत् ॥ उपवदेदि

त्युक्तोमनुष्यमात्रः ॥ परउपवदेदित्यसुरः ॥ सर्वशत्रुत्वात् ॥ अमुक्तियोग्यैस्तुनरैर्विदुषांनिंदनेकृते ॥
ब्रूयाल्लोकच्युतोसीतिनिंदितोसुरसर्गगैः ॥ नाशयिष्यतिविष्णुस्त्वामंधेतमसिपातयेत् ॥ इतिब्रूयान्नतुब्रू
याद्देवसर्गात्मकंक्वचिदितिच ॥ षणयोःसंधिकरणात्संहिताध्ययनंभवेत् ॥ विषणस्त्वितियोब्रूयात्पदाध्या
यीभवेत्सः ॥ संध्युक्तिश्वविभागश्चद्वयंव्याप्तंक्रमेणतु ॥ तस्माद्द्विधापिवचनात्क्रमाध्यायीभवेत्सः ॥
भोगद्वंद्विंचयोमोक्षइच्छेद्विष्णवइत्यसौ ॥ मोक्षकामोविषणवेद्वयकामोद्वयंवदेत् ॥ विष्णुनामात्मकत्वा

मुपवदेदच्योष्ठाउत्तराभ्यांस्थानाभ्यामित्येनंब्रूयाद्यस्त्वेवोभयमंतरेणाहनस्यनास्त्युपवादोय
द्धिसंधिंविवर्तयतितन्निर्भुजस्यरूपमथयच्छुद्धेअक्षरेअभिव्याहरतितत्प्रतृण्णस्याग्रउएवोभ
यमन्तरेणोभयंव्याप्तंभवत्यन्नाद्यकामोनिर्भुजंब्रूयात्स्वर्गकामःप्रतृण्णमुभयकामउभयमन्तरे
णाथयद्येनंनिर्भुजंब्रुवन्तंपरउपवदेत्पृथिवींदेवतामारःपृथिवीत्वादेवतारिष्यतीत्येनंब्रूयादथय
द्येनंप्रतृण्णंब्रुवन्तंपरउपवदेद्दिवंदेवतामारोद्यौस्त्वादेवतारिष्यतीत्येनंब्रूयादथयद्येनमुभयमन्त
रेणब्रुवन्तंपरउपवदेदंतरिक्षंदेवतामारोंतरिक्षंत्वादेवतारिष्यतीत्येनंब्रूयाद्यथातुकथाचब्रुवन्वाब्रु
वन्तंवाब्रूयादभ्याशमेवयत्तथास्यान्नत्वेवान्यत्कुशलाद्ब्राह्मणंब्रूयादतिद्युम्नएवब्राह्मणंब्रूया

च्चाथसंहितपदक्रमाः ॥ सर्ववेदस्थितामोक्षतद्भोगद्वयसाधकाः ॥ तज्ज्ञानामेवनान्येषामितिवेदानुशास
नम् ॥ संहिताद्याब्रुवन्वापियएवंविन्नचाब्रुवन् ॥ परिवादंब्रुवंतंवानब्रुवंतमथापिवा ॥ यद्वदेत्तत्तथैवस्या
त्क्षिप्रमेवनसंशयइतिच ॥ अग्रएव ॥ अग्र्यमेवोभयमंतरेण ॥ द्युम्नोद्युतिस्वरूपत्वाद्विष्णुरेवप्रकीर्तितः ॥
योतिक्रामतितस्याज्ञामतिद्युम्नःप्रकीर्तितः ॥ मोक्षयोग्योपियस्त्वेवमतिद्युम्नोभवेत्पुमान् ॥ लोकच्युतो

सीत्येवंतंब्रूयान्नाज्ञास्थितंकचित् ॥ लोकच्युतोभवेत्येनमपिनैववदेत्कचित् ॥ च्युतोसीतितुशिक्षार्थंब्रू
यान्नैवान्यथाकचिदितिच॥३॥भगवदुपासकस्ययस्मिन्कस्मिंश्चिद्दोषउक्तेतंप्रत्युक्तिप्रकारःपूर्वंदर्शितः ॥
अनुव्याहारशब्देनभगवदुपासनाविषयएवास्याशक्त्यादिदोषंवदतःप्रत्युक्तिरुच्यते ॥ निर्भुंजंवदंतमित्या
दित्ववस्थामात्रदर्शनम् ॥ आत्मनोज्ञानसामर्थ्यानुसारेणवक्तव्यत्वादनुव्याहारः ॥ सर्वाधारत्वतोवंशइ
त्युपासीतयोहरिम् ॥ वायुंचमुक्तिमाप्नोतियएवंतदुपासकम् ॥ निंदेत्विष्णुविज्ञानविषयेतंवदेत्सः ॥ वि

न्नातिद्युम्नेचनब्राह्मणंब्रूयान्नमोअस्तुब्राह्मणेभ्यइतिहस्माहशूरवीरोमांडूकेयः ॥ ३ ॥
अथातोनुव्याहाराःप्राणोवंशइतिविद्यात्सयएनंप्राणंवंशमुपवदेच्छक्नुवंतंचेन्मन्येतप्राणवंशंस
मधां३प्राणंमावंशंसंदधतंनशक्नोषीत्याहप्राणस्त्वावंशोहास्यतीत्येनंब्रूयादथचेदशक्नुवन्तंमन्ये
तप्राणंवंशंसमधित्सिषंतंनाशकःसंधातुंप्राणस्त्वावंशोहास्यतीत्येनंब्रूयाद्यथातुकथाचब्रुवन्वा
ब्रुवंतंवाब्रूयादभ्याशमेवयत्तथास्यान्नत्वेवान्यत्कुशलाद्ब्राह्मणंब्रूयादातिद्युम्नएवब्राह्मणंब्रूया
न्नातिद्युम्नेचनब्राह्मणंब्रूयान्नमोअस्तुब्राह्मणेभ्यइतिहस्माहशूरवीरोमांडूकेयः ॥ ४ ॥

ष्णुनावंशभूतेनवायुनासहितंतथा ॥ नशक्नोषीतिमामात्थहास्यतस्त्वामतोहितौ ॥ ज्ञानसामर्थ्यवानि
त्थंब्रूयाद्देवादिरुत्तमः ॥ अन्योगंधर्वपित्रादिरल्पज्ञानबलोहियः ॥ सब्रूयाद्विष्णुवायुभ्यांसंधिमिच्छंत
मेवमाम् ॥ संधातुंनाशकोयस्माद्धास्यतस्त्वामतोहिताविति च ॥ सयएनंप्राणंवंशमुपवदेत्प्राणंप्रत्येनमु
पासकमुपवदेत् ॥ प्राणस्यविष्णोःप्रियत्वंतवनप्राप्स्यतीति ॥ नाशकःसंधातुंमयासहसंधानंकर्तुंनाश
कः ॥ ममप्रीतिंकर्तुंनाशकः ॥ तद्भक्तभक्तेष्वपियोनकुर्यात्प्रीतिमंजसा ॥ विष्णुर्जहातितंपापमिहचामु

त्रचप्रभुरितिचभारते ॥ ४ ॥ पूर्ववर्णस्थितंयत्तद्रूपंपूर्वाक्षराभिधम् ॥ वराहाख्यंहरेरन्यवर्णगंवामना
भिधम् ॥ उत्तराक्षरसंज्ञंचवर्णयोरंतरस्थितम् ॥ अवनात्काशनाच्चैतदवकाशाभिधंहरेः ॥ नृसिंहरूपमि
त्याहुर्निर्भुजास्यास्तथावदत् ॥ ह्रस्वोयेनाक्षरोच्चारोमात्रासंधिस्वरात्मकः ॥ व्यासरूपोहरिःसाक्षात्संहि
तानामकस्त्विति ॥ तत्पुत्रोमध्यमःप्राहसमोच्चारणकारणः ॥ सामनामावासुदेवःसंहितानामवानिती
तिच ॥ मापयतित्रायतिचेतिमात्राभगवान् ॥ यथोच्चारितवर्णयोर्मध्यस्थितश्च ॥ मानस्तेनेभ्यो ये
अभिद्रुहस्पदेनिरामिणोरिपवोन्नेषुजागृधुः ॥ येषांनैतन्नापरंकिंचनैकंब्रह्मणस्पतेब्रूहितेभ्यःकदाचित् ॥

अथखल्वाहुर्निर्भुजवक्त्राःपूर्वमक्षरंपूर्वरूपमुत्तरमुत्तररूपंयोवकाशःपूर्वरूपोत्तररूपेअंतरेणसासं
हितेतिसयएवमेतांसंहितांवेदसंधीयतेप्रजयापशुभिर्यशसाब्रह्मवर्चसेनस्वर्गेणलोकेनसर्वमायु
रेत्यथवयंब्रूमोनिर्भुजवक्त्राइतिहस्माहह्रस्वोमांडूकेयःपूर्वमेवाक्षरंपूर्वरूपमुत्तरमुत्तररूपंयोवका
शःपूर्वरूपोत्तररूपेअंतरेणयेनसंधिंविवर्तयतियेनस्वराःस्वरंविजानातियेनमात्रामात्रांविभजते

अथोशमेनोपरतामनुष्यायेधर्मिणोब्रूहितेभ्यःसदानः ॥ आदेवानामोहतेविव्रयोहृदिबृहस्पतेनपरःसा
म्नोविदुः ॥ अभिद्रुहस्पदेअभितोद्रोहस्यनित्यनिरतिशयदुःखस्यांधतमसोयोग्याः ॥ ऐकात्म्यंनाम
यदिदंकेचिद्ब्रूयुरनैपुणाः ॥ शास्त्रतत्त्वमविज्ञायतथावादबलाजनाः ॥ कामक्रोधाभिभूतत्वादहंकार
वशंगताः ॥ याथातथ्यमविज्ञायशास्त्राणांशास्त्रदस्यवः ॥ ब्रह्मस्तेनानिरानंदाअपक्वमनसोशिवाः ॥
वैगुण्यमेवपश्यंतिनगुणानिनियुंजते ॥ तेषांतमःशरीराणांतमएवपरायणमितिमोक्षधर्मेभगवद्वचनादे
वंविधाएवस्तेनाः ॥ अभिद्रुहस्पदस्थाश्च ॥ निरामिणःरामस्यरमणरूपस्यपूर्णानंदस्वरूपस्यविष्णो

जीवस्वरूपताज्ञानेननीचताविदः ॥ तएवरिपवश्चतस्य ॥ अवजानंतिमांमूढामानुषींतनुमाश्रितम् ॥
परंभावमजानंतोममभूतमहेश्वरम् ॥ मोघाशामोघकर्माणोमोघज्ञानाविचेतसः ॥ राक्षसीमासुरीं
चैवप्रकृतिंमोहिनींश्रिताइत्यादिवचनादसुरादयः ॥ अन्नेषुजागृधुःभोगमात्रगृध्नवः ॥ येषामेतत्सर्वोत्त
मंवासुदेवाख्यंपरंब्रह्मनास्तीतिपक्षः ईशितव्येविद्यमानेहीश्वरोभवतीति ॥ नचापरंकिंचित्परमापेक्षयाद्य
परमिति ॥ किंतर्हिकिंचनैकंकिमप्येकमेववस्त्वस्तिनपरमपरंचेतितेषांपक्षः ॥ असत्यमप्रतिष्ठंतेजगदाहुर
नीश्वरम् ॥ अपरस्परसंभूतंकिमन्यत्कामहैतुकम् ॥ एतांदृष्टिमवष्टभ्यनष्टात्मानोल्पबुद्धयः ॥ प्रभवं

सासंहितेतिसयएवमेतांसंहितांवेदसंधीयतेप्रजयापशुभिर्यशसाब्रह्मवर्चसेनस्वर्गेणलोकेनसर्व
मायुरेत्यथहास्यपुत्रआह्मध्यमःप्रातीबोधीपुत्रोक्षरेखल्विमेअविकर्षन्ननेकीकुर्वन्यथावर्ण
माहतद्यासौमात्रापूर्वरूपोत्तररूपेअंतरेणसंधिविज्ञपनीसामतद्भवतिसामैवाहंसंहितांमन्यइ
तितदप्येतदृषिणोक्तंबृहस्पतेनपरःसाम्नोविदुरितिसयएवमेतांसंहितांवेदसंधीयतेप्रजयापशु

त्युग्रकर्माणःक्षयायजगतोऽहिताः ॥ ईश्वरोहमहंभोगीसिद्धोहंबलवान्सुखीत्यादिवचनात् ॥ ब्रह्मणस्पते
ब्रह्मणोवेदस्यपतेवायो ॥ अथहेममासन्यंप्राणमूचुः ॥ एषउएवब्रह्मणस्पतिर्वाग्वैब्रह्मतस्याएषपतिस्त
स्मादुब्रह्मणस्पतिरित्यादिश्रुतेरेतादृशेभ्योमाब्रूहि ॥ शमेनविष्णुनिष्ठयाउपसमीपेतस्मिन्नेवरताःसाम्नो
विष्णोःपरंकिमपिनविदुः ॥ तदेवदेवानांव्रयः ॥ सर्वदेवानांपरतमंविष्णवाख्यंब्रह्महृदाव्योहते ॥ वासुदे
वादिरूपेणवरंनियामकंचेतिव्रयः ॥ तेभ्योब्रूहि ॥ वायुंविद्याःसमासाद्यसर्वासांपतिमूचिरे ॥ स्तेने
भ्योमैवनोब्रूहिब्रूह्यथोवैष्णवेषुचेतिच ॥ सामनाम्नाश्रुतिर्यस्माद्विष्णुमाहततःप्रियम् ॥ तन्नामविष्णोरिह

तुसंहितार्थंवदेद्यतइतिच ॥ सामनाम्नः संहिताशब्दार्थत्वाद्विष्णोस्तस्यनाम्नः श्रुतिसिद्धत्वाच्चसामनाम्नो वासुदेवरूपसमाख्यासुपंचरात्रेपठितत्वाच्चतद्रूपंसंहितानामकमितियुक्तमित्यभिप्रायः ॥ ५ ॥ देवता पूर्ववर्णस्यलक्ष्मीरेवप्रकीर्तिता ॥ नारायणस्तूत्तरस्यतौवाक्प्राणाभिधौमतौ ॥ मध्यस्थःसंहितानामा सोर्धनारीपुमात्मकः ॥ वेदात्मकत्वाद्वाङ्नाम्नीलक्ष्मीरेवप्रकीर्तिता ॥ प्राणनामाप्रणेतृत्वात्साक्षान्ना रायणःस्वयम् ॥ रमित्यानंदउद्दिष्टःसंभोग्यंथमुदाहृतम् ॥ विष्णुभोग्यारतितरालक्ष्मीरेवरथंतरम् ॥ नारा

भिर्यशसाब्रह्मवर्चसेनस्वर्गेणलोकेनसर्वमायुरेति ॥ ५ ॥ बृहद्रथंतरयोरूपेणसंहितासंधी यतइतिताक्ष्यौंवाग्वैरथंतरस्यरूपंप्राणोबृहतउभाभ्यामुखलुसंहितासंधीयतेवाचाचप्राणेनचै तस्यांहस्मोपनिषदिसंवत्सरंगारक्षयतेताक्ष्यएतस्यांहस्ममात्रायांसंवत्सरंगारक्षयतेताक्ष्यस्त दप्येतदृषिणोक्तं रथंतरमाजभारावसिष्ठः ॥ भरद्वाजोबृहदाचक्रेअग्नेरितिसयएवमेतांसं हितांविदसंधीयतेप्रजयापशुभिर्यशसाब्रह्मवर्चसेनस्वर्गेणलोकेनसर्वमायुरेतिवाक्प्राणेनसंहिते तिकौंठरव्यःप्राणःपवमानेनपवमानोविश्वैर्देवैर्विश्वेदेवाःस्वर्गेणलोकेनस्वर्गोलोकोब्रह्मणासैषा

यणोबृहत्त्वात्तुबृहन्नामाप्रकीर्तितः ॥ रथंतरस्यबृहतोदेवतेचैवतावुभौ ॥ वाक्प्राणसंस्थितौचैवताभ्यामे वहिसंधितम् ॥ लक्ष्मीनारायणंरूपंसंहितानामकंशुभम् ॥ एतांविद्यामवाप्तुंहिवत्सरंगाअरक्षत ॥ ता क्ष्यएतन्मात्रंचसमुद्दिश्यनचापरम् ॥ संहितादेवताबह्वृचइतिकुठरवात्मजः ॥ द्वयंद्वयंदेवतानांमिलि तंहरिशर्ववत् ॥ संहितानामकंतत्रवर्णमध्यस्यदेवता ॥ तयोरेकंदेवतयोःपरमन्यत्तथावरम् ॥ अव रस्यपरस्यापिसंयोगात्संहितातुसा ॥ प्रोक्तावरपरेत्येववाक्प्राणाख्यौरमाच्युतौ ॥ संहितैकातथैवान्याके

शवोवायुसंयुतः ॥ वायुःसप्तमानाख्योदेवताश्चाखिलाअपि ॥ तृतीयासंहिताप्रोक्तादेवतास्ताःसशंकराः ॥ चतुर्थीसंहिताप्रोक्ताशंकरोब्रह्मणासह ॥ पंचमीसंहिताचैवसंहितामोक्षदाइमाः ॥ प्रथमायांद्वितीयायांविष्णुरेवपरोमतः ॥ तृतीयायांवायुरेवचतुर्थ्यांसर्वदेवताः ॥ विरिंचएवपंचम्यामवराइतरेततः ॥ प्रथमायांसंहितायामवरोवामभागगः ॥ द्वितीयायांतुपरमस्तृतीयायांतथावरः ॥ चतुर्थ्यांपरमश्चैवपंचम्यांवामगोवरः ॥ अवराद्याःपरांतायदेताःसर्वाश्चसंहिताः ॥ ततोवरपराःप्रोक्तानैवोक्तास्ताःपरावराः ॥ अभिमानीद्युलोकस्यशिवःसर्वस्यलोकनात् ॥ द्योतनाच्चयदिब्रूयान्मंत्रमेतमथापिवा ॥ आत्मार्थंथपरार्थंवाचिंत

वरपरासंहितासयोहितामवरपरांसंहितांवेदैवंहैवसप्रजयापशुभिर्यशसाब्रह्मवर्चसेनस्वर्गेणलोकेन संधीयतेयथैषासंहितासयदिपरेणवोपसृतःस्वेनवार्थेनाभिव्याहरेदभिव्याहार्षन्नेवविद्याद्दिवंसंहितागमद्विदुषांदेवानामेवंभविष्यतीतिशश्वत्तथास्यात्सयएवमेतांसंहितांवेदसंधीयतेप्रजया पशुभिर्यशसाब्रह्मवर्चसेनस्वर्गेणलोकेनसर्वमायुरेतिवाक्संहितेतिपंचालचंडोवाचावैवेदास्सं

येदेवमंजसा ॥ विद्वांसोदेवतायस्मात्सम्यक्तेनमहत्फलम् ॥ तेषामेवहरिश्चैवसंहितारूपकःप्रभुः ॥ अगमद्देवलोकंहिकर्तुंदेवेष्वनुग्रहम् ॥ इतिचिंतयतस्तेषांप्रसादात्फलमंजसा ॥ पंचालचंडोवाचंतुब्रह्माणींहिसरस्वतीम् ॥ मन्यतेस्याःपुत्रवच्चदेवंनारायणंप्रभुम् ॥ वेदैर्हिव्यज्यतेविष्णुःसाचवेदाभिमानिनी ॥ प्राणस्थोभगवान्विष्णुःप्राणनामाप्रणेतृतः ॥ ब्रह्मणोपिपितानित्यंभगवान्पुरुषोत्तमः ॥ उपचर्यतेपुत्रइतिवेदैर्यद्व्यज्यतेहरिः ॥ सादेवीसंहितानाम्नीवाच्योस्याविष्णुरेवहि ॥ प्रजापत्याख्यशर्वेणप्रोक्तान्यासंहितापिहि॥ विष्णुरेवादितिर्नामसर्वस्यात्तायतःप्रभुः ॥ सएवपितृसंस्थस्तुपातृत्वात्पितृनामकः ॥ देवतोत्तरवर्णस्यमातृ

स्थोमातृनामकः ॥ माननात्पूर्ववर्णस्यदेवतेतिप्रकीर्तितः॥ पोषकत्वात्संधिनामावर्णयोरंतरस्थितः॥ सएवपु त्रसंस्थश्चपुत्रनामाजनार्दनः॥ त्राणात्पूतितएवासौवर्णसंधानकर्मणि ॥ संधाननामासंधानकर्तृत्वात्पुरुषोत्त मः ॥ प्रजातिकर्मसंस्थश्चसएवप्रजनाभिधः ॥ जनकत्वात्परोविष्णुरेवंविष्णुर्हिसंहिता ॥ वासुदेवादिरूपे णचतुर्धैवंव्यवस्थितः ॥ सएवदिविसंस्थश्चद्युनामाक्रीडनात्प्रभुः ॥ अंतरेवेक्षणाच्चैवसोंतरिक्षोंतरिक्षगः ॥ पृथिवीपृथिवीस्थश्चप्रथितत्वाज्जनार्दनः ॥ मुख्यार्थत्वात्सर्वनाम्नांसर्वदेवाभिधोहरिः ॥ विश्वेदेवाइति

धीयंतेवाचाच्छंदांसिवाचामित्राणिसंदधतिवाचासर्वाणिभूतान्यथोवागेवेदंसर्वमितितद्यत्रैत दधीतेवाभाषतेवावाचितदाप्राणोभवतिवाक्तदाप्राणंरेह्लियथयत्रतूष्णींवाभवतिस्वपितिवाप्रा णेतदावाग्भवतिप्राणस्तदावाचंरेह्लितावन्योन्यंरीह्लोवाग्वैमाताप्राणःपुत्रस्तदप्येतदृषिणोक्त मेकःसुपर्णःससमुद्रमाविवेशसइदंविश्वंभुवनंविचष्टे ॥ तंपाकेनमनसापश्यमंतितस्तंमातारे ह्लिसउरेह्लिमातरमितिसयएवमेतांसंहितांवेदसंधीयतेप्रजयापशुभिर्यशसाब्रह्मवर्चसेनस्वर्गेण

प्रोक्तोबहुधातेषुसंस्थितः ॥ ज्ञानश्रुतेर्देवनामास्थितोदेवेषुकेशवः ॥ गांधार्यश्चगंधर्वोगंधर्वेषुव्यवस्थि तः ॥ माननान्मानुषोनाममानुषेषुस्थितोहरिः ॥ पालनात्पितृनामासौपितृष्वेवव्यवस्थितः ॥ रतेः प्राणेसुराख्यश्चसोऽसुरेषुव्यवस्थितः ॥ एवंपंचजनेषुस्थोहरिःपंचजनाभिधः ॥ जातनामाजातसं स्थःप्रादुर्भूतगुणत्वतः ॥ जनिक्रियास्थितश्चासौजनित्वमितिगीयते ॥ जनिंयस्मात्तवयतितवनंहि प्रकाशनमितिच ॥ प्रथश्चसप्रथश्चैवराजानौमत्स्यदेशजौ ॥ यापयामासतुर्विष्णोर्हविर्नाम्नोहविर्मु खे ॥ अनुष्टुब्देवतायस्तुनृसिंहोजगतोस्यच ॥ स्वमुखेहवनादेवहविरित्यभिधीयते ॥ तस्मिन्यज्ञेवसिष्ठस्तु

चतूरूपाज्जनार्दनात् ॥ आजहारश्रियंदेवीरथंतरवराभिधाम् ॥ चतुर्मूर्तिःस्तुतस्तेनप्रेषयामासतांश्रियम् ॥ साचास्मैप्रददौविद्यांप्रययौचपुनर्हरिम् ॥ धातेत्युक्तोनिरुद्धस्तुप्रद्युम्नस्तुद्युनामकः ॥ वासुदेवःप्रसविता सर्वस्यप्रसवाद्विभुः ॥ संकर्षणोविष्णुनामाप्रणेतृत्वाद्बलादपि ॥ चतूरूपंपरंविष्णुंराजानौप्रथसप्रथौ ॥ भरद्वाजोवसिष्ठश्चध्यात्वाविंदन्परात्परम् ॥ यजनीयोयजुर्नामाविष्णुःसंकर्षणाभिधः ॥ जीवानांस्कंदना देवस्कन्नःप्रद्युम्नउच्यते ॥ प्रथमोवासुदेवस्तुदेवयानोनिरुद्धकः ॥ प्राप्योदेवैर्यतोनित्यमनिरुद्धाभिधोह रिः ॥ तस्मादेवंचतुर्मूर्तेःस्तुतिसंतोषिताद्धरेः ॥ आजहारभरद्वाजोरूपंनारायणाभिधम् ॥ तद्बृहन्नामकंवि

**लोकेनसर्वमायुरेत्यथातःप्रजापतिसंहिताजायापूर्वरूपंपतिरुत्तररूपंपुत्रःसंधिःप्रजननंसंधानंसै षादितिःसंहितादितिर्हीदंसर्वंयदिदंकिंचपिताचमाताचपुत्रश्चप्रजननंचतदप्येतदृषिणोक्तमदि तिर्मातासपितासपुत्रइतिसयएवमेतांसंहितांवेदसंधीयतेप्रजयापशुभिर्यशसाब्रह्मवर्चसेनस्वर्गे**

ष्णोश्चातुरात्म्यात्समुद्गतम् ॥ भरद्वाजमुपागम्यप्रादान्मोक्षवरंपरम् ॥ चतुर्मूर्तिःसभगवानग्निरित्यभिधी यते ॥ अग्र्यत्वात्सर्वभूतानामेवंचत्वारएवते ॥ अविंदस्तंचतुर्मूर्तिंसाक्षान्नारायणंप्रभुम् ॥ गुहायांसंस्थि तमपिश्नतीवहितमस्यच॥सर्वज्ञत्वाद्यज्ञनाम्नोविष्णोस्तेजःपरंहितत् ॥तस्मादेवचतुर्मूर्तेःसूरिप्राप्यत्वहेतुतः॥ सूर्यनाम्नोहरन्घर्मनामानंतंनृसिंहकम् ॥ घर्षणात्सर्वलोकस्यनृसिंहोघर्मउच्यते ॥ निर्गत्यसचतुर्मूर्तेर्विप्र क्षत्राभिसंस्तुतात् ॥ प्रथादीनांचतुर्णांचपुरुषार्थचतुष्टयम् ॥ दत्त्वाजगामभगवान्स्वकीयांतनुमेवच ॥ वसिष्ठाच्चभरद्वाजाद्धोत्रध्वर्य्वौनृपौतुतौ ॥ यथेष्टसिद्धिंसंप्राप्तौसम्यगिष्टाज्जनार्दनादित्याद्यृग्वेदसंहिताया म् ॥ यस्यप्रथइतिनामसचहविर्नाम्नोविष्णोर्हविर्यतुअयत् ॥ अटोलोपेनांतर्णीतणिच्त्वेनअयापयदित्य

र्थः ॥ एवंसप्रथइतियस्यनामासौ ॥ हविर्यदितिपृथक्संबंधः ॥ आचक्रेआकारयामास ॥ अविंदंतेतेअविंदन्नित्यध्यात्माधिदैवतयोरुभयत्रापिभगवंतमविंदन्नित्यर्थः ॥ देवयनंगुहायदितिवचनात् ॥ चतुःशिखंडातुरमांद्विरूपोभगवान्हरिः ॥ परमानंदरूपत्वात्सुपर्णइतिनामकः ॥ रमयामासतस्यांचनिषण्णःसर्वदैवसः ॥ एकएवचविष्णुःसप्रविष्टःक्षीरसागरम् ॥ सर्वंपश्यत्यसौदेवःपूर्णाकुंठेनचेतसा ॥ परिपक्वेनमनसाऽपश्यमित्याहतंत्वजः ॥ मातेवव्यंजकत्वात्तंप्राणस्थंवाक्सरस्वती ॥ लिहतेलिक्षतइवप्राणस्थेनतुसासदा ॥ स्वयंतुभगवान्विष्णुर्वाक्पतेर्ब्रह्मणोपिहि ॥ नित्यःपितास्वतंत्रश्चनास्यमातापितापिचेत्या

णल्लोकेनसर्वमायुरेतिसर्वमायुरेति॥६॥इत्यैतरेयोनिषत्सुतृतीयारण्यकेप्रथमोऽध्यायः॥२॥१॥
हरिःॐ ॥ ॥ प्राणोवंशइतिस्थविरःशाकल्यस्तद्यथाशालावंशेसर्वेन्येवंशाःसमाहिताःस्युरेवमस्मिन्प्राणेचक्षुःश्रोत्रंमनोवागिंद्रियाणिशरीरंसर्वआत्मासमाहितस्तस्यैतस्यात्मनःप्राणऊष्मरूपमस्थीनिस्पर्शरूपंमज्जानःस्वररूपंमांसंलोहितमित्येतदन्यच्चतुर्थमंतस्थारूपमितिहस्माह

दिच ॥ ६ ॥ इतिश्रीमदानंदतीर्थभगवत्पादाचार्यविरचितेश्रीमन्महैतरेयोपनिषद्भाष्येतृतीयप्रपाठकेप्रथमोऽध्यायः ॥ २ ॥ १ ॥

ॐ ॥ गृहस्याच्छादनादीनांमध्यवंशोयथाश्रयः ॥ तथेंद्रियाभिमान्यादिदेवानांवायुराश्रयः॥तेषुसर्वेषुभगवान्बहुरूपोहरिःस्थितः ॥ विष्णुनामाक्षरेष्वेवमन्येष्वपितदर्थतः ॥ प्राणनामापिभगवान्प्राणस्थश्चोष्मसुस्थितः ॥ ऊष्मनामासमर्थत्वात्सएवभगवान्हरिः ॥ पूर्णत्वादात्मनामासौप्रतिमात्वादमुष्यतु ॥ संघातआत्मशब्दोक्तोह्यस्थिरश्चास्थिनामकः ॥ अस्थिस्थितोहरिःस्पर्शसंस्थितःस्पर्शनामकः ॥ स्पर्शहेतुत्वतः

स्पर्शनामासभगवान्हरिः ॥ मज्जासुस्थःसमज्जाख्योमदंजनयतीतिहि ॥ सएवस्वरसंस्थश्वस्वराख्यःस्वरतेः प्रभुः ॥ प्रमाणंसारयेद्यस्मान्मांसाख्योमांससंस्थितः ॥ लोहिताख्योरक्तवर्णोलोहितस्थोजनार्दनः ॥ अस्थिस्थान्येवरूपाणिपर्वस्वपिहरेर्यतः ॥ ततएवविभक्तानिसंख्यातेषांपृथङ्नतत् ॥ तस्मात्सप्तशतान्येव देहेविंशच्चतस्यहि ॥ रूपाणिविष्णोर्भागेतुषष्ट्युत्तरशत्रयम् ॥ तान्येवविष्णोरूपाणिवत्सराहस्सुसर्वशः ॥ अहर्नामाचभगवानहार्यत्वात्प्रकीर्तितः ॥ अहोभिःसमसंख्यानियस्मादध्यात्मगानितु ॥ रूपाणिविष्णो

ह्वस्वोमांडूकेयस्त्रयंत्वेवनएतत्प्रोक्तंतस्यैतस्यत्रयस्यास्थ्नांमज्ज्ञांपर्वणामितित्रीणीतःषष्टिशतानित्रीणीतस्तानिसप्तविंशतिशतानिभवंतिसप्तचवैशतानिविंशतिश्वसंवत्सरस्याहोरात्राःसएषोहःसंमानश्वक्षुर्मयःश्रोत्रमयश्छंदोमयोमनोमयोवाङ्मयआत्मासयएवमेतमहःसंमानंचक्षुर्मयंश्रोत्रमयंछंदोमयंमनोमयंवाङ्मयमात्मानंवेदाह्वांसायुज्यंसरूपतांसलोकतामश्नुतेपुत्रीपशुमान्भवतिसर्वमायुरेति॥१॥अथकौंठरव्यस्त्रीणिषष्टिशतान्यक्षराणांत्रीणिषष्टिशतान्यूष्मणां

स्तेनायमहस्संमानउच्यते ॥ पूर्णदर्शनशक्तित्वाच्चक्षुर्मयउदीरितः ॥ तादृक्श्रवणशक्तित्वात्तथाश्रोत्रमयःस्मृतः ॥ छंदोमयःसत्यकामोमंत्रवक्तृबलात्मकः ॥ एवंविद्वांस्तस्यरूपाण्याप्नोतिज्ञानपुत्रवान् ॥ पीयमानंशमाप्नोतिप्राप्याहर्नामकंहरिम् ॥ १ ॥ एवमुक्तप्रकारेणतस्यत्वक्षरनामकम् ॥ अशीत्युत्तरसाहस्ररूपंवर्णेषुसंस्थितम् ॥ विष्णुनाम्नोथवान्येषुपंचाशत्संख्यकेष्वपि ॥ तावत्संख्यानिदेहेषुपृथङ्मज्जास्थिपर्वसु ॥ रूपाणिविष्णोस्तावंतिचेष्टकानिपृथक्पृथक् ॥ अर्कस्थितबृहत्याख्यरूपाण्यह्नांचसर्वशः॥ संपादकानितान्येवतान्यक्षरमितानिच॥अस्थ्यादिस्थितरूपाणितान्युपास्यविमुच्यतइतिच ॥ तस्यै

तस्यात्मनस्तस्यशरीराख्यस्यात्मनोयआत्माआदानादिकर्तातस्यपरमात्मनएतस्य ॥ अस्थ्नांमज्ज्ञांपर्वणांच
मिलितानामपिविंशोत्तरसप्तशतत्वोक्तेस्तत्स्थविष्णुरूपाण्येवोच्यंतइतिसिद्धम् ॥ अस्थ्यादीन्येवचेद
शीत्युत्तरसहस्राणिसंतिहि ॥ षणुष्णुरित्येतानिविष्णुनामगतान्यूष्माक्षरसंधिनामकानितद्गतभगवद्रूपा
णिमुख्यतस्तन्नामकानि ॥ अहार्यत्वादहर्नामारात्रिनामारतिप्रदः ॥ संधानात्संधिनामासौस्वयंनाराय
णःप्रभुः ॥ संध्यूष्माक्षरगाण्यस्यविष्णोरूपाणिसर्वशः ॥ संध्यारात्रिदिवास्थानिसाशीतिकसहस्रकम् ॥

त्रीणिषष्टिशतानिसंधीनांयान्यक्षराण्यवोचामाह्रानितानियानूष्मणोवोचामरात्रयस्तायान्सं
धीनवोचामाहोरात्राणांतेसंधयइत्यधिदैवतमथाध्यात्मंयान्यक्षराण्यधिदैवतमवोचामास्थीनि
तान्यध्यात्मंयानूष्मणोधिदैवतमवोचाममज्जानस्तेध्यात्ममेषहवैसंप्रतिप्राणोयन्मज्जैतद्रेतोन
ह्वातेप्राणाद्रेतःसिच्यतेयद्वाऋतेप्राणाद्रेतःसिच्येतपूयेन्नसंभवेद्यान्त्संधीनधिदैवतमवोचा
मपर्वाणितान्यध्यात्मंतस्यैतस्यत्रयस्यास्थ्नांमज्ज्ञांपर्वणामितिपंचेलश्चत्वारिंशच्छतानिपंचेल
स्तदशीतिसहस्रंभवत्यशीतिसहस्रंवाअर्कस्निोबृहतीरहरभिसंपादयंतिसएषोक्षरसंमानश्चक्षु

तान्येवास्थिषुमज्जासुपर्वस्वपिचसर्वशः ॥ परज्ञानात्तुपर्वाणिविष्णोरूपाणितानिहि ॥ अस्थानान्मदना
च्चैवह्यस्थिमज्जाभिधानिच ॥ व्यक्तिर्मज्जासुतस्यैवप्राणोमज्जासुसंस्थितः ॥ मज्जैवरेतोभवतिरेतसि
स्थोविशेषतः ॥ प्राणस्तेनहितद्रेतोयुक्तंप्राणेनसर्वदा ॥ यदिप्राणोनतद्रेतोनगर्भत्वंव्रजेत्कचित् ॥ वि
शेषप्राणसंबंधवर्जितान्यतएवहि ॥ नमांसादीनिगर्भत्वंयांत्यतःसहिरेतसि ॥ विशेषेणस्थितःप्राणःप्रा
णेच्चैवविशेषतः ॥ स्थितोनारायणोदेवस्तस्मान्मज्जासुचस्थितइतिच ॥ मज्जास्वधिकसन्निधानज्ञा

पनार्थमिदंवचनम् ॥ अशीत्युत्तरसहस्रवर्णानामभावाच्चतत्स्थविष्णुरूपाण्येवतत्संख्यानीतिसिद्धम् ॥
अर्केनिलीनत्वेनादृश्यत्वेनस्थिताभगवत्प्रादुर्भावाअर्कलिनः ॥ तएवशरीरेस्थित्वासहस्रंबृहतीःसंपादयं
ति ॥ वाक्प्रेरकत्वाद्विष्णुनामार्थवत्त्वादेवचबृहतीसहस्रस्यतद्देवताश्चैतान्येवाशीत्युत्तरसहस्ररूपाण्ये
तान्येवाहःप्रवर्तकानिच ॥ अहःशब्देनयज्ञोदिवसश्चोभावप्यभिप्रेतौ ॥ यज्ञानांदिवसानांचसाशीतिकस
हस्रकैः ॥ विष्णुःप्रवर्तकोरूपैर्बृहत्युक्थस्यचांजसा ॥ बृहत्युक्थेनवाच्यानिरूपाण्येतान्यधीशितुरिति

**मयःश्रोत्रमयश्छंदोमयोमनोमयोवाङ्मयआत्मासयएवमेतमक्षरसंमानंचक्षुर्मयंश्रोत्रमयंछं
दोमयंमनोमयंवाङ्मयमात्मानंवेदाक्षराणांसायुज्यंसरूपतांसलोकतामश्नुतेपुत्रीपशुमान्भवति
सर्वमायुरेति॥२॥चत्वारःपुरुषाइतिबाध्वःशरीरपुरुषश्छंदःपुरुषोवेदपुरुषोमहापुरुषइतिशरीर
पुरुषइतियमवोचामसयएवायंदैहिकआत्मातस्ययोयमशरीरःप्रज्ञात्मासरसश्छंदःपुरुषइतिय
मवोचामाक्षरसमाम्नायएवतस्यैतस्याकारोरसोवेदपुरुषइतियमवोचामयेनवेदान्वेदऋग्वेदंय
जुर्वेदंसामवेदंतस्यैतस्यब्रह्मारसस्तस्माद्ब्रह्माणंब्रह्मिष्ठंकुर्वीतयोयज्ञस्योल्बणंपश्येन्महापुरुष**

च ॥ २ ॥ संसारबाधितैःप्राप्योबाध्वोवायुरुदाहृतः ॥ सहिमोक्षप्रदोविष्णोराज्ञयासउवाचह ॥ सर्वदेहा
भिमानीतुशरीरपुरुषःशिवः ॥ सर्ववर्णाभिमानीचशेषोसौछांदसःपुमान् ॥ सर्ववेदाभिमान्येवगरुडोवेदपू
रुषः ॥ संवत्सराभिमानीतुब्रह्मैवहिमहापुमान् ॥ सारःशिवस्यानिरुद्धनामादेहस्थितोहरिः ॥ अइत्या
क्रियतेयस्माद्वासुदेवोक्षकारकः ॥ शेषस्यसारसविभुर्ब्रह्माख्योज्ञानबृंहणात् ॥ संकर्षणाख्यस्तुहरिःसारः
सगरुडस्यच ॥ ब्रह्मर्त्विक्संस्थितश्चासौतस्माद्ब्रह्मिष्ठमेवहि ॥ कुर्याद्ब्रह्मर्त्विजंतस्मिन्विशेषेणस्थितोहरिः ॥

ब्रह्मणःसारभूतस्तुप्रद्युम्नोभगवान्हरिः ॥ सएवादित्यसंस्थश्चसद्मादिर्जगतोविभुः ॥ ततश्चसर्वभूतेषुजीवानां
विनियामकः ॥ सएवादित्यगोविष्णुर्यःप्रद्युम्नाभिधोहरिः ॥ सएवसर्वदेहेषुचानिरुद्धतनुःस्थितः ॥ संक
र्षणोवासुदेवइत्येकःसचतुर्विधः ॥ प्रतिपूरुषमेतस्मात्स्थितोविष्णुर्नियामकः ॥ आदित्यादिषुचस्थित्वा
द्योतकोसौप्रतिप्रति ॥ सचेतननतमत्वाद्धिचित्रमित्यभिधीयते ॥ मुख्यत्वात्सर्वदेवानामननादीशितृत्वतः ॥
कर्तृत्वादप्यनीकंसउदेत्सूर्यस्थितोहरिः ॥ ज्ञानदत्वाच्चदेवानांचक्षुरेनेनदर्शनात् ॥ आपूरयत्सर्वलोकान्प्र

इतियमवोचामसंवत्सरएवप्रध्वंसयन्नन्यानिभूतान्यैक्याभावयन्नन्यानितस्यैतस्यासावादि
त्योरसःसयश्चायमशरीरःप्रज्ञात्मायश्चासावादित्यएकमेतदितिविद्यात्तस्मात्पुरुषंपुरुषंप्रत्यादि
त्योभवतितदप्येतदृषिणोक्तं चित्रंदेवानामुदगादनीकंचक्षुर्मित्रस्यवरुणस्याग्नेः ॥ आप्राद्या
वापृथिवीअंतरिक्षंसूर्यआत्माजगतस्तस्थुषश्चेत्येतामनुविधंसंहितांसंधीयमानांमन्यइतिहस्मा
हबाध्वएतंह्येवबह्वृचामहत्युक्थेमीमांसंतएतमग्नावध्वर्यवएतंमहाव्रतेछंदोगाएतमस्यामेतंदि
व्येतंवायावेतमाकाशएतमप्स्वेतमोषधीष्वेतंवनस्पतिष्वेतंचंद्रमस्येतंनक्षत्रेष्वेतंसर्वेषुभूतेष्वे
तमेवब्रह्मेत्याचक्षतेसएषसंवत्सरसंमानश्चक्षुर्मयःश्रोत्रमयश्छंदोमयोमनोमयोवाङ्मयआत्मा

काशेनजनार्दनः ॥ आदानात्सर्वजीवानामत्तृत्वात्प्रलयेपिच॥ आत्मेत्युक्तःसभगवान्जगतःस्थावरस्यच॥
एवंचतुर्विधोविष्णुःसंहितादेवतायदा ॥ ज्ञायतेपूर्ववर्णस्यरूपंनारायणाभिधम् ॥ प्रादुर्भावाःसमस्ताश्च
चरमार्णस्यदेवताः ॥ तदातुसंहितांसम्यङ्मन्येहसंहितामिति ॥ आहवायुरिमंविष्णुंबृहत्युक्थस्यदेवता
म् ॥ महाव्रताख्यस्तोत्रस्यचेष्टकानांचदेवताम् ॥ एतमेवाखिलजगद्व्याप्तंपूर्णगुणात्मकम् ॥ संवसद्भतिदा

त्वाद्ब्रह्मासंवत्सराभिधः ॥ नियामकःसजीवानांसर्वेषांप्रभुरीश्वरः ॥ अनंतमूर्तिर्ब्रह्मासावनंतजगदास्थि
तः ॥ नियामकस्तस्यविष्णुस्तावद्रूपेषुसंस्थितः ॥ तत्संवत्सरसंमानःसविष्णुःपरमेश्वरः ॥२॥ यएनंवत्त्य
योग्येभ्योयोयोथचैनंमहाव्रते ॥ कर्मण्याचार्यतोन्यस्यशंसेतपितृतोथवा ॥ महाव्रतेनस्तोत्रेणस्तुवीतैनम
थापिवा ॥ महाव्रतेचितिंवापिकुर्यान्नास्यफलंश्रुतेः ॥ सुकृतस्यफलंचैवनासौसम्यगवाप्स्यति ॥ प्रत्यक्ष
ज्ञानिनोप्येतदानंदह्रासकृद्भवेत् ॥ प्रत्यक्षज्ञानिनोमोक्षोनकथंचिद्धिहीयते ॥ आचार्यमेवतंविद्याद्गु

सयएवमेतंसंवत्सरंसंमानंचक्षुर्मयंश्रोत्रमयंछंदोमयंमनोमयंवाङ्मयमात्मानंपरस्मैशंसति॥३॥
दुग्धदोहाअस्यवेदाभवंतिनतस्यानूक्तेभागोअस्तिनवेदसुकृतस्यपंथानमितितदप्येतदृषिणो
क्तंयस्तित्याजसचिविदंसखायंनतस्यवाच्यपिभागोअस्ति ॥ यदींशृणोत्यलकंशृणोतिनहिप्र
वेदसुकृतस्यपंथानमितिनतस्यानूक्तेभागोस्तिनवेदसुकृतस्यपंथानमित्येतत्तदुक्तंभवतितस्मा
देवंविद्वान्नपरस्माअग्निंचिनुयान्नपरस्मैमहाव्रतेनस्तुवीतनपरस्माएतदहःशंसेत्कामंपित्रेवा
चार्यायवाशंसेदात्मनएवास्यतत्कृतंभवतिसयश्चायमशरीरःप्रज्ञात्मायश्चासावादित्यएकमेतदि

णैर्यःस्वात्मनोधिकः ॥ गुणाधिकस्यतेनैवशंसनादिनदुष्यति ॥ अयोग्यस्योपदेशेतुकृतेहौत्रादिकेपिवा ॥
प्रायश्चित्तार्थमेतत्तुशंसीतशतवारकम् ॥ अन्यथामानुषेष्वेवजायतेनदिवंव्रजेत् ॥ योग्याअस्याश्च
विद्यायादेवाऋषयएवच ॥ एकदेशज्ञानयोग्यामानुषाउत्तमायदि ॥ कर्मसंचयवेत्तारंत्यजेन्नारायणं
हियः ॥ प्रीत्यैकदेशसंस्थत्वात्सखायमितिचोदितम् ॥ नविद्यायाःफलंतस्यश्रुतंचनरकावहम् ॥ नै
वप्राप्नोतिसुकृतंसंत्यागात्परमात्मनः ॥ मुख्यत्यागोहरेरेषयन्नास्तीतिवदेदमुम् ॥ तत्समंवाधिकंवापि

ब्रूयादैक्यमथापिवा ॥ ऐश्वर्यादिगुणानांवाह्नासंनास्तित्वमेववा ॥ तत्प्रसादंविनामोक्षंब्रूयाद्वाकस्य
चित्कचित् ॥ ऐक्यंवाब्रह्मशर्वादेर्मुक्तावैक्यमथापिवा ॥ व्यत्यासंचावताराणांजीवाभेदममुष्य
वा ॥ भेदज्ञानंतद्गुणानांतेनवाथमिथोपिवा ॥ तथैवतत्क्रियाणांचतद्रूपाणामथापिवा ॥ असाम्य
दर्शनंवापितद्गुणानांपरस्परम् ॥ देहदेहिविभेदंचतस्मिन्नवयवेषुवा ॥ परस्परंभेददृष्टिंतेनवाकुत्रचित्क
चित् ॥ दोषसंसर्गमस्यापिस्वतःपरतएववा ॥ अज्ञानतोज्ञानतोवानिर्देहत्वममुष्यच ॥ तद्देहस्यप्रा
कृतत्वमचिदानंददेहताम् ॥ प्रादुर्भावेष्वपिविभोर्देहत्यागोद्भवादिकम् ॥ अज्ञानदुःखासामर्थ्यपारवश्या
दिकंतथा ॥ अतद्वशत्वंकस्यापिकदाचित्कचिदप्युत ॥ परिमाणंबलादेर्वातस्यविष्णोर्महात्मनः ॥ भेदा
भेददृशिर्वास्यजीवैर्वास्वगुणादिभिः ॥ तर्कैस्तस्यापलापोवातत्ररक्तेनचेतसा ॥ त्यागानामेवमुक्तानांत
र्काद्यैःसाधनंतथा ॥ अचिंत्यविभवेप्यस्मिन्नसंभवनिरूपणम् ॥ सएवमुख्यतस्त्यागोवासुदेवस्यकीर्ति
तः ॥ रमाब्रह्मादिकानांचतारतम्यानभिज्ञता ॥ संशयश्चोक्ततत्त्वेषुजगन्मिथ्यात्वदर्शनम् ॥ अस्मृति
र्वासुदेवस्यसद्भक्तानांचनिंदनम् ॥ द्वितीयएषत्यागस्तुविष्णोरेवप्रकीर्तितः ॥ निषिद्धकर्मकरणंविहितस्य
चवर्जनम् ॥ त्यागस्तृतीयोहिहरेश्चतुर्थोऽयोग्यपूरुषे ॥ उपदेशःकेशवस्ययथाशास्त्रोदितक्रमात् ॥ आ
चार्यपित्रोरन्यत्रतथैवचमहाव्रते ॥ हौत्रोद्गात्राध्वर्यवाणित्यागएवंचतुर्विधः ॥ त्यागद्वयात्तुप्रथमात्प्रा
प्यतेंधंतमःक्रमात् ॥ तृतीयान्निरयप्राप्तिश्चतुर्थान्नदिवंव्रजेत् ॥ उपदिष्टेपियस्तत्त्वेसंशयंकुरुतेपुमान् ॥
सोंधंतमोव्रजेदन्योनिरयायैवगच्छति ॥ सएवभगवान्विष्णुरेतैर्दोषैर्विनायदि ॥ ज्ञायतेमुक्तिदःसाक्षान्ना
त्रकार्याविचारणा॥यदिज्ञानंनातिपक्वंसरागंचमानोभवेत्॥तदास्वर्गादिलोकाप्तिःसंशयश्चेत्कचित्कचित्॥

आवृत्तिरेवसंसारेयावन्निःसंशयोभवेत् ॥ पुनरावृत्तिहीनंतुतमोंधंमुक्तिरेवच ॥ पूर्वंतुनिःसुखंतत्रनिर्दुःखं चापरंमतम् ॥ निश्शेषगुणहीनंचपूर्वंनिर्दोषकंपरम् ॥ विमिश्रगतयस्त्वन्याःपुनरावृत्तिसंयुताः ॥ असुरा देवतामर्त्यायोग्याएतेषुचक्रमात् ॥ नचतेषांसंकरोस्तियथायोग्याहितद्गतिः ॥ मानुषेषूत्तमामुक्ति मधमानिरयंतथा ॥ आमुवंतिमनुष्येषुमध्यमाःसृतिभागिनः ॥ नियमोयंनान्यथास्यादच्छिद्रत्वंय थाभवेत् ॥ दोषेथवागुणेवापितदादैत्याःसुराअपि ॥ स्वांस्वांगतिंसमायांतितावत्संसारभागिनः ॥ अच्छि द्रत्वंनैवसर्वैःकदाचित्प्राप्यतेयतः ॥ सृष्टिस्थितिलयादीनांनोच्छेदस्तेनकुत्रचित् ॥ तस्माद्दोषान्प्रहायैव विष्णुंसर्वोत्तमोत्तमम् ॥ जानीयात्तेनमुक्तिःस्यादपरोक्षदृशेरनु ॥ सूर्यमंडलगोविष्णुर्देहेचक्षुषिसंस्थितः॥

स्यवोचामतौयत्रविहियेतेचंद्रमाइवादित्योदृश्यतेनरश्मयःप्रादुर्भवंतिलोहिनीद्यौर्भवतियथा मंजिष्ठाव्यस्तःपायुःकाककुलायगंधिकमस्यशिरोवायतिसंपरेतोस्यात्मानचिरमिवजीविष्य तीतिविद्यात्सयत्करणीयंमन्येततत्कुर्वीतयदंतियच्चदूरकइतिसप्तजपेदादित्प्रत्नस्यरेतसइत्ये

अनिरुद्धश्चहृदयेनचभेदोऽनयोःक्वचित् ॥ अन्येषामपिरूपाणामितिविद्याद्विचक्षणः ॥ द्विरूपःसयदावि ष्णुरपगच्छतिदेहतः ॥ तदैवदुर्निमित्तानिजायंतेनान्यदाक्वचित् ॥ तस्मात्तेषांदर्शनेतुकर्तव्यंपारलौकिक म् ॥ सर्वमेवजपेच्चैवयदंतीत्यादिकाऋचः ॥ ऋग्भिःषड्भिर्वायुरेवपवमानादिनामतः ॥ स्तूयतेसोंगनेतृ त्वादग्निरित्यभिधीयते ॥ परस्यब्रह्मणोविष्णोर्ज्ञापनाख्यप्रसूतिभिः ॥ वायुःपुनातियल्लोकान्सवितातेनक थ्यते ॥ पवित्रंनामसाक्षात्तत्परंब्रह्मजनार्दनः ॥ प्रसादयित्वातंविष्णुंतेनलोकान्पुनात्यसुः ॥ ज्ञानाख्याप्रस वेनापिस्वयंवायुःपुनात्ययम् ॥ प्राणाग्नेरर्चिषोदेहेवितताभ्तेषुकेशवः ॥ अर्चिष्मान्विततोनित्यंवायुस्ते

नपुनात्ययम् ॥ यत्रब्रह्मेतिषड्भिश्वप्रार्थनीयःसमारुतः ॥ मोचयित्वैवसंसाराद्विष्णोर्लोकेकधीतिच ॥
आदित्प्रत्नस्येतिविष्णुःस्तुत्योवैकुंठलोकगः॥ आदित्यमंडलस्थश्वसाक्षान्नारायणःप्रभुः ॥उद्वयंत्विनिमंत्रे
णस्तुत्योवायोरपीश्वरः ॥ अपमृत्युभयंतस्ययदंतीत्यृग्जपाद्व्रजेत् ॥ कालमृत्युर्यदिभवेत्तथाजन्मादि
कंभयम् ॥ अन्याभिःकर्मतःपूतोयत्रब्रह्मेतिवैष्णवम् ॥ लोकंव्रजेत्तथान्याभ्यांविष्णुर्मोक्षसुखप्रदः ॥
इष्टप्रदानशीलत्वादिंदुर्वायुःसएवच ॥ सोमःसौम्यस्वरूपत्वात्पवमानश्चपावनात् ॥ विष्णुःपुरातनत्वा
त्तुप्रत्नोरेतोमहारतिः ॥ देवत्रादेवएवासौसर्वदेवेश्वरोयतः ॥ सूर्यश्चसूरिभिःप्राप्योनित्यानंदोरमापतिः ॥
देशतःकालतश्चैवगुणतश्चापिपूर्तितः ॥ अतइत्युच्यतेविष्णुःसंततोह्मतउच्यते ॥ तृतीयवर्णोतिशयेयत
स्तेनातिरेववा ॥ अतइत्युच्यतेविष्णुःसम्यक्स्तुत्याद्यशक्यतः ॥ पूर्णत्वाद्भगवान्विष्णुरश्रुतत्वादिनोदि

**कायत्रब्रह्मापवमानेतिषळुद्वयंतमसस्परीत्येकाथापियत्रच्छिद्रइवादित्योदृश्यतेरथनाभिरिवा**

तः ॥ अंतस्थःसर्वजीवानांपूर्णत्वात्पुरुषाभिधः ॥ समःससर्वरूपेषुसर्वजीवनियामकः ॥ इतिविद्यात्परं
विष्णुंमुच्यतेतेनसंसृतेरित्यादिच ॥ शरीरपुरुषादीनांप्राप्यत्वात्तदुपास्यत्वात्तेषांनियामकत्वेनतेभ्योप्यु
त्तमत्वेनतेषुस्थितत्वाच्चतेषांसारइत्युच्यतेभगवान् ॥ यदीएवअलकंअरकंयत्किंचिच्छृणोतितत्सर्व
मरतिरूपांधतमःप्राप्तिकारणमेवतस्यभवति ॥ तत्रहिसर्वरत्यभावोरतिविरुद्धदुःखंचपूर्णम् ॥ परस्मै
शंसनमात्रादरतिरेवेत्यतप्रस्तुतेचतुर्थत्यागेनतस्यवाच्यविभागोअस्ति ॥ नहिप्रवेदसुकृतस्यपंथामितिदो
षद्वयमेवेत्यवधारयति ॥ नतस्यानूक्तेभागोस्तिनवेदसुकृतस्यपंथानमित्येतत्तदुक्तंभवतीति ॥ अलकं
शृणोतीतित्यागद्वयस्यमुख्यतस्तृतीयस्यापिनरकंशृणोतीतिकिंचिद्भवति ॥ तौयदास्माच्छरीराद्विहीये

तेतदैवैतानिनिमित्तानिपश्यंतीतिनियमः ॥ नचतदापश्यत्येवेति ॥ वासेनरमयतीतिवासरंविष्णुर्ज्यो
तिः ॥ यत्रब्रह्मावेदवाक्यंव्याचक्षाणोमखैर्यजन् ॥ सोमेनचसुतेनेशमास्तेलोकेहरेर्हिसइतिस्कांदे ॥
ग्राव्णासोमविषयेसोमेनेह्वामहीयतेतेनैवविष्णुप्रीत्यास्वस्यानंदंजनयन् ॥ स्वरानंदरूपोविष्णुः ॥ दिवो
देव्याअवरोधनंतस्याःपरिवारभूताःसर्वदेव्योद्यौर्नामवायुपत्नी ॥ अजनयोमरुतोवक्षणाभ्योदिवआवक्ष
णाभ्यइत्यादेः ॥ यह्वतीःस्यंदमानाः ॥ सर्वेष्टदजगत्प्राणमामादायपरिस्रव ॥ यत्रासौभगवान्विष्णु
स्त्वंहिमोक्षप्रदःसदेतिच ॥ इंदुरिष्टप्रदत्वाद्योवायुरादायगच्छति ॥ इंद्रनाम्नःकेशवस्यसमीपंमुक्तमं
जसेतिच ॥ अनन्यहेतुकंसाक्षाद्भगवद्भक्तिरूपकम् ॥ सुखमानंदइत्युक्तोमोदोभोगनिमित्तकः ॥ प्र

भिख्यायेतच्छिद्रांवाच्छायांपश्येत्तदप्येवमेवविद्यादथाप्यादर्शेवोदकेवाजिह्मशिरसंवाऽशि
रसंवात्मानंपश्येद्विपर्यस्तेवाकन्यकेजिह्मेनवादृश्येयातांतदप्येवमेवविद्यादथाप्यपिधायाक्षि
णीउपेक्षेततद्यथाबटरकाणिसंपतंतीवदृश्यंतेतानियदानपश्येत्तदप्येवमेवविद्यादथाप्यपिधाय

मोदस्तद्विशेषोत्थोमुन्नामात्यल्पभोगतइत्यृग्वेदसंहितायाम् ॥ तमसःसकाशात्उद्गतावयमुत्तरंसर्वोत्तमं
विष्णवाख्यंज्योतिःपरिपश्यंतस्तमेवदेवत्रादेवंदेवविषयेपिदेवमगन्मः ॥ तदेवज्योतिष्ट्वेनोत्तरत्वेनचप
श्यंतइतिदर्शनेइत्थंभावविधानार्थंपूर्वम् ॥ तथैवासौभगवानुत्तमज्योतिः ॥ नराजादिष्विवाविद्यमा
नभक्तिमात्रमिदमितिज्ञापयितुमगन्मज्योतिरुत्तममितिपुनर्वचनम् ॥ अर्चिषोंशावर्तुलास्तुनाम्नावट
रकाःस्मृताइतिशब्दनिर्णये ॥ बृहत्तमंमधुयदिसहापूपंप्रभक्षयेत् ॥ स्वप्नेतस्याचिरान्मृत्यूरक्ताब्जेवा
शिरोधृतइतिब्रह्मांडे ॥ राव्यास्तुदेवतादुर्गादुःस्वप्नेसाप्रपूजिता ॥ पायसेनहरेन्मृत्युंरात्रिसूक्तादकालिक

म् ॥ यदिकालिकमृत्युःस्यात्पदंसापरमंनयेत् ॥ सहैवविष्णुनाभक्तंविष्णोस्तद्वेदिनंतथा ॥ रतिदत्वात्परो
विष्णुर्मुख्यतोरात्रिरुच्यते ॥ तदाश्रयत्वाद्दुर्गापिरात्रिरित्यभिधीयते ॥ स्त्रीरूपःसपरोविष्णुःपायसेष्टोहि
मोक्षदः॥तस्मादुभौसहैवेज्यौभक्त्यादुःस्वप्नदर्शने ॥ बहुभिर्नयनैर्विष्णुर्बहुधेदंददर्शह॥ आयन्सर्वेषुलोकेषु
धृतास्तेनैवहिश्रियः ॥ नीचानुच्चांश्चजीवान्सब्रह्मादीनुर्वपूरयत् ॥ ज्ञानेनबाधतेज्ञानंस्वसारंस्वंतथाक
रोत् ॥ उषआख्यंशुक्लवर्णंप्रमदारूपमेवच ॥ तमश्चापाकरोत्येवतदासूर्यादिषुस्थितः ॥ सनःस्वामी

कर्णाउपशृणुयात्सएषोऽग्नेरिवप्रज्वलतोरथस्येवोपब्दिस्तंयदानशृणुयात्तदप्येवमेवविद्यादथा
पियत्रनीलइवाग्निर्दृश्यतेयथामयूरग्रीवामेघेवाविद्युतंपश्येन्मेघेवाविद्युतंनपश्येन्महामेघेवामरी
चीरिवपश्येततदप्येवमेवविद्यादथापियत्रभूमिंज्वलंतीमिवपश्येततदप्येवमेवविद्यादितिप्रत्य
क्षदर्शनान्यथस्वप्नाःपुरुषंकृष्णंकृष्णदंतंपश्यतिसएनंहंतिवराहएनंहंतिमर्कटएनमास्कंदयत्याशु
वायुरेनंप्रवहतिसुवर्णंखादित्वापगिरतिमध्वश्नातिबिसानिभक्षयत्येकपुंडरीकंधारयतिखरैर्वरा
हैर्युक्तैर्यातिकृष्णांधेनुंकृष्णवत्सांनलदमालीदक्षिणामुखोव्राजयतिसयद्येतेषांकिंचित्पश्येदुपो
ष्यपायसंस्थालीपाकंश्रपयित्वारात्रीसूक्तेनप्रत्यृचंहुत्वान्येनान्नेनब्राह्मणान्भोजयित्वाचरुं

यद्दुदरेयमनाद्यामनामके ॥ अविक्ष्महिवयंसर्वेवृक्षेयद्वत्पतत्त्रिणः ॥ शेनाख्यास्तुसुखीनत्वादासमंता
त्सुरोत्तमाः ॥ पद्वंतोमानुषाश्चैवपादमात्रप्रयायिनः ॥ यामाख्याबहुलत्वात्तुदैत्याएवप्रकीर्तिताः ॥
अर्थिनस्तुकृतार्थत्वान्मुक्ताएवश्रुताःश्रुतौ ॥ ऊरीकृतप्रमाणत्वादूर्म्यःसभगवान्हरिः ॥ वृकास्तेनैवनि
र्याप्यावृकाःक्रूरत्वतोऽसुराः ॥ तत्स्वभावाश्चवृक्याःस्युःस्तेनास्तत्रमहासुराः ॥ ब्रह्मस्तेनायतस्तेहिनि
त्यमैकात्म्यवेदिनः ॥ विष्णुःसुखतरश्चैवभक्तानांभवतिप्रभुः ॥ कृष्णंव्यक्तंतमोज्ञानमज्ञानांपेशलंहि

नत् ॥ तद्यातयत्पूर्णमिवभगवान्पुरुषोत्तमः ॥ सएवचोषाःकथितःप्रकाशत्वाज्जनार्दनः ॥ जयितःस्तो
ममिवचब्राह्मणाययथाचगाः ॥ उपाकरंतथास्तोमंतवाहंतद्वृणीष्वच॥द्यौरितिज्ञानमुद्दिष्टंतद्ध्येयत्वाज्ज
नार्दनः ॥ दुहितादिवइत्युक्तएवमर्थेनपूज्यते ॥ रात्रीसूक्तेनभगवान्साक्षान्नारायणःप्रभुः ॥तत्सन्निधानाद्दु
र्गायाएषोर्थउपचारतः ॥ एवंस्तुतस्तथैवेष्टोभगवान्मोक्षदोभवेत् ॥ यदंतीत्याद्यृचःसर्वाअपिदुःस्वप्नदर्श
ने ॥ जप्याएवविशेषोयंहोमोदुःस्वप्नदर्शने ॥ परोक्षज्ञानिनोविष्णुरापरोक्ष्यंव्रजेत्स्वरन् ॥ अपरोक्षदृशः

स्वयंप्राश्नीयात्सयोतोश्रुतोगतोमतोनतोदृष्टोविज्ञातोनादिष्टःश्रोतामंताद्रष्टादेष्टाघोष्टाविज्ञा
ताप्रज्ञातासर्वेषांभूतानामंतरपुरुषःसमआत्मेतिविद्यात् ॥ ४ ॥ अथखल्वियंसर्वस्यैवाच उप
निषत्सर्वाह्येवेमाःसर्वस्यैवाचउपनिषदइमांत्वेवाचक्षतेपृथिव्यारूपंस्पर्शाअंतरिक्षस्योष्माणो
दिवःस्वराअग्नेरूपंस्पर्शावायोरूष्माणआदित्यस्यस्वराऋग्वेदस्यरूपंस्पर्शायजुर्वेदस्योष्मा
ष्माणःसामवेदस्यस्वराश्चक्षुषोरूपंस्पर्शाःश्रोत्रस्योष्माणोमनसःस्वराःप्राणस्यरूपंस्पर्शाअपा
नस्योष्माणोव्यानस्यस्वराअथखल्वियंदैवीवीणाभवतितदनुकृतिरसौमानुषीवीणाभवतिय

मीतःसुखाधिक्यंकरोत्यजः ॥ मुक्तस्यद्विविधैस्तस्माज्जपोयोगश्चसर्वथा ॥ कर्तव्योन्यासिभीरात्रीसूक्तं
जप्यंत्रिशोंजसेत्यैतरेयसंहितायाम् ॥ ४ ॥ अथसर्ववाग्विषयाविद्योच्यते ॥ विष्णुशब्दार्थत्वात्सर्ववाचा
म् ॥ पूर्वोक्ताअपिसर्ववागुपनिषदएव ॥ तथापिमुख्यतएवसर्ववाग्विषयत्वाद्वक्ष्यमाणामेवसर्वस्यैवाचउप
निषदितिसर्वेप्याचक्षते ॥ पृथिव्यादिस्थितोविष्णुःपृथिव्याद्यभिधानवान् ॥ स्पर्शादीनांदेवतासौक्रमेणै
वप्रकीर्तितः ॥ तस्यविष्णोरयंदेहोवीणासाक्षात्प्रकीर्तिता ॥ दैवीवीणाततःसेयंलोकसिद्धातुमानुषी ॥

ब्रह्मादिदेहान्योवेदविष्णोर्वीणेतिभक्तितः ॥ विद्यापूर्णसुखःसस्याद्भूमिपूरितकीर्तिमान् ॥ विद्याधिक्यार्थमेवैतांवाक्सारामप्यृचंजपेत् ॥ ध्यात्वानारायणंदेवंस्त्रीरूपंवाचिसंस्थितम् ॥ ओष्ठापिधानेत्येषाह्यृक्सारोवाचःप्रकीर्तितः ॥ विष्णोर्हिवाचिसंस्थस्यैवोष्ठावेतौपिधानवत् ॥ कुलीतिचोक्तोभगवान्प्रलीनाशेषकुत्सितः ॥ पातिसर्वंविशिष्टश्चसर्वस्मादित्यतःपविः ॥ सर्ववागीश्वरोविष्णुःस्त्रीरूपोमांसुवादयेदिति च ॥ नेत्युपमानार्थम् ॥ ओष्ठावपिधानवदस्येति ॥ नचविष्णोरन्यासर्वस्यावाचईशाना ॥ सहिमु

थास्याःशिरएवममुष्याःशिरोयथास्याउदरमेवममुष्याअंभणंयथास्यैजिह्वैवममुष्यैवादनंयथास्यास्तंत्रयएवममुष्याअंगुल्योयथास्याःस्वराएवममुष्याःस्वरायथास्याःस्पर्शाएवममुष्याःस्पर्शायथाह्येवेयंशब्दवतीतर्द्मवत्येवमसौशब्दवतीतर्द्मवतीयथाह्येवेयंलोमशेनचर्मणापिहिताभवत्येवमसौलोमशेनचर्मणापिहितालोमशेनहस्मवैचर्मणापुरावीणाअपिदधतिसयोहैतांदैवींवीणांवेदश्रुतवदनोभवतिभूमिप्रास्यकीर्तिर्भवतियत्रक्कचार्यावाचोभाषंतेविदुरेनंतत्राथातोवाग्रसोयस्यांसंसद्यधीयानोवाभाषमाणोवानविरुरुचुषेततत्रैनामृचंजपेदोष्ठापिधानानकुलीदंतैःपरिवृतापविःसर्वस्यैवाचईशानाचारुमामिहवादयेदितिवाग्रसः ॥ ५ ॥ अथहास्मा

ख्यतःसर्वेश्वरः ॥ तस्यैवप्रस्तुतत्वाद्वक्ष्यमाणत्वाच्च ॥ श्रियःपतिर्यज्ञपतिर्जगत्पतिर्गिरांपतिर्लोकपतिर्धरापतिरितिभागवते ॥ योवाचितिष्ठन्वाचोंतरोयंवाङ्नवेदेत्यादिश्रुतिश्च ॥ स्त्रीलिंगत्वंदेवतेत्यादिवदपियुज्यते ॥ स्त्रीरूपत्वाच्च ॥ ५ ॥ संवत्सरइतिविशेषणाद्विरिंचएवात्रप्रजापतिः ॥ ब्रह्माविश्वःकतमःस्वयंभूःप्रजापतिःसंवत्सरइत्यादिश्रुतेः ॥ श्रांतोब्रह्मासर्ववेदैःस्तुत्वानारायणंप्रभुम् ॥ तेनैवसम्यक्सं

धायदार्ढ्यंदेहस्यसोकरोत् ॥ संधानात्संहितेत्युक्तोविष्णुरेवसनातनः॥ विष्णुनाम्निणशब्देनविष्णोर्बलमुदीर्यते ॥ णइत्याक्रियमाणत्वाण्णकारोस्यबलंमतम् ॥ विष्णुनाम्निषकारेणरमाब्रह्मेशपूर्विणः ॥ प्रणेतृताखिलस्यैवविष्णोरुक्तातथात्मता ॥ आततत्वंसर्वगुणैर्देशतःकालतस्तथा ॥ आत्मशब्दोदितंतच्चषशब्देनाभिधीयते ॥ षइत्याक्रियमाणत्वंप्रणेतृत्वंचपूर्णता ॥ विष्णोःषकारइत्युक्तावीत्युक्तस्यविशिष्टता ॥ अंत्यस्थितउकारस्तुताच्छील्यादिहरेर्वदेत् ॥ एवंविशिष्टप्राणत्वमाततत्वंचसर्वतः ॥ विशिष्टंचबलंविष्णोःसर्वस्माच्छीलमित्यपि ॥ उदितंविष्णुशब्देनतस्मादृक्संहितामनु ॥ वर्णद्वयसमायो

एतत्कृष्णहारीतोवाग्ब्राह्मणमिवोपोदाहरतिप्रजापतिःप्रजाःसृष्ट्वाऽथसंसतसंवत्सरःसच्छंदोभिरात्मानंसमदधाद्यच्छंदोभिरात्मानंसमदधात्तस्मात्संहितातस्यैवाएतस्यैसंहितायैणकारोबलंषकारःप्राणआत्मासयोहैतौणकारषकारावनुसंहितमृचोवेदसबलांसप्राणांसंहितांवेदायुष्यमितिविद्यात्सयदिविचिकित्सेत्सणकारंब्रवाणी३ँअणकारा३ँ३इति ॥ सणकारमेवब्रूयात्सषकारं

गेष्णुशब्दस्यार्थमेवतु ॥ विष्णोःप्राणत्वमात्मत्वंबलंचैवात्रवेत्तियः ॥ सएवविष्णोर्बलवित्तथाप्राणत्वविद्भवेत् ॥ सएवमुक्तःसंसारान्नित्यायुष्मान्भविष्यति ॥ संहितासहितत्वेनयदृचोधीमहेवयम् ॥ वेदानन्यान्पुराणंवातेनविष्णुपदोदितः॥अवाप्तोभगवान्स्यान्नस्तन्नामार्थायतोखिलाः॥इत्याहुर्ऋषयःसर्वेकिमन्याध्ययनाद्भवेत् ॥यज्ञैर्वैत्यृषयोप्यन्येकावषेयावदंतिहि॥मौनेनविष्णुशब्दार्थंध्यायंतोवाचमेववा॥ जुहुमोविष्णुनामाख्यांजपंतोमंत्रमेववा ॥नमस्कारसमायुक्तंजुहुमःप्राणमत्रहि॥ किमन्यैर्बहुभिःकार्यैरेतस्यैवाधिकत्वतः॥एतदर्थानुसंधानपूर्वंवेदानथापिवा॥अधीमहेयजामोवानान्यथातुकथंचन ॥ एषएव

हिसर्वेषांवेदानामर्थईरितः॥विष्णुनामोदितोयोर्थस्तद्व्याख्यान्यद्वचोखिलम् ॥ एवंविशिष्टप्राणात्मबलाद्य
खिलसद्गुणैः॥पूर्णस्वभावःसर्वेषांवचसामर्थईरितः ॥ संहिताख्यानिविष्णोस्तुरूपाण्येतानिसर्वशः॥अन्य
विद्यास्वशिष्यस्यनब्रूयात्प्रथमंकचित्॥ व्याख्यानशक्तिहीनायनैवब्रूयात्कथंचन ॥ वैष्णवायसुवृत्तायमे
धाश्रद्धायुतायच॥गुरोःशुश्रूषकायैवब्रूयादित्यनुशासनमितिच॥यएतेनणइतिशब्देनाक्रियमाणंविष्णोःपू
र्णबलंषशब्देनाक्रियमाणंदेशतःकालतोगुणतश्च।ततत्वंचसर्वांसंहितामनुतदर्थत्वेनवेद॥अक्षरद्वयसंयोगरू

ब्रवाणीइँअषकाराइँइति ॥ सषकारमेवब्रूयात्तेयद्वयमनुसंहितमृचोधीमहेयच्चमांडूकेयीयम
ध्यायंप्रब्रूमस्तेननोणकारषकारावुपाप्तावितिहस्माहह्रस्वोमांडूकेयोथयद्वयमनुसंहितमृचोधी
महेयच्चमांडूकेयीयमध्यायंप्रब्रूमस्तेननोणकारषकारावुपाप्तावितिहस्माहस्थविरःशाकल्यएत
द्धस्मवैतद्विद्वांसआहुर्ऋषयःकावषेयाःकिमर्थावयमध्येष्यामहेकिमर्थावयंयक्ष्यामहेवाचिहि
प्राणंजुहुमःप्राणेवावाचंयोह्येवप्रभवःसएवाप्ययस्ताएताःसंहितानानंतेवासिनेप्रब्रूयान्नासंव
त्सरवासिनेनाप्रवक्रइत्याचार्याआचार्याः ॥ ६ ॥ इत्यैतरेयोपनिषत्सुतृतीयारण्यकेद्वितीयो
ध्यायः ॥ ३ ॥ २ ॥ इतितृतीयारण्यकं संपूर्णम् ॥ ३ ॥

पयासंहितयैतदेवसर्वत्रोच्यतइतिससंपूर्णबलंसर्वप्रणेतृत्वशक्त्यादियुक्तंविष्णुंवेद॥अथेत्यादिकाअपिसंहि
तारूपाएव॥ पदवर्णयोःपृथगनभिव्याहारात्॥तस्मात्सर्वशब्दाविष्णुनामव्याख्यानरूपाएव ॥ यद्वयंसंहि
तायुक्तत्वेनचोधीमहेतेनास्माकंणशब्दषशब्दार्थरूपोविष्णुरुपात्तः॥तद्व्याख्यानत्वात्सर्ववाचाम् ॥ वीत्युप
सर्गत्वादुकारस्यचताच्छील्यार्थत्वादुक्तार्थविशेषणरूपत्वेनप्रसिद्धत्वान्नपृथक्तयोर्व्याख्यानमत्रकृतम्॥

ऋचइतिसर्ववाचादिकपदैमुपलक्षणम् ॥ अतःसर्ववेदादिशब्दोदितःसर्वगुणपरिपूर्णोभगवान्नारायणइ
तिसिद्धम् ॥ सर्वैश्चवैदिकपदैरपिलोकशब्दैर्मेघाग्निवारिधितलादिरवैश्चसर्वैः ॥ एकोभिधेयपरिपूर्णगुणः
प्रियोलंनारायणोममसदैवसुतुष्टिमेतु।६॥यस्यत्रीण्युदितानिवेदवचनेरूपाणिदिव्यान्यलंबट्तद्दर्शनमित्थ
मेवनिहितंदेवस्यभर्गोमहत् ॥ वायोरामवचोनयंप्रथमकंपृक्षोद्वितीयंवपुर्मध्वोयत्तुतृतीयकंकृतमिदंभाष्यं
हितेनप्रभौ॥ हनुशब्दोज्ञानवाचीहनूमान्मतिशब्दितः॥ रामस्यस्वतरूपस्यवाचस्तेनानयंतहि॥ भृतमोभी
मइत्युक्तोवाचोमामातरःस्मृताः ॥ मध्वित्यानंदउद्दिष्टोवेतितीर्थमुदाहृतम् ॥ मध्वआनंदतीर्थःस्यात्तृती
यामारुतीतनुः ॥ इतिसूक्तगतंरूपत्रयमेतन्महात्मनः॥योवेदवेदवित्सस्यात्तत्त्ववित्तत्प्रसादतइतिच॥साधको
रामवाक्यानांतत्समीपगतःसदा॥हनूमान्प्रथमोज्ञेयोभीमस्तुबहुभुक्पितोः ॥ पृतनाक्षयकारीचद्वितीयस्तुतृ
तीयकः॥पुर्णप्रज्ञस्तथानंदतीर्थनामाप्रकीर्तितः॥दशेतिसर्वमुद्दिष्टंसर्वपूर्णमिहोच्यते॥प्रज्ञाप्रमतिरुद्दिष्टापूर्ण
प्रज्ञस्ततःस्मृतः ॥ आसमंतात्पतित्वेतुगूढंकलियुगेहरिम् ॥ असत्यमप्रतिष्ठंचजगदेतदनीश्वरम् ॥ वदद्भिर्गू
हितंसंततृतीयोसुर्मथायति ॥ येनविष्णोर्हिवर्पाख्यान्गुणानज्ञासिषुःपरान् ॥ ईशानासःसूरयश्चनि
गूढान्निर्गुणोक्तिभिः ॥ त्रेतायांद्वापरेचैवकलौचैतेक्रमात्रयः ॥ एतेषांपरमोविष्णुर्नेतासर्वेश्वरेश्वरः ॥ स्व
यंभुब्रह्मसंज्ञोसौपरस्मैब्रह्मणेनमइतिच ॥ पूर्णागण्यगुणोदारधाम्नेनित्यायवेधसे ॥ अमंदानंदसांद्रायप्रे
यसेविष्णवेनमः ॥ इतिश्रीमदानंदतीर्थभगवत्पादाचार्यविरचितेश्रीमन्महैतरेयोपनिषद्भाष्येतृतीयप्रप
ट्केद्वितीयोऽध्यायः ॥ ३ ॥ २ ॥ तृतीयप्रपट्ककःसंपूर्णः ॥ इतिश्रीमन्महैतरेयोपनिषद्भाष्यंसंपूर्णम् ॥

॥ इत्यैतरेयोपनिषत् सभाष्या सम्पूर्णा ॥ १६ ॥

॥ अथ बृहदारण्योपनिषद्भाष्यसमेता ॥ १८ ॥

श्रीमद्भारतीरमणमुख्यप्राणांतर्गतश्रीमद्वेंकटेशायनमः॥ॐ॥प्राणादेरीशितारंपरमसुखनिधिंसर्वदोषव्यपेतं
सर्वांतस्थंसुपूर्णंप्रकृतिपतिमजंसर्वबाह्यंसुनित्यम्॥सर्वज्ञंसर्वशक्तिंसुरमुनिमनुजाद्यैःसदासेव्यमानंविष्णुंवंदे
सदाहंसकलजगदनाद्यंतमानंददंतम्॥१॥यथातुष्टावलक्ष्मीशंसर्गादौचतुराननः॥ तथाजगादसूर्याययाज्ञव
ल्क्यायसोऽब्रवीत्॥२॥वाजिरूपेणसूर्येणप्रोक्तंवाजसनेयकम् ॥ कण्वाययाज्ञवल्क्योऽदात्काण्वंतेनप्रकी
र्तितमितिवाराहे॥अश्वस्वरूपोब्रह्माभूदश्वरूपाज्जनार्दनात्॥तत्रसन्निहितोविष्णुरश्वरूपःस्वयंप्रभुः॥तयोश्च
प्रतिमामेध्योयतोऽश्वोयंश्रुतौश्रुतः॥सर्वंजगत्तदंगेषुतस्मात्सन्निहितंस्मृतम् ॥तयोरंगेष्विदंयस्माज्जगत्सर्वंप्रति
ष्ठितमितिप्रध्याने॥उच्चैःश्रवाःसन्निहितोमेध्येश्वेतत्रकेशवः ॥ तस्मिन्निदंजगत्सर्वंब्रह्माचोच्चैःश्रवःस्थितइ

श्रीमद्भारतीरमणमुख्यप्राणांतर्गतश्रीविष्णवे नमः ॥ ॥ ॐउषावाअश्वस्यमेध्यस्यशिरः
सूर्यश्चक्षुर्वातःप्राणोव्यात्तमग्निर्वैश्वानरःसंवत्सरआत्माऽश्वस्यमेध्यस्यद्यौःपृष्ठमंतरिक्षमुदरंपृ

तिसौपर्णे ॥ पर्वताःसिकताश्चैवनद्यःकूपाःसरांसिच ॥ हविःकपालयूपाद्योदवताएवसर्वशः ॥ तत्तन्नामै
वनामैषाभिन्नानामभिमानतः ॥ नामानितान्यपिहरेःसहिसर्वगुणाधिकइतिनारदीये ॥ उषाःशिरोब्रह्मना
मतत्त्वमस्यादयोखिलाः ॥ सप्तम्यर्थाःसमुद्दिष्टाःपंचम्यर्थास्तथाश्रुताः ॥ षष्ठ्यर्थाश्चचतुर्थ्यर्थास्तृतीया
र्थाश्चसर्वशः॥तदैक्यवाचिवच्छब्दाअपितद्वत्ववाचकाः॥ऐक्यार्थानैवतेसर्वेभिन्नरूपायतःसदा॥ईशांगवा
चिनोवास्युस्तेषामेवतदर्थतः ॥ सप्तसुप्रथमायस्मात्तत्तद्योग्यार्थताभवेदितिब्रह्मतर्के ॥ अंगप्रत्यंगशोव्या
प्तोविष्णुरेवतुरंगमे ॥ अतोविष्णवंगगंसर्वंमेध्यांगस्थमुदीरितमितिच ॥ पुनरप्यश्वस्यमेध्यस्येतिवचनंकस्य
चिदश्वस्यैवमासीदितीतिहासरूपेणनोच्यतेकिंतुसर्वमेध्यानामेवमितिज्ञापनार्थम् ॥ सर्वव्यक्तिष्वभिव्या

स्यैतात्पर्याधिक्यवित्तये॥प्रतीतानुपपत्तेरप्याभासत्वविवक्षया॥पुनर्वचनमुद्दिष्टंशतशोपिपृथक्पृथगिति
च ॥ विष्णोःपुरीषस्थानीयाकाठिन्यात्पृथिवीश्रुता ॥ तत्स्थत्वात्सिकताःसर्वाउवध्यस्थाःप्रकीर्तिताः ॥
उव्ध्यास्तुपादगत्वेपिनोवध्यत्वंविरुध्यते ॥ यतस्तदभिमानिन्योदेवताअनुकीर्तिताः ॥ तासांचबहुरूप
त्वादैश्वर्याच्चपरेशितुरितिच ॥ अवांतरदिशोविष्णोरस्थिपुच्छान्युदाहृताः ॥ पूर्वपश्चार्धभेदेनदिशःपार्श्वे
प्रकीर्तिते ॥ शिरश्चपादमूलानिपुच्छंषड्ऋतवःस्मृताः ॥ संवत्सराभिमानीचब्रह्मासर्वशरीरगः ॥ क्लोमानश्च
यकृच्चैवमांसौगिर्यभिमानिनः ॥ आंत्रेषुनद्यःसर्वाश्चसोयंविष्णुःसनातनइतिच ॥ नभोभिमानीविघ्नेशो

थिवीपाजस्यंदिशःपार्श्वेअवांतरदिशःपरिशवऋतवोंगानिमासाश्चार्धमासाश्चपर्वाण्यहोरात्रा
णिप्रतिष्ठानक्षत्राण्यस्थीनिनभोमांसान्युवध्यंसिकताःसिंधवोगुदायकृच्चक्लोमानश्चपर्वता
ओषधयश्चवनस्पतयश्चलोमान्युद्यन्पूर्वार्धोनिम्लोचन्जघनार्धोयद्विजृंभतेतद्विद्योततेयद्विधू
नतेतत्स्तनयतियन्मेहतितद्वर्षतिवागेवास्यवाक् ॥ १ ॥ अहर्वाअश्वंपुरस्तान्महिमान्वजाय
ततस्यपूर्वेसमुद्रेयोनीरात्रिरेनंपश्चान्महिमान्वजायततस्यापरेसमुद्रेयोनिरेतौवाअश्वंमहिमाना

विष्णोर्मांसाश्रितःसदा ॥ अंतरिक्षाभिमानीचतत्सूनुरुदरेस्थितइतिच ॥ १ ॥ अश्वपूर्वापरौहोम्यौमहि
मानौग्रहौस्मृतौ ॥ अहोरात्राभिमंतारौतयोरप्यभिमानिनौ ॥ कामश्चाथरतिश्चैवविष्णुब्रह्मशरीरजौ ॥
समुद्रेकात्समुद्रस्तुविष्णुःपूर्वउदाहृतः ॥ उपचारेणतूद्रेकादपरश्चचतुर्मुखः ॥ सविष्णुर्हयनामासन्देववा
हेषुसंस्थितः ॥ वाजिनामातुगांधर्वेष्वर्वनामासुरेषुच ॥ मनुष्येष्वश्वनामासौतद्बंधुःस्वयमेवसः ॥ तस्मा
देवोत्थितिस्तस्यरूपभेदोनतस्यच ॥ ऐश्वर्यात्सतथापीशोव्यक्तिभावंगमिष्यति ॥ हत्वायातियतःशत्रून्ह

रिस्तस्माद्धयःस्मृतः ॥ सर्वदायुद्धकर्तृत्वाद्वाजीचापिप्रकीर्तितः ॥ अर्वाभिगमनादुक्तआशुत्वादश्वउच्य
तइतिवैहायसे ॥ तेषांतेषांवाहनेषुस्थितत्वातत्तत्कर्मकर्तृत्वात्तत्तन्नामा ॥ पततिनियतंहंतुंदेवाश्वाःशत्रु
मूर्धसु ॥ वेगाधिकाआसुराश्वावेगमात्रंनृवाहनइतिस्कांदे ॥ गंधर्वास्तुसदायुद्धरतादेवानुगायतः ॥ तद
शक्तौतुदेवानांयुध्यंतेस्वामिनोयतः ॥ केचिद्दानरतानित्यंगंधर्वानर्तकाःपरे ॥ केचिद्वाद्यरतानित्यंचारणा
देवचारकाइतिच ॥ २ ॥ इत्यश्वब्राह्मणम् ॥ ३ । १ ॥ ॥ ॥ ॥
सर्वसंहारकंविष्णुंदेवींजीवांस्तथैवच ॥ कालंत्रिगुणसाम्यंचकर्माणिप्राणमिंद्रियम् ॥ संस्कारंचैववेदांश्च
नर्तेकिंचिल्लयेत्वभूदितिब्रह्मतर्के ॥ लयकालेपरमात्मनैवावृतमासीत् ॥ अशनंजगदेतद्यन्नयत्यात्मेच्छया

वभितःसंबभूवतुर्हयोभूत्वादेवानवहद्वाजीगंधर्वानर्वाऽसुरानश्वोमनुष्यान्समुद्रएवास्यबंधुःस
मुद्रोयोनिः॥ २ ॥ ॥ इतिप्रथममश्वब्राह्मणम् ॥ ३ ॥ १ ॥
नैवेहकिंचनाग्रआसीन्मृत्युनैवेदमावृतमासीदशनाययाअशनायाहिमृत्युस्तन्मनोकुरुतात्म

हरिः ॥ अशनायाततःप्रोक्तउदन्याकर्मनायकइतिब्राह्मे ॥ अन्यत्रनेतृत्वप्रतीतावपिश्रुतिषुप्रसिद्धेःसएवने
त्याह॥अशनायाहिमृत्युरिति ॥ तत्ततएवमनोऽकुरुतयतःस्वयमेवासीन्नान्यत्॥आत्मवान्स्यामित्यैच्छत्॥
शरीरवान्स्यामितिअप्स्रष्टयर्थंमनोकुरुत ॥ ऐच्छद्विष्णुरदेहःसन्देहवान्स्यामितिप्रभुः ॥ यतोदेहइदंसर्वं
तस्यविष्णोरदेहिनः ॥ तद्वशत्वात्स्वयंदेवश्चिदानंदशरीरकः ॥ सोत्मानमर्चन्नचरदप्स्रष्ट्यर्थंजनार्दनः ॥ ॥ २ ॥
यत्कुर्वन्यत्सृजेदीशस्तद्भवेद्धितदात्मकम् ॥ अतोर्चतोयतोजाताआपोतोर्चनसाधनाः ॥ अन्यथाकर्तुमी
शोपिक्रीडयातत्तदात्मकम् ॥ कर्तुंतत्तत्प्रवृत्तिःसंस्तत्करोतिस्वयंप्रभुरितिब्रह्मांडे ॥ मेसर्वाहेयस्यविष्णोः ॥

अस्मच्छब्दगतैर्विष्णुर्वाच्यःसप्तविभक्तिभिः ॥ सर्वाहेयत्वतस्त्वेकःसर्वस्यप्रतियोगितः ॥ युष्मच्छब्दाभि
धेयश्चतच्छब्दैश्चपरोक्षतः ॥ सएवबहुरूपत्वाद्बहुशब्दाभिधानवान् ॥ जीवस्थितेनरूपेणहृद्रेनापिद्विधो
च्यते ॥ भिन्नोपिसर्वजीवेभ्यःसर्ववस्तुभ्यएवच ॥ पूर्णानंदादिरूपस्यकुतोल्पसुखिनैकतेतिब्रह्मतर्के ॥ उ
दकंसुखहेतुत्वात्कमित्येवाभिधीयते ॥ तदेवास्यार्चतोजातमतोर्कइतिकीर्त्यतइतिव्यासनिरुक्ते ॥ अर्च
तोजातंसुखसाधनंचेत्यर्कइत्यर्थः ॥ कंसुखमस्मैभवति ॥ अपांहिसुखहेतूनांवेदविष्णोर्जनिंहियः ॥
समुक्तःसुखभागेवस्याद्विष्णोस्तुप्रसादतइतिमाहात्म्ये ॥ १ ॥ अर्कशब्दस्यादित्येप्रसिद्धत्वादप्शब्दो
पितत्रेत्याशंकांनिवर्तयितुमापोवाअर्कइतिपुनर्वचनम् ॥ नादित्येर्कशब्दःकिंत्वप्स्वेवार्कशब्दइत्यर्थः ॥

न्वीस्यामितिसोर्चन्नचरत्तस्यार्चतआपोजायंतार्चतोवैमेकमभूदितितदेवार्कस्यार्कत्वंकंह
वाअस्मैभवतियएवमेतदर्कस्यार्कत्वंवेद ॥ १ ॥ आपोवाअर्कस्तद्यदपांशरआसीत्तत्स
महन्यतसापृथिव्यभवत्तस्यामश्राम्यत्तस्यश्रांतस्यतप्तस्यतेजोरसोनिरवर्तताग्निः ॥ २ ॥

शरोमंडः ॥ फेनरूपस्तुयोमंडोजलस्थोसौसुसंहतः ॥ पृथिवीत्वंसमापन्नस्तस्यांशिश्येजनार्दनः ॥ त
तःसचिंतयामासस्यादग्निरितिदेवराट् ॥ तच्चिंतनात्समुत्पन्नोवायुरग्न्यभिधानवान् ॥ अग्रजत्वादग्रणी
त्वाद्वायोरग्नित्वमिष्यतइतिप्रवृत्ते ॥ शक्तिविस्रंसनेचापिशयनेचापिकीर्तितः ॥ श्रमशब्दोहरेर्नैवशक्तिवि
स्रंसनंक्वचित् ॥ अतोहरेःश्रमोनामशयनंसंप्रकीर्तितमितिब्रह्मतर्के ॥ तस्यामश्राम्यदितिसाधिकरणत्वा
च्चशयनंयुक्तम् ॥ नहिपृथिव्यांश्रमोनामांतःकरणधर्मोयुज्यते ॥ अधिकरणपरंपराकल्पनंचक्लिष्टकल्प
नम् ॥ सृष्ट्वासपृथिवींविष्णुःशेतेनंतेब्धिमध्यगः ॥ तस्यांपृथिव्यांश्वेताख्येदीपेमुक्तैरुपास्यतइतिमु

क्तिसंहितायाम् ॥ तमआलोचनायुक्तस्तस्मात्कार्यार्थकामना ॥ तमतातुहरेरुक्ताकुतोदुःखहेरःप्रभोरि
तिब्रह्मतर्कें ॥ तेजोरसः जगतःसामर्थ्यसारभूतः ॥ २ ॥ वायुरग्निरितिप्रोक्तोग्रयणीत्वादथांगिनाम् ॥ नेतृ
त्वाददनाच्चापितस्यस्रष्टाजनार्दनः ॥ सवायुर्वायुरूपेणजगत्पातिशरीरगः ॥ आदित्यस्थेनरूपेणजग
द्यातिप्रकाशयन् ॥ अग्निस्थेनतुरूपेणहूयतेसर्वयष्टृभिः ॥ आदाययात्यायुरितिसएवादित्यउच्यते ॥
तत्संबंधात्तुतन्नामसूर्यस्याग्नेस्तथैवच ॥ सएषकूर्मरूपेणवायुरंडोदकेस्थितः ॥ विष्णुनाकूर्मरूपेण
धारितोनंतधारकः ॥ अप्सुपादाहिचत्वारोग्रंडोदेकोणसंस्थिताः ॥ उरस्तुभूमिसंश्लिष्टमतिरिच्यभु
वंपुनः ॥ पार्श्वतःपृष्ठतश्चैवशिरश्चोदकसंस्थितम् ॥ आकाशमुदरेतस्यद्यौःपृष्ठेसंस्थिताविभोः ॥ एवंवि

**सत्रेधात्मानंव्यकुरुतादित्यंतृतीयंवायुंतृतीयंअग्निंतृतीयंसएषप्राणस्त्रेधाविहितस्तस्यप्राची**
**दिक्शिरोसौचासौचेर्मावथास्यप्रतीचीदिक्पुच्छमसौचासौचसक्थ्यौदक्षिणाचोदीचीचपार्श्वे**
**द्यौःपृष्ठमंतरिक्षमुदरमियमुरस्सएषोप्सुप्रतिष्ठितोयत्रक्वचैतितदेवप्रतितिष्ठत्येवंविद्वान्॥३॥**

द्वांस्तुयत्रैतितत्रैवप्रतितिष्ठतीतिप्रभंजने ॥ स्थानेच्छाचेत्तत्रैवप्रतितिष्ठति ॥ उपास्तेकूर्मरूपंयोवायुंसं
स्थितिमाप्नुयात् ॥ इच्छयाविनिवृत्तिंवालोकंचावृत्तिवर्जितमित्यध्यात्मे ॥ सएषप्राणस्त्रेधाविहितइति
वचनाच्चवायुः ॥ बिभर्त्यंडंहरिःकूर्मस्त्वंडेचाप्युदकंमहत् ॥ उदकेकूर्मरूपस्यवायुःपुच्छंसमाश्रितः ॥ वा
योःपुच्छंसमाश्रित्यशेषस्तुपृथिवीमिमाम् ॥ बिभर्तितस्यांचजगदिदंसर्वंप्रतिष्ठितमितिवैभवे ॥ वायोस्तु ॥ ३ ॥
कूर्मरूपस्यपूर्वतश्चोदकेमुखम् ॥ आग्नेयेशानगौबाहूपादौनिर्ऋतिवायुगावितिप्रकृष्टे ॥ २ ॥ आत्माब्र
ह्मामेद्वितीयोजायेतेत्यकामयत ॥ वायुरेवब्रह्माभवतीतिदर्शयितुंवायोःसृष्टिःप्रथममुक्ता ॥ वायुरेवय

श्वरूपमात्मानं निवारितवह्निभुः ॥ चारयामासरूपेणतदन्येनपुमात्मना ॥ सर्वस्मिन्भुवनेचाब्दंतदंतेपर
मात्मने ॥ स्वस्मिन्स्थितायसंकल्प्ययज्ञआलभतात्मवान् ॥ अजादिकान्पशूनन्यदेवस्थपरमात्मने ॥ क
र्तृत्वेनपशुत्वेनयत्फलंतदशेषतः ॥ ममस्यादितिमन्वानःसोश्वरूपमधारयत् ॥ अबुद्धिपूर्वमरणात्स्वर्गश्चा
पिपशोर्भवेत् ॥ ज्ञानपूर्वपशोःपुंसःकिमुवक्तव्यमित्यजः ॥ एवंसूर्योप्यश्वमेधनामासंवत्सराभिधः ॥ सू
र्येस्थितोयतोब्रह्माह्यश्वमेधाभिधःस्वयम् ॥ सूर्येततत्वात्सूर्यात्माब्रह्मासौपरिकीर्तितः ॥ अग्नौस्थितोयतः

यशोवीर्यमुदक्रामत्प्राणावैयशोवीर्यंतत्प्राणेषूत्क्रांतेषुशरीरंश्वयितुमध्रियततस्यशरीरएवमन
आसीत्॥६॥ सोकामयतमेध्यंमइदंस्यादात्मन्व्यनेनस्यामितिततोश्वःसमभवद्यदश्वत्तन्मे
ध्यमभूदितितदेवाश्वमेधस्याश्वमेधत्वमेषहवाअश्वमेधंवेदयएनमेवंवेद॥ तमनवरुध्येवामन्य
ततंसंवत्सरस्यपरस्तादात्मनआलभतपशून्देवताभ्यःप्रत्यौहत्तस्मात्सर्वदैवत्यंप्रोक्षितंप्राजाप
त्यमालभंतएषहवाअश्वमेधोयएषतपतितस्यसंवत्सरआत्माऽयमग्निरर्कस्तस्येमेलोकाआत्म
नस्तावेतावर्काश्वमेधौसोपुनरेकैवदेवताभवतिमृत्युरेवापपुनर्मृत्युंजयतिनैनंमृत्युराप्नोतिमृत्युर

सोर्कस्तस्मादग्निरितीर्यते ॥ ब्रह्माततायतोलोकास्तदात्मानस्ततोमताः ॥ ब्रह्मसूर्याग्निलोकेषुव्याप्तैकादेव
ताहरिः ॥ तादृशंनृहरिंज्ञात्वापुनर्मृत्युंजयन्नसौ ॥ सदैववर्ततेब्रह्मापुनर्मृत्युर्मृतिःस्मृता ॥ नैनंमृत्यात्मको
मृत्युःप्राप्नोतिहरिसेवनात् ॥ यस्मान्नृसिंहोमृत्योश्चमृत्युरात्मास्यवैभवेत् ॥ आततत्वात्तथात्तृत्वादात्मा
सौब्रह्मणःस्मृतः ॥ आदानादात्तनि[illegible]ादात्तज्ञानात्तथैवच ॥ एतासांदेवतानांचब्रह्मेशत्वेनवर्तते ॥ नृसिं
हस्यसदाज्ञानाद्ध्यानाच्चतदनुग्रह[illegible]हासंहितायाम् ॥ भूयःशब्दःपूर्णत्ववाची ॥ परमेश्वरंपरिपूर्णंय

जेयेति ॥ अश्वदित्यश्वोभवत्तद्देवरूपंमेध्यंयज्ञआलभनीयंचाभवदित्यश्वमेधः ॥ तमनवरुध्येवामन्यते
त्यादिवाक्यशेषादश्वभावःप्रतीयते ॥ अश्वत्वंहितंपश्चान्मेध्यंचाभूद्यस्यशरीरंसोश्वमेधइतिच ॥ निरोध
मकृत्वाचारयिष्यामीत्यमन्यत ॥ स्वेच्छयैवस्वरूपांतरत्वादश्वरूपस्य॥६।७॥ इत्यश्वमेधब्राह्मणम्॥३।२॥
द्वयाब्रह्मसुतास्तत्रदैतेयाबहवःस्मृताः ॥ तमोरूपाःसत्त्वरूपाअल्पसंख्याःसुराःस्मृताः ॥ बहुत्वात्तैर्जिता
देवाःशंकरस्यवरेणच ॥ यज्ञेनविष्णुमभ्यर्च्यतत्रोद्गातृबलेनच ॥ जयामैनानितिस्मृत्वावह्न्यादीनप्य
चूचुदन् ॥ औद्गात्रेग्निमुखाःसर्वेइंद्ररुद्रौचवेधितौ ॥ असुरैःपापपूगेनमुख्यवायुंततोब्रुवन् ॥ दैत्यास्तंवेद्धु

स्यात्माभवत्येतासांदेवतानामेकोभवति ॥७॥ ॥ इतिद्वितीयमश्वमेधब्राह्मणम् ॥३॥ २ ॥
द्वयाहप्राजापत्यादेवाश्चासुराश्चततःकानीयसाएवदेवाज्यायसाअसुरास्तएषुलोकेष्वस्पर्धंत
तेहदेवाऊचुर्हंतासुरान्यज्ञउद्गीथेनात्ययामेति॥१॥ तेहवाचमूचुस्त्वंनउद्गायेतितथेतितेभ्योवा
गुदगायद्योवाचिभोगस्तंदेवेभ्यआगायद्यत्कल्याणंवदतितदात्मनेतेविदुरनेनवैनउद्गात्रात्ये
ष्यंतीतितमभिद्रुत्यपाप्मनाविध्यन्त्सयःसपाप्मायदेवेदमप्रतिरूपंवदतिसएवसपाप्मा ॥२॥

मीप्संतोध्वस्तानेशुश्चसर्वशः ॥ पांसुपिंडोयथावज्रशिलांप्राप्यैवनश्यति ॥ तस्मादखंडशक्तिःसमुख्यवा
युरुदाहृतः ॥ शापैरथवैरैर्वापिनास्यप्रतिहतिर्भवेत् ॥ स्वेच्छयैवानुसारेणविनाकुत्रापिपुत्रकाः ॥ एवंविद
पिपापेभ्यःशत्रुभ्योपिप्रमुच्यते ॥ सवायुरुद्रशक्रादेर्वासुदेवबलाश्रयः ॥ विमोच्यपापसंघातंदिशामंतेष्व
थाक्षिपत् ॥ उन्मुच्यमृत्योस्तांश्चैवाधोर्ध्वलोकेषुचावहत् ॥ अग्निर्नासिक्यवायुश्चदिक्पाइंद्रादयोखि
लाः ॥ सूर्यःसोमश्चरुद्रश्चतेनैवस्वपदेस्थिताः ॥ स्त्रीगुणैःसर्वपूर्णत्वाद्बृहतीतुसरस्वती ॥ अनंतवेदरूपत्वा

त्सैवब्रह्मेतिकीर्तिता ॥ विष्णुनाबृंहितत्वाद्वातत्पतिर्वायुरीश्वरः ॥ सारत्वात्स्त्रीषुसादेवीसेत्युक्तासामरूप

अथहप्राणमूचुस्त्वंनउद्गायेतितथेतितेभ्यःप्राणउदगायद्योप्राणेभोगस्तंदेवेभ्यआगायद्यत्क
ल्याणंजिघ्रतितदात्मने ॥ तेविदुरनेनवैनउद्गात्रात्येष्यंतीतितमभिद्रुत्यपाप्मनाविध्यन्सयः
सपाप्मायदेवेदमप्रतिरूपंजिघ्रतिसएवसपाप्मा॥३॥अथहचक्षुरूचुस्त्वंनउद्गायेतितथेतितेभ्य
श्चक्षुरुदगायद्यश्चक्षुषिभोगस्तंदेवेभ्यआगायद्यत्कल्याणंपश्यतितदात्मनेतेविदुरनेनवैनउद्गा
त्रात्येष्यंतीतितमभिद्रुत्यपाप्मनाविध्यन्सयःसपाप्मायदेवेदमप्रतिरूपंपश्यतिसएवसपाप्मा
॥४॥अथहश्रोत्रमूचुस्त्वंनउद्गायेतितथेतितेभ्यःश्रोत्रमुदगायद्यःश्रोत्रेभोगस्तंदेवेभ्यआगाय
द्यत्कल्याणꣳशृणोतितदात्मनेतेविदुरनेनवैनउद्गात्रात्येष्यंतीतितमभिद्रुत्यपाप्मनाविध्यन्स
यःसपाप्मायदेवेदमप्रतिरूपꣳशृणोतिसएवसपाप्मा ॥५ ॥ अथहमनऊचुस्त्वंनउद्गायेतितथे
तितेभ्योमनउदगायद्योमनसिभोगस्तंदेवेभ्यआगायद्यत्कल्याणंसंकल्पयतितदात्मनेतेविदुर
नेनवैनउद्गात्रात्येष्यंतीतितमभिद्रुत्यपाप्मनाविध्यन्सयःसपाप्मायदेवेदमप्रतिरूपꣳसंकल्प
यतिसएवसपाप्मैवमुखल्वेतादेवताःपाप्मभिरुपासृजन्नेवमेनाःपाप्मनाविध्यन् ॥ ६ ॥ अ
थहेममासन्यंप्राणमूचुस्त्वन्नउद्गायेतितथेतितेभ्यएषप्राणउदगायत्तेविदुरनेनवैनउद्गात्रात्ये
ष्यंतीतितमभिद्रुत्यपाप्मनाविध्यन्सयथाश्मानमृत्वालोष्टोविध्वꣳसतैवꣳहैवविध्वꣳसमाना
विष्वंचोविनेशुस्ततोदेवाअभवन्परासुराभवत्यात्मनापरास्यद्विषन्पाप्माभ्रातृव्योभवतियए

तः ॥ गीथेत्युक्तातदुद्गीथःसामाख्योर्धतनुस्तथा ॥ अर्धनारीनरवपुर्वायुःकुत्रचिदीरितः ॥ अयास्योवि

वंवेद ॥ ७ ॥ तेहोचुःक्वनुसोभूद्योनइत्थमसक्तेत्ययमास्येंतरितिसोयास्यआंगिरसोंगानाꣳहि
रसः ॥ ८ ॥ सावाएषादेवतादूर्नामदूरꣳह्यस्यामृत्युर्दूरꣳहवाअस्मान्मृत्युर्भवतियएवंवेद
॥९॥ सावाएषादेवतैतासांदेवतानांपाप्मानंमृत्युमपहत्ययत्रासांदिशामंतस्तद्गमयांचकारत
दासांपाप्मनोविन्यदधात्तस्मान्नजनमियान्नांतमियान्नेत्पाप्मानंमृत्युमन्ववायानीति॥१०॥
सावाएषादेवतैतासांदेवतानांपाप्मानंमृत्युमपहत्याथैनामृत्युमत्यवहत् ॥ ११ ॥ सवैवाचमे
वप्रथमामत्यवहत्सायायदामृत्युमत्यमुच्यतसोग्निरभवत्सोयमग्निःपरेणमृत्युमतिक्रांतोदीप्य
ते ॥ १२ ॥ अथप्राणमत्यवहत्सयदामृत्युमत्यमुच्यतसवायुरभवत्सोयंवायुःपरेणमृत्युमति
क्रांतःपवते ॥ १३ ॥ अथचक्षुरत्यवहत्तद्यदामृत्युमत्यमुच्यतसआदित्योभवत्सोसावादित्यः
परेणमृत्युमतिक्रांतस्तपति ॥ १४ ॥ अथश्रोत्रमत्यवहत्तद्यदामृत्युमत्यमुच्यततादिशोभव
ꣳस्ताइमादिशःपरेणमृत्युमतिक्रांताः ॥ १५ ॥ अथमनोत्यवहत्तद्यदामृत्युमत्यमुच्यतसचं
द्रमाअभवत्सोसौचंद्रःपरेणमृत्युमतिक्रांतोभात्येवꣳहवाएनमेषादेवतामृत्युमतिवहतियएवंवे
द ॥ १६ ॥ अथात्मनेन्नाद्यमागायद्यद्धिकिंचान्नमद्यतेअनेनैवतदद्यतइहप्रतितिष्ठति
॥ १७ ॥ तेदेवाअब्रुवन्नेतावद्वाइदꣳसर्वंयदन्नंतदात्मनआगासीरनुनोस्मिन्नन्नआभजस्वे
तितेवैमाभिसंविशतेतितथेतितꣳसमंतंपरिण्यविशंततस्माद्यदनेनान्नमत्तितेनैतास्तृप्यंत्येवꣳ
हवाएनꣳस्वाअभिसंविशंतिभर्तास्वानाꣳश्रेष्ठःपुरएताभवत्यन्नादोधिपतिर्यएवंवेदयउहैवंविद
ꣳस्वेषुप्रतिप्रतिबुभूषतिनहैवालंभार्येभ्योभवत्यथयएवैतमनुभवतियोवैतमनुभार्यान्बुभूष
तिसहैवालंभार्येभ्योभवति ॥ १८ ॥ सोयास्यआंगिरसोंगानाꣳहिरसःप्राणोवाअंगा

श्वस्त्वग्यज्ञेतेनाविष्टोन्वगायत ॥ गृहकोशादिकंयत्स्वंतद्रूप्यस्यस्वरस्थितः ॥ भूषणस्वर्णरूपीचसएवापि
स्वरस्थितः ॥ वागिंद्रियंपीठरूपंतस्यदेवस्यसंस्थितम् ॥ गानकालेन्यदात्वन्नंप्राणपोठमितिस्मृतम् ॥ प

नाꣳरसःप्राणोहिवाअंगानाꣳरसस्तस्माद्यस्मात्कस्माच्चागात्प्राणउत्क्रामतितदेवतच्छुष्यत्ये
षहवाअंगानाꣳरसः ॥ १९ ॥ एषउएवबृहस्पतिर्वाग्वैबृहतीतस्याएषपतिस्तस्मादु
बृहस्पतिः ॥ २० ॥ एषउएवब्रह्मणस्पतिर्वाग्वैब्रह्मतस्याएषपतिस्तस्मादुब्रह्मणस्प
तिः ॥ २१ ॥ एषउएवसामवाग्वैसामैषसाचामश्चेतितत्साम्नःसामत्वंयद्वेवसमःप्लुषिणासमो
मशकेनसमोनागेनसमएभिस्त्रिभिर्लोकैःसमोनेनसर्वेणतस्माद्वेवसामाश्नुतेसाम्नःसायुज्यꣳसलो
कतांजयतियएवमेतत्सामवेद ॥ २२ ॥ एषउवाउद्गीथःप्राणोवाउत्प्राणेनहीदꣳसर्व
मुत्तब्धंवागेवगीथोच्चगीथाचेतिसउद्गीथः ॥ २३ ॥ तद्धापिब्रह्मदत्तश्चैकितानेयोराजा
नंभक्षयन्नुवाचायंत्यस्यराजामूर्धानंविपातयताद्यदीतोयास्यआंगिरसोन्येनोदगायदितिवा
चाचह्येवसप्राणेनचोदगायदिति ॥ २४ ॥ तस्यहैतस्यसाम्नोयःस्वंवेदभवतिहास्यस्वंतस्य
वैस्वरएवस्वंतस्मादार्त्विज्यंकरिष्यन्वाचिस्वरमिच्छेततयावाचास्वरसंपन्नयार्त्विज्यंकुर्यात्तस्मा
द्यज्ञेस्वरवंतंदिदृक्षंतएवाथोयस्यस्वंभवतिभवतिहास्यस्वंयएवमेतत्साम्नःस्वंवेद ॥ २५ ॥ त
स्यहैतस्यसाम्नोयःसुवर्णंवेदभवतिहास्यसुवर्णंतस्यवैस्वरएवसुवर्णंभवतिहास्यसुवर्णंयएवमे

वमानाइतिप्रोक्तामुख्यवायुत्वयोगिनः ॥ अनादिकालसंबद्धायोग्यतासाप्रकीर्तिता ॥ सर्वाधिक्यारोह
णंतुतेषामेवविमुक्तिगम् ॥ प्रस्तावकालेप्रस्तोतुंयोग्यावायुपदस्ययः ॥जपेद्यजूंषित्वेतानित्रीणिविष्णुंसदा

स्मरन् ॥ असतोमासदित्यादिविष्णुप्रार्थनभांजिच ॥ द्वात्रिंशल्लक्षणैःसम्यग्युक्तावायुत्वयोग्यकाः ॥
नियमेनैवविष्णोस्तुप्रादुर्भावाविशेषतः ॥ सहस्रारेणचक्रेणचिह्नितादक्षिणेकरे ॥ गदयाष्टास्रयाचैवशता
वर्तनकंबुना ॥ वामेकरेतथाब्जेनसहस्रदलशोभिना ॥ अष्टाविंशल्लक्षणाश्चगिरीशपदयोगिनः ॥ चतुर्वि
शतिमारभ्यषोडशादासुराःस्मृताः ॥ अष्टकादृषयश्चोक्तास्तदूनाश्चक्रवर्तिनः ॥ असद्दुःखात्मकोमृत्युः
सदानंदोमृतंस्मृतम् ॥ तमोज्ञानात्मकोमृत्युर्ज्योतिर्ज्ञानामृतंस्मृतम् ॥ मृत्योर्मामृतमित्यत्रमृत्युर्मरणमेव

तत्साम्नःसुवर्णंवेद ॥ २६ ॥ तस्यहैतस्यसाम्नोयःप्रतिष्ठांवेदप्रतिहतिष्ठतितस्यवैवागेवप्रतिष्ठा
वाचिहिखल्वेषएतत्प्राणःप्रतिष्ठितोगीयतेऽन्नइत्युहैकआहुः ॥ २७ ॥ अथातःपवमानानामे
वाभ्यारोहःसवैखलुप्रस्तोतासामप्रस्तौतिसयत्रप्रस्तूयात्तदेतानिजपेदसतोमासद्गमयतमसो
माज्योतिर्गमयमृत्योर्माऽमृतंगमयेतिसयदाहासतोमासद्गमयेतिमृत्युर्वाअसत्सदमृतंमृत्योर्मा
ममृतंगमयामृतंमाकुर्वित्येवैतदाहतमसोमाज्योतिर्गमयेतिमृत्युर्वैतमोज्योतिरमृतंमृत्योर्माम
मृतंगमयामृतंमाकुर्वित्येवैतदाहमृत्योर्माममृतंगमयेतिनात्रतिरोहितमिवास्त्यथयानीतराणि
स्तोत्राणितेष्वात्मनेऽन्नाद्यमागायेत्तस्मादुतेषुवरंवृणीतयंकामंकामयेततꣳसएषएवंविदुद्गाता

च ॥ एवंविद्वायुपदयोग्याउद्गातारएवतु ॥ यदाभवेयुस्तेषुतदायाजीतुवृणुयाद्वरम् ॥ आत्मनेयाजिने
वापिह्युद्गातैवंविधोयदि ॥ आगायेत्तद्भवेन्नात्रकार्याभीष्टेविचारणा ॥ एवंतंसामनामानंवायुंयोवेदसा
दरम् ॥ तस्येष्टलोकराहित्येनाशाकार्यारिणाक्वचित् ॥ तस्माद्वायुत्वयोग्यैर्हियेषांलोकाःप्रकीर्तिताः ॥ ॥ ७ ॥
तेषामलोकशंकाचनैवकार्याकदाचन ॥ यस्मान्नारायणस्यातिप्रियाःप्राणत्वयोगिनइत्यादिमहासंहि

तायाम् ॥ आस्यादयतइत्ययास्यः ॥ प्रसिद्धमृत्युमृतत्वान्नात्रतिरोहितमिवास्ति ॥ एषउद्गातेतिवायु
त्वयोग्यः ॥ तद्धैतल्लोकजिदेवेतितस्माद्वराभियाचनम् ॥ उद्गीथब्राह्मणम् ॥ २ । ३ ॥ इदमग्रेएतस्य।
ग्रेपरमात्मैवासीत् ॥ ततःपुरुषविधोब्रह्मासीत् ॥ पुरुषोविष्णुस्तद्विधत्वात्पुरुषविधः ॥ एतस्यजगतोग्र
यआसीन्नारायणःपरः ॥ एकएवश्रियासार्धंतमात्मापुरुषेत्यपि ॥ आद्यस्तस्मापुरुषविधोब्रह्मासमभ
वद्विभोः ॥ ब्रह्मादेश्चश्रियश्चैवनित्यंविष्णुर्गुणाधिकः ॥ यथातथैवरुद्रादेर्ब्रह्मायस्माद्गुणाधिकः ॥ एत
स्मात्पुरुषविधताब्रह्मणःसंप्रकीर्तिता ॥ सतुसर्वादिशोदृष्ट्वानान्यद्दृष्ट्वापितामहः ॥ अब्रवीदहमस्मीतिस्वा

त्मनेवायजमानायवायंकामंकामयतेतमागायतितद्धैतल्लोकजिदेवनहैवालोक्यतायाआशा
स्तिएवमेतत्सामवेद ॥ २८ ॥ इत्युद्गीथब्राह्मणम् ॥ ३ ॥ ३ ॥
आत्मैवेदमग्रआसीत्पुरुषविधःसोनुवीक्ष्यनान्यदात्मनोपश्यत्सोहमस्मीत्यग्रेव्याहरत्ततोहंना
माभवत्तस्मादप्येतर्ह्यामंत्रितोहमयमित्येवाग्रउक्त्वाथान्यन्नामप्रब्रूतेयदस्यभवतिसयत्पूर्वो
स्मात्सर्वस्मात्सर्वान्पाप्मनऔषत्तस्मात्पुरुषओषतिहवैसतंयोस्मात्पूर्वोबुभूषतियएवंवेद॥ १॥

हेयत्वमनुस्मरन् ॥ हातुंशक्यमिदंसर्वमासीदेकोभवंयतः ॥ अहेयत्वंस्वरूपस्यसएवंसमचिंतयत् ॥ त
तोभवदहंनामासचाभूत्पुरुषाभिधः ॥ ओषणात्सर्वपापानांपूर्वंपुरुषउच्यते ॥ नारायणप्रसादेनयएवंपुरु
षाभिधम् ॥ वेदस्वाभिमतंयस्तुपूर्वंप्राप्तुमभीप्सति ॥ ओषेत्सर्वमतुष्टःसन्ब्रह्मविष्णुप्रसादतः ॥ १ ॥ त
स्यत्वेकस्यसहसायतोभीःसमजायत ॥ तस्माद्यापिचैकस्यनिर्विवेकंभयंभवेत् ॥ विममर्शततोब्रह्मा
यस्मान्मेबाधकोनहि ॥ मयासृज्यायतःसर्वंइतःपश्चात्तनोहरः ॥ अतःकस्माद्बिभेमीतितस्यभीतिरपो

हिता ॥ विष्णोरतिप्रियत्वात्तु तदन्येषांपितृत्वतः ॥ कस्माद्भयंभवेत्तस्यसमानाद्धिभयंभवेत् ॥ विरोधि
नोधिकाद्वापिहीनाद्वापारवश्यतः ॥ हीनमेवयतस्तस्यसर्वमेवजगद्वशे ॥ नचजातंतदासर्वंहरिरेवयतः
परः ॥ २ ॥ नरेमेसततोब्रह्मातस्मादेकस्यनोरतिः ॥ अथापिपत्नीमैच्छच्चसस्थूलत्वमुपागतः ॥ दंपती

सोबिभेत्तस्मादेकाकीबिभेतिसहायमीक्षांचक्रेयन्मदन्यन्नास्तिकस्मान्नुबिभेमीतिततएवा
स्यभयंवीयायकस्माद्ध्यभेष्यद्द्वितीयाद्वैभयंभवति ॥ २ ॥ सवैनैवरेमेतस्मादेकाकीनरमतेस
द्वितीयमैच्छत्सहैतावानासयथास्त्रीपुमांसौसंपरिष्वक्तौसइममेवात्मानंद्वेधापातयत्ततःपति
श्चपत्नीचाभवतांतस्मादिदमर्धबृगळमिवस्वइतिहस्माहयाज्ञवल्क्यस्तस्मादयमाकाशःस्त्रि
यापूर्यतएवतांसमभवत्ततोमनुष्याअजायंत॥३॥सोहेयमीक्षांचक्रेकथंनुमात्मनएवजनयि
त्वासंभवतिहंततिरोसानीतिसागौरभवदृषभइतरस्तांसमेवाभवत्ततोगावोअजायंतबडवेतरा
भवदश्ववृषइतरोगर्दभीतरागर्दभइतरस्तांसमेवाभवत्ततएकशफमजायताऽजेतराऽभवद्बस्त
इतरोऽविरितरामेषइतरस्तांसमेवाभवत्ततोऽजावयोऽजायंतैवमेवयदिदंकिंचमिथुनमापिपी
लिकाभ्यस्तत्सर्वमसृजत ॥४॥ सोवेदहंवावसृष्टिरस्म्यहंहीदंसर्वमसृक्षीतिततःसृष्टिरभव
त्सृष्ट्यांहास्यैतस्यांभवतियएवंवेद ॥५॥ अथेत्यभ्यमंथत्समुखाच्चयोनेर्हस्ताभ्यांचाग्निमसृ

सहितौयावद्ब्रह्माचैवसरस्वती ॥ तावद्देहोभवद्ब्रह्मातदादेहंद्विधाकरोत् ॥ पातनात्पतिपत्नीत्वशब्दएनो
रजायत ॥ तस्मात्तयोरेकसुखंभवत्येवार्धपात्रवत् ॥ ततस्तस्यामुमेशादीन्देवान्सर्वान्मनूनपि ॥ जन
यामासबोधस्यप्राधान्यंहिमनुष्यता ॥ सर्वज्ञापितुसादेवीविरिंचेभक्तिमत्यपि ॥ तद्भार्यतामात्मनश्चनि

तरांधर्ममीक्षती ॥ अनाद्यनंतसंबंधमुभयोरपिजानती ॥ स्त्रीस्वभावंदर्शयंतीसाधर्ममिवचैक्षत ॥ ना
नास्रष्टिप्रसिद्ध्यर्थंसागोत्वादिकमाव्रजत् ॥ वृषादिरूपतांसोपिप्राप्यसृष्ट्वेदमंजसा ॥ सर्जनात्सृष्टिनामा
भूत्तद्वित्तरपुत्रतांव्रजेत् ॥ पिपीलिकांतरुद्रादौयथायोग्यत्वमात्मनः ॥ अथान्नादमथाप्यन्नंस्रक्ष्यामी
तिविचिंतयन् ॥ ओष्ठद्वयंममंथांतर्हस्तौचैवपरस्परम् ॥ तन्मुखाच्चैवहस्ताभ्यामंतरग्निरजायत ॥ एवंस
र्वस्यहेतुत्वात्सर्वस्यापिपतित्वतः ॥ सर्वेदेवाएषएवेत्याहुर्वेदविदोजनाः ॥ स्वतंत्रेषुयतःशब्दावर्तेयुःसर्वएवच ॥

जततस्मादेतदुभयमलोमकमंतरतोलोमकाह्यियोनिरंतरतस्तद्यदिमाहुरमुंयजामुंयजेत्येकैकं
देवमेतस्यैवसाविसृष्टिरेषउह्येवसर्वेदेवाअथयत्किंचेदमार्द्रंतद्रेतसोसृजततदुसोमएतावद्वाइदम
न्नंचैवान्नादश्चसोमएवान्नमग्निरन्नादःसैषाब्रह्मणोतिसृष्टिर्यच्छ्रेयसोदेवानसृजताथयन्मर्त्यः
सन्नमृतानसृजततस्मादतिसृष्टिरतिसृष्ट्याᳪं हास्यैतस्यांभवतियएवंवेद ॥६॥ ॥ प्राजापत्य
ब्राह्मणम्॥ तद्धेदंतर्ह्यव्याकृतमासीत्तन्नामरूपाभ्यामेवव्याक्रियताऽसौनामायमिदᳪंरूपइति
तदिदमप्येतर्हिनामरूपाभ्यामेवव्याक्रियतेऽसौनामायमिदंरूपᳪंइतिसएषइहप्रविष्टआनखा
ग्रेभ्योयथाक्षुरःक्षुरधानेऽवहितःस्याद्विश्वंभरोवाविश्वंभरकुलायेतंनपश्यंत्यकृत्स्नोहिसप्राण

सरेतसःपुनःसोममसृजद्ब्रह्मविद्वरः ॥ सर्वाधिकोपियोग्यत्वान्मर्त्यधर्मतयापुरा ॥ अवमोयोग्यताहीना
नप्यायुर्मात्रतोधिकाम्॥यतोस्त्रागतिसृष्टिस्तंदेवंयोवेदपूरुषः॥विष्णोःप्रसादतःसृष्टिंदेवलोकेसजायते ॥ आ
त्मयोग्यानुसारेणसुखज्ञानादियुक्ततेतिब्रह्मतर्के ॥ भगवदुपासनामाहात्म्यमेतदितिदर्शयितुंतद्यदिदमाहुरि
त्याद्यारंभः ॥ ॥ इतिप्राजापत्यब्राह्मणम्॥४॥विश्वंभरोवायुः॥अकृत्स्नोहिसइत्यस्याभिप्रायः॥सयोतएकै

॥ १ ॥ ३ । ४

कमुपास्तेनसवेदेत्यादिप्राणइत्यादिनामानिपरमेश्वरस्यनसर्वगुणसंपूर्णतांवदंतिकिंतुप्राणनादिकर्मकर्तृत्वमे
वर्वदंति ॥ आत्मशब्दएवसर्वगुणसंपूर्णत्वंवदति ॥ अस्यसर्वस्यगुणजातस्यायमात्मैवपदनीयआश्रयोय
स्मादतस्तंसर्वगुणवाचकेनात्मशब्देनैवोपासीत ॥ अनेनह्येतत्सर्वंवेदयस्मात्सर्वज्ञानप्रदस्तस्मात्सर्वगुणसंपूर्ण
इत्येवोपासनंतस्ययुक्तम्॥तदुपासनादेवसर्वज्ञत्वादयोभवंतिकिमुतस्येति पद्यतेअनेनेतिपदंसाधनम्॥यथा
तत्तत्साधनेनतत्तत्फलंप्राप्नुयादेवंसर्वगुणयुक्तत्वेनभगवदुपासनात्कीर्तिंश्लोकंचविंदते॥शंलोकःश्लोकःप
रमानंदंपरमंज्ञानंचेत्यर्थः॥लुक्प्रकाशइतिधातोः॥आसीदेकोहरिःपूर्वंदेवीनारायणीतथा ॥अन्यदव्यक्ततां
यातनद्व्यक्तंमकरोद्धरिः॥सृष्ट्वाजगदिदंसर्वंसृष्ट्वादेहांश्चसर्वशः ॥ आकेशादानखाग्रेभ्यःप्रविष्टःपुरुषोत्तमः

**न्नेवप्राणनामाभवतिवदन्वाक्पश्यंश्चक्षुःशृण्वञ्छ्रोत्रंमन्वानोमनस्तान्यस्यैतानिकर्मनामान्येव**
**सयोतएकैकमुपास्तेनसवेदाकृत्स्नोह्येषोतएकैकेनभवत्यात्मेत्येवोपासीतात्रह्येतेसर्वएकंभवं**

॥यथाप्राणःशरीरेषुक्षुरोयद्वत्क्षुरस्तुके॥प्रविष्टमपितंविष्णुंनपश्यंतिपृथग्जनाः ॥ प्रविष्टइतिजानंश्चनैनंजा
नातिसर्वशः ॥ यस्मात्तद्गुणभागोयंप्रवेशःप्राणनादिच ॥ तस्मात्प्राणादिनामानिकर्मनामानितस्यतु ॥
तस्मात्प्राणादिनाम्नायउपास्तेहरिमव्ययम् ॥ अकृत्स्नोपासकःसस्याद्यस्मात्तद्गुणभागवित् ॥ पूर्णत्वेपि
परेशस्ययस्तुतद्गुणभागवित् ॥ अकृत्स्नवित्स्यात्कृत्स्नस्यवेत्तात्मेतिविदेवयः ॥ चिदानंदादयोयस्यगु
णाआप्ताःसदैवतु ॥ सआत्मेतिप्रविज्ञेयोगुणानामाप्तितोहरिः ॥ प्राणनादीनिकर्माणिचात्मशब्दोदिता ॥ १ ॥
नितु ॥ तदेतदात्मरूपंहिगुणनामाश्रयत्वतः ॥ पदनीयमितिप्रोक्तंयतस्तज्ज्ञोपिसर्ववित् ॥ सार्वज्ञ्यादि
गुणास्तस्यकिमुतात्मेश्वरस्यतु ॥ एवंसर्वगुणैर्युक्तंसर्वजीवेश्वरंहरिम् ॥ योवेदतत्तत्साध्यंतुयथातैस्तैस्तु

साधनैः ॥ प्राप्नुयादेवमेवासौकीर्तिंचपरमंसुखम् ॥ ज्ञानंचपरमंविंदेन्मुक्तःसन्नात्रसंशयः ॥ ७ ॥ सए
षविष्णुर्भगवान्पुत्राद्वित्तात्तथात्मनः ॥ अन्यस्मादपिसर्वस्मात्प्रेष्ठएवस्वभावतः ॥ आत्मनोपिप्रियत्वं
तुतेनैवकृतमंजसा ॥ आत्मनोनिरयायैवकुर्यात्कर्माणिनित्यशः ॥ यतोतःस्वात्मनश्चापिस्वाप्रियत्वमु
दाहृतम्॥ सचेदप्रियकृद्विष्णुर्नात्मापिप्रियतांव्रजेत् ॥ अस्मिन्प्रियेप्रियंसर्वंतस्मादेकःप्रियोहरिः ॥ सचा
त्मशब्देनोद्दिष्टोयस्मादात्मगुणःप्रभुः ॥ अतोविष्णोःप्रियंब्रूयाद्यःस्वात्माद्यंदुरात्मवान् ॥ प्रियरोधंकरो
षीतितंब्रूयाद्वैष्णवोमहान् ॥ एवंवदन्वैष्णवस्तुसमर्थःप्रियरोधने ॥ तस्यस्याच्चविशेषेणतदुक्त्यैवापिदुः

तितदेतत्पदनीयमस्यसर्वस्ययदयमात्मानेनह्येतत्सर्वंवेदयथाहवैपदेनानुविंदेदेवंकीर्तिं श्लो
कंविंदतेयएवंवेद ॥ ७ ॥ तदेतत्प्रेयःपुत्रात्प्रेयोवित्तात्प्रेयोन्यस्मात्सर्वस्मादंतरतरंयदयमात्मा
सयोन्यमात्मनःप्रियंब्रुवाणंब्रूयात्प्रियंरोत्स्यतीतीश्वरोहतथैवस्यादात्मानमेवप्रियमुपासीत
सयआत्मानमेवप्रियमुपास्तेनहास्यप्रियंप्रमायुकंभवति ॥ ८ ॥ तदाहुर्यद्ब्रह्मविद्ययासर्वंभ

विनः ॥ तस्मात्सर्वप्रियोविष्णुरित्युपास्तेसदाप्रियः ॥ नास्यप्रियमनित्यंस्यादस्यप्रीतिःसदाभवेत् ॥
तस्मात्सर्वप्रियंविष्णुमुपासीतैवनित्यशः ॥ नित्यप्रियकरोविष्णुर्भवेत्तस्याप्यजःस्वयमित्यध्यात्मे ॥ ८ ॥
ब्रह्मविद्ययासर्वंभविष्यंततआत्मयोग्यतापूर्तिमाप्नुवंतोमहांतोयदाहुः ॥ ब्रह्मविद्ययास्वयोग्यंसर्वंप्राप्य
तइति ॥ नित्यनिर्दुःखानंदानुभवरूपोहिस्वतउत्तमोजीवः ॥ तादृशंरूपमज्ञानात्तिरोहितंब्रह्मविद्यया
भिव्यज्यतएव ॥ नचान्यथाभिव्यज्यतइतिसंतोयदाहुः ॥ तत्तत्रकेचिन्मनुष्याइतिमन्यंते ॥ स्व
रूपमपिब्रह्मविद्ययाभिव्यज्यतेचेत्तद्ब्रह्मापियस्मात्सर्वमभवत्परिपूर्णमभवत्तस्मात्स्वरूपंज्ञात्वैवाभवत्किमि

ति ॥ सत्यम् ॥ ९ ॥ तदपिस्वरूपंनित्यापरोक्षज्ञानेनसर्वदाजानात्येव ॥ अतएवसर्वदापरिपूर्णमितितेषां परिहारः ॥ तदात्मानमेवावेत्तस्मात्तत्सर्वमभवदिति ॥ आत्मावाइदमेकएवाग्रआसीत्सदेवसोम्ये दमग्रआसीदित्यादिवत्सदातनज्ञानंपूर्णभावंचाह ॥ इदमग्रेअस्यायइतिषष्ठ्यर्थेद्वितीया ॥ अहंअहे यंब्रह्मपरिपूर्णम् ॥ अस्मिसर्वदास्तीतिमेयमित्येतैर्विशेषणैरात्मानंस्वरूपमेवावेत् ॥ यद्यहंशब्दोस्म च्छब्दार्थवाचीअस्मिशब्दश्चोत्तमपुरुषेतदाऽऽत्मानमितिव्यर्थंस्यात् ॥ अतोहमस्मिशब्दावुक्तार्थाविव ॥ अग्रेअनादिकालतएवविद्यमानमात्मानंजानातिचतद्ब्रह्मेत्यर्थः ॥ सर्वनियंतृत्वेनसर्वगतत्वादहेयम्॥तद्योहं सोसौयोसौसोहंयोसावसौपुरुषःसोहमस्मीत्यादिष्वप्यहंशब्दोंतर्यामित्वेनाहेयत्ववाची ॥ तत्सत्यंसआ

**विष्यंतोमनुष्यामन्यंतेकिमुतद्ब्रह्मावेद्यस्मात्तत्सर्वमभवदिति ॥ ९ ॥ ब्रह्मवाइदमग्रआसी त्तदात्मानमेवावेदहंब्रह्मास्मीतितस्मात्तत्सर्वमभवत्तद्योयोदेवानांप्रत्यबुध्यतसएवतदभवत्त**

त्मातत्त्वमसीतिभेदस्यनवक्तव्योभ्यासात् ॥ तद्योहंसोसौअहंब्रह्मास्मीत्यादिवाक्यानांसम्यगर्थापरिज्ञा नात् ॥ भ्रांतिप्राप्तोऽभेदोऽतत्त्वमसीतिनवक्तव्योनिराक्रियते ॥ तद्धैकआहुरसदेवेदमग्रआसीदेकमेवाद्वि तीयंकुतस्तुखलुसोम्यैवंस्यात्कथमसतःसज्जायेतेत्यादिनाअसद्वाइदमग्रआसीदसतःसदजायतेत्यादिश्रुत्य र्थापरिज्ञानोत्थभ्रमोयथानिवार्यते ॥ एवमतत्त्वमसीतिवाक्येनापि ॥ सआत्मेतिशब्दाच्च ॥ आत्मशब्द स्यपरमात्मनिमुख्यत्वेपिजीवेभ्रांतिरुपपद्यते ॥ तन्निवृत्त्यर्थंवाऽतत्त्वमसीत्याह ॥ यच्चाप्नोतियदादत्ते यच्चात्तिविषयानिह ॥ यच्चास्यसंततोभावस्तस्मादात्मेतिभण्यतइत्यादिनाप्यादिकमैतदात्म्यमिदंसर्वमि त्यनेनोच्यते ॥ पूर्णत्ववाच्यात्मशब्दआत्मापूर्णत्वतोहरिरित्यादिनासआत्मेतिपूर्णत्वमभिधीयते ॥ य थासोम्यैकेनमृत्पिंडेनेतिसदृशविज्ञानेनसदृशांतरंविज्ञातंभवतीत्युक्तम् ॥ लोहमणिनेतिमणिशब्दात्प्रधान

विज्ञानेनाप्रधानंसर्वंविज्ञातंभवतीति ॥ मणिर्मुख्यंप्रधानंचउत्तमस्यवचोभवेदितिवचनात् ॥ यथासोम्यै
केननखनिकृंतनेनसर्वंकार्ष्णायसंविज्ञातंस्यादितिपुनरपिसदृशेनविज्ञातेनसदृशांतरंविज्ञातंभवतीत्यभ्यास
स्तात्पर्यार्थः ॥ उपादानविवक्षायामेकत्वविवक्षायांचैकेनेतिविशेषणंपिंडेनेतिएकेनमणिनेतिपुनरेकेनेति
चविशेषणानिव्यर्थानिभवेयुः ॥ तस्मिन्पक्षेमृदाविज्ञातयालोहेनविज्ञातेनकार्ष्णायसेनचविज्ञातेनसर्वंवि
ज्ञातंभवतीतिवक्तव्यम्॥नह्येकमृत्पिंडविकारभूतंसर्वंमृन्मयम्॥नचतेनैक्यंसर्वस्यविद्यते॥नचैकलोहमणि
कार्यंसर्वंलोहमयम्॥नचतेनैकीभूतम्॥नचैकनखनिकृंतनकार्यंसर्वंकार्ष्णायसम् ॥ वाचारंभणंविकारोना
मधेयंमृत्तिकेत्येवसत्यमित्यादिप्रधानपरिज्ञानेगुणभूतंपरिज्ञातमिवभवतीत्यत्रदृष्टांतांतरम् ॥ वाचानाम्ना
आरंभणंविकारः विविधत्वेनकर्तुंयोग्यमितिविकारः ॥ सत्यंसर्वदाविद्यमानंनामधेयंमृत्तिकेत्येव ॥ सं
केतरूपेणनानाविधानिनामानिकर्तुंशक्यंते ॥ तथापिशास्त्रप्रयोगसिद्धमृत्तिकादिनामपरिज्ञानात्तत्तन्ना
मविद्भवति ॥ एवंनित्यासाम्यातिशयसर्वगुणपरिपूर्णपरमेश्वरपरिज्ञानात्सर्वविद्भवतीति ॥ यथैकस्मिन्जन
पदेप्रधानपुरुषेषुपरिज्ञातेष्वाहूतेष्वागतेषुविनाशितेषुरक्षितेषुवासर्वोजनपदःपरिज्ञातआहूतआगतोविनाशि
तोरक्षितइत्युच्यतेयथावाराजसुनाशितेषुनाशितापृथिवीसर्वाधार्तराष्ट्रेणदुर्नयैरिति ॥ यथाचकेषांचित्पुरु
षाणांरक्षणेन ॥ शशासपृथिवींसर्वांसशैलवनकाननामिति॥एवंसर्वोत्तमस्यपरमेश्वरस्यविज्ञानात्सर्वंविज्ञा
तमिवभवति ॥ नचमृन्मात्रविज्ञानाद्घटशरावादिसंस्थाविज्ञाताभवंतिमुख्यतः ॥ तथासतिदृष्टमृदःपुरु
षस्यघटशरावादिजिज्ञासानस्यात् ॥ सृष्टिकथनंचप्राधान्यार्थंत्रीणिरूपाणीत्येवसत्यमित्यपिप्राधान्या
र्थमेवाभिमानिदेवतापेक्षया ॥ तेजोभिमानवान्ब्रह्मावायुश्चाबभिमानवान् ॥ रुद्रःक्षित्यभिमानीचाप्ये

तन्मयमिदंजगत् ॥ अभिमन्यमानसहितास्त्रयएतेभिमानिनः ॥ विष्णोर्जाताःक्रमेणैवपूर्वस्मादुत्तरोत्त
रम् ॥ तेजोबन्नाभिधातस्मादेषामेवप्रकीर्तिता ॥ एतेचत्रीणिरूपाणीत्यभिधागोचराःसुराः ॥ ब्रह्मवा
युगिरीशेभ्यस्तेभ्योजातमिदंजगत् ॥ अतोग्निसूर्यसोमानामपिरूपंतदुद्भवम् ॥ अतोग्निसूर्यसोमानांना
माप्येषांप्रकीर्तितम् ॥ सादनाद्यमनाच्चैवसत्यमेषांत्रयःसुराः ॥ तेषांसत्यंहरिःसाक्षाद्यतस्तेषांनियाम
कः ॥ प्रधानेसत्यशब्दोयंश्रुतिभिःसमुदाहृतः ॥ यथैवसर्वलोहानांप्रधानंकांचनंस्मृतम् ॥ यथामृत्पिंडस
दृशामृन्मयाःसर्वएवच ॥ यथाकार्ष्णायसंसर्वंसमंकार्ष्णायसांतरे ॥ एवंसर्वस्यजगतःसदृशःश्रेष्ठएव
च ॥ हरिस्तेनतुतज्ज्ञानाज्जगज्ज्ञातमिवाखिलम् ॥ सस्रष्टाचैवसंहर्तानियंतारक्षिताहरिः ॥ तेनव्याप्तमि

थर्षीणांतथामनुष्याणांतद्धैतत्पश्यन्नृषिर्वामदेवःप्रतिपेदेअहंमनुरभवंसूर्यश्चेतितदिदमप्येत

दंसर्वमैतदात्म्यमतोविदुः ॥ सआत्मापूर्णगुणतःससूक्ष्मःसर्वगःसदा ॥ सर्वोत्तमत्वात्सत्यंतज्जीवाभिन्नंतदा
सुराः ॥ विदुर्नत्वंतथाविद्धिश्वेतकेतोकदाचन ॥ किंतुविष्णुःपृथक्सर्वदेवदेवेश्वरःप्रभुः ॥ पृथगेवाहमत्य
ल्पशक्तिज्ञानसुखादिकः ॥ इत्येवविद्धिसततमतोमोक्षमवाप्स्यसि ॥ सर्वोत्तमइतिज्ञातोविष्णुर्मोक्ष
मिमंनयेत् ॥ जीवरूपतयाज्ञातस्तमोंधंप्रापयेत्प्रभुः ॥ विष्णोर्दासतयाविष्णोःसामीप्यंमोक्षउच्यते ॥
नविष्णुत्वंतुमोक्षःस्यादेषोहमितिवास्मृतेः ॥ संसारसागरात्तीर्णोमुक्तोहमितिवास्मृतिः ॥ यदातदाविमो
क्षेणकिंफलंज्ञानिनोभवेत् ॥ यथामधुकरैर्नानाविधपुष्परसैःसह ॥ मधुत्वंप्रापितःसंविदभावान्नसुखी
भवेत् ॥ यथानद्योनमुक्ताहिसमुद्रंप्रापिताअपि ॥ इयमस्मीतिचाज्ञानाद्यथासुप्तोनमुच्यते ॥ प्रल
येपिहरिंप्राप्तःपृथक्त्वज्ञानवर्जनात् ॥ एवंजीवेशयोर्भेदज्ञानाद्विष्णोःसदोच्चताम् ॥ ज्ञात्वैवमुच्यतेतस्मा

देवंजानीहिपुत्रकेतिब्रह्मांडे ॥ मग्नस्यहिपरेज्ञानेकिंनदुःखतरंभवेदितिमोक्षधर्मे ॥ तस्मैस्वलोकंभगवा
न्सभाजितःसंदर्शयामासेत्युक्त्वा ॥ नवर्ततेयत्ररजस्तमस्तयोःसत्त्वंचमिश्रंनचकालविक्रमः ॥ नय
त्रमायाकिमुतापरेहरेरनुव्रतायत्रसुरार्चिताइतिभागवते ॥ अदर्शयत्स्वकंलोकंब्रह्मणेविष्णुरव्ययः ॥
यस्मात्पदात्परंनास्तियत्रमुक्ताउपासतइतिहरिवंशेषु ॥ अतःपरंनयत्पदमित्यत्रापियच्छब्दस्ययस्मादि
त्यर्थः ॥ यत्तदित्यादयःशब्दाःपंचम्यर्थाश्चकीर्तिताइतिच ॥ विद्यात्मनिभिदाबोधः ॥ क्ष्मांभोनला
निलवियन्मनइंद्रियार्थैर्भूतादिभिःपरिवृतःप्रतिसंजिघृक्षुः ॥ अव्याकृतंविशतियर्हिगुणत्रयात्माकालंपरं
स्वमनुभूयपरःस्वयंभूः ॥ एवंपरेत्यभगवंतमनुप्रविष्टायेयोगिनोजितमरुन्मनसोविरागाः ॥ तेनैवसाकम

हियएवंवेदाहंब्रह्मास्मीतिसइदःसर्वंभवतितस्यहनदेवाश्चनाभूत्याईशतआत्माह्येषाःसम

मृतंपुरुषंपुराणंब्रह्मप्रधानमुपयांत्यगताभिमानाः ॥ भेददृष्ट्याभिमानेननिःसंगेनापिकर्मणेत्यादिच ॥ आ
धिपत्यमृतेचैवआनंदेनापिकर्मणा ॥ सर्वेतेब्रह्मणस्तुल्याभोगेनविषयेणच ॥ नानात्वेनापिसंबद्धास्त
दातत्कालभाविना ॥ प्रकृतौकारणातीताःस्वात्मन्येवव्यवस्थिताः ॥ प्रदर्शयित्वास्वात्मानंप्रकृतिस्तेषुस
र्वशः ॥ पुरुषान्यबहुत्वेनप्रतीतानप्रवर्तते॥प्रवर्ततिपुनःसर्गेतेषांसानप्रवर्तते॥संयोगःप्रकृतेर्नैवमुक्तानांतत्त्वद
र्शनात् ॥ समादुःखनिवृत्तिस्तुमुक्तानामपिसर्वशः ॥ मानुषादिविरिंचांतंसुखंमुक्तौशतोत्तरमित्यादिवायु
प्रोक्ते ॥ ऐकात्म्यंनामयदिदंकेचिद्ब्रूयुरनैपुणाः ॥ शास्त्रतत्त्वमविज्ञायतथावादबलाजनाः ॥ कामक्रोधा
भिभूतत्वादहंकारवशंगताः ॥ याथातथ्यमविज्ञायशास्त्राणांशास्त्रदस्यवः ॥ ब्रह्मस्तेनानिरानंदाअपक्वमन
सोशिवाः ॥ वैगुण्यमेवपश्यंतिनगुणानिनियुंजते ॥ तेषांतमःशरीराणांतमएवपरायणम् ॥ अन्यईशस्तथा

न्योहमितिज्ञानंविपश्चिताम्॥ आधिक्यज्ञानमीशस्ययतोन्यत्वेनयुज्यते ॥ यतःस्वरूपतश्चान्योजातितः
श्रुतितोर्थतः ॥ कथमस्मिसइत्येवसंबंधःस्यादसंहितः ॥ बहवःपुरुषाब्रह्मन्नुताहोएकएवतु ॥कोह्यत्रपुरुषश्रे
ष्ठस्तंभवान्वक्तुमर्हति ॥ वैशंपायनउवाच ॥ नैतदिच्छंतिपुरुषमेकंकुरुकुलोद्वह ॥ बहूनांपुरुषाणांहियथै
कायोनिरुच्यते ॥ तथातंपुरुषंविश्वमाख्यास्यामिगुणाधिकमित्यादिचमोक्षधर्मे ॥ द्वाविमौपुरुषौलोकेक्षर
श्चाक्षरएवच ॥ क्षरःसर्वाणिभूतानिकूटस्थोक्षरउच्यते ॥ उत्तमःपुरुषस्त्वन्यःपरमात्मेत्युदाहृतः ॥ योलोक
त्रय ०॥ यस्मात्क्षरमतो ०॥ अतोस्मिलोकेवेदे ०॥ योमामेवमसं ०॥ ससर्वविद्भजतिमांस ०॥इतिगुह्यतमंशा
स्त्रं० ॥ एतद्बुद्ध्वाबुद्धिमान्स्यात्कृतकृत्यश्चभारतेतिच ॥ ब्रह्मणस्तद्गुणानांचभेददर्श्यधरंतमः ॥ भेदाभे
दप्रदर्शीचमध्यमंतुतमोविशेत् ॥ ईषद्भेदप्रदर्शीचतमएवोत्तरंविशेत् ॥ विजानीयात्ततोब्रह्मसदासर्वगुणात्म

भवत्यथयोऽन्यांदेवतामुपास्तेऽन्योसावन्योहमस्मीतिनसवेदयथापशुरेवꣳसदेवानांयथाहवै

कम् ॥ गुणानांचविशेषोस्तिनविभेदःकथंचन ॥ तेचसर्वेगुणाःपूर्णास्तच्छरीरःपरःस्मृतः ॥ आनंदज्ञान
शक्त्यादिदेहंविष्णुंतुयेजनाः ॥ अदेहंभूतदेहंवाविदुस्तेचाधरंतमः ॥ तथाप्रकृतिदेहज्ञाःकर्मदेहविदोपिवा ॥
तस्मादानंदचिद्देहंचिदानंदशिरोमुखम् ॥चिदानंदभुजंज्ञानसुखैकपदसांगुलिम् ॥ आकेशादानखाग्रेभ्यः
पूर्णचित्सुखशक्तिकम् ॥ प्रत्येकंतुगुणांस्तांस्तुसदासर्वगुणात्मकान्॥ज्ञात्वाविमुच्यतेविष्णोःप्रसादान्मानुषो
पिसन् ॥ जीवाभेदंतथाभेदंजगतायेविदुःप्रभोः ॥ तेपियांतितमोघोरमधरंब्रह्मतस्कराः ॥ भेदाभेदंविदुर्येच
जीवैस्तुजगतापिवा ॥ परस्यब्रह्मणोयांतितमस्तेप्युत्तरंसदा ॥ अभेदज्ञाःप्रकृत्यापिभेदाभेदविदस्तथा॥तेपि
यांतितमोघोरमधरंचोत्तरंक्रमात् ॥ तस्मात्सर्वोत्तमंविष्णुंपूर्णसर्वगुणोच्छ्रितम् ॥ विजानीयाद्विमुक्त्यर्थं

सर्वतश्चविलक्षणम् ॥ अंधंतमःप्रविशंतियेदेहंपरमात्मनः ॥ भिन्नंविजानतेविष्णोर्भिन्नाभिन्नविदोपिवा ॥
अंधंतमःप्रविशंतिप्रादुर्भावांस्तुयेपिवा ॥ सर्वभूतस्थितान्वापिभिन्नान्जानंतियेखिलान् ॥ भिन्नाभिन्नवि
दोवापिशिरःपाण्यादिकंतथा ॥ भिन्नंमिथोविजानीयुर्भिन्नाभिन्नविदोपिवा ॥ तेपियांतितमोघोरंयतोनै
वोत्थितिःक्वचित् ॥ प्रादुर्भावतयायेचतदन्यान्जानतेविभोः ॥ तेपियांतितमोघोरंतस्मान्नैवंविदोविदुः ॥
मत्स्यकूर्मक्रोडसिंहवटुभार्गवराघवाः ॥ कृष्णबुद्धौकल्किदत्तहयशीर्षैतरेयकाः ॥ पाराशर्यश्चकपिलो
वैकुंठऋषभस्तथा ॥ यज्ञोधन्वंतरिश्चैवस्त्रीरूपस्तापसोमनुः ॥ नारायणोहरिःकृष्णउपेंद्रःसर्वएवच ॥ ए
वमाद्याहरेःसाक्षात्प्रादुर्भावाःप्रकीर्तिताः ॥ श्रीर्भूर्दुर्गाभ्रणीह्रीश्चमहालक्ष्मीश्चदक्षिणा ॥ सीताजयंतीस
त्याचरुक्मिणीत्यादिभेदिता ॥ प्रकृतिस्तेनचाविष्टातद्वशानहरिःस्वयम् ॥ ततोनंतांशहीनाचबलज्ञानसु
खादिभिः ॥ गुणैःसर्वैस्तथाप्यस्यप्रसादाद्दोषवर्जिता ॥ सर्वदासुखरूपाचसर्वदाज्ञानरूपिणी ॥ प्राणःसूत्रं
महान्ब्रह्माचित्तंवायुर्बलंधृतिः ॥ स्थितिर्योगश्चवैराग्यंज्ञानंप्रज्ञास्मृतिःसुखम् ॥ मेधामुक्तिर्विष्णुभक्तिरा
दिगोपोमहान्प्रभुः ॥ ऋजुःसमानोविज्ञातामहाध्यातामहागुरुः ॥ हनूमान्भीमआनंदइत्यादिबहुरूपि
णः ॥ हिरण्यगर्भायेतीतायेभाव्यायश्चवर्तते ॥ सर्वेविष्णुवशानित्यंविमुक्तेरप्यनंतरम् ॥ एभ्यःश्रीस्तुवि
मुक्तेभ्योगुणैःकोटिगुणोत्तरा ॥ ज्ञानानंदबलादिभ्यःसर्वेभ्यःसर्वदैवहि ॥ भिन्नाभिन्नाश्चतेसर्वेब्रह्मा
णस्तुपरस्परम् ॥ अभिमानःपृथक्तेषामानंदःसहभुज्यते ॥ तेतुभिन्नाहरेर्नित्यंश्रियोन्येभ्यस्तथैव
च ॥ आविष्टोविष्णुरेतेषुनविष्णुस्तत्स्वरूपकः ॥ विष्णोरतिप्रियत्वात्तेह्यध्यर्धाइतिचोदिताः ॥ विष्णोः
केवलभेदेपिशेषादिभ्यःप्रियायतः ॥ विष्णोःप्रियत्वेतद्भक्तौतज्ज्ञानेचश्रियस्तुते ॥ मुक्ताअप्यवरानि
त्यंसर्वेकोटिगुणेनच ॥ सरस्वतीचगायत्रीश्रद्धाद्याप्रीतिरेवच ॥ सर्ववेदात्मिकाबुद्धिरनुभूतिःसुखात्मि

का ॥ गुरुभक्तिर्हरौप्रीतिःसर्वमंत्रात्मिकाभुजिः ॥ शिवकन्येंद्रसेनाचद्रौपदीकाशिजातथा ॥ चंद्रेत्या
दिस्वरूपायास्तेभ्यःशतगुणावराः ॥ विष्णुभक्तौचतत्प्रीतौज्ञानानंदादिकेष्वपि ॥ मुक्तेःपश्चादपिगुणैःसर्वै
र्ब्रह्मभ्यईरिताः ॥ शेषःसदाशिवश्चोर्ध्वस्तपोहंकारएवच ॥ नरोऽपटोलक्ष्मणश्चरौहिणेयःशुकस्तथा ॥
सद्योजातोवामदेवश्चाघोरस्तत्पुमानपि ॥ दुर्वासाद्रोणिरौर्वश्चजैगीषव्यादिरूपकाः ॥ पूर्वोक्तैश्चगुणैःसर्वै
स्ताभ्यःशतगुणावराः ॥ मुक्तेःपश्चादपिसदाअतीतानागताश्चयाः ॥ अतीतानागतायेचसर्वशोप्यवराःस
दा ॥ एवंसुपर्णाःसर्वेपिसमाःशेषैःसदैवतु ॥ सर्वैर्गुणैस्तथामुक्तौतद्भार्यास्तच्छतावराः ॥ ताभ्यःशतावरा
स्त्विंद्राःपुरंदरइतीरिताः ॥ तेभ्यःशतावरास्त्वन्येइंद्राश्चान्याश्चदेवताः ॥ द्वित्रिपंचादिगुणतःपरस्परविशेषि

बहवःपशवोमनुष्यंभुंजुरेवमेवैकःपुरुषोदेवान्भुनक्त्येकस्मिन्नेवपशावादीयमानेप्रियंभवति

णः ॥ सनत्कुमारास्तुसदापुरंदरसमामताः ॥ सनकाद्यानारदश्चदक्षभृग्वादयोपिच ॥ देवावरायथातद्वन्म
नवोपिप्रकीर्तिताः ॥ त्रिचतुर्भागभेदेनतेप्यन्योन्यविशेषिणः ॥ वालीगाधीविकुक्षिश्चपार्थइंद्रःपुरंदरः ॥
सुदर्शनश्चभरतःप्रद्युम्नःस्कंदएवच ॥ सनत्कुमारःकामश्चेत्येकएवव्यवस्थितः ॥ स्वायंभुवोमनुर्दक्षोवा
युःस्पर्शाधिपस्तथा ॥ बृहस्पतिश्चानिरुद्धएतेसूर्यादितोधिकाः ॥ सूर्यश्चचंद्रमाश्चैवयमश्चैतेत्रयःसुराः ॥
प्रोक्तेभ्यस्त्ववराश्चान्यदेवेभ्योपिसदाधिकाः ॥ कार्तवीर्यःपृथुश्चैवदौष्यंतिर्भरतस्तथा ॥ शशबिंदुश्चमांधा
ताककुत्स्थाद्यास्तथापरे ॥ सर्वेतेविष्णुनाविष्टाविष्णोर्भिन्नाःसदैवतु ॥ शतावराश्चदेवेभ्यःकर्मदेवाइति
स्मृताः ॥ तुंबुरुप्रमुखायेचतथोर्वश्यादिकाअपि ॥ विश्वामित्रब्रह्मपुत्रानृतेचाप्यृषयोखिलाः ॥ सूर्यादि
भ्योधमाश्चैवमन्वादिभ्यस्तथैवच ॥ वैवस्वतोमनुर्नित्यंविष्णवावेशीततोधिकः ॥ कार्तवीर्यादिराजभ्यो

देवभृत्याःशतावराः ॥ आजानदेवास्तेप्रोक्तास्तेभ्यश्चपितरश्चिराः ॥ पितॄणांसप्तकंयत्तत्कर्मदेवसमंम
तम् ॥ विश्वामित्रोब्रह्मपुत्रैःसमोमुनिरुदाहृतः ॥ आचार्यःपितॄणांचासौपितृभिःसहपठ्यते ॥ आजाने
भ्यस्तुपितरोह्यष्टभ्योन्येशतावराः ॥ कर्मदेवगणाअष्टगंधर्वास्तत्परेशतम् ॥ आजानदेवास्तेभ्योन्येपितृ
भ्यश्चशतावराः ॥ स्वमुखेनैवदेवैर्येआज्ञाप्याःसर्वदागणाः ॥ आख्यातादेवगंधर्वायेत्वन्यमुखगोचराः ॥
मानुषास्तेतुगंधर्वास्तेभ्यस्तेचशतावराः ॥ तेभ्यःशतावराश्चैवमनुष्येषूत्तमागणाः ॥ देवादिष्वेषुसर्वेषुप्रोक्ता
अपिविशेषिणः ॥ पंचांशतोदशांशाद्वास्वस्वजात्यांपरस्परम् ॥ देवस्त्रियोदशांशोनाःस्वपतिभ्यस्तथा
पराः ॥ अष्टांशोनाःप्रविज्ञेयायासांमुक्तौसहस्थितिः ॥ अनादिश्चविशेषोयंसर्वेषांमानुषादिनाम् ॥

किमुबहुषुतस्मादेषांतन्नप्रियंयदेतन्मनुष्याविद्युः ॥ १० ॥

इयंनीचोच्चताकापिनकेनापिह्यपोदितुम् ॥ शक्यतेयोन्यथाकर्तुमिच्छेत्सोपितमोव्रजेत् ॥ योपिवेदस
मत्वेनसर्वान्नीचोच्चतःस्थितान् ॥ सोपियातितमोघोरंयश्चसम्यगुदीरयेत् ॥ मानुषोत्तममारभ्यब्रह्मां
तानांप्रयत्नतः ॥ विष्णोर्भक्तिज्ञानपूर्वंभवेन्मुक्तिःप्रसादतः ॥ भक्तिज्ञानादिकाःसर्वेसर्वेषामप्यनादयः ॥
अनादिकालादारभ्यवृद्धानामुत्तरोत्तरम् ॥ तत्तद्योग्यतयापूर्तौविष्णोर्दृष्टिःप्रजायते ॥ यथोदंचनकुंभा
देःसरित्सागरयोरपि ॥ अल्पेनमहतावापिपूर्तिर्योग्यतयाभवेत् ॥ एवंनरादिब्रह्मांतजीवानांसाधनैरपि ॥
अनादिसिद्धैर्भक्त्याद्यैःपूर्तिर्योग्यतयाभवेत् ॥ अल्पैःपूर्तिस्तथाल्पानांमहद्भिर्महतामपि ॥ भक्त्याद्यैर्जा
यतेतेषांसाधनैर्नान्यथाक्वचित् ॥ श्रवणंमननंचैवध्यानंभक्तिस्तथादृशिः ॥ ज्ञानंचोक्तविशेषाणांसर्वेषां
साधनंभवेत् ॥ त्यक्त्वैतानिनकस्यापिभवेन्मोक्षःकदाचन ॥ सर्वोत्तमनयाज्ञानपूर्वकस्नेहएवतु ॥ भक्तिर्वि

ष्णौसमुद्दिष्टातदन्येषांचयोग्यतः ॥ विष्णुभक्तिर्देवभक्तिर्गुरौभक्तिस्तथैवच ॥ तत्तच्छ्रैष्ठ्यानुसारेणमुक्तौ
नियतसाधनम् ॥ भक्तिपूर्तौभवेन्मुक्तिस्तदभावेचनोभवेत् ॥ भक्तिर्ज्ञानंतथाध्यानंमुक्तानामपिसर्वशः ॥
नियमेननहीयंतेमुक्तानांतत्स्वरूपकाः ॥ साधनानितुसर्वाणिभक्तिज्ञानप्रवृद्धये ॥ नैवान्यसाधनंभक्तिः
फलरूपाहिसायतः ॥ स्वात्मोत्तमेषुविद्वेषात्तमोनियमतोव्रजेत् ॥ गुणानामल्पताज्ञानंतत्स्त्रीरागस्तथैवच॥
तत्प्रतीपेचयाबुद्धिस्त्रिविधोद्वेषउच्यते ॥ द्वेषोज्झिताचयाभक्तिःसामोक्षंनियमान्नयेत् ॥ निर्दुःखंतुसुखं
नित्यंमोक्षइत्यभिधीयते ॥ चिदानंदशिरोदेहपाणिपादात्मकाःसदा ॥ सर्वदोषविनिर्मुक्तामुक्ताःक्रीडंतिनि
त्यशः ॥ अनादिकालादारभ्ययाभार्यास्ताःसदैवतु ॥ ब्रह्मादीनांविमुक्तौचभार्याःस्युर्नियमात्सदा ॥ नक
दाचिद्विमुक्तानांभार्याःकाश्चित्स्युरन्यगाः ॥ नकदाचिद्वियोगश्चनविद्वेषोनवाऽरतिः ॥ मोदंतेसहिताःसर्वे
सदाविष्णुपरायणाइतिपैंगिश्रुतिः ॥ एकमेवाद्वितीयम् ॥ नेहनानास्तिकिंचन ॥ मृत्योःसमृत्युमाप्नो
तियइहनानेवपश्यति ॥ एकधैवानुद्रष्टव्यमेतदप्रमयंध्रुवम् ॥ मृत्योःसमृत्युंगच्छतियइहनानेवपश्यति ॥
एकधैवानुद्रष्टव्यंनेहनानास्तिकिंचन ॥ मृत्योःसमृत्युंगच्छतियइहनानेवपश्यति ॥ यथोदकंदुर्गेवृष्टं
पर्वतेषुविधावति ॥ एवंधर्मान्पृथक्पश्यंस्तानेवानुविधावतीत्यादिच ॥ इहेतिपरमेश्वररूपेषुअवयवे
षुधर्मेषुचकिंचननानानास्तीत्यर्थः ॥ एकमेवाद्वितीयमितितत्समोधिकोवातदनधीनोवानास्तीतिसता
त्पर्यंनिषिध्यते ॥ एकएवाद्वितीयोसौहरिर्वेदेषुसर्वदा ॥ एकएवाद्वितीयोसावश्वमेधःक्रतुष्वपि ॥ ए
कैववाद्वितीयासाविष्णुभक्तिर्हिसाधने ॥ एकएवाद्वितीयोसौप्रणवोमंत्रउच्यतेइत्यादिवचनात् ॥ यथै
कमुत्तमंपुरुषमपेक्ष्यतस्मिन्पुरेएकएवनान्योस्तीत्युक्तेपितत्सदृशस्तदधिकोवान्योनास्तीत्युक्तंभवति ॥

एकएवाद्वितीयोसौतदतंत्रस्यवर्जनात् ॥ तत्समस्याधिकस्यापिह्यभावात्पुरुषोत्तमइतिब्राह्मे ॥ स्वग
तभेदाविवक्षायामिहेतिविशेषणंव्यर्थंस्यात् ॥ नानेवेतिभेदाभेदनिराकरणार्थम् ॥ विरुद्धोभयसं
योगइवशब्दःप्रदृश्यतइतिशब्दतत्त्वे ॥ पर्वतेषुदुर्गेपर्वतायेदृष्टंयथाधोविधावतिएवंपृथग्दृष्टान्धर्मानन्वे
वतदनंतरमेवाधोंधेतमसिविधावति ॥ भेदेनदर्शनाद्वापिभेदाभेदेनदर्शनात् ॥ विष्णोर्गुणानांरूपाणांत
दंगानांमुखादिनाम् ॥ तथादर्शनकालात्तुक्षिप्रमेवतमोव्रजेदितिब्रह्मांडे ॥ जुष्टंयदापश्यत्यन्यमीशमस्यम
हिमानमितिवीतशोकः ॥ द्वासुपर्णासयुजासखाया ॥ योवेदनिहितंगुहायांपरमेव्योमन् ॥ सोश्नुते
सर्वान्कामान्त्सहब्रह्मणाविपश्चितेति ॥ एतमानंदमयमात्मानमुपसंक्रम्यइमाँल्लोकान्कामान्नीकामरू
प्यनुसंचरन् ॥ अथातआनंदस्यमीमांसाभवतीत्यारभ्यमनुष्यादिब्रह्मांतानांमुक्तानामानंदेशतगुणवि
शेषश्चोच्यते ॥ मुक्तानांचायंविशेषः ॥ श्रोत्रियस्यचाकामहतस्येतिविशेषणात् ॥ नहिब्रह्मादी
नामनधिगतःश्रुत्यर्थःकेषांचिदस्ति ॥ नचब्रह्माणएवकेचनकामहताःकेचनाकामहताइत्यत्रप्रमाणम
स्ति ॥ तस्माच्छ्रोत्रियइतिप्राप्तश्रुतिफलत्वान्मुक्तउच्यते ॥ अकामहतत्वंचमुख्यंमुक्तस्यैव ॥ प्राप्त
श्रुतिफलत्वात्तुश्रोत्रियाःप्राप्तमोक्षिणः ॥ तएवचाप्तकामत्वात्तथाकामहताःश्रुताइतिचभारते ॥ ब्र
ह्मणोपिह्यमुक्तस्यनाकामहततापरा ॥ यतस्तस्यापिकामस्यक्षणव्यवहितिर्भवेदितिच ॥ कामहतता
कामेनोपद्रवः ॥ ब्रह्मणोप्यल्पदुःखंस्यात्तदप्यनभिमानतः ॥ नास्यात्मसंबंधतयाभोगाभावात्कथंचनेति
च ॥ नचान्यस्यकस्यचिच्छ्रोत्रियस्याकामहतस्यचब्रह्मणासमंसुखंयुज्यते ॥ ज्ञानमप्रतिघंयस्यवैरा
ग्यंचजगत्पतेः ॥ ऐश्वर्यंचैवधर्मश्चसहसिद्धंचतुष्टयमित्यादिनाश्रोत्रियत्वादिगुणैस्तस्यैवान्येभ्यआधि

क्यात् ॥ नचेंद्रपदाद्विरक्तस्येंद्रसमंसुखंब्रह्मपदाद्विरक्तस्यतत्समंमित्यत्रकिंचिन्मानमस्ति ॥ दृष्टवस्तुनि
विरागेआयासाभावात्कश्चित्सुखविशेषोदृश्यते ॥ अन्यत्रब्रह्मपदाद्विरक्तस्येंद्रपदाद्विरक्तस्यनकश्चिद्विशे
षोदृश्यते ॥ अतोनुभवविरुद्धत्वाद्यत्किंचिदेतत् ॥ नरादिब्रह्मपर्यंतंविमुक्तानांशतोच्छ्रयः ॥ निःशेषदुः
खहीनानांनित्यानंदैकभोगिनाम् ॥ अप्यानंदोमिथोप्युक्तस्त्वध्वर्यूणांश्रुतौपृथगितिहरिविंशेषु ॥ यदा
ह्येवैषएतस्मिन्नुदरमंतरंकुरुतइत्यत्राप्येतस्मिन्निति विशेषणात्स्वगतभेदनिषेधएव ॥ अभेदमीशरूपाणां
भेदंजीवेशयोरपि ॥ यःपश्येत्स्थिरयाबुद्ध्याभक्तिमान्सविमुच्यतइतिभविष्यत्पुराणे ॥ परंज्योतिरुप
संपद्यस्वेनरूपेणाभिनिष्पद्यतेसउत्तमःपुरुषः ॥ सतत्रपर्येतिजक्षन्क्रीडन्रममाणःस्त्रीभिर्वायानैर्वा ॥ य
स्यलोकंसमासाद्यस्वरूपमभिपद्यते ॥ जीवःपर्येतिविष्णोश्चसमीपेतत्प्रसादतः ॥ यत्प्रसादात्सपर्येतिस
विष्णुःपुरुषोत्तमः ॥ अक्षण्वंतःकर्णवंतःसखायोमनोजवेष्वसमाबभूवुः ॥ आदघ्नासउपकक्षासउत्वे
ह्रदाइवस्नात्वाउत्वेददृश्रे ॥ दुग्धसागरगाःकेचित्केचिदश्वत्थकक्षगाः ॥ अमृतह्रदेषुकेचिच्चपिबंति
स्नातवत्सदा ॥ केचित्पश्यंतितंदेवंसदाकेचित्समीपगाः ॥ आणिंनरथ्यममृताधितस्थुरिहब्रवीतुयउ
तच्चिकेतत् ॥ रथ्यमाणिमिवाश्रित्यमुक्ताःसर्वेव्यवस्थिताः ॥ यंविष्णुंदेवदेवेशंनमस्तस्मैस्वयंभुवइत्या
दि ॥ तौयत्रविहीयेतेइत्यत्रापिपरमात्मैव ॥ शरीरानभिमानीयोहृदिसंस्थोजनार्दनः ॥ अभिमानवतो
देहेजीवस्यसनियामकः ॥ सएवसूर्यसंस्थश्चहंसःसोहमितिश्रुतः ॥ हंतृत्वाद्धंसनामासौसोहंचासावहे
यतः ॥ सएवसूर्यसंस्थेनरूपेणैवाक्षिणिस्थितः ॥ सूर्यसंस्थाद्विरूपात्सविभक्तोक्षिणिसंस्थितः ॥ गच्छतो
म्रियमाणस्यतावुभावपिदेहतः ॥ तयोर्देहविहानेतुभवेतारिष्टदर्शनम् ॥ तदासंचिंतयेद्देवंतमेवपुरुषोत्तम

मित्यादिहरिवंशेषु ॥ क्षेत्रज्ञएतामनसोविभूतीर्जीवस्यमायारचिताअनित्याः ॥ आविर्हिताश्चापितिरो
हिताश्चशुद्धोविचष्टेह्यविशुद्धकर्तुः ॥ क्षेत्रज्ञआत्मापुरुषःपुराणःसाक्षात्स्वयंज्योतिरजःपरेशः ॥ ना
रायणोभगवान्वासुदेवःस्वमाययात्मन्व्यवधीयमानइतिभागवते ॥ स्वेच्छयैवाद्वतोविष्णुर्जीवेतिष्ठतिस
र्वदा ॥ योसौनियमयन्जीवंक्षेत्रज्ञइतिशब्दितइतिहरिवंशेषु ॥ अशरीरःप्रज्ञात्मेतिविशेषणाच्चपरमात्मा ॥
नहिजीवस्याशरीरत्वममुक्तस्य ॥ एषतआत्मांतर्याम्यमृतः अतोन्यदार्तमितिच ॥ नहिजीवादन्यस्या
तिरुपपद्यते ॥ सर्वेषांभूतानामंतरपुरुषःसमआत्मेतिविद्यादित्यादिश्रुतिभ्यश्च ॥ ब्रह्मादयोहिभूतानितेषा
मंतर्गतोहरिः ॥ समःससर्वभूतेषुयएवंवेदतत्त्वविदितिचभारते ॥ नचमुख्येसतिलक्षणानामयुज्यते ॥ न
चमुख्यतएवजीवेशयोरैक्यंयुक्तम् ॥ प्रत्यक्षविरोधादेव ॥ तमेवंविद्वानमृतइहभवतिनान्यःपंथाअयना
यविद्यतइत्यादेः ॥ सहस्रशीर्षत्वादिसर्वेशत्वसर्वज्यायस्त्वादिज्ञानादेवमोक्षःप्रतीयते ॥ अनन्ययोगेन
नचात्रैक्यज्ञानमुक्तम् ॥ पुरुषएवेदंसर्वमित्यत्रापिसर्वेशितृत्वमेवोक्तम् ॥ उतामृतत्वस्येशानइतिवाक्यशे
षात् ॥ पुरुषएवेदंसर्वंभूतंभव्यंभवच्चयत् ॥ इत्युच्यतेतदीयत्वान्नतुसर्वस्वरूपतः ॥ भूतभव्यादिजातस्य
मुक्तानामपिचेश्वरः ॥ इत्युच्यतेश्रुतौविष्णुःसर्वदापुरुषोत्तमइतिभारते ॥ सर्वस्मादुत्तमइतिसम्यक्स्नेह
युतामतिः ॥ सुस्थिराभक्तिरुद्दिष्टातयामोक्षोनचान्यतः ॥ तयामोक्षोभवत्येवसाचेत्पूर्णास्वयोग्यतः ॥ अ
परोक्षदृशायुक्तासापूर्णेत्यभिधीयते ॥ अपरोक्षदृशिश्चापिमहाचार्योक्तदर्शनम् ॥ सोपियन्मोक्षनियतंमन
सासमुदीरयेत् ॥ तस्यदर्शनतोयातिमुक्तिंनास्त्यत्रसंशयः ॥ ध्यानंचगुरुशुश्रूषानित्यनैमित्तिकाःक्रियाः ॥
तीर्थदानजपाद्याश्चस्वाध्यायोहरिकीर्तनम् ॥ द्वादश्यादिव्रतंचैवतुलस्याद्यैरथार्चनम् ॥ सर्वंभक्त्यर्थमुद्दिष्टं

निष्फलंतुतयाविना॥विष्णुभक्तियुतोमुक्तियातिनान्यःकथंचन॥ एतदन्यत्तुयच्छास्त्रंनतच्छास्त्रंकुवर्त्मत
त्॥ विष्णोर्भक्तिमृतेमुक्तिर्जीवाभेदोहरेरपि॥ शिवब्रह्मादिसाम्यंचहरेर्मोहार्थमुच्यते॥ दैत्यानांमोहनार्था
यविष्णोरन्यसमानता॥ हीनताचोच्यतेशास्त्रैर्नतद्ग्राह्यंमनीषिभिः॥ विष्णुवायुगिरीशेंद्रदेवविप्राःक्रमा
त्सदा॥ सामर्थ्यतोविहीनास्तुगुणैःसर्वैस्तथैवच॥ हीनोविष्णुर्नकस्यापिसर्वतश्चोत्तमोमतः॥ एतदन्य
त्तुयच्छास्त्रंतदासुरविमोहनम्॥ तस्मात्सर्वोत्तमंविष्णुंनिश्चित्यपरमंव्रजेदितिहरिवंशेषु॥ तुलापुरुषदाना
द्यैरश्वमेधादिभिर्मखैः॥ वाराणसीप्रयागादितीर्थस्नानादिभिःप्रिये॥ गयाश्राद्धादिभिःपित्र्यैर्वेदपाठादि
भिर्जपैः॥ तपोभिरुग्रैर्नियमैर्यमैर्भूतदयादिभिः॥ गुरुशुश्रूषणैःसत्यैःधर्मैर्वर्णाश्रमोचितैः॥ ज्ञानध्यानादि
भिःसम्यक्चरितैर्जन्मजन्मभिः॥ नयांतितत्परंश्रेयोविष्णुंसर्वेश्वरेश्वरम्॥ सर्वभावैरनाश्रित्यपुराणपुरुषो
त्तममितिपाद्मे॥ भावोभक्तिःसमुद्दिष्टस्तद्वान्भावुकउच्यतइतिनारसिंहे॥ मुक्तानामपिसिद्धानांनाराय
णपरायणः॥ सुदुर्लभःप्रशांतात्माकोटिष्वपिमहामतइतिभागवतवचनम्॥ परायणइतिविशेषणान्ननारा
यणायनत्वंविनामुक्तिद्योतकं॥७॥ नचसिद्धेर्थेतात्पर्याभावोवक्तुंयुक्तः॥ अस्त्यत्रतवपिताराजेत्यादिषुसि
द्धएवतात्पर्यदर्शनात्॥ नचतत्रकार्यैतात्पर्यंकल्पयितुंयुक्तम्॥ सुखसाधनत्वविज्ञानेनैवप्रवृत्त्युपपत्तेः॥
वाक्यस्यस्वार्थमात्रेतात्पर्यपर्यवसानात्॥ अधिककल्पनायामश्रुतकल्पनाप्रसक्तिः॥ यजेतेत्यादिष्व
पियजनादेःसुखसाधनतामात्रंप्रतीयते॥ नशब्दस्यप्रेरकतावाक्यमात्रस्यप्रेरकत्वेसर्वैर्विहितमनिष्टसाध
नमपिक्रियेत॥ व्युत्पत्तिरपिसिद्धेसांगुलिनिर्देशादिनायुज्यते॥ नचकुत्रचित्सुखसाधनंविनाकार्यान्वि
तंविद्यते॥ लिङाद्यर्थोपिसुखसाधनत्वमेव॥ नचकार्यान्वितएवतात्पर्यमित्यत्रकिंचिन्मानम्॥ सुख

साधनमेवैकंनृणांवेदःप्रदर्शयेत् ॥ नकुर्वीतिनरंकापिप्रेरयत्यत्रकंचन ॥ सुखसाधनताज्ञानात्सुखप्राप्त्यर्थ
मिच्छया ॥ प्रवर्ततेततोवेदःसिद्धस्यैवप्रदर्शकः ॥ नतुकारकतांकापिवेदःप्राप्नोतिकस्यचिदितिब्राह्मे ॥
अतस्तद्विरोधिकथनंमोहतएव॥कार्यान्वितेशक्तिरितिवदतासिद्धवाक्यानांप्रामाण्यमंगीकृतंच ॥अन्यथा
वसंतेवसंतेज्योतिषायजेतेत्यादौवसंतादिलक्षणवाक्यानांस्थानांतरस्थानांस्वार्थेप्रामाण्याभावाद्वसंताद्य
सिद्धेर्यागाद्यसिद्धिः ॥ कार्यान्वितेशक्तिरित्युक्तेकार्यपदस्यकार्यान्वयाभावादशक्त्याविध्यादेरसिद्धि
श्च॥ कार्यपदस्यस्वतएवशक्तिरन्येषांकार्यान्वितत्वेनेत्यंगीकारेकल्पनागौरवम् ॥ स्वार्थेशक्तिरित्यंगीकारे
नकश्चिद्विरोधः॥ कर्तव्यतामात्रेवाक्यप्रामाण्यांगीकारेकर्मप्रयोजनेप्रमाणाभावात्तत्रापितात्पर्यमंगीकर्त
व्यमेवेतिसिद्धमेवसिद्धेतात्पर्यम् ॥ चित्रादितारकाद्वंद्वंयदापूर्णेंदुसंयुतम् ॥ चैत्रादिमासाविज्ञेयाइत्यादौव
स्तुयाथार्थ्येतज्ज्ञानेचोभयत्रतात्पर्यदर्शनात् ॥ उपासनावाक्येष्वप्युपासनायांवस्तुयाथार्थ्येचोभयत्र
तात्पर्ययुक्तम् ॥ उपासनायाःकार्यत्वेविष्णोरात्मत्वएवच ॥ उभयत्रापितात्पर्यमात्मोपासादिकेवि
धौ ॥ तस्मादसत्यंनध्यायेद्ध्यायेत्तत्सत्यतायथा ॥ विचार्यमतिमान्वाक्यैर्बहुभिःस्वार्थवाचकैरितिह
रिवंशेषु ॥ तस्मादिष्टसाधनमेवसर्ववाक्यार्थः ॥ तार्किकाणांतूक्तवचनानांप्रामाण्यंसिद्धमेव ॥ अतस्त
द्विरोधिकथनंमोहतएव ॥ अनुमायाविरोधश्चेत्प्रत्यक्षेणागमेनवा ॥ सैवाप्रमाणतांगच्छेदागमद्विट्तथाक्ष
जम् ॥ तस्मादागमएवैकोमानानामुत्तमोत्तमः ॥ धर्मार्थकाममोक्षाणांसाक्षादेवप्रदायकइतिवायुप्रोक्त
वचनान्नानुमानविरोधोवक्तुंयुज्यते ॥ सर्वत्रानिवार्यत्वाच्चप्रत्यनुमानस्य ॥ निर्णयस्त्वागमेनैवनानुमागम
वर्जिता ॥ क्वचिन्निर्णीतिहेतुःस्यादतःशास्त्राद्धिनिर्णयइतिभारते ॥ नचवेदात्मकेतिहासपुराणोक्तन्यायं

परित्यज्ययेनकेनचित्कुमन्यायोयुज्यते ॥ अक्षपादकणादौचसांख्ययोगार्हतस्तथा ॥ शिवशक्तिम
हायानलोकायतपुरःसराः ॥ गाणपताश्वसौराश्वसर्वेप्रोक्तादुरागमाः ॥ ऋग्यजुःसामाथर्वाश्चेतिहास
पुराणकौ ॥ स्वागमाइतिसंप्रोक्तामीमांसाधर्मएवचेतिपाद्मे ॥ पंचरात्रंभारतंचमूलरामायणंतथा ॥ इ
तिहासइतिप्रोक्तोब्राह्माद्यंचपुराणकमितिप्रकाशिकायाम् ॥ वेदाश्चैवेतिहासाश्वपुराणंभागवतंतथा ॥
मूलप्रमाणमुद्दिष्टंमीमांसाचतथोत्तरा ॥ एतेषामविरोधेतुमानमन्यदुदीरितम् ॥ एतेषांतुविरुद्धंयदप्रमाणं
विदोविदुरितिव्यासस्मृतौ ॥ विष्णोःसर्वोत्तमत्वस्यज्ञानार्थंशास्त्रमिष्यते ॥ अतस्तत्साधकंशास्त्रंदुःशास्त्रं
तद्विरोधियदितिब्रह्मांडे ॥ विष्णोःसर्वोत्तमत्वंचतद्भक्त्यामोक्षएवच ॥ शास्त्रार्थइतिनिर्दिष्टःसर्वशास्त्रार्थ
निर्णयादितिपाद्मे ॥ नचागमस्याप्रामाण्यंवक्तुंयुक्तंतत्प्रमाणाभावात् ॥ स्वतःप्रामाण्याच्च ॥ तदनंगी
कारेचानवस्थानात् ॥ आगमाप्रामाण्यस्यसाधकानुमानादेरप्यागमवदप्रामाण्यप्राप्तेश्च ॥ विशेषप्रमा
णाभावात् ॥ स्वीकृतत्वाच्चतैरपिस्वागमप्रामाण्यस्य ॥ नह्यनुमानादिनासन्मलधारणचैत्यवंदनादेःस्वर्ग
साधनत्वंज्ञातुंशक्यम् ॥ नचप्रत्यक्षमात्रप्रामाण्यवादिनस्तत्सिद्धमागमाप्रामाण्यम् ॥ अतस्तेषांप्रत्यक्षव
दनुमानवच्चांगीकर्तव्यमागमप्रामाण्यम् ॥ उक्तंचभविष्यत्पर्वणि ॥ येनोक्तमागमामात्वंकुतस्तदिति
तंवदेत् ॥ प्रत्यक्षादेर्यदिब्रूयात्तन्मात्वंकेतितंवदेत् ॥ तत्स्वतश्चेदागमस्यप्रामाण्यंनस्वतःकुतः ॥ परतश्चे
त्प्रमाणस्यनकस्यापिस्थितिर्भवेत् ॥ अंगीकृतंचप्रामाण्यंसर्वैरप्यागमस्यतु ॥ यतःस्वपक्षप्रामाण्यंविरो
धेप्यक्षजादिना ॥ अंगीकुर्वंतितत्पक्षःप्रत्यक्षादिविरोधकः ॥ शून्यताक्षणिकत्वंचज्ञानमात्रत्वमेववा ॥भा
वाभावात्मतासाकंशरीरात्मत्वमेवच ॥ प्रत्यक्षेणविरुध्यंतेमद्देहइतिदर्शनात् ॥ भावरूपस्थिरत्वादेर्ज्ञानाद्भेद

स्यदर्शनात् ॥ देहभेदोयद्यमुख्योदेहैक्येमुख्यताकुतः ॥ जातिस्मृतिप्रमाणाच्चनयुक्तादेहरूपता ॥ अनु
ष्ठायचशास्त्रार्थंफलभोगस्यदर्शनात् ॥ प्रत्यक्षादेर्विरुद्धत्वात्सौगताद्याडुरागमाः ॥ बह्वागमविरोधाच्चदुष्ट
त्वंतेषुसंस्थितम् ॥ प्रामाण्यंस्वीकृतंयैस्तुवेदानामागमाहिते ॥ शतकोट्यःपंचरात्रंपुराणंतावदेवच ॥ रामस्य
चरितंतावत्तावदन्यच्चसर्वशः ॥ अनंताश्चतथावेदाःसांगोपांगाश्चसर्वशः ॥ सर्वाधिक्यंयत्रविष्णोस्तात्प
र्यात्समुदीर्यते ॥ विंशदेवसहस्राणिश्लोकानांसमुदीरितम् ॥ बार्हस्पत्यंतथाबौद्धंभावाभावमतंतथा ॥
शिवशक्त्यादिकंयच्चकिंचित्प्रामाण्यसंयुतम् ॥ त्रिंशत्कोट्येवतत्सर्वमतोमानंनतत्स्मृतम् ॥ बहुमानविरु
द्धंयन्नतन्मानंविदोविदुः ॥ गुणसाम्येपिकिमुतगुणाधिकविरोधियत् ॥ यथाबहूनांज्ञानानांसमानां
गुणतोपिच ॥ विरोध्येकंतुयज्ज्ञानंनमानत्वंगमिष्यति ॥ प्रत्यक्षादौहिबहुभिःसमैरेकमपोद्यते ॥ तस्माद्वे
दाःप्रमाणंस्युर्बाहुल्यादेवकिंपुनः ॥ अदोषत्वाद्गुणाच्चैवबलवत्कार्यसाधनात् ॥ वेदोक्तकर्मयुक्तानांतथा
सिद्धिमतामपि ॥ वेदबाह्यक्रियायोगान्नबाधःक्वापिदृश्यते ॥ वेदोक्तकर्मसिद्धानांनाबाध्यंदृश्यतेक्वचि
त् ॥ असाध्यंवाततोवेदाःप्रामाण्यंनिश्चयाद्गताइति ॥ प्रत्यक्षमनुमानंचवाक्यंचेतित्रिधाप्रमा ॥ उप
माद्यंप्रमाणंयदेतेष्वंतर्गतंहितत् ॥ निर्दोषेंद्रियसंयोगःप्रत्यक्षमितिगीयते ॥ निर्दोषयुक्तिरनुमातादृशोक्ति
स्तथागमः ॥ मानंचैवविशेषेणनिर्दोषज्ञानसाधनम् ॥ अर्थापत्तिश्चोपमाचसंभवाद्यनुमैवतु ॥ दुःखा
द्यभावःप्रत्यक्षंबाह्यगश्चानुमास्मृता ॥ योग्यस्यानुपलब्ध्याख्यायुक्तिरेवहिबाह्यगा ॥ मनसःसंप्रयोगोयोदुः
खादिरहितात्मनः ॥ अभावरूपंप्रत्यक्षंमनश्चद्विविधंमतम् ॥ चेतनंचजडंचेतिचक्षुराद्यंतथैवच ॥ चेतनांत्विं
द्रियंह्यात्मस्वरूपान्नापरंस्मृतम् ॥ मुक्तानांचेतनंत्वेवबद्धानामुभयंतथा ॥ स्वरूपेणापिसंयोगःस्वरूपस्यै

वयुज्यते ॥ यथारत्नस्यसंयोगस्तत्प्रकाशेननित्यदा ॥ रत्नस्यचप्रकाशस्यनभेदःकश्चिदिष्यते ॥ विशेषो नामविज्ञेयोविशेषाद्दृष्टिगोचरः ॥ विष्णोरेवस्वरूपाणांतद्गुणानांतथैवच ॥ तस्यैवशिरआदीनांनैवभेदो स्तिकश्चन ॥ अभेदेपिविशेषेणव्यवहारःपृथग्भवेत् ॥ विष्णोर्जडेनजीवैश्चभेदएवश्रियातथा ॥ विष्णोः क्रियाश्रयाःकश्चिदभेदस्तैरपिध्रुवम् ॥ कादाचित्कत्वमप्यासांविशेषेणैवयुज्यते ॥ एवंविमुक्तजीवा नांस्वरूपैःस्वगुणैरपि ॥ स्वक्रियाभिस्तथैवैक्यंनित्यंस्वावयवैरपि ॥ भेदाभेदस्तुबद्धानांगुणैःस्वैःकर्म भिस्तथा ॥ अंशांशिनोर्गुणस्यापिगुणिनःकर्मतद्वतोः ॥ कार्योपादानयोश्चैवव्यक्तिसामान्ययोरपि ॥ भेदाभेदःसमुद्दिष्टोविनाशोयत्रदृश्यते॥ एकस्मिन्विद्यमानेपितयोरेकस्यकस्यचित्॥ अविनाभावनियमो यत्राभेदस्तुतत्रहि॥अभेदश्चस्वभिन्नेनभेदाभेदस्तुतत्रच ॥ भेदाभेदोनतुक्वापिविष्णोरस्तिकदाचन॥भेदएव तुजीवाद्यैःकेवलाभेदआत्मनि ॥ स्वरूपेषुविशेषोयःस्वरूपंतस्यसोपितु॥ क्रियाणांचननाशोस्तितच्छक्तेः पूर्वकालतः ॥ विशेषएवोपरतिःक्रियायाःसमुदीरिता ॥ विशेषस्यविशेषोन्योनचैवास्तिकथंचन ॥ स्वस्या पितुविशेषश्चस्वयमेवभविष्यति॥ यथाजनेर्जनिर्नान्यातस्यावस्तुजनिर्जनिः ॥ तथापितुजनित्वात्सासत्वं वस्तुनआनयेत्॥ एवमेवविशेषोसौविशेषांतरवर्जितः॥करोतिनकरोतीतिविशेषव्यवहारकृत्॥ व्यक्तिभावं गतायातुकरोतीतिस्वरूपिणी ॥ शक्तिरूपस्थितासैवक्रियाशक्तिरितीर्यते॥ साचव्यक्तिस्तुजनिवत्क्रिया यारूपमेवतु ॥ तथापितुविशेषेणस्वरूपेणविशेषिणी ॥ जनेर्जनिवदेवासौज्ञातव्याव्यतिरेकतः॥ एवंमुक्त क्रियानित्यानान्येषांभ्रांतिसंभवात् ॥ मुक्तावुच्छेदतश्चैवनिःशेषेणाखिलस्यच ॥ नैवंमुक्तक्रियायास्तुत स्याश्चपुनरुद्भवात् ॥ अमुक्तानांक्रियायाश्चमुक्तावपिसमास्थिताः ॥ अभिन्नाइतिताज्ञेयाअभिव्यक्तेः

पुनःपुनः ॥ चिंतनादिक्रियाणांतुमुक्तावुच्छेदतःसदा॥किंमयाकार्यमादीनांभेदाभेदउदीरितः ॥ अचेतनेष्व
स्वतंत्राःक्रियायस्मात्सदैवतु॥भेदाभेदस्ततोज्ञेयःसर्वत्रनियमेनतु ॥ईश्वरःप्रकृतिर्जीवोजडंचेतिचतुष्टयम् ॥
पदार्थानांसमुद्दिष्टंतत्रेशोविष्णुरुच्यतइत्यादिब्रह्मतर्के ॥ परास्यशक्तिर्विविधैवश्रूयतेस्वाभाविकीज्ञानबल
क्रियाचेत्यादिश्रुतयश्च॥शक्तिशक्तिमतोश्चैवविशेषस्यविशेषिणः॥अविनाभावितायत्रनभेदस्तत्रविद्यते॥
सर्वाधिकसुखत्वंचज्ञानंसर्वाधिकंतथा॥सर्वाधिकासर्वशक्तिस्तेजःसर्वाधिकंतथा॥ इत्यादयोगुणाःसर्वेस्व
रूपंवैष्णवंतथा ॥ भेदान्यत्वादयःशब्दाअतद्रूपत्ववाचकाः ॥ क्वचिदंतरशब्दश्चविशेषस्यैववाचकः ॥ ए
एकस्मिन्नेवशब्दानांयस्तुनानास्वरूपिणाम् ॥ प्रयोजकत्वहेतुःस्यात्सविशेषःप्रकीर्तितइतिच ॥ ॥१०॥
यदाहुर्ब्रह्मविज्ञानात्समग्रत्वंयियासवः॥ब्रह्मज्ञानात्समग्रत्वंनान्यतश्चेतिनिश्चयात् ॥ तत्रकेचिन्मनुष्यास्तु

**ब्रह्मवाइदमग्रआसीदेकमेवतदेकꣳसन्नव्यभवत्तच्छ्रेयोरूपमत्यसृजत**

मन्यंतेब्रह्मकिंमतेः ॥ समग्रभावमगमदितिब्रूयाच्चतानिति ॥ ब्रह्मापिसर्वदात्मानमहेयंगुणबृंहितम् ॥ सर्व
दास्तीतिमेयंचविजानातितथैवतु ॥ अतएवसमग्रत्वंस्वतएवास्यसर्वदा ॥ तदहेयंपरंब्रह्मयोयोवेद्गुणबृंहि
तम् ॥ सर्वदास्तीतिमेयंचससयातिसमग्रताम् ॥ मुख्यंसमग्रंतद्ब्रह्मज्ञानस्यापिसमग्रतः ॥ किंचित्समग्रतांदे
वास्तेषांज्ञानंहितादृशम् ॥ आपुस्ततोधमांज्ञानतादृक्ताद्दषयोपितु ॥ ऋषिभ्योप्यधमांप्रापुर्मानुषा
श्चसमग्रताम् ॥ अहेयंचगुणैःपूर्णंनित्यास्तिज्ञानगोचरम् ॥ ब्रह्मपश्यन्वामदेवःसूक्तमेतद्ददर्शह ॥ अहंम
नुःसूर्यइतिस्वांतर्यामिव्यपेक्षया ॥ अहंशब्दोयतोविष्णौततश्चोत्तमपूरुषाः ॥ वर्ततेऽभवमित्याद्या
सर्वांतस्थेजनार्दने ॥ मनुरेषोऽवबोधत्वान्मन्वंतस्थोजनार्दनः ॥ सद्याचारानुवाचेशःप्रेरयन्मनुमान

सम् ॥ सएवसूरिभिःप्राप्यःसूर्यांतस्थोमुमुक्षुभिः ॥ सएवकक्षगैःसेव्यःकक्षीवतिसमास्थितः ॥ स
एवशुक्रसंस्थस्तुनीतीःकवयतिस्वयम् ॥ यतःकविःसकामस्यप्रेरणादुशनास्मृतः ॥ सएवशंबरपुरोबिभेदें
द्रेव्यवस्थितः ॥ सर्वांतर्यामिकत्वात्तुसर्वकर्मासएवहि ॥ ततःसूक्तेतथोवाचवामदेवःश्रियःपतिम् ॥ यो
योऽहेयंपरंब्रह्मसदैवास्तीतिमानगम् ॥ इदानीमपिजानातिस्वयोग्यांससमग्रताम् ॥ प्राप्नोतितस्यदेवाश्च
नाभूतिंकर्तुमीशते ॥ आत्माहिविष्णुर्देवानांतेषुव्याप्तोयतःसदा ॥ नियोक्तृत्वेनकार्येषुतज्ज्ञोयस्माच्चसा
धकः ॥ यस्यप्रीतोहरिर्नित्यंतस्यप्रीताश्चदेवताः ॥ प्रीतियोगान्नैवतस्यविरुद्धंकर्तुमीशते ॥ एवंविलक्षणं
देवमुपास्तेजीवरूपिणम् ॥ अहेयोस्तीतिमेयोन्योथान्योसौहरिरित्यपि ॥ नसवेदपरंविष्णुंजीवरूपेणवे
त्तियत् ॥ नाहेयत्वंचवेदास्यतस्मात्पशुवदीरितः ॥ देवानांपशुवच्चासौयोवेदाहेयरूपिणम् ॥ पशवो
बहवोयद्वत्पुरुषंभोजयंत्युत ॥ तत्त्वज्ञःपुरुषस्तद्वदेकोपिबहुगायथा ॥ देवान्भोजयतिज्ञानसंपत्त्यावि
ष्णुसंश्रयात् ॥ स्वीकारेतुपशोःप्रीतिरेकस्यापिभविष्यति ॥ बहूनांहिगवांलाभेपराप्रीतिश्चकिंपुनः ॥ त
स्मात्सुबहुगोरूपेदेवानांतत्त्ववेदिनि ॥ भवेदभ्यधिकाप्रीतिर्विष्णवहेयत्ववेदनात् ॥ नित्याहेयस्तथैवान्य
स्तदन्योविष्णुरित्यपि ॥ देवानामप्रियंज्ञानंनैवंविद्यादतःपुमान् ॥ विष्णोरहेयतांचैवनित्यत्वंपूर्णतामपि ॥
योनवेदतथायश्चजीवैरैक्यंहरेर्वदेत् ॥ यश्चासत्यंजगद्ब्रूयात्सर्वेतेतमसिस्फुटम् ॥ मज्जंतिसर्ववेदैर्हिगुणैः
सर्वैर्हरिर्यतः ॥ पूर्णोनित्यमपूर्णाश्चजीवामुक्ताअपिस्फुटम् ॥ निःशेषदुःखमोकेनसुखैकानुभवस्तुयः ॥
मोक्षइत्युच्यतेवेदैस्तेपिमुक्ताहरिंसदा ॥ उपासतेजगच्चैतत्सर्वदाद्यंतवर्जितम् ॥ नकदाचिज्जगन्नाशोनक
दाचित्तदन्यथा ॥ जगत्प्रवाहरूपेणसर्वदैवंव्यवस्थितम् ॥ ज्ञानतःकर्मतोवापितपसाशक्तितोपिवा ॥ नक

स्याप्यन्यथाभाव्यंजगदेतत्कदाचन ॥ सत्योविष्णुःश्रीश्वसत्याजीवाःसत्याजडंतथा ॥ असत्यंनास्तिकिं
चिच्चसर्वेषांज्ञानगोचरम् ॥ ज्ञात्वाविष्णुमतोमुक्तिंप्राप्नुयात्पुरुषोत्तममितिभविष्यत्पर्वणि ॥ इदमित्यात्म
नोयोग्यंसर्वंसमर्थंभवति ॥ निर्दुःखानंदस्यापेक्षितत्वान्मनसिस्थितत्वेनेदमितियुज्यते ॥ तत्सर्वमभवत्सर्वं
भविष्यंतइत्यादिनासमग्रभावस्यप्रस्तुतत्वात् ॥ ब्रह्मपश्यन्वामदेवोब्रह्मणोमन्वादिजीवैरहेयत्वंप्रतिपेदे ॥
ब्रह्मपश्यन्वामदेवोब्रह्मणोहेयतांसदा ॥ मन्वादिभिःसर्वजीवैःप्रतिपेदेहिमंत्रदृगितिब्राह्मे ॥ तदिदंब्रह्मयोऽ
हेयत्वादिगुणमेतर्ह्यपिवेद ॥ अहंशब्दस्याहेयत्वानंगीकारेइदंशब्दोपिव्यर्थः ॥ सर्वस्वरूपत्वंहिदुर्विद्व
द्भिरंगीक्रियते ॥ इदंशब्देनपरब्रह्मविवक्षायांब्रह्मशब्दोव्यर्थःस्यात् ॥ इदंयोहमितिवेदेत्येवस्यात् ॥
एवंशब्दश्चव्यर्थः ॥ अस्मत्पक्षेतुतदात्मानमेवावेदित्यपिज्ञातव्यमित्येवंशब्दार्थः ॥ तत्पक्षेतदपिव्यर्थमेव ॥
नहितत्पक्षेतरस्वात्मानंवेत्ति ॥ व्याख्यानव्याख्येयभावश्चागतिकागतिः ॥ अभावेपृथगर्थानांव्याख्याम
भ्यासमेववा ॥ कल्पयेन्नैवतद्भावेव्याख्याऽभ्यासश्चयुज्यतइतिभारते ॥ स्वरूपज्ञंतथाहेयंनित्यंचब्रह्मवे
त्तियः ॥ समग्रभावंगच्छेत्सतत्प्रसादान्नसंशयइतिच ॥ सईश्वरएषांदेवानामात्माभवति ॥ पुँल्लिंगंचतत्स
त्यंसआत्मेत्यादिवद्भवति ॥ देवानांव्यापकत्वात्तुतेषामात्माहरिःसदा ॥ तज्ज्ञःप्रियस्ततस्तेषांतस्यनाभूति
दास्ततइतिवामने ॥ सर्वेभ्योन्यांविलक्षणांदेवनांस्वगुणेभ्योऽहेयत्वादिभ्यश्चान्यांयउपास्तेअहेयोऽस्मीति
मेयश्चान्योन्यश्चासौविष्णुरितिमत्वायोविष्णोरन्यांदेवतामुपास्तेअन्योसावन्योहमस्मीतिनसवेदेतिवा ॥
जीवादिभ्योहरिर्भिन्नस्तंयःस्वगुणभेदतः ॥ अहेयोन्योहरिश्चान्यइतिमत्वाऽन्यमेववा ॥ यउपास्तेनस
ज्ञानीमनुष्याणांपशुर्हिसः ॥ सम्यग्ज्ञानीतुदेवानांपशुरित्यभिधीयतइतिच ॥ एवंसदेवानामित्यत्रपूर्वःस

म्यग्ज्ञानीपरामृश्यते ॥ एतन्मनुष्याविदुरित्यत्रैतच्छब्देनविष्णोरन्यदेवतोपासनमुच्यते ॥ नह्यज्ञान्येवदे
वानांभोजकः ॥ ज्ञानीहिविशेषेणभोजकः ॥ अथोअयंवाआत्मासर्वेषांभूतानांलोकइतिवचनात् ॥ सय
एवंवित्सर्वेषांभूतानांब्रह्मविच्चतत्रोच्यते ॥ प्रस्तुतत्वात् ॥ तत्त्वविद्देवगोःप्रोक्तोनरगौश्वाप्यतत्त्ववित् ॥ त
स्माद्देवास्तत्त्वविदेप्रियंकुर्वंत्यतंद्रिताइत्याग्नेये ॥ तस्यहनदेवाश्चनाभूत्याईशतइतिदेवानांतत्त्वज्ञानंप्रियमि
त्युक्तंच ॥ असत्यमप्रतिष्ठंतेजगदाहुरनीश्वरमिति ॥ यच्चिकेतसत्यमित्तन्नमोघंवसुस्पार्हमुतजेतोतदा
ता ॥ सत्योजीवेशयोर्भेदःसत्याविष्णोर्गुणाअपि ॥ सत्यंजगदिदंसर्वंसत्येशजगतोर्भिदिरित्यादेश्च ॥ भेदेनै
वजगत्सर्वंभेदेनेशंगुणैःसह ॥ भेदेनजीवानन्योन्यंमुक्ताःपश्यंतिसर्वशः ॥ निःशेषदुःखहीनाश्चकेवलंसु
खभोगिनः ॥ जन्ममृत्युविहीनाश्चकालसंबंधवर्जिताः ॥ रजस्तमःसत्त्वहीनाःप्रकृत्यादिविवर्जिताइत्या
दिगारुडवचनान्नज्ञाननिवर्त्यतावक्तुंयुक्ता ॥ तिर्यङ्मानुषदेवादिविष्णुरूपेष्वशक्तता ॥ यस्मिन्कस्मिंश्च
विषयेदुःखित्वंभिन्नतापिवा ॥ प्रकृतेर्विकारितावापिच्छेदभेदव्रणादिवा ॥ अज्ञानंनाशितावापिजन्म
जीवैरभिन्नता ॥ प्रकृत्यभिन्नतावापिजीवाभेदःपरस्परम् ॥ जडाभेदोथवाविष्णोर्मिथ्यात्वंजगतोपिवा ॥
अगुणत्वमदेहत्वमकर्तृत्वंतथाहरेः ॥ सम्यग्भक्तिमृतेमुक्तिर्विष्णौतद्द्वेषतस्तथा ॥ मुक्तावभोगोजीवा
नांमुक्तौसाम्यंतथैवच ॥ अरूपत्वंचजीवानांमुक्तानांबंधिनामपि ॥ नामतीर्थादिभिर्मुक्तिस्तत्त्वज्ञानं
विनापितु ॥ विष्णोःसकाशात्प्रकृतेर्ब्रह्मणोनंतरुद्रयोः ॥ गरुडेंद्रसूर्यविप्रादेरग्निसोमगुहादिनाम् ॥
प्रद्युम्नस्यानिरुद्धस्यदेवविप्रादिनामपि ॥ यैःकैश्चापिगुणैर्विष्णोःसकाशाद्दूरतातथा ॥ यदाकदापियत्नै
र्वात्ररशापादिनापिवा ॥ तपसावाप्युपायैर्वायोगज्ञानादिनापिवा ॥ साम्यंवाविष्णवधीनत्वादन्यथैषां

स्थितिःकृतिः ॥ असंसारित्वमेषांवाप्येषामीश्वरतापिवा ॥ विनाविष्णुप्रसादेनमुक्तिरेषांसकाशतः ॥
विष्णोःप्रयोजनावाप्तिर्विष्णोर्दोषश्चकश्चन ॥ विष्णोःसर्वेषुरूपेषुसंपूर्णगुणहीनता ॥ भेदोवाविष्णुरूपेषु
विशेषोवागुणेषुच ॥ श्रियःसकाशादाधिक्यंब्रह्मादेःसाम्यमेववा ॥ ब्रह्मवाय्वोरनंतस्यरुद्रस्यगरुडस्य
च ॥ तेभ्यश्चैवेंद्रसूर्यादेर्विप्रभूपादिनांततः ॥ बद्धानांमुक्तिगानांवादैत्यानांमोक्षएवच ॥ सर्वमोहार्थमु
द्दिष्टंवेदेषुहरिणापिवा ॥ ब्रह्मणावाथरुद्रेणदेवैश्चमुनिभिस्तथा ॥ यथासुराणांसज्ज्ञानेतात्पर्यंसर्वदाश्रुतेः॥
तथादुर्ज्ञानजननेतात्पर्यमसुरेषुच ॥ एवमेवचदेवानांविष्णुब्रह्मादिनामपि ॥ विष्णोःसर्वगुणैःपूर्तिरपिम
त्स्यादिरूपिणः ॥ अजेयत्वमभेद्यत्वमच्छेद्यत्वंचसर्वशः ॥ सर्वावताररूपाणामपिचित्सुखरूपता ॥

क्षत्त्रंयान्येतानिदेवत्राक्षत्राणींद्रोवरुणःसोमोरुद्रःपर्जन्योयमोमृत्युरीशानइति

श्रीब्रह्मरुद्राद्याधिक्यंसर्वेशत्वंस्वतंत्रता॥ सर्वशक्तिस्तत्प्रसादान्मोक्षोब्रह्मादिनामपि॥तद्भक्त्यैवविमोक्षश्चभे
दोजीवेशयोरपि ॥ श्रीब्रह्मरुद्रशक्रादेःक्रमेणैवनिजागुणाः ॥ सर्वदोषव्यपेतत्वंविष्णोःसर्वत्रसर्वदा ॥
एतत्सर्वंसर्ववेदैर्विष्ण्वाद्यैर्देवतागणैः ॥ ऋषिभिःक्षत्त्रियाद्यैश्चसम्यक्तात्पर्यतःसदा ॥ उक्तंसर्वेषुशास्त्रेषु
तस्माद्ग्राह्यंबुभूषुभिः ॥ इदंसत्यमिदंसत्यमिदंसत्यंनसंशयः ॥ कोटिभिःशपथैश्चापिनिर्णीतंदेवतागणैः ॥
अनादिकालतश्चायंशास्त्रार्थोनान्यथाक्कचित् ॥ पुनश्चानंतकालीनएषएवनसंशयः ॥ ज्ञातव्यश्चैषएवा
र्थःसर्वैर्देवबुभूषुभिः ॥ एवंतुस्थिरयाबुद्ध्याज्ञात्वायास्यथतत्परम् ॥ एवंतेहंसरूपेणविष्णुनादेवतागणाः ॥
ब्रह्माद्याबोधिताःसर्वेतथाज्ञात्वापरंगताः ॥ साक्षाद्विष्णुर्हंसरूपउक्त्वैवंतुदिवौकसाम् ॥ वासुदेवाख्यरूपे
णतेनसर्वहृदिस्थितः ॥ संकर्षणाख्यरूपेणविवेशानंतमेवच ॥ तंध्यायतिसदानंतस्तस्मान्मुक्तिपदेच्छया ॥

प्रद्युम्नाख्येनरूपेणकाममेवविवेशसः ॥ हंसस्तद्ध्यानतोमुक्तिकामइच्छतिसर्वदा ॥ अनिरुद्धाख्यरूपेण सोनिरुद्धंविवेशह ॥ हंसस्तद्ध्यानतोमुक्तिमनिरुद्धस्तथेच्छतीत्यादिब्रह्मांडपुराणेतत्त्वनिर्णयगीतायाम् ॥ विष्णोर्ब्राह्मणजातिःसनूब्रह्माजज्ञेचतुर्मुखः ॥ इतोयेजगतस्तस्मात्क्षत्रजातिरजायत ॥ वायुःसदाशिवोनं तोगरुडःशक्रएवच ॥ कामश्ववरुणश्चैवसोमःसूर्योयमस्तथा ॥ एवमाद्याःक्षत्रियास्तुदेवानांब्रह्मनिर्मि ताः ॥ श्रेयसीसर्वजातिभ्यःक्षत्रजातिरितिश्रुतिः ॥ नैवक्षत्रात्पराजातिर्ब्रह्मजातिंविनाक्वचित् ॥ ब्राह्मणा च्चपरोराजाराजसूयाश्वमेधयोः ॥ उपास्तेराजसूयेऽतोब्राह्मणोराजसूयिनम् ॥ आसीनआसनाधस्तात्त

तस्मात्क्षत्रात्परंनास्तितस्माद्ब्राह्मणःक्षत्रियमधस्तादुपास्तेराजसूयेक्षत्रएवतद्यशोदधातिसैषा क्षत्रस्ययोनिर्यद्ब्रह्मतस्माद्यद्यपिराजापरमतांगच्छतिब्रह्मैवांततउपनिःश्रयतिस्वांयोनिंयउए नꣳहिनस्तिस्वाꣳसयोनिमृच्छतिसपापीयान्भवतियथाश्रेयाꣳसꣳहिꣳसित्वा ॥ ११ ॥

थापिब्राह्मणोगुरुः ॥ तस्मात्सराजसूयांतेब्राह्मणान्वंदयीतच ॥ यःक्षत्रियोब्राह्मणहापितृहासप्रकीर्तितः ॥ पापीयानेवभवतिहत्वास्वपितरंयथेतिवामने॥स्वतोधिकगुणंहत्वासाक्षाच्चपितरंपुनः ॥क्षत्रस्यब्राह्मणंहत्वा तावान्दोषोभवेद्ध्रुवमित्याग्नेये॥ईशानोमारुतःप्राणोवायुर्जिष्णुस्तथैवच॥ धृष्णुश्चपवमानश्चपवनश्चेतिक थ्यतइतिशब्दतत्त्वे ॥ मृत्युःसंकर्षणःशेषःशेतानंतस्तथैवच॥बलिर्महाविषश्चेतिभूधरश्चेतिकथ्यतइतिच॥ इंद्रःसुपर्णोगरुडोमहाभारोधुरंधरः ॥ विश्वजिच्चाप्यवध्यश्चवैनतेयश्चकथ्यतइतिच ॥ पर्जन्योमघवांश्चै वपुरुहूतःपुरंदरः॥प्राचीनबर्हिर्हर्यश्वःसोमपामेषभुक्तथेतिच ॥ यशोनिधिर्ब्राह्मणस्तुतद्दातुंक्षत्रियेस्वयम्॥ अधोब्राह्मणआसीनोराजसूयेहिसेवतइतिप्रत्यये ॥ ऋच्छतिविनाशयति ॥ रीङ्क्षयइतिधातोः॥ ११॥

विवस्वदिंद्रवरुणविष्णुभ्योन्येदितेःसुताः ॥ रुद्राद्न्येतथारुद्रावायोरन्येचवायवः ॥ अग्नेरन्येचवस
वोवैश्याइत्येवकीर्तिताः ॥ एकएवहरेर्जातःपरिवारविवर्जितः ॥ वाय्वादीन्क्षत्रियान्सृष्ट्वापुनरल्पपरिग्र
हः ॥ इच्छन्बहुपरीवारंवैश्यान्देवान्ससर्जह ॥ ततोबहुतरानिच्छन्शूद्रान्देवान्ससर्जह ॥ अश्विनौ
पृथिवीचैवकालमृत्यवएवच ॥ शूद्रदेवाःसमुद्दिष्टादेववर्णाइतिस्मृताः ॥ स्रष्टास्वयंसमुद्दिष्टःपालका
देवताइमाः ॥ धारणंकथमस्यस्याद्रतिश्चास्यकथंपरा ॥ इतिमत्वाहरेर्भक्तिंधर्मरूपंपुनर्विभुः ॥ प्रा
णिनांधैर्यरूपंचवायोरूपांतरंपुनः ॥ ससर्जमतिमान्ब्रह्माविष्णोराज्ञापुरःसरः ॥ तस्माद्वायोःपरोनास्ति॥

सनैवव्यभवत्सविशमसृजतयान्येतानिदेवजातानिगणशआख्यायंतेवसवोरुद्राआदित्यावि
श्वेदेवामरुतइति ॥ १२ ॥ सनैवव्यभवत्सशौद्रंवर्णमसृजलपूषणमियंवैपूषेयꣳहीदꣳसर्वंपु
ष्यतियदिदंकिंच ॥ १३ ॥ सनैवव्यभवत्तच्छ्रेयोरूपमत्यसृजतधर्मंतदेतत्क्षत्रस्यक्षत्रंयद्धर्म

तेविष्णुंसनातनम् ॥ शेषादीनांक्षत्रियाणांवायुरेवाधिपःस्मृतः ॥ धारणाद्धर्मइत्याहुर्वायुर्धारयतिप्रजाः ॥
अवलोपिततोवायोर्विष्णुभक्त्यादिरूपिणः ॥ प्राप्तुमिच्छतियुक्तःसन्विष्णुंसुबलवत्तरम् ॥ यथैवयुवरा
जेनमहाराजमभीप्सति ॥ प्राप्तुंधर्माभिमानीसवायुःसत्याभिमानवान् ॥ तस्मादाहुर्धर्मविदंसत्यंवेत्तेतिवे
दिनः ॥ सत्यज्ञमथधर्मज्ञंवायुर्देवोयतस्तयोरितिनारदीये ॥ नैवव्यभवदितिपरिवारबहुत्वेनयद्विशिष्टत्वंत
न्नाभवदित्यर्थः ॥ बृहत्त्वात्सर्ववर्णानांब्राह्मणाःपरिकीर्तिताः ॥ क्षतत्राणात्क्षत्रियाश्चत्रिषूनत्वाद्विशःस्मृ
ताः ॥ ऊनवाचीहिविट्शब्दःशुभेदत्तेत्रिभिर्यतः ॥ रमतेसततःशूद्रःसब्राह्मण्याभिमानवान् ॥ ब्रह्माग्निनास
हैवास्तेदेवेष्वथनरेषुच ॥ ब्राह्मणेनसहैवास्तेब्रह्माशुभचतुर्मुखः ॥ क्षत्रजात्यभिमानीतुपवनोदेवराजभिः॥

सुपर्णशेषरुद्राद्यैर्मानुषेषुचराजभिः॥ वैश्यजात्यभिमानीचनासिक्योवायुरूर्जितः॥ वस्त्वादिभिःसहैवास्ते
देवेष्वथनरेषुच ॥ विड्भिःशूद्राभिमानीचनिर्ऋतिर्दैवतासुच ॥ नासत्ययोःपृथिव्यांचशूद्रेष्वेवतुमानुषे ॥ य
स्मादग्नौविशेषेणब्रह्मणःसंनिधिर्भवेत् ॥ अतोग्नावेवदेवानांसर्वेषांनियमाद्धविः ॥ हुत्वालोकान्प्रार्थयं
तितथाविप्रेषुमानुषे ॥सर्वजात्युत्तमोब्रह्मायतोविप्राग्निसंस्थितः॥तस्माद्विप्रांस्तथैवाग्निंतर्पयेद्ब्रह्मतुष्टिकृत्॥

स्तस्माद्धर्मात्परंनास्त्यथोअबलीयान्बलीयाꣳसमाशꣳसतेधर्मेणयथाराज्ञैवंयोवैसधर्मःसत्यं
वैतत्तस्मात्सत्यंवदंतमाहुर्धर्मंवदतीतिधर्मंवावदंतꣳसत्यंवदतीत्येतद्ध्येवैतदुभयंभवति॥१४॥
तदेतद्ब्रह्मक्षत्रंविट्शूद्रस्तदग्निनैवदेवेषुब्रह्माभवद्ब्राह्मणोमनुष्येषुक्षत्रियेणक्षत्रियोवैश्येनवैश्य
श्शूद्रेणशूद्रस्तस्मादग्नावेवदेवेषुलोकमिच्छंतेब्राह्मणेमनुष्येष्वेताभ्याꣳरूपाभ्यांब्रह्माभवदथ
योहवाअस्माल्लोकात्स्वंलोकमदृष्ट्वाप्रैतिसएनमविदितोनभुनक्तियथावेदोवानूक्तोन्यद्वाकर्माकृ
तंयदिहवाअप्यनेवंविन्महत्पुण्यंकर्मकरोतितद्धास्यांततःक्षीयतएवात्मानमेवलोकमुपासीत
सयआत्मानमेवलोकमुपास्तेनहास्यकर्मक्षीयतेऽस्माद्ध्येवात्मनोयद्यत्कामयतेतत्तत्सृजते १५

तुष्टेब्रह्मणिविष्णुश्चतुष्टोलोकान्प्रदास्यति ॥ अग्निविप्रार्चकोप्येवंयोनवेदहरिंपरम् ॥ आश्रयंसर्वजीवा
नांहरिस्तंनैवभोजयेत् ॥ यथाऽनधीतोवेदस्तुयथाकर्माकृतंतथा ॥ नसम्यक्फलदोविष्णुरज्ञातोज
गदीश्वरः ॥ यद्यवेत्तामहदपिहयमेधादिकंहरेः ॥ कुर्यात्क्षयिष्णुफलवान्सभवेन्नात्रसंशयः ॥ आत्मका
मतयात्मेतियोविष्णुःसमुदीरितः ॥ सर्वाश्रयमुपासीततमेवपुरुषंसुधीः ॥ विष्णुस्सर्वाश्रयइतिसदोपास्ते
यआत्मवान् ॥ क्षीयंतेनास्यकर्माणिशुभान्येवकदाचन ॥ उपासनाबलान्मुक्तोभोगान्कर्मफलान्सदा ॥

भुंक्तेविष्णोःसमीपस्थःसर्वदोषविवर्जितइतिब्रह्मांडे ॥ एताभ्यांरूपाभ्यांसहितंहिब्रह्माभवत् ॥ स्वंलोकं
स्वाश्रयम् ॥१५॥ योयंसर्वेषुजीवेषुनियामकतयास्थितः ॥ सविष्णुरात्मकामत्वादात्मेत्येवोच्यतेबुधैः ॥
सलोकःसर्वभूतानांसर्वजीवेषुसंस्थितः ॥ वैश्वदेवादिकान्होमान्यज्ञांश्चकुरुतेविभुः ॥ कारुण्यात्सर्वदेवे
षुतेनदेवाश्रयोहरिः ॥ ऋषीणामाश्रयश्चापिस्वाध्यायेष्वपिसंस्मृतेः ॥ सहिजीवेषुसंविष्टःपिंडंपुत्रजानिं
तथा ॥ यत्करोतिपितॄणांचसंश्रयस्ततएवसः ॥ तृणोदकादिदानेनपशूनामन्नतोनृणाम् ॥ उपकाराच्चस

अथोअयंवाआत्मासर्वेषांभूतानांलोकःसयज्जुहोतियद्यजतेतेनदेवानांलोकोऽथयदनुब्रूतेतेन
र्षीणामथयत्पितृभ्योनिपृणातियत्प्रजामिच्छतेतेनपितॄणामथयन्मनुष्यान्वासयतेयदेभ्योऽ
शनंददातितेनमनुष्याणामथयत्पशुभ्यस्तृणोदकंविंदतितेनपशूनांयदस्यगृहेषुश्वापदावयाꣳ
स्यापिपीलिकाभ्यउपजीवंतितेनतेषांलोकोयथाहवैस्वायलोकायारिष्टिमिच्छेदेवꣳहैवंविदे
सर्वाणिभूतान्यरिष्टिमिच्छंतितद्वाएतद्विदितंमीमाꣳसितम् ॥ १६ ॥

र्वेषांप्राणिनामाश्रयोहरिः ॥ यज्ञादीन्देवतादीनामन्नत्वेनपुरेवयत् ॥ ब्रह्माद्यैरर्थितःप्रादात्क्षीराब्धेस्तटउ
त्तरे ॥ अतश्चसर्वलोकानामाश्रयोविष्णुरेवसः ॥ एवंयोवेत्तिविष्णोस्तुसर्वाधारत्वमुत्तमम् ॥ सर्वाण्यपि
हिभूतानितस्येच्छंत्यविनाशिताम् ॥ स्वाश्रयस्ययथानित्यमनाशंप्रार्थयंतिहि ॥ राजादेरपितान्येवमुत्त
माश्रयवेदिनः ॥ तदेतद्वासुदेवस्यसर्वाधारत्वमुत्तमम् ॥ विदितंसर्ववेदैश्चमीमांसाभिश्चनिश्चितमितिभवि
ष्यत्पर्वणि ॥ किंतुब्रह्मादिभिर्देवैःपुरादृष्ट्वानिरंहसः ॥ निर्भयान्विष्णुनाग्नैवयथेष्टंपदमागतान् ॥ अल
ब्ध्वाचात्मनःपूजांसम्यगाराधितोहरिः ॥ मयाचास्मादपिश्रैष्ठ्यंवांछताहंकृतात्मना ॥ ततःसाक्षाज्जगन्ना

थःप्रसन्नोभक्तवत्सलः ॥ अंशांशेनात्मनैवैतान्पूजयामासकेशवः ॥ देवान्पितॄन्द्विजान्हव्यकव्याद्यैःक
रुणामयः ॥ ततःप्रभृतिपूज्यंतेत्रैलोक्येसचराचरइतिपाद्मे ॥ १६ ॥ एकोनारायणःपूर्वमासीज्जायांस
ऐच्छत ॥ विद्यमानामपिसदाभोगार्थंपुरुषोत्तमः ॥ नित्यत्वेप्युभयोर्देवोऽवियुक्तस्तुतयायदा ॥ एकइ
त्युच्यतेदेव्यारममाणःसुतंविभुः ॥ ऐच्छद्ब्रह्माततोजज्ञेततोदेवाश्वसर्वशः ॥ जातेपुत्रेवित्तमैच्छद्भूतान्यं
डंततोभवत् ॥ अंडस्यांतस्त्विमेलोकाःकुर्यांकर्मेतिचैच्छत ॥ ततस्तुकृतवान्यज्ञंस्वस्मैसपुरुषोत्तमः ॥
आङ्कुरात्मेतितंदेवंपूर्णत्वाद्विष्णुमव्ययम् ॥ तस्माद्द्यापियःकामीसद्येतावंतमिच्छति ॥ दैवंवित्तंसुखाद्यं

आत्मैवेदमग्रआसीदेकएवसोकामयतजायामेस्यादथप्रजायेयाथवित्तंमेस्यादथकर्मकुर्वीये
त्येतावान्वैकामोनेच्छंश्चनातोभूयोविंदेत्तस्मादप्येतर्ह्येकाकीकामयतेजायामेस्यादथप्रजा
येयाथवित्तंमेस्यादथकर्मकुर्वीयेतिसयावदप्येतेषामेकैकंनप्राप्नोत्यकृत्स्नएवतावन्मन्यतेत

हिमित्राद्यंमानुषंतुयत् ॥ इदानीमपितस्माद्धिकामयेदेवमेवतु ॥ यःकश्चित्पुरुषोवापितद्वैकल्यादकृ
त्स्नवान् ॥ एकाकिनोप्यवैकल्यंयथैवस्यात्तथाशृणु ॥ स्वात्मनस्त्वपृथग्यत्तज्ज्ञानरूपंमनःपरम् ॥
मुक्तावपिनहेयंयत्तत्स्वात्म्येत्येवचिंतयेत् ॥ जायांतुतादृशींवाचंबलंतादृक्स्वमात्मजम् ॥ श्रोत्रंचक्षुश्च
तादृग्यद्वित्तंदैवंचमानुषम् ॥ एवंभूतंचिंतनंयत्तत्कर्मेत्येवचिंतयेत् ॥ एतत्षट्कंचहरयेसर्वेशायसमर्पयेत्॥
एवमात्माप्रियापुत्रोवित्तंद्विविधमित्यपि ॥ पंचभिःक्रियतेयज्ञःपुरुषःपशुरेवच ॥ मातापितृभ्यामन्नेनत
योःपूर्वेणकर्मणा ॥ जन्यस्यकर्मणाचैवसाध्यःपंचभिरेवतु ॥ एवंहिप्राणिनोन्येपिजायंतेनात्रसंशयः ॥ 
एतामुपासनांकुर्याद्योब्राह्मंपदमाप्यच ॥ सर्वस्यास्यपतिर्भूयाद्विष्णोरेवप्रसादतः ॥ ब्राह्मेपदेत्वयोग्यायेते

देवपदमामुयुः ॥ तस्याप्ययोग्यालोकस्यभवेयुरधिकप्रियाः ॥क्रमान्मुक्तिंव्रजेयुश्चकेशवस्यप्रसादतइति
माहात्म्ये ॥ अविशेषेणततोन्यत्स्यादितीच्छन्नपिनाविंदेत् ॥ ततोन्यस्याभावात् ॥ आत्मामनश्चितनंचशे
मुषीबुद्धिरित्यपि ॥ एकार्थवाचकाधीश्चमनीषातपइत्यपीतिशब्दतत्त्वे ॥ सर्वाश्रयंचपितरंसर्वेषामधिकं
गुणैः ॥अविदित्वामहत्पुण्यंकृत्वानफलभाग्भवेत् ॥ तथाज्ञात्वाहरिंयस्तुकुर्यात्कर्मसदोदितम् ॥ अनंतफ
लवान्सस्यात्प्राप्नोतिचमनोगतमितिबृहच्छ्रुतौ॥परमात्मैवगृहस्थांतर्यामित्वेनसर्वेषांलोकआश्रयः ॥ गृह
स्थांतर्गतोविष्णुर्यज्ञैर्देवाश्रयोभवेत् ॥ स्वाध्यायेऋषिसंस्मृत्याऋषीणांचसदाश्रयः ॥ स्वाध्यायाच्छ्राद्ध
तश्चैवपितॄणामन्नदानतः ॥ मनुष्यादेरतोवेत्तियएवंसततंगृही ॥ स्वस्यांतर्यामिणंविष्णुंसुरादीन्पूजयेत्त

स्याकृत्स्नतोमनएवास्यात्मावाग्जायाप्राणःप्रजाचक्षुर्मानुषंवित्तंचक्षुषाहितद्विंदतेश्रोत्रंदैवंश्रो
त्रेणहितच्छृणोत्यात्मैवास्यकर्मात्मनाहिकर्मकरोतिसएषपाङ्क्तोयज्ञःपाङ्क्तःपशुःपाङ्क्तःपुरुषः

था ॥ तस्याविनाशमिच्छंतिस्वाश्रयस्ययथासुराः ॥ तदेतत्सर्वशास्त्रेषुऋषिसंघैर्विचारितमितिनारायणश्रु
तौ ॥ नराणामाश्रयोदेवानदेवानांनराःक्वचित् ॥ नराणांचसुराणांचगतिरेकोजनार्दनइतिच ॥ आ
त्माब्रह्मा ॥ आत्मातुजगतांब्रह्मातस्यात्माभगवान्हरिः ॥ सएवजातःप्रथमंवासुदेवाच्चतुर्मुखः ॥ सोकाम
यतभार्यामेस्यात्पुत्रस्तदनंतरम् ॥ ततोवित्तंममस्याच्चकर्मकुर्याततोहरेः॥इतिसोपिनतान्प्रापततोपूर्णत्वमा
त्मनः ॥ मत्वापूर्णत्वसिद्ध्यर्थंभार्यांवाचमकल्पयत् ॥ प्राणंपुत्रंतथावित्तंचक्षुर्वाह्यमथांतरम् ॥ ज्ञानाख्यं
श्रोत्रमेवासौकर्मस्वात्मानमेवतु ॥ एवंसमानसेयज्ञेत्वयजत्केशवंविभुम् ॥ ततोस्यवाचःसंभूताभार्यातस्य
सरस्वती ॥ पुत्रःप्राणादभूद्वायुर्दिशोलोकाहिरण्मयाः ॥ तस्यापरोक्षतांयातोभगवान्पुरुषोत्तमः ॥ सर्ववि

ध्याददौताश्चश्रोत्रेणजगृहेविभुः ॥ आत्मनासर्वकर्माणिचकारभगवत्परः ॥ पुरासीन्मनएवास्यतेनेदंपंचकं
विभुः ॥ अवापकर्मपर्यंतंदेहांतात्पंचकात्स्वयम्॥तस्माद्द्यापियोविद्वानुपास्तेपंचकंतथा॥विष्णूपकरणत्वे
 नसइदंसर्वमाप्स्यति ॥ मुक्तिश्चांतेभवत्यस्यपंचानांदेवतांहरिं ॥ नारायणंवासुदेवंतथासंकर्षणंविभुम्॥प्रद्यु 
म्नंचानिरुद्धंचस्मरतोनित्यमेवतु ॥ सवनत्रयंतथापूर्वमुत्तरंचेतिपंचकम् ॥ यज्ञेमध्यंशिरःपक्षौपुच्छंपशु
षुपूरुषे ॥ चतुर्दिशंतथामध्यमितिसर्वत्रपंचकमितिच ॥ ॥ इत्यव्याकृतब्राह्मणम् ॥ ३ ॥ ४ ॥

पाङ्क्तमिदꣳसर्वंयदिदंकिंचतदिदꣳसर्वमाप्नोतियएवंवेद॥१७॥ ॥इत्यव्याकृतब्राह्मणम्॥३।४॥

यत्सप्तान्नानिमेधयातपसाऽजनयत्पितैकमस्यसाधारणंद्वेदेवानभाजयत्त्रीण्यात्मनेकुरुतप
शुभ्यएकंप्रायच्छत्तस्मिन्त्सर्वंप्रतिष्ठितंयच्चप्राणितियच्चनकस्मात्तानिनक्षीयंतेद्यमानानिसर्व
दायोवैतामक्षितिंवेदसोऽन्नमत्तिप्रतीकेनसदेवानपिगच्छतिसऊर्जमुपजीवतीतिश्लोकाः॥१॥
यत्सप्तान्नानिमेधयातपसाजनयत्पितेतिमेधयाहितपसाजनयत्पितैकमस्यसाधारणमितीदमे
वास्यतत्साधारणमन्नंयदिदमद्यतेसयएतदुपास्तेनसपाप्मनोव्यावर्ततेमिश्रꣳह्येतद्द्वेदेवानभाज

पिताविष्णुः ॥ यत्यदा ॥ तपसाप्राणिनांकर्मभिः ॥ मेधयास्वेच्छया॥सहीदमन्नंधियाधियाजनय
तेकर्मभिरितिवचनात् ॥ सप्तान्नानियदाविष्णुःपरमःपुरुषोविभुः ॥ ससर्जतेषांस्वार्थानिचकारत्रीणिकेश
वः ॥ मनोवाचंतथाप्राणंतस्मात्तैस्तुष्टिमेतिसः ॥ तस्मात्तद्भक्तिकामःस्यात्संकल्पंतत्कृतिंप्रति ॥ कु
र्यात्तद्वेदनेच्छांचश्रद्धांतस्यगुणोन्नतौ ॥ अश्रद्धामन्यसाम्येवाप्यन्येषामुन्नतौततः ॥ अन्येषांसत्स्वरू 
पत्वेप्राकृतत्वादिकेस्यच ॥ धृतिंतन्निंदिवागादौप्राप्तेतत्रैवचाधृतिम् ॥ तन्मतस्यविसर्गार्थेह्रियंतद्भक्तिव

र्जने ॥ तद्विवेकेधियंचैवतदज्ञानेभियंतथा ॥ वाचंनित्यंतद्गुणोक्तौप्राणंतत्कर्मणिस्फुटम् ॥ तदन्यक
र्मसंत्यागेचापानंव्यानमस्यच ॥ विरोधिनांनिरासेत्वथोदानंयोगधारणे ॥ मनोवागादींद्रियाणांसमा

यदितिहुतंचप्रहुतंचतस्माद्देवेभ्योजुह्वतिप्रचजुह्वत्यथोआहुर्दर्शपूर्णमासावितितस्मान्नेष्टियाजुकःस्यात्पशुभ्यएकंप्रायच्छदितितत्पयःपयोह्येवाग्रेमनुष्याश्चपशवश्चोपजीवंतितस्मात्कुमारंजातंघृतंवैवाग्रेप्रतिलेहयंतिस्तनंवानुधापयंत्यथवत्संजातमाहुरतृणादइतितस्मिन्त्सर्वंप्रतिष्ठितंयच्चप्राणितियच्चनेतिपयसिहीदꣳसर्वंप्रतिष्ठितंयच्चप्राणितियच्चनतद्यदिदमाहुःसंवत्सरंपयसाजुह्वदपपुनर्मृत्युंजयतीतिनतथाविद्याद्यदहरेवजुहोतितदहःपुनर्मृत्युमपजयत्येवंविद्वान्त्सर्वꣳहिदेवेभ्योन्नाद्यंप्रयच्छतिकस्मात्तानिनक्षीयंतेद्यमानानिसर्वदेतिपुरुषोवाअक्षितिःसहीदमन्नंपुनःपुनर्जनयतेयोवैतामक्षितिंवेदेतिपुरुषोवाअक्षितिःसहीदमन्नंधियाधियाजनयतेकर्मभिर्यद्धैतन्नकुर्यात्क्षीयेतहसोन्नमत्तिप्रतीकेनेतिमुखंप्रतीकंमुखेनेत्येतत्सदेवानपिगच्छतिसऊर्जमुपजीवतीतिप्रशꣳसा ॥ २ ॥ त्रीण्यात्मनेकुरुतेतिमनोवाचंप्राणंतान्यात्मनेकुरुतान्यत्रमनाभूवंनादर्शमन्यत्रमनाभूवंनाश्रौषमितिमनसाह्येवपश्यतिमनसाशृणोतिकामःसंकल्पोविचिकित्साश्रद्धाऽश्रद्धाधृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वंमनएवतस्मादपिपृष्ठतउपस्पृष्टोमनसाविजानातियःकश्चशब्दोवागेवसैषाह्यंतमायत्तैषाहिनःप्राणोपानोव्यानउदानःसमानो

नंनियमेत्रहि ॥ अन्नमुक्तेषुसुस्थैर्येनरःकुर्यात्सदैवहि ॥ अनेकगोचरेच्छास्यात्कामएकाश्रयेस्थितः ॥
प्राणःप्रवृत्तिहेतुःस्यादपानस्तुनिवर्तने ॥ बलकर्मातथाव्यानउदानोयोगकर्मकृत् ॥ देहेंद्रियमनोनेता

समानोऽनःस्थितिप्रदः ॥ मनोवाक्प्राणसान्निध्यप्राधान्याज्जीवउन्नतिः ॥ मनोवाक्प्राणरूपोसौभग
वान्पुरुषोत्तमः ॥ मनोवाक्प्राणतस्तस्यजाताअन्येभिमानिनः ॥ ब्रह्मासरस्वतीवायुर्मनआद्यभिमा
निनः ॥ सर्वस्यांतःस्थितंविष्णुमायत्तावाग्घिनःसदा ॥ सर्ववाचश्चघोषाश्चविष्णोर्नामेतिकीर्तिताः॥
तज्ज्ञानांतत्फलंचस्यादज्ञानांतत्फलंनतु ॥ सर्वेंद्रियगतंज्ञानंमनआयत्तमीरितम् ॥ पृष्टेस्पृष्टेप्यनेनाहं
स्पृष्टइत्येववेत्त्यतः ॥ मनस्यव्याकुलेन्यत्रनैववेत्तिकथंचन ॥ २ ॥ लोकवेदसुरज्ञातपित्रादेश्चाभि

ऽनइत्येतत्सर्वंप्राणएवैतन्मयोवाऽयमात्मावाङ्मयोमनोमयःप्राणमयः ॥ ३ ॥ त्रयोलोका
एतएववागेवायंलोकोमनोंतरिक्षलोकःप्राणोसौलोकः ॥ ४ ॥ त्रयोवेदाएतएववागे
वर्ग्वेदोमनोयजुर्वेदःप्राणःसामवेदः ॥ ५ ॥ देवाःपितरोमनुष्याएतएववागेवदेवामनः
पितरःप्राणोमनुष्याः ॥ ६ ॥ पितामाताप्रजैतएवमनएवपितावाङ्मातापाणःप्रजाः ॥ ७ ॥
विज्ञातंविजिज्ञास्यमविज्ञातमेतएवयत्किंचविज्ञातंवाचस्तद्रूपंवाग्घिविज्ञातावागेनंतद्भूत्वाव
ति ॥ ८ ॥ यत्किंचविजिज्ञास्यंमनसस्तद्रूपंमनोहिविजिज्ञास्यंमनएनंतद्भूत्वावति ॥ ९ ॥

मानिनः ॥ द्युपृथिव्यग्निसूर्यापांसोमस्याप्यभिमानिनः ॥ सइंद्रःपरमैश्वर्यादशत्रुःसमवर्जनात् ॥
वायुरेतेसमाव्याप्तौब्रह्मेरौगुणतोधिकौ ॥ अनंताश्चगुणाह्येषामन्यजीवव्यपेक्षया ॥ तेभ्योप्यनंतावि
ष्णोस्तुतेषामेवमुपासकः ॥ नित्यलोकोपभोगीस्यादनित्यस्यान्यथाभवेत् ॥ वायुःप्रजापतिःसोसौचंद्र
संस्थोविशेषतः॥ रात्रौरात्रौक्षयादस्यपूरणाद्रात्रिनामकाः॥कलाःपंचदशप्रोक्ताध्रुवैवास्यतुषोडशी॥अक
लोपिसचंद्रस्यकलाभिःप्रोच्यतेतथा ॥ सोमावास्यांयतोरात्रौप्राणभृत्सुव्यवस्थितः ॥ कल्यावेशादल्प

दोषःकृकलासवधोपिसन् ॥ तस्यांरात्रौमहान्दोषोदेवतावेशतोभवेत् ॥ वायुःसंवत्सरःप्रोक्तोवत्सोवि
ष्णोरसोयतः ॥ सम्यगेवरतिंयातिसएवंविदुषिस्थितः ॥ अध्रुवास्तुकलायद्वत्सौम्यास्तस्यतथाधनम् ॥
आगमापायवत्त्वात्तुध्रुवावद्देहउच्यते ॥ नाभिस्थानंशरीरंतुचक्रस्यप्रधिवद्धनम् ॥ सर्वस्वविजयेप्य
स्मात्प्रधिमात्रंतुगच्छति ॥ एवंमहागुणान्देवानेवंयोवेदपूरुषः ॥ नचैभ्योतिप्रियःकश्चिद्विष्णोरस्ति

यत्किंचाविज्ञातंप्राणस्यतद्रूपंप्राणोह्यविज्ञातःप्राणएनंतद्भूत्वावति ॥ १० ॥ तस्यैवाचः
पृथिवीशरीरंज्योतीरूपमयमग्निस्तद्यावत्येववाक्तावतीपृथिवीतावानयमग्निः ॥ ११ ॥
अथैतस्यमनसोद्यौःशरीरंज्योतीरूपमसावादित्यस्तद्यावदेवमनस्तावतीद्यौस्तावानसावादि
त्यस्तौमिथुनꣳसमैतांततःप्राणोजायतसइंद्रःसएषोसपत्नोद्वितीयोवैसपत्नोनास्यसपत्नोभवति
यएवंवेद ॥ १२ ॥ अथैतस्यप्राणस्यापःशरीरंज्योतीरूपमसौचंद्रस्तद्यावानेवप्राणस्तावत्य
आपस्तावानसौचंद्रस्तएतेसर्वएवसमास्सर्वेनंतास्सयोहैतानंतवतउपास्तेंनवंतꣳसलोकंजय
त्यथयोहैताननंतानुपास्तेअनंतꣳसलोकंजयति ॥ १३ ॥ सएषसंवत्सरःप्रजापतिः

कदाचन ॥ ७ ॥ चतुर्थंभोज्यमेवान्नंसर्वसाधारणंस्मृतम् ॥ आत्मनोतिसमीपत्वंतस्ययोन्नस्यमन्यते ॥
अक्षयंपापमस्यस्याद्देवब्रह्मस्वहारिणः ॥ तदेवमंत्रयुक्तत्वाद्बलिहोमात्मनाद्वयम् ॥ देवानांप्रददौवि
ष्णुस्तस्मान्नैवेच्छयायजेत् ॥ यदीच्छयायजेत्तेषामपहर्ताभविष्यति ॥ देवस्वंतनयेनैवकाम्यार्थंवि
नियोजितम् ॥ परकीयेनवित्तेनतस्मिन्विनिमयेयथा ॥ चतुष्पाद्योद्विपाद्यश्चपशुभ्यःपयआत्मक
म् ॥ प्रायच्छत्सतमान्नंसगोक्षीरंमुख्यमत्रच ॥ आत्मनेचैवदेवानांतद्धोमार्थंप्रकल्पितम् ॥ संवत्स
रंगोपयसायेनहोमोहरेःकृतः ॥ भगवत्तत्त्वविदुषातस्यमुक्तिर्नसंशयः ॥ अदृष्टभगवद्रूपस्यैतद्दर्शनका

रणम् ॥ भगवद्दृष्टिपूतस्तुविनाहोमेनमुच्यते ॥ सम्राज्ञस्त्वष्टितत्त्वज्ञस्त्वेकहोमेनमुच्यते ॥ विशेषज्ञोय
तःसोयंभगवत्तत्त्ववेदने ॥ कोनामभगवान्विष्णुःपरमानंदरूपतः ॥ प्राणिनांकर्मभिश्चैवस्वेच्छयाचपु
नःपुनः ॥ सम्राज्ञंसृजतेयस्मादन्नानामक्षयस्ततः ॥ तस्मादक्षितिनामासौभगवान्पुरुषोत्तमः ॥ यए
वमक्षितिंवेदभगवंतंसनातनम् ॥ अप्रयत्नेनभोगाःस्युर्यथेष्टास्तस्यसर्वदा ॥ सम्राज्ञोपासनंयस्माद्देवा

षोडशकलस्तस्यरात्रयएवपंचदशकलाध्रुवैवास्यषोडशीकलासरात्रिभिरेवाचपूर्यतेअपचक्षी
यतेसोमावास्याꣳरात्रिमेतयाषोडश्याकलयासर्वमिदंप्राणभृदनुप्रविश्यततःप्रातर्जायतेतस्मा
देताꣳरात्रिंप्राणभृतःप्राणंनविच्छिंद्यादपिकृकलासस्यैतस्याएवदेवतायाअपचित्यै ॥ १४ ॥
योवैससंवत्सरःप्रजापतिःषोडशकलोयमेवसयोयमेवंवित्पुरुषस्तस्यवित्तमेवपंचदशकलाआत्मै
वास्यषोडशीकलासवित्तेनैवाचपूर्यतेऽपचक्षीयतेतदेतन्नभ्यंयदयमात्माप्रधिर्वित्तंतस्माद्यद्य
पिसर्वज्यानिंजीयतआत्मनाचेज्जीवतिप्रधिनागादित्येवाहुः ॥ १५ ॥ अथत्रयोवावलो
कामनुष्यलोकःपितृलोकोदेवलोकइतिसोयंमनुष्यलोकःपुत्रेणैवजय्योनान्येनकर्मणाकर्मणा
पितृलोकोविद्ययादेवलोकोदेवलोकोवैलोकानाꣳश्रेष्ठस्तस्माद्विद्यांप्रशꣳसंति ॥ १६ ॥ अथा
तःसंप्रत्तिर्यदाप्रैष्यन्मन्यतेऽथपुत्रमाहत्वंब्रह्मत्वंयज्ञस्त्वंलोकइतिसपुत्रःप्रत्याहाहंब्रह्माहंयज्ञो

नांयोग्यमुत्तमम् ॥ तस्माद्देवत्वमाप्नोतियोग्योदेवपदस्ययः ॥ ऊर्जंदेवान्नमुद्दिष्टमूर्जितास्तुगुणास्त
था ॥ तदप्याप्नोतिननरायोग्याएतदुपासने ॥ ज्ञानमात्रेणदेवानांसामीप्यंप्राप्नुवंतितइतिनारायणीये
॥ ७ ॥ ब्रह्मेतिवेदः ॥ स्वाध्यायादिकर्तृत्वात्पुत्रस्त्वंब्रह्मेत्याद्युच्यते ॥ आत्माभवतिव्यापकोभव
ति ॥ पुनःपुनःकर्मकृतिर्मानुष्यजयउच्यते ॥ जन्मांतरंविनानैवकर्मणातत्तुयुज्यते ॥ पुत्रेणविद्यया ॥२६॥

नित्यमेकैकेनापियुज्यते ॥ उभाभ्यांकिमुवक्तव्यमष्टभागफलंसुतात् ॥ विद्ययात्वर्धमाप्नोतिसर्वंसमा
न्नविह्लभेत् ॥ पुत्रमाविश्यसामर्थ्यान्मुच्यतेछिद्रकर्मणः ॥ अक्ष्णंचपुदितिच्छिद्रंपुत्रस्तत्प्राणतोभ
वेत् ॥ पृथिव्यादिस्थितादेवाःसरस्वत्यादिकास्त्रयः ॥ अधिकावेशतोदेवेष्वतोदेवाइतिस्मृताः ॥ यदा
वेशात्सर्वमुक्तंसत्यंदेवीतुवाग्घिसा ॥ यदावेशान्नदुःखीस्यादानंदीदैवतंमनः ॥ यदावेशात्सर्वकार्येष्व
म्लानःप्राणएवसः ॥ सर्वसामर्थ्ययुक्तःस्यान्नम्रियेतकदाचन ॥ एवंसप्तान्नविन्मुक्तस्त्रिभिराविष्टएव
तु ॥ सर्वेषुव्याप्तिमन्वेतिनदुःखीप्राणिषुस्थितः ॥ सप्तान्नोपासनायोग्यादेवाएकांततोह्ययत् ॥ दे

हंलोकइतियद्वैकिंचानूक्तंतस्यसर्वस्यब्रह्मेत्येकतायेवैकेचयज्ञास्तेषाᳫसर्वेषांयज्ञइत्येकतायेवै
केचलोकास्तेषाᳫसर्वेषांलोकइत्येकताएतावद्वाइदᳫसर्वमेतस्मात्सर्वᳫसन्नयमितोभुनजदि
तिस्मात्पुत्रमनुशिष्टंलोक्यमाहुस्तस्मादेनमनुशासतिसयदैवंविदस्माल्लोकात्प्रैत्यथैभिरेवप्रा
णैःसहपुत्रमाविशतिसयद्यनेनकिंचिदक्ष्णयाकृतंभवतितस्मादेनᳫसर्वस्मात्पुत्रोमुंचतितस्मा

वांश्चपापंनाप्नोतितस्मात्पापंनतस्यतु ॥ देवामनुष्यतामंशैराप्तायेपुत्रतःफलम् ॥ स्यात्तेषामेवचामुक्तेर्मु
क्तानांनतुकिंचन ॥ मुक्तानांदैववागादेरावेशःसंप्रकीर्तितः ॥ प्राणज्ञानंयथावंतिरहस्यमितिसर्वदा ॥
एवंमुक्तस्वरूपंचाप्यवंत्येवरहस्यतः ॥ उत्तमःसर्वदेवेषुप्राणएवहरेरनु ॥ चतुर्मुखस्यप्राणस्यनविशे
षोस्तिकश्चन ॥ तस्माद्विष्णोर्व्रतस्यानुनित्यंप्राणव्रतंचरेत् ॥ हंसोपास्तिःश्वासरूपेतयोर्व्रतमुदीरि
तम् ॥ हंसरूपौहितौदेवौश्वासोच्छ्वासप्रवर्तकौ ॥ तस्मात्प्राण्यादपान्याच्चतद्रूपंसंस्मरेत्सदा ॥ ना
न्यस्योपासनंकुर्यात्तद्भृत्यत्वंविनाक्वचित् ॥ इंद्रियाणिससर्जादौवासुदेवःप्रजापतिः ॥ अध्यात्म

मिंद्रियाण्याहुरधिदैवंतुदेवताः॥ अध्यात्ममग्निर्वाङ्नामाचक्षुरादित्यउच्यते ॥ श्रोत्रंतुचंद्रमानाममनःस्थू
लंतुवासवः ॥ येनयज्ञादिकंकुर्याच्छेषरुद्रविपास्तथा ॥ मनःसूक्ष्मंज्ञानयोग्यंशेषोव्याख्यानगोचरम् ॥ रु
द्रस्तुमननाख्यंचगरुडोध्यानगोचरम् ॥ वायुःप्राणइतिप्रोक्तोयेनसर्वंनियम्यते ॥ तएतेभगवत्सृष्टाव्यूदिरेऽ
ध्यात्मसंस्थिताः ॥ अधिदैवेज्वलत्कर्मावह्निःसूर्यस्तुतापकः ॥ सोमःकांतौदृष्टिकर्मावासवःशेषएवतु ॥ पं
चरात्रप्रवृत्तीशोरुद्रस्तत्स्थक्रियापरः ॥ सर्वप्रवर्तकोवायुर्ज्ञानमोक्षप्रदस्तथा ॥ वेदप्रवृत्तिकृद्धींद्रस्तेधि
दैवेचपस्पृधुः ॥ अहंश्रेयानहंश्रेयानितितानब्रवीद्धरिः ॥ स्वकर्मयस्त्वविश्रांतःकुर्याच्छ्रेयान्हिवःस्मृतः ॥

त्पुत्रोनामसपुत्रेणैवास्मिँल्लोकेप्रतितिष्ठत्यथैनमेतेदेवाःप्राणाअमृताआविशंति ॥ १७ ॥ पृ
थिव्यैचैनमग्नेश्चदैवीवागाविशतिसावैदैवीवाग्ययायद्यदेववदतितत्तद्भवति ॥ १८ ॥ दिव
श्चैनमादित्याच्चदैवंमनआविशतितद्वैदैवंमनोयेनानंद्येवभवत्यथोनशोचति ॥ १९ ॥ अद्भ्य

इतिश्रुत्वाततश्चक्रुःकर्मस्वंस्वमनारतम् ॥ तानेतान्छ्रमरूपेणप्रापब्रह्माप्रजापतिः ॥ श्रांताःस्वंभगवत्कर्मन
शेकुःसर्वदेवताः ॥ वायुंतुसमशक्तित्वान्नापब्रह्माप्रजापतिः ॥ तेनासौभगवत्कर्मसर्वंचकृतवान्सदा ॥ श्र
मात्पापात्मकोमृत्युर्भगवत्कर्मवर्जनात् ॥ अन्यान्देवानवापाशुनैववायुंकदाचन ॥ तेवायुंज्ञातुमैच्छंतश्रेष्ठो
यमितिनिश्चिताः ॥ तंज्ञात्वातेनचाविष्टास्तद्भृत्यत्वमुपागताः ॥ तस्मात्प्राणाश्चमरुतइत्येषांनामसंस्थितम्॥
वायोर्देवाहिजायंतेलयमेष्यंतितत्रच ॥ तस्मान्नित्यंतद्व्रताश्चतद्व्रतोतोभवेत्सदा॥अन्यदेवव्रतारंभंयदिकुर्या ॥२७॥
त्समापयेत् ॥ तेनासौवायुनासाकंभगवंतमुपेष्यतीतिनारायणश्रुतौ ॥ आनंद्येवभवति ॥ नशोचतीत्यतो
मुक्तइत्येवावगम्यते ॥ ॥ सप्तान्नब्राह्मणम् ॥ ३ ॥ ५ ॥ ॥ ॥ ॥ ॥

श्चैनंचंद्रमसश्चदैवःप्राणआविशतिसवैदैवःप्राणोयःसंचरंश्चासंचरंश्चनव्यथतेथोनरिष्यतिस
यएवंवित्सर्वेषांभूतानामात्माभवतियथैषादेवतैवंसयथैतांदेवतांसर्वाणिभूतान्यवंत्येवंहैवं
विदंसर्वाणिभूतान्यवंतियदुकिंचेमाःप्रजाःशोचंत्यमैवासांतद्भवतिपुण्यमेवामुंगच्छतिनह
वैदेवान्पापंगच्छति ॥ २० ॥ अथातोव्रतमीमांसाप्रजापतिर्हकर्माणिससृजेतानिसृष्टान्य
न्योन्येनास्पर्धंतवदिष्याम्येवाहमितिवाग्दध्रेद्रक्ष्याम्यहमितिचक्षुःश्रोष्याम्यहमितिश्रोत्र
मेवमन्यानिकर्माणियथाकर्मतानिमृत्युःश्रमोभूत्वोपयेमेतान्याप्नोत्तान्याप्त्वामृत्युरवारुंधत्त
स्माच्छ्राम्यत्येववाक्श्राम्यतिचक्षुःश्राम्यतिश्रोत्रमथेममेवनाप्नोद्योयंमध्यमःप्राणस्तानिज्ञा
तुंदध्रिरेऽयंवैनःश्रेष्ठोयःसंचरंश्चासंचरंश्चनव्यथतेथोनरिष्यतिहंतास्यैवसर्वेरूपमसामेतितए
तस्यैवसर्वेरूपमभवंस्तस्मादेतएतेनाख्यायंतेप्राणाइतितेनहवावतत्कुलमाचक्षतेयस्मिन्कुले
भवतियएवंवेदयउहैवंविदास्पर्धतेअनुशुष्यहैवांततोम्रियतइत्यध्यात्मम् ॥ २१ ॥ अथा
धिदैवतंज्वलिष्याम्येवाहमित्यग्निर्दध्रेतप्स्याम्यहमित्यादित्योभास्याम्यहमितिचंद्रमाएवम
न्यादेवतायथादैवतंसयथैषांप्राणानांमध्यमःप्राणएवमेतासांदेवतानांवायुर्म्लोचंतिह्यन्यादे
वतानवायुःसैषानास्तमितादेवतायद्वायुः ॥ २२ ॥ अथैषश्लोकोभवति ॥ यतश्चोदेतिसू
र्योस्तंयत्रचगच्छतीतिप्राणाद्वाएषउदेतिप्राणेस्तमेतितंदेवाश्चक्रिरेधर्मंसएवाद्यसउश्वइति
यद्वाएतेमुह्यध्रियंततदेवाप्यद्यकुर्वंतितस्मादेकमेवव्रतंचरेत्प्राण्याच्चैवापान्याच्चनेन्मापाप्मामृ
त्युराप्नुवदितियद्युचरेत्समापिपयिषेत्तेनोएतस्यैदेवतायैसायुज्यंसलोकतांजयति ॥ २३ ॥
सप्तान्नब्राह्मणम् ॥ ३ ॥ ५ ॥

सहैवमातिजानातीतिसमम् ॥ आत्माप्राणः ॥ नामरूपयोरपिप्राणाधीनत्वादेकमित्युच्यते॥ प्राणोवायुरि तिप्रोक्तस्तत्पत्नीनामभारती ॥ रूपंतुतत्सुतोरुद्रोवशेप्राणस्यतद्द्वयम् ॥ अमृतोवायुरुद्दिष्टोनित्यज्ञानात्मक

त्रयंवाइदंनामरूपंकर्मतेषांनाम्नांवागित्येतदेषामुक्थमतोहिसर्वाणिनामान्युत्तिष्ठंत्येतदेषांᳪ सामैतद्धिसर्वैर्नामभिःसममेतदेषांब्रह्मैतद्धिसर्वाणिनामानिबिभर्ति ॥ १ ॥ अथरूपाणांचक्षु रित्येतदेषामुक्थमतोहिसर्वाणिरूपाण्युत्तिष्ठंत्येतदेषांसामैतद्धिसर्वैरूपैःसममेतदेषांब्रह्मैतद्धि सर्वाणिरूपाणिबिभर्ति॥२॥अथकर्मणामात्मेत्येतदेषामुक्थमतोहिसर्वाणिकर्माण्युत्तिष्ठंत्येत देषाᳪसामैतद्धिसर्वैःकर्मभिःसममेतदेषांब्रह्मैतद्धिसर्वाणिकर्माणिबिभर्तितदेतत्त्रयᳪसदेकमय मात्मात्मैकःसन्नेतत्त्रयंतदेतदमृतᳪसत्येनच्छन्नंप्राणोवाअमृतंनामरूपेसत्यंताभ्यामयंप्राण श्छन्नः ॥ ३ ॥ षष्ठब्राह्मणम् ॥ ३ ॥ ६ ॥ बृहदारण्यकेतृतीयोध्यायः ॥ ३ ॥

त्वतः ॥ सत्यंयथार्थवक्तृत्वाद्भारतीरुद्रएवचेति॥ रुद्रेदेवेषुचप्राणःप्रविष्टश्छादितःसदा ॥ सत्यइत्युच्यतेनि त्यंस्वरूपेणामृतःस्मृतइतिच ॥ ब्राह्मणम् ॥ ३ ॥ ६ ॥ ॐइतिश्रीमदानंदतीर्थभगवत्पादाचार्यविरचितेश्री मद्बृहदारण्यकोपनिषद्भाष्येतृतीयोऽध्यायः ॥ ३ ॥

ॐ ॥ अतीत्यजगद्धर्मवर्जितत्वेनस्थितत्वादतिष्ठाः ॥ उत्तमत्वान्मूर्धा ॥ स्वयमेवापराजितबहुरूपत्वाद्

ॐदृप्तबालाकिर्हानूचानोगार्ग्यआससहोवाचाजातशत्रुंकाश्यंब्रह्मतेब्रवाणीतिसहोवाचाजा
तशत्रुःसहस्रमेतस्यावाचिदद्मोजनकोजनकइतिवैजनाधावंतीति ॥१ ॥ सहोवाचगार्ग्योयए
वासावादित्येपुरुषएतमेवाहंब्रह्मोपासइतिसहोवाचाजातशत्रुर्मामैतस्मिन्संवदिष्ठाअतिष्ठाः
सर्वेषांभूतानांमूर्धाराजेतिवाअहमेतमुपासइतिसयएतमेवमुपास्तेअतिष्ठाःसर्वेषांभूतानांमूर्धा
राजाभवति ॥ २ ॥ सहोवाचगार्ग्योयएवासौचंद्रेपुरुषएतमेवाहंब्रह्मोपासइतिसहोवाचाजा
तशत्रुर्मामैतस्मिन्संवदिष्ठाबृहत्पांडुरवासाःसोमोराजेतिवाअहमेतमुपासइतिसयएतमेवमुपा
स्तेऽहरहर्हसुतःप्रसूतोभवतिनास्यान्नंक्षीयते ॥ ३ ॥ सहोवाचगार्ग्योयएवासौविद्युतिपुरुष
एतमेवाहंब्रह्मोपासइतिसहोवाचाजातशत्रुर्मामैतस्मिन्संवदिष्ठास्तेजस्वीतिवाअहमेतमुपा
सइतिसयएतमेवमुपास्तेतेजस्वीहभवतितेजस्विनीहास्यप्रजाभवति ॥ ४ ॥ सहोवाच
गार्ग्योयएवायमाकाशेपुरुषएतमेवाहंब्रह्मोपासइतिसहोवाचाजातशत्रुर्मामैतस्मिन्संवदिष्ठाः
पूर्णमप्रवर्तीतिवाअहमेतमुपासइतिसयएतमेवमुपास्तेपूर्यतेप्रजयापशुभिर्नास्यास्माल्लोका
त्प्रजोद्वर्तते ॥ ५ ॥ सहोवाचगार्ग्योयएवायंवायौपुरुषएतमेवाहंब्रह्मोपासइतिसहोवाचा
जातशत्रुर्मामैतस्मिन्संवदिष्ठाइंद्रोवैकुंठोपराजितासेनेतिवाअहमेतमुपासइतिसयएतमेवमु
पास्तेजिष्णुर्हापराजिष्णुर्भवत्यन्यतस्त्यजायी ॥ ६ ॥ सहोवाचगार्ग्योयएवायमग्नौपुरु

पराजितसेनाभगवान् ॥ जिष्णुरुत्तमः ॥ अन्येषांजेताअन्यतस्त्वजायी ॥ विषासहिरसह्यः ॥ आत्मनि

षएतमेवाहंब्रह्मोपासइतिसहोवाचाजातशत्रुर्मामैतस्मिन्संवदिष्ठाविषासहिरितिवाअहमेतमु
पासइतिसयएतमेवमुपास्तेविषासहिर्हभवतिविषासहिर्हास्यप्रजाभवति ॥ ७ ॥ सहोवो
चगार्ग्योयएवायमप्सुपुरुषएतमेवाहंब्रह्मोपासइतिसहोवाचाजातशत्रुर्मामैतस्मिन्संवदिष्ठाः प्र
तिरूपइतिवाअहमेतमुपासइतिसयएतमेवमुपास्तेप्रतिरूपꣳहैवैनमुपगच्छतिनाप्रतिरूपंअ
थोप्रतिरूपोऽस्माज्जायते ॥ ८ ॥ सहोवाचगार्ग्योयएवायमादर्शेपुरुषएतमेवाहंब्रह्मोपा
सइतिसहोवाचाजातशत्रुर्मामैतस्मिन्संवदिष्ठारोचिष्णुरितिवाअहमेतमुपासइतिसयएतमेव
मुपास्तेरोचिष्णुर्हभवतिरोचिष्णुर्हास्यप्रजाभवत्यथोयैःसन्निगच्छतिसर्वाꣳस्तानतिरोचते ॥
॥ ९ ॥ सहोवाचगार्ग्योयएवायंयंतंपश्चाच्छब्दोनूदेत्येतमेवाहंब्रह्मोपासइतिसहोवाचाजा
तशत्रुर्मामैतस्मिन्संवदिष्ठाअसुरितिवाअहमेतमुपासइतिसयएतमेवमुपास्तेसर्वꣳहैवास्मिँल्लो
कआयुरेतिनैनंपुराकालात्प्राणोजहाति ॥ १० ॥ सहोवाचगार्ग्योयएवायंदिक्षुपुरुष
एतमेवाहंब्रह्मोपासइतिसहोवाचाजातशत्रुर्मामैतस्मिन्त्संवदिष्ठाद्वितीयोनपगइतिवाअहमे
तमुपासइतिसयएतमेवमुपास्तेद्वितीयवान्हभवतिनास्माद्गुणश्छिद्यते ॥ ११ ॥
सहोवाचगार्ग्योयएवायंछायामयःपुरुषएतमेवाहंब्रह्मोपासइतिसहोवाचाजातशत्रुर्मामैतस्मि
न्त्संवदिष्ठामृत्युरितिवाअहमेतमुपासइतिसयएतमेवमुपास्तेसर्वꣳहैवास्मिँल्लोकआयुरेतिनैनं
पुराकालान्मृत्युरागच्छति ॥ १२ ॥ सहोवाचगार्ग्योयएवायमात्मनिपुरुषएतमेवाहंब्रह्मोपा
सइतिसहोवाचाजातशत्रुर्मामैतस्मिन्त्संवदिष्ठाआत्मन्वीतिवाअहमेतमुपासइतिसयएतमेव

हिरण्यगर्भे ॥ आत्मन्वीचित्तवान् ॥ चित्ताभिमानित्वात्तस्यस्वहृदिस्थितंस्वनियामकंभगवद्रूपमुपास्यै
वमोक्षोभवति ॥ देवतासुभगवंतमुपास्यतत्तद्देवतासमीपंप्राप्यपुनःस्वहृदिस्थमुपास्यैवमोक्षोभवतीत्यतो
नैतावताविदितंभवतीत्युक्तम् ॥ स्वहृदिस्थभगवद्रूपस्यस्वस्मिन्विशेषसंबंधज्ञापनार्थंबृहत्पांडुरवासइत्याद्या
मंत्रणम् ॥ तेभ्योनामभ्योप्यस्यशरीरेविशेषसंबंधइत्यतःपाणिपेषणेनजीवमुत्थापयामासभगवान् ॥ येषां

मुपास्तेआत्मन्वीहभवत्यात्मन्विनीहास्यप्रजाभवतिसहतूष्णीमासगार्ग्यः ॥ १३ ॥ सहोवा
चाजातशत्रुरेतावन्नू३इत्येतावद्धीतिनैतावताविदितंभवतीतिसहोवाचगार्ग्यउपत्वायानीति
॥ १४ ॥ सहोवाचाजातशत्रुःप्रतिलोमंवैतद्यद्ब्राह्मणःक्षत्रियमुपेयाद्ब्रह्ममेवक्ष्यतीतिव्येव
त्वाज्ञापयिष्यामीतितंपाणावादायोत्तस्थौतौहपुरुषंसुप्तमाजग्मतुस्तमेतैर्नामभिरामंत्रयांच
क्रेबृहन्पांडुरवासःसोमराजन्निितिसनोत्तस्थौतंपाणिनापेषंबोधयांचकारसहोत्तस्थौ ॥१५॥स
होवाचाजातशत्रुर्यत्रैषएतत्सुप्तोभूद्यएषविज्ञानमयःपुरुषःक्वैषतदाभूत्कुतएतदागादितितदु
हनमेनेगार्ग्यः ॥ १६ ॥ सहोवाचाजातशत्रुर्यत्रैषएतत्सुप्तोभूद्यएषविज्ञानमयःपुरुषस्तदेषां
प्राणानांविज्ञानेनविज्ञानमादाययएषोंतर्हृदयआकाशस्तस्मिन्शेतेतानियदागृह्णात्यथहैत
त्पुरुषःस्वपितिनामतद्गृहीतएवप्राणोभवतिगृहीतावाग्गृहीतंचक्षुर्गृहीतंश्रोत्रंगृहीतंमनः॥१७॥

बहिरुपासनेनमोक्षस्तेषामपिहृद्युपासनंकिंचित्कर्तव्यमेव ॥ स्वहृदिस्थेनभगवद्रूपेणविशेषसंबंधदर्शनार्थ
मेवयत्रैषएतत्सुप्तोभूदित्यादिप्रश्नप्रतिवचनंसमस्तम् ॥ यत्रयस्मिन्परमेश्वरेविज्ञानमयेएषजीवःसुप्तोभूत्॥
यत्रेत्यधिकरणभूतएवयएषविज्ञानमयइतिपरामृश्यते ॥ अन्योंतरआत्माविज्ञानमयः ॥ विज्ञानंब्रह्मचे

द्वेदेतिश्रुतेः ॥ तानियदापरमात्मागृह्णातितदैतत्पुरुषोजीवःस्वपितिनाम ॥ सयत्रपरमात्मास्वप्नयानाड्या चरतितदाजीवउच्चावचंनिर्गच्छतीव ॥ सर्वदामहाराजवत्प्राणानृगृहीत्वापरमात्मापरिवर्तते ॥ जीवस्तुक दाचिदेवस्वप्नेराजवदात्मानंपश्यतिकदाचिद्ब्राह्मणवच्छ्वमार्जारादिवद्वा ॥ आनंदस्यपरमात्मनोऽतिग्नास मीपम् ॥ कुमारोरुद्रः ॥ महाराजोवायुः ॥ महाब्राह्मणोब्रह्मा ॥ नहिजीवोविज्ञानपूर्वकंप्राणानांविज्ञानमा

सयत्रैतत्स्वप्नयाचरतितेहास्यलोकास्तदुतेवमहाराजोभवत्युतेवमहाब्राह्मणउतेवोच्चावचंनिग च्छतिसयथामहाराजोजनपदान्गृहीत्वास्वेजनपदेयथाकामंपरिवर्ततैवमेवैषएतत्प्राणानृगृ हीत्वास्वेशरीरेयथाकामंपरिवर्तते ॥ १८॥ अथयदासुषुप्तोभवतितदानकस्यचनवेदहिताना मनाड्योद्वासप्ततिसहस्राणिहृदयात्पुरीततमभिप्रतिष्ठंतेताभिःप्रत्यवसृप्यपुरीततिशेतेसयथा कुमारोवामहाराजोवामहाब्राह्मणोवातिघ्नीमानंदस्यगत्वाशयीतैवमेवैषएतच्छेते ॥ १९ ॥ सयथोर्णनाभिस्तंतुनोच्चरेद्यथाग्नेःक्षुद्राविस्फुलिंगाव्युच्चरंत्येवमेवास्मादात्मनःसर्वेप्राणाःसर्वे लोकाःसर्वेदेवाःसर्वाणिभूतानिव्युच्चरंति ॥ तस्योपनिषत्सत्यस्यसत्यमितिप्राणावैसत्यंतेषा मेषसत्यम् ॥ २० ॥ अजातशत्रुब्राह्मणम् ॥ ४ । १ ॥ ॥

दत्ते ॥ नचसर्वप्राणलोकदेवभूतानांस्रष्टा ॥ आदित्यचंद्रविद्युत्सुभूतेष्वादर्शएवच ॥ गच्छत्पाश्चात्यशब्दे नचक्षुश्छायागतंतथा ॥ हिरण्यगर्भसंस्थंचसदोपास्यहरिंपरम् ॥ तद्देवसार्ष्णितामेत्यहद्युपास्यहरिंपुनः ॥ मु क्तिमेत्यथयोबाह्यान्मुक्तिमेष्यतिसोपितु ॥ हृदिकिंचिदुपास्यैवविष्णुंमुक्तिमनुव्रजेत् ॥ यानिसूर्यादिना मानिविष्णोस्तानिनसंशयः ॥ तदुक्तान्येवसूर्यादेराकृष्यैवोपचारतः ॥ विशेषेणतुसंबंधोयतःस्वहृदिसंस्थि

ते ॥ जीवस्यातोनसोमादिनाम्नाहूतोहरिःपरः ॥ जीवंचवारयेत्तत्रयदाविष्णुःसनातनः ॥ स्वप्नंपश्यतिजीवोयंयदाविज्ञानरूपिणम् ॥ सुषुम्नासंस्थितंविष्णुमेतितत्सुप्तिमेष्यति॥सम्यग्ज्ञानमयाद्विष्णोरुत्थानंवाप्ययंव्रजेत् ॥ प्राणानांचैवलोकानांदेवानांप्राणिनामपि ॥ सत्यसत्योहरिःस्रष्टापाताविलयकृत्तथा ॥ नियंतामोक्षदश्चैवविष्णुरेवसनातनइतिनारायणश्रुतौ ॥ ॥ अजातशत्रुब्राह्मणम् ॥ ४ ॥ १ ॥

आधानमवस्थानंसूक्ष्मशरीरम् ॥ प्रत्याधानंविधानंस्थूलशरीरम्॥प्राणोनारायणःस्थूणा ॥ वायुर्गौवत्सरूपे

योहवैशिशुꣳसाधनꣳसप्रत्याधानꣳसस्थूणꣳसदामंवेदसप्तहद्विषतोभ्रातृव्यानवरुणद्ध्ययंवाव शिशुर्योयंमध्यमःप्राणस्तस्येदमेवाधानमिदंप्रत्याधानंप्राणस्थूणाअन्नंदाम ॥ १ ॥ तमेताः सप्ताक्षितयउपतिष्ठंतेतद्याइमाअक्षँल्लोहिन्योराजयस्ताभिरेनꣳरुद्रोन्वायत्तोऽथयाअक्षन्नापस्ताभिःपर्जन्योयाकनीनकातयादित्योयत्कृष्णंतेनाग्निर्यच्छुक्लंतेनेंद्रोधरयैनंवर्तन्यापृथिव्यन्वायत्ताद्यौरुत्तरयानास्यान्नंक्षीयतेयएवंवेद ॥२॥ तदेषश्लोकोभवत्यर्वाग्बिलश्चमसऊर्ध्वबुध्नस्तस्मिन्यशोनिहितंविश्वरूपंतस्यासतऋषयःसप्ततीरवागष्टमीब्रह्मणासंविदानेत्यर्वाग्बिलश्चमसऊर्ध्वबुध्नइतीदंतच्छिरएषह्यर्वाग्बिलश्चमसऊर्ध्वबुध्नस्तस्मिन्यशोनिहितंविश्वरूपमिति

णसर्वप्राणिषुसंस्थितः ॥ सूक्ष्मदेहोगृहंतस्यवितानंस्थूलउच्यते॥अन्नंदामात्मकंतस्यस्थूणातुभगवान्हरिः॥ध्यायत्येवंहियोवायुंश्रोत्रादीन्मनसासह ॥ बुद्धिंचसप्तशत्रून्सविषयेष्वभिधावतः ॥ असुरान्सन्निरुध्यैववेत्तिनारायणंपरम् ॥ दक्षिणाक्षिस्थितंवायुंसप्तदेवाउपासते॥ अक्षीणज्ञानमनसःसदाशिवपुरःसराः॥उपास्यमानंतैर्देवैर्मोक्षार्थंवायुमीश्वरम्॥स्थूणयाविष्णुनासार्धंयोविद्यात्सोन्नमश्नुते ॥ अक्षय्यमेवमुक्तःसन्सर्वदुः

स्वविवर्जितः ॥ विश्वरूपंयशश्चेतिनाम्नाविष्णूरमातथा ॥ वायुश्चसंस्थितानित्यंसर्वेषांदक्षिणाक्षिगाः॥पूर्ण
त्वाद्विश्वतोविष्णोरमायास्त्रीषुपूर्णतः ॥ वायोर्जीवेषुपूर्णत्वाद्यशोज्ञानसुखात्मकाः ॥ प्राणाश्चैतेप्रणेतृत्वा
॥३१॥ दृषयोरुद्रपूर्वकाः ॥ गौतमोनामरुद्रस्तुसर्वज्ञत्वात्प्रकीर्तितः ॥ भरद्वाजस्तुपर्जन्योवाजमन्नंभरेद्यतः ॥ ४।२
दृष्टयैवविश्वामित्राख्यआदित्योयत्प्रकाशनात् ॥ विश्वंविज्ञापयन्नित्यमग्निस्तुजमदग्निकः ॥ जातं
मितंचात्तियस्माद्वसिष्ठाख्यस्तुवासवः ॥ वसतामुत्तमोयस्मात्पृथ्वीकश्यपनामिका ॥ मेघदृष्टंपिबेद्यत्कं

प्राणावैयशोविश्वरूपंप्राणानेवतदाहतस्यासतऋषयःसप्ततीरइतिप्राणावाऋषयःप्राणानेतदा
हवागष्टमीब्रह्मणासंविदानेतिवाग्घ्यष्टमीब्रह्मणासंवित्ता ॥ ३ ॥ इमावेवगौतमभरद्वाजा
वयमेवगौतमोयंभरद्वाजइमावेवविश्वामित्रजमदग्नीअयमेवविश्वामित्रोयंजमदग्निरिमावेवव
सिष्ठकश्यपावयमेववसिष्ठोयंकश्यपोवागेवात्रिर्वाचाह्यन्नमद्यतेऽत्रिर्हवैनामैतद्यदत्रिरितिसर्व
स्यात्ताभवतिसर्वमस्यान्नंभवतियएवंवेद ॥ ४ ॥ शिशुब्राह्मणम् ॥ ४ ॥ २ ॥

द्वेवावब्रह्मणोरूपेमूर्तंचैवामूर्तंचमार्त्यंचामृतंचस्थितंचयच्चसच्चत्यच्च ॥१॥ तदेतन्मूर्तंयदन्य
द्वायोश्चांतरिक्षाच्चैतन्मर्त्यमेतत्स्थितमेतत्सत्तस्यैतस्यमूर्तस्यैतस्यमर्त्यस्यैतस्यस्थितस्यैतस्यस

शयानैवहिसासदा॥द्यौरत्रिरितिसंप्रोक्तातस्थैर्हिहुतमद्यते ॥ श्रोत्रदिङ्नासिकाबाहुदक्षिणाक्षिषुसंस्थि
ताः ॥ द्वितीयेनतुरूपेणदेवाएतेशिवादयः ॥ एवमेषांतुनामानिवेत्तियःसर्वभुग्भवेत् ॥ सरस्वत्यष्टमीचैवबा
च्चिसंस्थाविशेषतः ॥ उपास्तेवायुमेवैकंसस्थूणंब्रह्मवेदिता ॥ ब्रह्मनामासदावायुरेनांवेत्तिविशेषतः ॥ ॥३१॥
इतितांवेदयोविद्वान्सर्वात्तासभविष्यतीतिनारायणीये ॥ शिशुब्राह्मणम् ॥ ४ ॥ २ ॥

विशरणावसादनयुक्तंसत् ॥ ततंसर्वज्ञंचत्यम् ॥ प्रलयेपिभगवदंतरेवरताअक्षितास्थितेतिश्रीरंतरिक्षम् ॥
यएषतपतीत्यादित्यस्थोहिरण्यगर्भउच्यते ॥ मंडलेपुरुषइतिभगवान्विष्णुः ॥ एवमेवचक्षुर्दक्षिणेक्ष
न्पुरुषश्च ॥ तस्यैवामूर्तरसस्यभगवतोनेतिनेतीत्यादेशः ॥ अतस्तस्मादमूर्तसारत्वादित्यर्थः ॥ अथे
त्यानंतर्यार्थे ॥ इतिनेतिनेतिमूर्तामूर्तविलक्षणइत्यर्थः ॥ उभयसादृश्यनिषेधार्थंद्विवारम् ॥ इतिनेति
निषिध्यमानमप्येतस्मादन्यत्परंनास्ति ॥ एषएवपरः ॥ मूर्तामूर्तत्वपरमेवैतदपेक्षया ॥ मूर्तामूर्तमे

तएषरसोयएषतपतिसतोह्येषरसः ॥ २ ॥ अथामूर्तंवायुश्चांतरिक्षंचैतदमृतमेतद्यदेतत्त्यंतस्यै
तस्यामूर्तस्यैतस्यामृतस्यैतस्ययतएतस्यत्यस्यैषरसोयएषएतस्मिन्मंडलेपुरुषस्तस्यह्येषर
सइत्यधिदैवतम् ॥३॥ अथाध्यात्ममिदमेवमूर्तंयदन्यत्प्राणाच्चयश्चायमंतरात्मन्नाकाशएतन्म
र्त्यमेतत्स्थितमेतत्सत्तस्यैतस्यमूर्तस्यैतस्यमर्त्यस्यैतस्यस्थितस्यैतस्यसतएषरसोयच्चक्षुःसतो
ह्येषरसः ॥४॥ अथामूर्तंप्राणश्चयश्चायमंतरात्मन्नाकाशएतदमृतमेतद्यदेतत्त्यंतस्यैतस्यामूर्त
स्यैतस्यामृतस्यैतस्ययतएतस्यत्यस्यैषरसोयोयंदक्षिणेक्षन्पुरुषस्तस्यह्येषरसः ॥ ५ ॥ त

वाध्यात्मंप्राणाइत्युच्यंते ॥ ब्रह्मणोवायोश्चामूर्तत्वात् ॥ मूर्तामूर्तमिदंरूपंब्रह्मणःप्रतिमात्मकम् ॥ नै
तत्स्वरूपमेतत्स्यात्तद्धिसर्वपरंसदा ॥ श्रियोवायोर्विरिंचाच्चयेन्येमूर्ताहितेस्मृताः ॥ मूरंपापंहितेनाप्तंमूर्त
मित्यभिधीयते ॥ विशीर्णंचावसन्नंचतदेवातःसदुच्यते ॥ पराधीनगतित्वाच्चस्थितमित्यभिधीयते ॥
तस्यसारोविरिंचस्तुतद्विरुद्धस्वभावकः ॥ मूर्ताद्विरुद्धरूपत्वाच्छ्रीर्वायुश्चाप्यमूर्तकौ ॥ सर्वज्ञौचततौ
चैवनियतौहरिणैवतौ ॥ तयोःसारस्तुभगवान्हरिर्नारायणःपरः ॥ आदित्यमंडलेचैवचक्षुष्वपिचसुस्थि

तः ॥ तत्रैवसंस्थितोब्रह्मामूर्तसारोपितस्यच ॥ विष्णुरेवपरःसारस्तस्यरूपाण्यनेकधा ॥ महारजन
वासोवत्पांड्वाविकवदेवच ॥ विद्युत्पद्मेंद्रगोपादिवह्निवत्सुखभास्वरः ॥ नैवासौमूर्तवद्विष्णुर्नचमूर्तरसो
पमः ॥ नचामूर्तोपमोदेवःसएवपरमःसदा ॥ तस्यान्यदपरंसर्वंसत्यसत्यःसएकराट् ॥ मूर्तामूर्तात्मकाः

स्यहैतस्यपुरुषस्यरूपंयथामहारजनंवासोयथापांड्वाविकंयथेंद्रगोपोयथाग्न्यर्चिर्यथापुंडरीकंय
थासकृद्विद्युत्तꣳसकृद्विद्युत्तेवहवाअस्यश्रीर्भवतियएवंवेदाथातआदेशोनेतिनेतिनह्येतस्मादि
तिनेत्यन्यत्परमस्त्यथनामधेयꣳसत्यस्यसत्यमितिप्राणावैसत्यंतेषामेषसत्यम् ॥ ६ ॥ मूर्तामू
र्तब्राह्मणम् ॥ ४ ॥ ३ ॥ ॥

मैत्रेयीतिहोवाचयाज्ञवल्क्यउद्यास्यन्वाअरेहमस्मात्स्थानादस्मिहंततेनयाकात्यायन्यांतं
करवाणीति ॥ १ ॥ साहोवाचमैत्रेयीयन्नुमइयंभगोःसर्वापृथिवीवित्तेनपूर्णास्यात्कथंतेना
मृतंस्यामितिनेतिहोवाचयाज्ञवल्क्योयथैवोपकरणवतांजीवितंतथैवतेजीवितꣳस्यादमृतत्व
स्यनाशास्तिवित्तेनेति ॥ २ ॥ साहोवाचमैत्रेयीयेनाहंनामृतास्यांकिमहंतेनकुर्यांयदेव
भगवान्वेदतदेवमेब्रूहीति ॥ ३ ॥ सहोवाचयाज्ञवल्क्यःप्रियाबतारेनःसतीप्रियंभाष

प्राणास्तेषांसत्यःसएवहीतिनारायणश्रुतौ ॥ प्रथमनिषेधेनैवमूर्तरससादृश्यमपिनिषिद्धम् ॥ ॥ मू
र्तामूर्तब्राह्मणम् ॥ ४ ॥ ३ ॥
आत्मानारायणः ॥ तस्यैवहिकामेनपत्यादिःप्रियोभवति ॥ नहिपत्यादीनांजायादीनामहंप्रियःस्या
मितिकामनामात्रेणप्रियत्वंभवति ॥ भगवदिच्छयैवहितद्भवति ॥ अन्यथाजायार्थेपत्यर्थेइत्येवस्यात् ॥

प्राधान्यादिदंसर्वंविदितम् ॥ सर्वकारणत्वाच्चसर्वप्राधान्यंभगवतः ॥ प्राधान्याप्राधान्ययोरपिसएवहि
हेतुः ॥ अन्यत्रात्मनोब्रह्मवेदभगवदधीनत्वेननवेद ॥ तदनाश्रितत्वेनस्थानांतरेचवेद ॥ परादात्परतोलो

सएष्वास्वव्याख्यास्यामितेव्याचक्षाणस्यतुमेनिदिध्यासस्वेति ॥ ४ ॥ सहोवाचनवा
अरेपत्युःकामायपतिःप्रियोभवत्यात्मनस्तुकामायपतिःप्रियोभवतिनवाअरेजायायैकामा
यजायाप्रियाभवत्यात्मनस्तुकामायजायाप्रियाभवतिनवाअरेपुत्राणांकामायपुत्राःप्रियाभ
वंत्यात्मनस्तुकामायपुत्राःप्रियाभवंतिनवाअरेवित्तस्यकामायवित्तंप्रियंभवत्यात्मनस्तुकामा
यवित्तंप्रियंभवतिनवाअरेब्रह्मणःकामायब्रह्मप्रियंभवत्यात्मनस्तुकामायब्रह्मप्रियंभवतिन
वाअरेक्षत्रस्यकामायक्षत्रंप्रियंभवत्यात्मनस्तुकामायक्षत्रंप्रियंभवतिनवाअरेलोकानांकामा
यलोकाःप्रियाभवंत्यात्मनस्तुकामायलोकाःप्रियाभवंतिनवाअरेदेवानांकामायदेवाःप्रि-
याभवंत्यात्मनस्तुकामायदेवाःप्रियाभवंतिनवाअरेभूतानांकामायभूतानिप्रियाणिभवंत्या
त्मनस्तुकामायभूतानिप्रियाणिभवंतिनवाअरेसर्वस्यकामायसर्वंप्रियंभवत्यात्मनस्तुकामाय
सर्वंप्रियंभवतिआत्मावाअरेद्रष्टव्यःश्रोतव्योमंतव्योनिदिध्यासितव्योमैत्रेय्यात्मनोवाअरेद
र्शनेनश्रवणेनमत्याविज्ञानेनेदꣳसर्वंविदितम् ॥ ५ ॥ ब्रह्मतंपरादाद्योन्यत्रात्मनोब्रह्मवेदक्ष
त्रंतंपरादाद्योन्यत्रात्मनःक्षत्रंवेदलोकास्तंपरादुर्योन्यत्रात्मनोलोकान्वेददेवास्तंपरादुर्योन्यत्रा
त्मनोदेवान्वेदभूतानितंपरादुर्योन्यत्रात्मनोभूतानिवेदसर्वंतंपरादाद्योन्यत्रात्मनःसर्वंवेदेदंब्रह्मे
दंक्षत्रमिमेलोकाइमेदेवाइमानिभूतानीदꣳसर्वंयदयमात्मा ॥ ६ ॥ सयथादुंदुभेर्हन्यमानस्य

कालोकस्यांधेतमसि ॥ इदंब्रह्मादिकम् ॥ यदयमात्मा ॥ यत्रायमात्मा ॥ अन्यत्रपरिज्ञानेदोषोक्ते

स्तत्रपरिज्ञानंयुक्तंभवति ॥ अन्यथाअन्यदात्मनोब्रह्मवेदेतिस्यात् ॥ यदित्यव्ययत्वाद्यत्रेत्यपिभवति ॥ यथायस्मादित्यर्थे ॥ सयथादुंदुभेरितिचसूत्रम् ॥ दुंदुभ्याघातादिदृष्टांतोपितदधीनत्वंतत्कारणत्वंचज्ञाप यति ॥ नहिदुंदुभ्यादिरेवतच्छब्दः ॥ नचतदुपादानंस्थानांतरेतदुपलंभात् ॥ नह्युपादानादुपादेयंस्था नांतरेभवति ॥ शब्दोहिस्थानांतरेगत्वाप्रतिश्रुतित्वमुपैति ॥ भगवदिच्छायादृष्टांतोदुंदुभ्यादिः ॥ नहि

नबाह्याञ्छब्दाञ्छक्नुयाद्ग्रहणायदुंदुभेस्तुग्रहणेनदुंदुभ्याघातस्यवाशब्दोगृहीतः ॥ ७ ॥ सयथाशंखस्यध्मायमानस्यनबाह्याञ्छब्दाञ्छक्नुयाद्ग्रहणायशंखस्यतुग्रहणेनशंखध्मस्यवा शब्दोगृहीतः ॥ ८ ॥ सयथावीणायैवाद्यमानायैनबाह्याञ्छब्दाञ्छक्नुयाद्ग्रहणायवीणायै तुग्रहणेनवीणावादस्यवाशब्दोगृहीतः ॥ ९ ॥ सयथार्द्रैधाग्नेरभ्याहितात्पृथग्धूमाविनिश्चरं त्येवंवाअरेस्यमहतोभूतस्यनिःश्वसितमेतद्यदृग्वेदोयजुर्वेदःसामवेदोथर्वांगिरसइतिहासःपुरा णंविद्याउपनिषदःश्लोकाःसूत्राण्यनुव्याख्यानानिव्याख्यानान्यस्यैवैतानिनिःश्वसितानि ॥ ॥१०॥ सयथासर्वासामपाꣳसमुद्रएकायनमेवꣳसर्वेषांस्पर्शानांत्वगेकायनमेवꣳसर्वेषाꣳरसानां जिह्वैकायनमेवꣳसर्वेषांगंधानांनासिकैकायनमेवꣳसर्वेषांरूपाणांचक्षुरेकायनमेवꣳसर्वेषाꣳश

दुंदुभिंपश्यन्पुरुषोदुंदुभ्याघातेमुरजशब्दोयमितिगृह्णाति ॥ एवंभगवंतंजानन्नान्याधीनंजगदितिगृह्णाति॥ किंतुभगवदिच्छाधीनमित्येव ॥ तदेवदर्शयति ॥ सयथार्द्रैधाग्नेःसयथासर्वासामपामित्यादिना ॥ न ह्यग्निरेवधूपः ॥ नचापएवसमुद्रः ॥ नह्यपामापएवाश्रयः ॥ किंतुवरुणोपांखातोवा ॥ सएवचस मुद्रइत्युच्यते ॥ एवमेवसैंधवखिल्यस्यविलीनस्यसमस्तांभसश्चवरुणोपांखातोवासमुद्राख्यआश्रयः॥ व

रुणवद्पांखातवद्वानंतोपारोभगवान्जीवएवविज्ञानघनाख्योभूतसंबंधाज्जातःसंस्तल्लयमनुभगवंतमाभो
ति ॥ समुद्रेप्रास्तसैंधवखिल्यवत् ॥ समुद्रजलस्थानीयामुक्ताबहवएकस्वभावाः ॥ बहवोहिजल
परमाणवः ॥ सामुद्रजलमेकाश्रयम् ॥ मुक्तानांसंज्ञाप्यन्यैर्नज्ञायतेशास्त्रंविना॥संज्ञानास्तीत्युक्त्वाअलंवा
अरेइदंविज्ञानायेत्युक्तेर्नविजानातीत्युक्तेप्रतिज्ञाविरोधः ॥ नचसर्वाज्ञानंपुरुषार्थः ॥ मग्नस्यहिपरेज्ञा

व्दानां२श्रोत्रमेकायनमेव२सर्वेषा२संकल्पानांमनएकायनमेव२सर्वासांविद्यानां२हृदयमेकाय
नमेव२सर्वेषांकर्मणा२हस्तावेकायनमेव२सर्वेषामानंदानामुपस्थएकायनमेव२सर्वेषांविसर्गा
णांपायुरेकायनमेव२सर्वेषामध्वनांपादावेकायनमेव२सर्वेषांवेदानांवागेकायनम् ॥ ११ ॥ स
यथासैंधवखिल्यउदकेप्रास्तउदकमेवानुविलीयेतनहास्योद्ग्रहणायेवस्याद्यतोयतस्त्वाददीतल
वणमेवंवाअरेइदंमहद्भूतमनंतमपारंविज्ञानघनएवैतेभ्योभूतेभ्यःसमुत्थायतान्येवानुविनश्यति
नप्रेत्यसंज्ञास्तीत्यरेब्रवीमीतिहोवाचयाज्ञवल्क्यः ॥१२॥साहोवाचमैत्रेय्यत्रैवमाभगवानमूमु
हन्नप्रेत्यसंज्ञास्तीतिसहोवाचनवाअरेअहंमोहंब्रवीमीत्यलंवाअरइदंविज्ञानाय॥१३॥यत्रहि
द्वैतमिवभवतितदितरइतरंजिघ्रतितदितरइतरंपश्यतितदितरइतर२शृणोतितदितरइतरमभिव

नोकिंनदुःखतरंभवेदितिच ॥ नानात्वेनाभिसंबंधास्तदातत्कालभाविना ॥ संयोगःप्रकृतेर्नैषांमुक्तानांत
त्त्वदर्शनात् ॥ प्रवर्ततिपुनःसर्गेतेषांसानप्रवर्तते ॥ आनंदेनविनाचैवभोगेनविषयेणच ॥ सर्वेतेब्रह्मण
स्तुल्याआधिपत्यंनचैवहीतिवायुप्रोक्ते ॥ इवशब्दस्त्वस्वातंत्र्यार्थे ॥ नहितदधीनंपृथगित्येवोच्यते॥
तस्मादमुक्तैर्नज्ञायतइतिसंज्ञानास्तीत्युक्तम् ॥ पतिर्जायाप्रियानैवस्वेच्छयातुभविष्यति ॥ विष्णोरिच्छा

वशेनैवस्वयंचस्वप्रियोभवेत् ॥ विष्णोरिच्छावशेनैवहंतिह्यात्मानमात्मना ॥ स्वात्मानमप्रियंकृत्वानि
रयेपातयत्यपि ॥ प्राधान्येनहरेर्ज्ञानात्सर्वंविदितवद्भवेत् ॥ ब्रह्मजात्यात्मकंवेत्तिनैवविष्णुवशंहियः ॥ ब्र
ह्माणंतंततोब्रह्मापातयेत्तमसिध्रुवम् ॥ एवंक्षत्रात्मकोवायुर्वित्तरूपश्चवित्तपः ॥ पंचभूतानिविश्वेचदेवालो
काभिमानिनः ॥ सर्वाभिमानिनीदेवीमूलप्रकृतिरेवच ॥ सर्वंविष्णौस्थितंविष्णोर्जातंविष्णोर्वशेसदा॥शंख
शब्दोयथाशंखदेवतावशगःस्थितः ॥ तस्माद्वेदाःसमुत्पन्नाविद्याख्यामूलिकाश्रुतिः ॥ सर्वोपनिषदश्चैवपं
चरात्राख्यसंहिताः ॥ ब्रह्मसूत्राणिवेदानांव्याख्यास्तासांचविस्तरः ॥ सर्वमेतज्जगच्चैवनिःसृतंतुरगाननात् ॥

दतितदितरइतरंमनुतेतदितरइतरंविजानातियत्रवाअस्यसर्वमात्मैवाभूत्तत्केनकंजिघ्रेत्तत्के
नकंपश्येत्तत्केनकंशृणुयात्तत्केनकमभिवदेत्तत्केनकंमन्वीततत्केनकंविजानीयाद्येनेदꣳसर्वंवि
जानातितंकेनविजानीयाद्विज्ञातारमरेकेनविजानीयादिति॥१४॥चतुर्थंमैत्रेयीब्राह्मणम्॥४।४

वरुणस्यवशेयद्वदापएवंवशेहरेः ॥ सर्वेबद्धाश्चमुक्ताश्चतारतम्यात्मनास्थिताः ॥ यदिमुक्तस्यविज्ञानंगंधा
दिविषयेनचेत् ॥ तथैवभगवद्रूपेस्वरूपेचपरस्परम् ॥ एवमज्ञानरूपांतांमुक्तिंकोनामवांछति॥तस्माद्विष्णो
र्वशेसर्वेयथेष्टमुपभोगिनः॥मुक्ताःसदातारतम्यात्तिष्ठंत्याब्रह्मणोखिलाइतिहयग्रीवसंहितायाम्॥सर्गेसर्गेतु
योनैवशब्दतोप्यन्यथाभवेत् ॥ श्रुत्याख्यःसतुविज्ञेयइतिहासादिरर्थतः ॥ भगवद्दृष्टमेवान्यैर्ब्रह्माद्यैर्दृश्यते
यदि ॥ ऋषिभेदस्तुतत्रस्याद्वेदोनाविष्णुनिर्गतः ॥ वेदइत्येवविष्णूक्तस्तपसादृश्यतेपरैरितिच ॥ ॥ मैत्रे
यीब्राह्मणम् ॥ ४ ॥ ४ ॥

भगवतोरूपंरूपंप्रतिजीवाख्यःप्रतिबिंबोबभूव॥बभूवेतिसदेवसोम्येदमग्रआसीदितिवदनादित्वार्थे ॥ सुख
दासर्वभूतानांपृथ्वीमधुवदुच्यते॥ पृथिव्याश्चैवभूतानितथासर्वाश्चदेवताः॥ पृथिव्यादिषुदेवेषुशरीरादिषुच
स्थितः ॥ एकएवपरोविष्णुर्हयशीर्षस्वरूपधृक् ॥ अनंततेजानित्यश्चसएवब्रह्मसर्वगम् ॥ तदेवगुण

इयंपृथिवीसर्वेषांभूतानांमध्वस्यैपृथिव्यैसर्वाणिभूतानिमधुयश्चायमस्यांपृथिव्यांतेजोम
योऽमृतमयःपुरुषोयश्चायमध्यात्मꣳशारीरस्तेजोमयोऽमृतमयःपुरुषोयमेवसयोयमात्मेदममृ
तमिदंब्रह्मेदꣳसर्वम्॥१॥ इमाआपःसर्वेषांभूतानांमध्वासामपाꣳसर्वाणिभूतानिमधुयश्चायमा
स्वप्सुतेजोमयोमृतमयःपुरुषोयश्चायमध्यात्मꣳरैतसस्तेजोमयोमृतमयःपुरुषोयमेवसयोयमा
त्मेदममृतमिदंब्रह्मेदꣳसर्वम् ॥ २॥ अयमग्निःसर्वेषांभूतानांमध्वस्याग्नेःसर्वाणिभूतानिमधुय
श्चायमस्मिन्नग्नौतेजोमयोऽमृतमयःपुरुषोयश्चायमध्यात्मंवाङ्मयस्तेजोमयोमृतमयःपुरुषोयमे
वसयोयमात्मेदममृतमिदंब्रह्मेदꣳसर्वम्॥३॥अयंवायुःसर्वेषांभूतानांमध्वस्यवायोःसर्वाणिभूता
निमधुयश्चायमस्मिन्वायौतेजोमयोमृतमयःपुरुषोयश्चायमध्यात्मंप्राणस्तेजोमयोऽमृतमयः
पुरुषोयमेवसयोयमात्मेदममृतमिदंब्रह्मेदꣳसर्वम्॥४॥अयमादित्यःसर्वेषांभूतानांमध्वस्यादि
त्यस्यसर्वाणिभूतानिमधुयश्चायमस्मिन्नादित्येतेजोमयोमृतमयःपुरुषोयश्चायमध्यात्मंचाक्षु

पूर्णत्वाद्ब्रह्मसर्वमनूनतः ॥ आत्मनामापरोविष्णुःसर्वगोयःप्रकीर्तितः ॥ सएवहयशीर्षाख्यस्त्वधिदेवा
दिषुस्थितः ॥ अराणामाश्रयौयद्वद्बहिरंतःप्रतिष्ठितौ ॥ नाभिर्नेमीतथाविष्णुर्जीवानामाश्रयःस्थितः॥
सएवदशधाप्रोक्तोविष्णुर्मत्स्यादिरूपकः ॥ शतंनारायणाद्यात्माविश्वाद्यात्मासहस्रकः ॥ परादिरूपो

बहुधासोनंतात्माऽजितादिकः ॥ भूताख्यःसर्वजीवानांविरिंचानांचसर्वशः ॥ आत्मनाम्नांसएवैकोरा
जाधिपतिरेवच ॥ स्वामित्वाद्राजशब्दोयमाधिक्यात्पालनात्तथा ॥ अधिपश्चेतिसंप्रोक्तःपुरुषःपुरुषस्थि

॥२५॥ षस्तेजोमयोमृतमयःपुरुषोयमेवसयोयमात्मेदममृतमिदंब्रह्मेदꣳसर्वम् ॥५॥ इमादिशःसर्वेषां ४ । ५
भूतानांमध्वासांदिशाꣳसर्वाणिभूतानिमधुयश्चायमासुदिक्षुतेजोमयोऽमृतमयःपुरुषोयश्चाय
मध्यात्मꣳश्रोत्रःप्रातिश्रुत्कस्तेजोमयोमृतमयःपुरुषोयमेवसयोयमात्मेदममृतमिदंब्रह्मेदꣳस
र्वम् ॥६॥ अयंचंद्रःसर्वेषांभूतानांमध्वस्यचंद्रस्यसर्वाणिभूतानिमधुयश्चायमस्मिन्चंद्रेतेजो
मयोमृतमयःपुरुषोयश्चायमध्यात्मंमानसस्तेजोमयोमृतमयःपुरुषोयमेवसयोयमात्मेदममृत
मिदंब्रह्मेदꣳसर्वम् ॥ ७ ॥ इयंविद्युत्सर्वेषांभूतानांमध्वस्यैविद्युतःसर्वाणिभूतानिमधुयश्चाय
मस्यांविद्युतितेजोमयोमृतमयःपुरुषोयश्चायमध्यात्मंतैजसस्तेजोमयोमृतमयःपुरुषोयमेवस
योयमात्मेदममृतमिदंब्रह्मेदꣳसर्वम् ॥ ८ ॥ अयंस्तनयित्नुःसर्वेषांभूतानांमध्वस्यस्तनयि
त्नोःसर्वाणिभूतानिमधुयश्चायमस्मिंस्तनयित्नौतेजोमयोमृतमयःपुरुषोयश्चायमध्यात्मंशाब्दः
सौवरस्तेजोमयोमृतमयःपुरुषोयमेवसयोयमात्मेदममृतमिदंब्रह्मेदꣳसर्वम् ॥९॥ अयमाका
शःसर्वेषांभूतानांमध्वस्याकाशस्यसर्वाणिभूतानिमधुयश्चायमस्मिन्नाकाशेतेजोमयोमृतमयः
पुरुषोयश्चा यमध्यात्मꣳहृद्याकाशस्तेजोमयोमृतमयःपुरुषोयमेवसयोयमात्मेदममृतमिदंब्रह्मे ॥२५॥

तेः ॥ पुराख्येष्वेवदेहेषुहृत्पुर्यपिवसत्यसौ ॥ नानेनाकिंचिदव्याप्तंनानेनाच्छादितंनच ॥ नैवास्मात्पूर्वकंकिं
चिन्नैवास्मादपरंतथा ॥ सर्वस्माद्बाह्यतश्चासौसर्वस्मादंतरस्तथा ॥ व्याप्तेरात्मेतिसंप्रोक्तोब्रह्मेतिगुणपूर्तितः॥

ससर्वस्यापरोक्षज्ञइतिवेदानुशासनम्॥ विरिंचस्त्वात्मशब्दोक्तोमानुषंमनुरुच्यते ॥ सत्यंचस्तनयित्नुश्चवा
योरूपांतरेस्मृते ॥ एतएवस्वरेसत्येजीवेचाध्यात्मसंस्थिताः ॥ तेषांनियामकोविष्णुस्तत्रतत्रैवसंस्थि
तः ॥ जीवेस्थितश्चात्मनामासौवरःस्वरगःस्मृतः ॥ सत्यगःसत्यनामासौधर्मगोधर्मएवच ॥ मनोःस्वायंभु

द५ँसर्वम्॥ १०॥अयंधर्मःसर्वेषांभूतानांमध्वस्यधर्मस्यसर्वाणिभूतानिमधुयश्चायमस्मिन्धर्मेते
जोमयोमृतमयःपुरुषोयश्चायमध्यात्मंधर्मस्तेजोमयोमृतमयःपुरुषोयमेवसयोयमात्मेदममृत
मिदंब्रह्मेद५ँसर्वम् ॥ ११॥इद५ँसत्यंसर्वेषांभूतानांमध्वस्यसत्यस्यसर्वाणिभूतानिमधुश्चायम
स्मिन्सत्येतेजोमयोमृतमयःपुरुषोयश्चायमध्यात्मंसात्यस्तेजोमयोमृतमयःपुरुषोयमेवसयो
यमात्मेदममृतमिदंब्रह्मेद५ँसर्वम् ॥ १२ ॥ इदंमानुषंसर्वेषांभूतानांमध्वस्यमानुषस्यसर्वा
णिभूतानिमधुयश्चायमस्मिन्मानुषेतेजोमयोमृतमयःपुरुषोयश्चायमध्यात्मंमानुषस्तेजोमयो
मृतमयःपुरुषोयमेवसयोयमात्मेदममृतमिदंब्रह्मेद५ँसर्वम् ॥ १३ ॥ अयमात्मासर्वेषांभू
तानांमध्वस्यात्मनःसर्वाणिभूतानिमधुयश्चायमस्मिन्नात्मनितेजोमयोमृतमयःपुरुषोयश्चायम
ध्यात्ममात्मातेजोमयोमृतमयःपुरुषोयमेवसयोयमात्मेदममृतमिदंब्रह्मेद५ँसर्वम्॥ १४ ॥सवा
अयमात्मासर्वेषांभूतानामधिपतिस्सर्वेषांभूताना५ँराजातद्यथारथनाभौचरथनेमौचाराःसर्वेस
मर्पिताएवमेवास्मिन्नात्मनिसर्वाणिभूतानिसर्वेएतआत्मानःसमर्पिताः ॥ १५ ॥ इदंवैतन्म

वस्याख्यामानुषेत्येवदेहिषु ॥ बहिश्चतद्गतोविष्णुर्मानुषेत्येवकथ्यते ॥ प्रातिश्रुत्कइतिश्रोत्रेतैजसाविद्युति
स्थितः॥ इतिनानाविधैर्नामसमूहैर्विष्णुरिज्यते ॥ दध्यङ्ङाथर्वणोश्विभ्यामेतांविद्यामदात्पुरा ॥ हयग्रीव

ब्रह्मविद्येत्येषाब्रह्मादिभिर्धृतेति॥ प्रत्यैरयतंप्रतिसमधत्तम्॥ ऋतायन्सत्यंकुर्वन्॥ कक्ष्यंनारायणकवचम्॥ त्वाष्ट्रंत्वष्टुःपुत्रेणविश्वरूपेणेंद्रायोक्तम् ॥ सनयेलाभाय ॥ दंसःकर्म ॥ स्तनयित्नुर्वृष्टिमिव ॥ तस्यांविद्यायांपरस्योक्तायांतवशिरश्छेत्स्यामीतींद्रेणदधीचंप्रत्युक्तेसोश्विभ्यामावांब्रवीहीत्युक्तइंद्रेणोक्तमाह ॥ त

धुदध्यङ्ङाथर्वणोश्विभ्यामुवाचतदेतदृषिःपश्यन्नवोचत् तद्वान्नरासनयेदंसउग्रमाविष्कृणोमितन्यतुर्नवृष्टिं दध्यङ्हयन्मध्वाथर्वणोवामश्वस्यशीर्ष्णाप्रयदीमुवाचेति ॥१६॥ इदंवैतन्मधुदध्यङ्ङाथर्वणोश्विभ्यामुवाच तदेतदृषिःपश्यन्नवोचत् आथर्वणायाश्विनादधीचेश्व्यंशिरःप्रत्यैरयतंसवांमधुप्रवोचदृतायंत्वाष्ट्रंयद्दस्रावपिकक्ष्यंवामिति ॥ १७ ॥ इदंवैतन्मधुदध्यङ्ङाथर्वणोश्विभ्यामुवाचतदेतदृषिःपश्यन्नवोचत्पुरश्चक्रेद्विपदःपुरश्चक्रेचतुष्पदःपुरस्सपक्षीभूत्वापुरःपुरुषआविशदितिसवाअयंपुरुषःसर्वासुपूर्षुपुरिशयोनैनेनकिंचनानावृतंनैनेनकिंचनासंवृतम् ॥ १८ ॥ इदंवैतन्मधुदध्यङ्ङाथर्वणोश्विभ्यामुवाचतदेतदृषिःपश्यन्नवोचत् । रूपंरूपंप्रतिरूपोबभूवतदस्यरूपंप्रतिचक्षणायइंद्रोमायाभिःपुरुरूपईयतेयुक्ताह्यस्यहरयःशतादशेत्ययंवैहरयोयंवैदशचसहस्राणिबहूनिचानंतानिचतदेतद्ब्रह्मापूर्वमनपरमनंतरमबाह्यमयमात्माब्रह्मसर्वानुभूरित्यनुशासनम् ॥ १९ ॥ मधुब्राह्मणम् ॥ ४ ॥ ५ ॥

दाश्विभ्यांपावइत्युक्त्वातच्छिरश्छित्त्वान्यत्रनिधायअश्वशिरःसंधितंतेनविद्यायामुक्तायांतस्मिन्निंद्रेणच्छिन्नेपूर्वशिरःसंधितंपूर्वंजानन्नपींद्रःपश्चाद्विश्वरूपाच्छुश्रावेतिपुनर्नवत्वायेतिनविश्वरूपस्त्वाष्ट्रोश्विभ्यमित्यनेनविरोधः ॥ मधुब्राह्मणम् ॥ ४॥५ ॥

पाराशर्यौजातूकर्ण्यः पराशरसुतावुभौ ॥ विप्रायामेवभार्यायांतृतीयःकृष्णएवचेतिब्रह्मांडे ॥ परस्यब्रह्मणोविष्णोर्हयशीर्षादधीतवान्॥ ब्रह्मविद्यामिमांब्रह्माततःसनकएवचेतिगारुडे ॥ इतिवंशब्राह्मणम्॥४॥६॥

अथवंशः पौतिमाष्योगौपवनाद्गौपवनःपौतिमाष्यात्पौतिमाष्योगौपवनाद्गौपवनःकौशिकात्कौशिकःकौंडिन्यात्कौंडिन्यःशांडिल्याच्छांडिल्यःकौशिकाच्चगौतमाच्चगौतमः ॥ १ ॥ आग्निवेश्यादाग्निवेश्यःशांडिल्याच्चानभिम्लाताच्चानभिम्लातआनभिम्लातादानभिम्लातोगौतमाद्गौतमःसैतवप्राचीनयोग्याभ्यांसैतवप्राचीनयोग्यौपाराशर्यात्पाराशर्योभारद्वाजाद्भारद्वाजोभारद्वाजाच्चगौतमाच्चगौतमोभारद्वाजाद्भारद्वाजःपाराशर्यात्पाराशर्योबैजवापायनाद्बैजवापायनःकौशिकायनेःकौशिकायनिः॥२॥घृतकौशिकाद्घृतकौशिकःपाराशर्यायणात्पाराशर्यायणः पाराशर्यात्पाराशर्योजातूकर्ण्याज्जातूकर्ण्यआसुरायणाच्चयास्काच्चासुरायणस्त्रैवर्णेस्त्रैवर्णिरौपंचधनेरौपंचधनिरासुरेरासुरिर्भारद्वाजाद्भारद्वाजआत्रेयादात्रेयोमांटेर्मांटिर्गौतमाद्गौतमोवात्स्याद्वात्स्यःशांडिल्याच्छांडिल्यःकैशोर्यात्काप्यात्कैशोर्यःकाप्यःकुमारहारितात्कुमारहारितोगालवाद्गालवोविदर्भीकौंडिन्याद्विदर्भीकौंडिन्योवत्सनपातोबाभ्रवाद्वत्सनपाद्बाभ्रवःपथःसौभरात्पंथाःसौभरोऽयास्यादांगिरसादयास्यआंगिरसआभूतेस्त्वाष्ट्रादाभूतिस्त्वाष्ट्रोविश्वरूपात्त्वाष्ट्राद्विश्वरूपस्त्वाष्ट्रोऽश्विभ्यामश्विनौदधीचआथर्वणाद्दध्यङ्ङाथर्वणोऽथर्वणोदैवादथर्वादैवोमृत्योःप्राध्वंसनान्मृत्युःप्राध्वंसनःप्रध्वंसनात्प्रध्वंसनएकर्षेरेकर्षिर्विप्रचि

इतिश्रीमदानंदतीर्थभगवत्पादाचार्यविरचितेश्रीमद्बृहदारण्यकोपनिषद्भाष्येचतुर्थोऽध्यायः ॥ ४ ॥

होतर्यग्नौवाचिचैवयोविष्णुंमुक्तिदंस्मरेत् ॥ नित्यंसमुच्यतेध्वर्युसूर्यचक्षुष्षुयःस्मरेत् ॥ अधिकःप्रकाशएवास्यमुक्तावन्येभ्यइष्यते ॥ मुक्तेभ्योपितथोद्गातृवायुःप्राणेषुयःस्मरेत् ॥ पूर्णचंद्रंसदापश्येदधि

त्तोर्विप्रचित्तिर्व्यष्टेर्व्यष्टिःसनारोस्सनारुःसनातनात्सनातनःसनकात्सनकःपरमेष्ठिनःपरमेष्ठीब्रह्मणोब्रह्मस्वयंभुब्रह्मणेनमः ॥ ३ ॥ वंशब्राह्मणम् ॥ ५ ॥ ६ ॥ चतुर्थोध्यायः ॥ ४ ॥

जनकोहवैदेहोबहुदक्षिणेनयज्ञेनेजेतत्रहकुरुपांचालानांब्राह्मणाअभिसमेताबभूवुस्तस्यह जनकस्यवैदेहस्यविजिज्ञासाबभूव कःस्विदेषांब्राह्मणानामनूचानतमइतिसहगवांसहस्रमवरुरोध दशदशपादाएकैकस्याःशृङ्गयोराबद्धाबभूवुः ॥ १ ॥ तान्होवाचब्राह्मणाभगवंतोयोवोब्रह्मिष्ठःसएतागाउदजतामितितेब्राह्मणानदधृषुरथहयाज्ञवल्क्यःस्वमेवब्रह्मचारिणमुवाचैताःसौम्योदजसामश्रवा३इतिताहोदाचकारतेहब्राह्मणाश्चुक्रुधुःकथंनोब्रह्मिष्ठोब्रवीतेत्यथजनकस्यवैदेहस्यहोताअश्वलोबभूवसहैनंपप्रच्छत्वंनुखलुनोयाज्ञवल्क्यब्रह्मिष्ठोसी३इतिसहोवाचनमोवयंब्रह्मिष्ठायकुर्मोगोकामाएववयंस्मइतितंहततएवप्रष्टुंदध्रेहोताश्वलः ॥ २ ॥ याज्ञवल्क्येतिहोवाचयदिदंसर्वंमृत्युनाप्तंसर्वंमृत्युनाभिपन्नंकेनयजमानोमृत्योराप्तिमतिमुच्यतइतिहोत्रर्त्विजाग्निनावाचावाग्वैयज्ञस्यहोतातद्येयंवाक्सोयमग्निःसहोतासमुक्तिःसातिमुक्तिः ॥ ३ ॥ याज्ञवल्क्येतिहोवाचयदिदंसर्वमहोरात्राभ्यामाप्तंसर्वमहोरात्राभ्यामभि

काद्धादसंयुतः ॥ मनोब्रह्मनिशेशेषुयोविष्णुंसर्वदास्मरेत् ॥ अप्रयत्नेनलोकंसविष्णोर्यातिनसंशयः ॥ होत्रग्न्यादीनिनामानिविष्णोःसर्वाणिमुख्यतः॥ तत्संबंधात्तदन्येषांसवैहोत्रादिकर्मकृत् ॥ तस्माद्धोत्रग्निवागा

दैरैक्यंश्रुतिषुचोच्यते ॥ होत्रादिष्वेवचतुर्षुवासुदेवादिरूपधृक् ॥ व्यवस्थितोहितज्ज्ञानादचिरान्मुक्तिमे
ष्यति ॥ मुक्तिनामासभगवान्मोक्षदत्वात्प्रकीर्तितः ॥ मनुष्येभ्योधिकसुखंदेवेभ्योयत्प्रयच्छति ॥ मुक्ता

पन्नंकेनयजमानोहोरात्रयोराप्तिमतिमुच्यतइत्यध्वर्युणर्त्विजाचक्षुषाऽऽदित्येनचक्षुर्वैयज्ञस्याध्वर्युस्तद्यदिदंचक्षुःसोसावादित्यःसोध्वर्युःसमुक्तिःसातिमुक्तिः ॥ ४ ॥ याज्ञवल्क्येतिहोवाचयदिदꣳसर्वंपूर्वपक्षापरपक्षाभ्यामाप्तꣳसर्वंपूर्वपक्षापरपक्षाभ्यामभिपन्नंकेनयजमानःपूर्वपक्षापरपक्षयोराप्तिमतिमुच्यतइत्युद्गात्रर्त्विजावायुनाप्राणेनप्राणोवैयज्ञस्योद्गातातद्योयंप्राणःसवायुःसउद्गातासमुक्तिःसातिमुक्तिः ॥ ५ ॥याज्ञवल्क्येतिहोवाचयदिदमंतरिक्षमनारंभणमिवकेनाक्रमेणयजमानःस्वर्गंलोकमाक्रमतइतिब्रह्मणर्त्विजामनसाचंद्रेणमनोवैयज्ञस्यब्रह्मातद्यदिदंमनःसोसौचंद्रःसब्रह्मासमुक्तिःसातिमुक्तिरित्यतिमोक्षाअथसंपदः ॥ ६ ॥ याज्ञवल्क्येतिहोवाचकतिभिरयमद्यर्ग्भिर्होतास्मिन्यज्ञेकरिष्यतीतितिसृभिरितिकतमास्तास्तिस्रइतिपुरोनुवाक्याचयाज्याचशस्यैवतृतीयाकिंताभिर्जयतीतियत्किंचेदंप्राणभृदिति ॥ ७ ॥ याज्ञवल्क्येतिहोवाचकत्ययमद्याध्वर्युरस्मिन्यज्ञआहुतीर्होष्यतीतितिस्रइतिकतमास्तास्तिस्रइतियाहुताउज्ज्वलंतियाहुताअतिनेदंतेयाहुताअतिशेरतेकिंताभिर्जयतीतियाहुताउज्ज्वलंतिदेवलोकमेवताभिर्जयतिदीप्यतइवहिदेवलोकोयाहुताअतिनेदंतेपितृलोकमेवताभिर्जयत्यतीवहिपितृलोकोया

वप्यतिमोक्षःसतेनदेवःप्रकीर्तितः ॥ एताह्युपासनानित्यंनैवयोग्यानृणांश्रुताः ॥ अतिमुक्तिप्रदायस्माद्देवा
द्यास्तासुयोगिनः॥याज्याशस्यापुरोवाक्यासंस्थितंयोहरिंस्मरेत्॥ सर्वप्राणभृतामीशःसभवेन्नात्रसंशयः॥

उज्ज्वलच्छब्दवद्याविष्वेकमेवहरिंस्मरेत् ॥ सर्वलोकाधिपत्यंसलभतेपुरुषोत्तमात् ॥ मनसोदेवताब्रह्मास
र्वदेवेषुसंस्थितः ॥ देवब्रह्ममनस्त्वेकंयोविष्णुंसर्वदास्मरेत् ॥ अनंतनामकंतेनतल्लोकंनित्यमश्नुते ॥ निश्चये
नविमोक्षत्वाद्विश्वेदेवाअनंतकाः ॥ अनंतनामकंविष्णुमुपास्यापिह्यनंतकाः ॥ पुरोवाक्यादिषुप्राणादिषू
पासांकरोतियः ॥ एकमेवहरिंलोकव्याप्तमेवलभेदसौ ॥ अत्रापिवासुदेवाद्याश्चत्वारोदेवताःस्मृताः ॥ देवा



हुताअधिशेरतेमनुष्यलोकमेवताभिर्जयत्यधइवहिमनुष्यलोकः ॥ ८ ॥ याज्ञवल्क्येतिहो
वाचकतिभिरयमद्यब्रह्मायज्ञंदक्षिणतोदेवताभिर्गोपायतीत्येकयेतिकतमासैकेतिमनएवेत्यनंतं
वैमनोनंताविश्वेदेवाअनंतमेवसतेनलोकंजयति ॥ ९ ॥ याज्ञवल्क्येतिहोवाचकत्ययम
द्योद्गातास्मिन्यज्ञेस्तोत्रियास्तोष्यतीतितिस्रइतिकतमास्तास्तिस्रइतिपुरोनुवाक्याचयाज्या
चशस्यैवतृतीयाकतमास्तायाअध्यात्ममितिप्राणएवपुरोनुवाक्याअपानोयाज्याव्यानःशस्या
किंताभिर्जयतीतिपृथिवीलोकमेवपुरोनुवाक्ययाजयत्यंतरिक्षलोकंयाज्ययाद्युलोकꣳशस्य
याततोहहोताआश्वलउपरराम ॥ १० ॥ इत्याश्वलब्राह्मणम् ॥ ५ ॥

अथहैनंजारत्कारवआर्तभागःपप्रच्छयाज्ञवल्क्येतिहोवाचकतिग्रहाःकत्यतिग्रहाइत्यष्टौग्र

नांपदहेतुत्वात्संपन्नाऽस्यउपासनाः ॥ मुक्तौभोगविशेषस्यहेतुत्वाच्चप्रकीर्तिताः॥ एताश्चदेवतायोग्यानमनु
ष्येषुकुत्रचित् ॥ मनुष्याणांज्ञानमात्राद्गुणाधिक्यंभविष्यतीतिपरमश्रुतौ ॥ इत्याश्वलब्राह्मणम् ॥ ५॥१॥
आकाशंपरमात्मानमेव॥केचित्तुमानुषामुक्तिमनुक्रम्यैवदेहतः॥देहपातेतुदेहस्यदोषान्भुक्त्वैवसर्वशः॥मर
णोच्छूनतादींस्तुस्वकीयारब्धकर्मजान् ॥ देहेक्षीणेतुगच्छंतिदृष्ट्वाविष्णुमनुज्ञया ॥ पुनरत्रैवतिष्ठंतिनि

त्यानंदैकभोगिनः ॥ देहादुत्क्रम्यदेवास्तुयांतिविष्णुंसनातनम् ॥ देहादुत्क्रम्ययातानांदेवाआगतएवतु ॥
स्वाधिदैवंव्रजंत्यद्धाआगतोनुव्रजंतितान् ॥ आकाशाख्यंस्वरूपंतुविष्णुस्तद्धृदिसंस्थितः ॥ आगतोआगत

हाअष्टावतिग्रहाइतिएतेष्टौग्रहाअष्टावतिग्रहाःकतमेतइति ॥ १ ॥ प्राणोवैग्रहःसोपानेनातिग्र
हेणगृहीतोपानेनहिगंधान्जिघ्रति॥२॥वाग्वैग्रहःसनाम्नातिग्रहेणगृहीतोवाचाहिनामान्यभि
वदति॥३॥जिह्वावैग्रहःसरसेनातिग्रहेणगृहीतोजिह्वयाहिरसान्विजानाति ॥ ४ ॥ चक्षुर्वैग्रहः
सरूपेणातिग्रहेणगृहीतश्चक्षुषाहिरूपाणिपश्यति ॥ ५ ॥ श्रोत्रंवैग्रहःसशब्देनातिग्रहेणगृही
तःश्रोत्रेणहिशब्दान्शृणोति ॥ ६ ॥ मनोवैग्रहःसकामेनातिग्रहेणगृहीतोमनसाहिकामान्का
मयते ॥ ७ ॥ हस्तौवैग्रहःसकर्मणातिग्रहेणगृहीतोहस्ताभ्यांहिकर्मकरोति ॥ ८ ॥ त्वग्वै
ग्रहःसस्पर्शेनातिग्रहेणगृहीतस्त्वचाहिस्पर्शान्वेदयतइत्येतेष्टौग्रहाअष्टावतिग्रहाः ॥ ९ ॥
याज्ञवल्क्येतिहोवाचयदिदंसर्वंमृत्योरन्नंकास्वित्सादेवतायस्यामृत्युरन्नमित्यग्निर्वैमृत्युःसो
पामन्नमपपुनर्मृत्युंजयति ॥ १० ॥ याज्ञवल्क्येतिहोवाचयत्रायंपुरुषोम्रियतउदस्मात्प्रा
णाःक्रामंत्याहोश्नेतिनेतिहोवाचयाज्ञवल्क्योत्रैवसमवनीयंतेसउच्छ्वयत्याध्मायत्याध्मातोमृ
तःशेते ॥ ११ ॥ याज्ञवल्क्येतिहोवाचयत्रायंपुरुषोम्रियतेकिमेनंनजहातीतिनामेत्यनंतंवै
नामानंताविश्वेदेवाअनंतमेवसतेनलोकंजयति ॥ १२ ॥ याज्ञवल्क्येतिहोवाचयत्रास्यपुरु

श्वेताननुयातिजनार्दनः ॥ ज्ञानस्थितेनरूपेणदेवानांमुक्तिदोहरिः ॥ पुण्यस्थितेनरूपेणस्वर्गंनिरयमन्य
गः ॥ रहस्यमेतद्देवानांविदुःकर्मेतिमानुषाः ॥ तस्मान्नैतज्जनेष्वेतद्विष्णोःकर्मप्रकाशयेदितिच ॥ अतएव

याज्ञवल्क्योनजनेषूवाच ॥ कर्मनामातुभगवान्फलकर्तृत्वतोहरिः ॥ पातनात्पापनामासौपुनातेःपुण्य
नामवानितिभारते ॥ इत्यार्तभागब्राह्मणम् ॥ ५ ॥ २ ॥
पारीक्षिताःप्रद्युम्नाः ॥ अश्वमेधयाजिनइंद्राः ॥ प्रद्युम्नःकामनामासौपारीक्षितइतीरितः ॥ सर्वेक्षणात्प
रोविष्णुःपरीक्षिदितिकीर्तितः ॥ तत्पुत्रत्वात्कामदेवःपारीक्षितइतिस्मृतः ॥ शताश्वमेधयाजित्वादिंद्राएवा

षस्यमृतस्याग्निंवागप्येतिवातंप्राणश्चक्षुरादित्यंमनश्चंद्रंदिशःश्रोत्रंपृथिवींशरीरमाकाशमा
त्मौषधीर्लोमानिवनस्पतीन्केशाअप्सुलोहितंचरेतश्चनिधीयतेक्वायंतदापुरुषोभवतीत्याहरसो
म्यहस्तमार्त्तभागावामेवैतस्यवेदिष्यावोननावेत्तत्सजनइतितौहोत्क्रम्यमंत्रयांचक्रातेतौहय
दूचतुःकर्महैवतदूचतुरथयत्प्रशशꣳसतुःपुण्योवैपुण्येनकर्मणाभवतिपापःपापेनेतिततोहजार
त्कारवआर्तभागउपरराम ॥ १३ ॥ इत्यार्तभागब्राह्मणम् ॥ ५ ॥ ॥ २ ॥
अथहैनंभुज्युर्लाह्यायनिःपप्रच्छयाज्ञवल्क्येतिहोवाचमद्रेषुचरकाःपर्यव्रजामतेपतंजलस्य
काप्यस्यगृहानैमतस्यासीद्दुहितागंधर्वगृहीतातमपृच्छामकोसीतिसोब्रवीत्सुधन्वांगिरसइति
तंयदालोकानामंतानपृच्छामाथैनमब्रूमक्वपारिक्षिताअभवन्निति क्वपारिक्षिताअभवन्सत्वा

श्वमेधिनः ॥ अतीतानागतानांचकामानांवज्रिणामपि ॥ एकमेवहिमुक्तानांस्थानंवेदोदितंसदा ॥ इंद्र
नामातुगरुडःसामर्थ्यादेवकथ्यते ॥ तस्यरूपद्वयंनित्यंसौपर्णंपौरुषंतथा ॥ तत्रपौरुषरूपीसन्भूत्वासौपर्ण
रूपवान् ॥ कामदेवानुपादायमुक्तौवायोःप्रयच्छति ॥ वायुस्तान्स्वशरीरस्थान्कृत्वेंद्रायत्रमुक्तिगाः ॥
प्रद्युम्नानामकेविष्णावेवंवायुर्हिमोक्षदः ॥ तस्मात्सर्वोत्तमोवायुर्विविधंतुयदष्टकम् ॥ देवानृषीन्पितॄन्य

क्षानूंगंधर्वान्मानुषोरगान् ॥ असुरांश्चवशेनित्यंनयत्यमितपौरुषः ॥ संपूर्णाश्चसुपर्णेशशेषेंद्रांस्तस्त्रियोपि
च ॥ अष्टौनयत्युन्नयतिवशीकृत्यस्वयंप्रभुः ॥ अतोव्यष्टिःसमष्टिश्चवायुरेवाभिधीयते ॥ एवंव्य
ष्टिंसमष्टिंचयोवायुंवेदतत्त्वतः ॥ तत्परंचहरिंनित्यमुच्यतेसंस्रुतेःपुमानितिपरमसंहितायाम् ॥ चरकस्ती
र्थसंचारीवित्तार्थीकरकस्मृतइत्यभिधानम् ॥ अहर्मुहूर्तंविज्ञेयमहर्मासोपिभण्यते॥ अहर्दिनंप्रकाशश्चक्व
चिज्ज्ञानंबलंतथेतिच ॥ मुहूर्तमष्टभागोनघटिकाद्वयमिष्यते ॥ क्वचिद्द्विघटिकापिस्यात्क्वचित्स्यात्ता
वदुत्तरइतिकालनिर्णये ॥ द्वात्रिंशत्तुमुहूर्तानांदिनमेकंविदुर्बुधाः ॥ त्रिंशन्मुहूर्तमथवामुहूर्तोन्मानभेदतइ

पृच्छामियाज्ञवल्क्यक्वपारिक्षिताअभवन्निति ॥ १ ॥ सहोवाचोवाचवैसोगच्छन्वैतेतद्य
त्राश्वमेधयाजिनोगच्छंतीतिक्वन्वश्वमेधयाजिनोगच्छंतीतिद्वात्रिंशतंवैदेवरथान्ह्यान्ययंलो
कस्तꣳसमंतंपृथिवीद्विस्तावत्पर्येतिताꣳसमंतंपृथिवींद्विस्तावत्समुद्रःपर्येति तद्यावतीक्षुरस्य
धारायावद्वामक्षिकायाःपत्रंतावानंतरेणाकाशस्तानिंद्रःसुपर्णोभूत्वावायवेप्रायच्छत्तान्वायुरा
त्मनिधित्वातत्रागमयद्यत्राश्वमेधयाजिनोभवन्नित्येवमिववैसवायुमेवप्रशशꣳसतस्माद्वायुरे

तिच ॥ सप्तकोटिंचलक्षाणांचतुर्दशचनित्यशः ॥ अष्टाविंशत्सहस्रंचसप्तांशशतपंचकम् ॥ सौरोरथस्त्व
होरात्रात्परियातिदिविस्थितः ॥ तत्रिभागाधिकंचक्रंमानसोत्तरगंचरेत् ॥ नृणांकार्तयुगानांतुयोजनामा
नतोभवेत् ॥ यावत्सूर्यरथोयातिदिवारात्रेणपार्श्वयोः ॥ सूर्यस्यतावदेवस्यात्प्रकाशःसर्वतस्तथा ॥ तमों
धंद्विगुणंतस्मात्काठिन्यात्पृथ्विनामकम् ॥ ततोमंडोदकंचापिद्विगुणंपरिकीर्तितम् ॥ पंचाशत्कोटिविस्ता
रमेवमंडांतमुच्यते ॥ ततस्त्वंडंचसौवर्णंतद्भिन्नंहरिणापुरा ॥ सुषिरंसर्वतोदिक्षुक्षुरधारासमंततः ॥ सुपर्णो

वायवेतेनमुक्तान्कामान्प्रयच्छतीतितत्त्वसंहितायाम् ॥ ॥ भुज्युब्राह्मणम् ॥ ५ ॥ २ ॥
यत्साक्षादपरोक्षात् ॥ साक्षादेवापरोक्षमत्ति ॥ अनुभवतिस्वरूपमन्यच्चसर्वंपश्यतीतिसाक्षादपरोक्षात् ॥
आपरोक्ष्येणपश्यतामप्यन्येषांभगवत्प्रसादादेवदर्शनंभवति॥नभगवतोन्यापेक्षयेतिसाक्षादितिविशेषणम् ॥
अनन्यापेक्षस्याप्यपूर्णत्वंभवतीत्यतोब्रह्मेति॥अन्येषांनियंतृत्वंचास्तीत्यतआत्म॥अन्यनियंतृत्वेष्यन्या
पेक्षानास्तीत्यतःसर्वांतरः ॥ सर्वसामर्थ्यंस्वांतरेवास्तीति ॥ जीवेश्वराभेदनिवृत्त्यर्थंतआत्मेति ॥ साक्षाद

वन्यष्टिर्वायुःसमष्टिरपपुनर्मृत्युंजयतियएवंवेदततोहभुज्युर्लाह्यायनिरुपरराम ॥ २ ॥
भुज्युब्राह्मणम् ॥ ५ ॥ । ३ ॥

अथहैनमुषस्तश्चाक्रायणःपप्रच्छयाज्ञवल्क्येतिहोवाचयत्साक्षादपरोक्षाद्ब्रह्मयआत्मासर्वां
तरस्तंमेव्याचक्ष्वेत्येषतआत्मासर्वांतरःकतमोयाज्ञवल्क्यसर्वांतरोयःप्राणेनप्राणितिसतआ
त्मासर्वांतरोयोपानेनापानितिसतआत्मासर्वांतरोयोव्यानेनव्यानितिसतआत्मासर्वांतरयउदा
नेनोदानितिसतआत्मासर्वांतरोयःसमानेनसमानितिसतआत्मासर्वांतरएषतआत्मासर्वांतरः
॥ १ ॥ सहोवाचोषस्तश्चाक्रायणोयथाविब्रूयादसौगौरसावश्वइत्येवमेवैतद्व्यपदिष्टंभवतियदे

परोक्षत्वादिगुणैरेवभेदेसिद्धेपिपरमार्थतोपिजीवेश्वराभेदनिवृत्त्यर्थंतआत्मेति ॥ तत्रप्रधानतात्पर्यज्ञापना
र्थंपुनःपुनरभ्यासः ॥ देवतांतरस्यापीदंलक्षणंसमानमितिपृच्छति ॥ यथाविब्रूयादित्यादिना ॥ चतुष्पा
त्त्वादिलक्षणंगोरश्वस्यापियथासममेवमेवसाक्षादपरोक्षत्वादिलक्षणंतत्तद्देवतावादिभिस्तस्यास्तस्याअंगी
क्रियतएव ॥ अतोविशेषनामवक्ति ॥ अतइति ॥ अतोन्यद्विष्णोरन्यदार्तम् ॥ अइतिविष्णोर्हिनाम ॥ नते

विष्णोपरोमात्रयेत्यादिश्रुतिप्रसिद्धंविष्णोर्लक्षणम् ॥ नदृष्टेर्द्रष्टारमित्यादिनावक्ति॥ विनैवान्यप्रसादेनपूर्ण
सर्वगुणात्मकम् ॥ पश्यन्ननुभवत्येवस्वरूपंकेशवःप्रभुः ॥ पश्यत्यव्यवधानेनसर्वंचान्यज्जडाजडम् ॥
साक्षादेवापरोक्षात्सविष्णुरेवततःस्मृतः॥साक्षाच्छब्दःस्वतंत्रत्वमपरोक्षस्त्वनावृतिम् ॥ अदनंभोगउद्दिष्टस्त
स्माद्विष्णुस्तथास्मृतः ॥ ब्रह्मासौगुणपूर्णत्वादात्मासर्वनियंतृतः ॥ अनियम्यत्वतोनित्यंसर्वैःसर्वांतरःस्मृ
तः ॥ प्राणादिपंचरूपोयोवायुःसर्वनियामकः ॥ नियंतापरमोविष्णुर्वायोस्तस्यापिसर्वदा ॥ नदृश्यश्च
क्षुषाचासौनमनोबुद्धिगोचरः ॥ अनंतत्वान्महाविष्णुरवाच्योऽश्राव्यएवच ॥ यद्यप्येतेगुणाःसर्वेविष्णो

वसाक्षादपरोक्षाद्ब्रह्मयआत्मासर्वांतरस्तंमेव्याचक्ष्वेत्येषतआत्मासर्वांतरःकतमोयाज्ञवल्क्य
सर्वांतरोनदृष्टेर्द्रष्टारंपश्येर्नश्रुतेःश्रोतारंशृणुयानमतेर्मंतारंमन्वीथानविज्ञातेर्विज्ञातारंविजानी
याएषतआत्मासर्वांतरोऽतोन्यदार्तंततोहोषस्तश्चाक्रायणउपरराम ॥ २ ॥ उषस्तब्रा
ह्मणम् ॥ ५ । ४ ॥

रेवनचान्यगाः ॥ तथाप्येतैर्गुणैर्युक्तानज्ञाःप्राहुःशिवादिकान् ॥ अनात्मैवततोविष्णुमाहुर्वेदाअदोषतः ॥
अदोषत्वाद्गुणोद्रेकादइत्युक्तोहरिःस्वयम् ॥ अगम्यत्वाच्चबुद्ध्यादेरतोन्येसर्वएवतु ॥ ब्रह्मरुद्रादयोजीवादुः
खिनस्तत्प्रसादतः ॥ दुःखमुक्तानिजानंदंप्रामुयुर्नित्यमंजसा ॥ मुक्तानामपिसर्वेषांविष्णुरेवनियामकः ॥
पूर्णानंदस्यतस्यैवमुक्ताविप्रुट्सुखात्मकाः ॥ तारतम्येनतिष्ठंतिब्रह्मातेष्वधिकःसदा ॥ यथाचंद्रात्सदाभि
न्नाःसर्वेतुहिनबिंदवः ॥ एवंविष्णोःसदाभिन्नामुक्ताब्रह्मादिकागणाः ॥ एवंनियंताभगवान्पूर्णसर्वगुणार्ण
वः ॥ एकएवपरोविष्णुरनियम्यःसदोदितइत्यादिबृहच्छ्रुतिः ॥ आर्तिंदुःखंसमुद्दिष्टमनार्तोविष्णुरुच्यतइति

च ॥ अतोन्यदार्तमित्येतस्माच्चजीवानांभेदःप्रसिद्धः ॥ नहिजीवादन्यस्यार्तिर्युज्यते ॥ अतोजीवेभ्योन्य
श्चविष्णुरेव ॥ तदन्येब्रह्मरुद्रादयःसर्वेजीवाएवेतिसिद्धम् ॥ प्रकृतिस्त्वतिसामीप्यादनार्तापिपृथङ्नतु ॥ उ
च्यतेनस्त्रियोयद्वत्त्रयस्त्रिंशत्सुभेदिताइतिच ॥ ॥ इत्युषस्तब्राह्मणम् ॥ ५ ॥ ४ ॥
यदेवसाक्षादितिपुनःप्रश्नोमुक्तानामपिभगवतोभेदोस्तीतिज्ञापयितुम् ॥ यदेवब्रह्मतदन्येब्रह्मादयोमुक्ता
अपियन्नैवभवंतिकदाचन ॥ तमेवमेव्याचक्ष्वमुक्तजीववैलक्षण्येनसहेतिद्वितीयएवशब्दार्थः ॥ सतु
भवान्स्वतएवातीताशनायादिरतीतानागतवर्तमानकालेषु ब्रह्मादयस्तुतंविदित्वातत्प्रासादादेवपश्चादत्येष्यं

**अथहैनंकहोलःकौषीतकेयःपप्रच्छ याज्ञवल्क्येतिहोवाच यदेवसाक्षादपरोक्षाद्ब्रह्मयआ
त्मासर्वांतरस्तमेवमेव्याचक्ष्वेत्येषतआत्मासर्वांतरःकतमोयाज्ञवल्क्यसर्वांतरोयोशनायापिपा
सेशोकंमोहंजरांमृत्युमत्येत्येतंवैतमात्मानंविदित्वाब्राह्मणाःपुत्रैषणायाश्चवित्तैषणायाश्चलोकै**

ति एतंवैतमित्येतादृशैर्गुणैःसाक्षादपरोक्षत्वजीवाभेदादिभिर्युक्तमित्यर्थः भिक्षाचर्यंचरंतिमुक्ताअपिब्रह्मा
दयस्तस्मादेवपरमेश्वराद्विप्रुडानंदमेवभिक्षंतोवर्तंते ॥ ब्रह्माणनान्मुक्ताएवब्राह्मणशब्देनोच्यंते ॥ नहि
ज्ञानादनंतरंसंन्यासस्यकर्तव्यता ॥ येषांतद्योग्यतातेषामपिज्ञानार्थत्वेनैवसंन्यासः ॥ मुक्ताअपियंभि
क्षंतेसोतिपूर्णमहानंदोभगवान्स्वतएव ॥ तदन्येब्रह्मादयोमुक्ताअपिततएवविप्रुडानंदभिक्षुकाइतिविशे
षः ॥ तथापितेषामेषणातीतत्वान्नदुःखम् ॥ पुत्रस्यवित्तस्यचलोकार्थत्वाल्लोकैषणायामंतर्भावः ॥
वित्तस्यापिप्रायःपुत्रार्थत्वात्पुत्रैषणायांलोकैषणायाअपिदुःखरूपत्वात्सापितेषांनास्त्येवेतिदर्शयितुमुभे

ह्येते एषणे एव भवत इत्याह ॥ उभे अपि दृष्टादृष्टविषये एषणात्वाद्दुःखरूपे एवेत्यर्थः ॥ पुत्रवित्तैषणे उभे अपि दृष्टविषयत्वादेकैवेत्युभे एवेत्युक्तम् ॥ द्वितीयो ब्राह्मणो ब्रह्माणि तुं योग्यः ॥ पांडित्यमागमजज्ञानम् ॥ बाल्यं युक्तिसहितम् ॥ बलयुक्तत्वात् ॥ मौनमुपासनाजम् ॥ अमौनमपरोक्षज्ञानम् ॥ निर्विद्य नितरां प्राप्य लब्ध्वा ॥ विद्लृ लाभ इति धातोः ॥ अथ ब्राह्मणो मुक्तो भवतीत्यर्थः ॥ स मुक्तो येन केनापि वर्तयन्नीदृश एव भिक्षुक एव ॥ न कदाचित्स्वतंत्रो भवति ॥ एतस्यैवानंदस्यान्यानि भूतानि मात्रामुपजीवंतीति च वक्ष्यति ॥ मुक्तविषयं चैतत् ॥ अत्र पिताऽपिता भवतीत्यादितः प्रस्तावे स्वाप्ययसंपत्त्योरन्यत

षणायाश्च व्युत्थायाथ भिक्षाचर्यं चरंति या ह्येव पुत्रैषणा सा वित्तैषणा या वित्तैषणा सा लोकैषणोभे ह्येते एषणे एव भवतस्तस्माद्ब्राह्मणः पांडित्यं निर्विद्य बाल्येन तिष्ठासेद्बाल्यं च पांडित्यं च निर्विद्याथ मुनिरमौनं च मौनं च निर्विद्याथ ब्राह्मणः स ब्राह्मणः केन स्याद्येन स्यात्तेनेदृश एवातोऽन्यदार्तं ततो ह कहोलः कौषीतकेय उपरराम ॥ १ ॥ कहोलब्राह्मणम् ॥ ५ ॥ ५ ॥ ॥ ॥

रापेक्षमाविष्कृतं हीति भगवद्वचनम् ॥ तत्रैव मुक्तानामानंदतारतम्यं चोक्तम् ॥ स यो मनुष्याणां राद्धः समृद्धो भवतीत्यादिना ॥ श्रोत्रियत्वावृजिनत्वाकामहतत्वानां मुक्तेष्वेव मुख्यत्वात् ॥ यश्च श्रोत्रिय इति ह्यभ्यासः ॥ न ह्यमुक्ता अवृजिना अकामहता वा ॥ न च श्रुतिफलं सम्यक्प्राप्ताः ॥ श्रुतिफलप्राप्तिर्हि श्रोत्रियत्वम् ॥ सर्वे विमोहितधियस्तव माययेमे ब्रह्मादयस्तनुभृतो बहिरर्थभावा इति भागवते ॥ शरीरसंबंधिनां मोहादियुतत्वम् ॥ मोहादियुतानां न श्रोत्रियत्वमदुःखत्वमकामहतत्वं वा ॥ वृजिनं व्रजनं दुःखं क्लेशो बाधेति चोच्यत इत्यभिधानम् ॥ न च देवादिपदाकामानामिंद्रादिपदाकामानां कश्चिद्विशेषो दृश्यते ॥ अ

तोमुक्तविषयमेवैतत् ॥ परोमात्रयातन्वाव्धाननतेमहित्वामन्वश्नुवंति ॥ ब्रह्मेशानादिभिर्देवैर्यत्प्राप्तुंनै
वशक्यते ॥ तद्यत्स्वभावःकैवल्यंसभवान्केवलोहरे ॥ मुक्तानांपरमागतिः ॥ कृष्णोमुक्तैरिज्यते
वीतमोहैरित्यादिवचनैश्चभगवदनुग्राह्यत्वंतदानंदानवाप्तिश्चमुक्तानांदृश्यते ॥ बह्वभ्यासात्तआत्मेतिमु
क्तौजीवेशयोर्भिदा ॥ प्रधानतत्परत्वेनदृश्यतेत्यादरात्सदा ॥ महातात्पर्ययोगाच्चसएवार्थोवगम्यते ॥ ता
त्पर्यंपरमंविष्णोरत्युद्रेकेविशेषतः ॥ सर्वश्रुतिस्मृतीनांचदृश्यतेन्यत्तदर्थतः ॥ सचजीवेशयोर्भेदेसर्वोद्रेको
हियुज्यते ॥ बह्वभ्यासस्तआत्मेतिश्रुतावादरतस्ततः ॥ ममात्मेतिवचोयत्रविष्णोरपिचदृश्यते ॥ देह
स्यापिस्वरूपत्वज्ञापनंतत्प्रयोजनम् ॥ नह्यप्रयोजकंवेदपदंवर्णोथवास्वरः ॥ देहस्वरूपताविष्णोर्नममेति
पदंविना ॥ सम्यग्ज्ञापयितुंशक्याततस्तत्पदमिष्यते ॥ ततस्तआत्मेतिवचोभेदाभावेनयुज्यते ॥ भिक्ष
याभक्षणंतस्मादानंदस्यततोवदत् ॥ मुक्तानामेकदेशत्वंब्रह्मानंदव्यपेक्षया ॥ विप्रुट्त्वंप्रतिबिंबत्वं
श्रुतिषूक्तंहिसर्वशः ॥ तथापिपूर्णानंदत्वममुक्तानांव्यपेक्षया ॥ ब्रह्मादेस्तारतम्यंचमुक्तावेवसदातन
म् ॥ दृष्टादृष्टैषणानाशान्निर्दुःखत्वंचसर्वदा ॥ परब्रह्मत्ववचनंमुक्तानांयत्रदृश्यते ॥ जीवेषुब्रह्मशब्दोक्तेः
परत्वंतुविमुक्तितः ॥ तत्परब्रह्मतातेषांबद्धजीवोच्चतामता ॥ ततोब्राह्मणनेयोग्यःपांडित्यंप्राप्नुयात्परम् ॥
पांडित्यमागमज्ञत्वंबाल्यंयुक्तिसहायता ॥ मौनंतूपासनासिद्धिरमौनंभगवद्दृशिः ॥ एतान्यप्यभवेन्मुक्ति
र्मुक्तोवैभिक्षुकोभवेत् ॥ नह्यन्यभिक्षितंविष्णुर्दद्यान्नियमतःक्वचित् ॥ मुक्तस्यभिक्षितंसर्वंदद्यान्नियम
तोहरिः ॥ अयोग्यभिक्षणंतेषांनकदाचित्तुयुज्यते ॥ येनकेनापिनैतेषांभिक्षावृत्तिर्विनश्यति ॥ प्रथमो
ब्राह्मणोमुक्तोद्वितीयोयोग्यउच्यते ॥ अपरोक्षविन्मुक्तयोस्तुतार्तीयेनोभयोर्महः ॥ अतोमुक्ताअमुक्ता

श्चनस्वतंत्राःकदाचन ॥ स्वतंत्रस्तुसएवैकोभगवान्पुरुषोत्तमइत्यादिब्रह्मतर्के ॥ द्वाविमौपुरुषौलोकेक्षर
श्चाक्षरएवच ॥ क्षरःसर्वाणिभूतानिकूटस्थोक्षरउच्यते ॥ उत्तमःपुरुषस्त्वन्यःपरमात्मेत्युदाहृतः ॥ इत्या
दिनाचभेदेनमहोत्कर्षंपरमतात्पर्यंसर्वशास्त्राणामाह ॥ ॥ इतिकहोळब्राह्मणम् ॥ ५ । ५ ॥
मुक्तानांतारतम्यंहिगार्गिब्राह्मणेनोच्यते ॥ लोकाइतिमुक्तानामानंदानुभवाःस्वरूपभूताः ॥ अप्सुवाया
वितिस्वरूपस्यैवप्रस्तुतत्वात् ॥ अनतिप्रश्नांवैदेवतामतिपृच्छसीतिदेवतास्वरूपप्रश्नस्यैवावगम्यमानत्वा

अथहैनंगार्गीवाचक्नवीपप्रच्छयाज्ञवल्क्येतिहोवाच यदिदꣳसर्वमप्स्वोतंचप्रोतंचेतिकस्मि
न्नुखल्वापओताश्चप्रोताश्चेतिवायौगार्गीतिकस्मिन्नुखलुवायुरोतश्चप्रोतश्चेत्यंतरिक्षलोकेषुगा
र्गीतिकस्मिन्नुखल्वंतरिक्षलोकाओताश्चप्रोताश्चेतिगंधर्वलोकेषुगार्गीतिकस्मिन्नुखलुगंधर्वलो
काओताश्चप्रोताश्चेत्यादित्यलोकेषुगार्गीतिकस्मिन्नुखल्वादित्यलोकाओताश्चप्रोताश्चेतिचं
द्रलोकेषुगार्गीतिकस्मिन्नुखलुचंद्रलोकाओताश्चप्रोताश्चेतिनक्षत्रलोकेषुगार्गीतिकस्मिन्नुख
लुनक्षत्रलोकाओताश्चप्रोताश्चेतिदेवलोकेषुगार्गीतिकस्मिन्नुखलुदेवलोकाओताश्चप्रोताश्चे

च्च ॥ नचोपरितनलोकेष्वधस्तनलोकाआश्रिताः ॥ नचवायुर्गंधर्वलोकाश्रितः ॥ वाय्वाश्रयत्वश्रुतेःस
र्वलोकानाम् ॥ वायुनाहिसर्वैलोकानेनीयंतइत्यादिना ॥ सप्तस्कंधगतोलोकान्योबिभर्तिमहाबलइतिह
रिवंशेषु ॥ नचानतिप्रश्नत्वंलोकमात्रस्यास्ति ॥ अधस्तनेषुचोपरितनालोकास्तिष्ठंति ॥ नचमरुतामेको
पिगंधर्वलोकादवरोविद्यते ॥ उक्तंच ॥ आपिबंत्यखिलान्भोगानित्यापश्चक्रवर्तिनः ॥ मुक्तास्तेषांवायु
सुतश्चक्रोनामव्यपाश्रयः ॥ मुक्तस्तस्यचमुक्तस्तुमरुद्गंधर्वनामवान् ॥ सुतोवायोस्तत्सुखानांमौक्तानामं

तरिक्षगः ॥ मरुतामेकएवासावंतरिक्षस्तुवायुजः॥तत्सुखानांतुमौक्तानामानंदाःसूर्यरूपकाः ॥ सौराणांचा
पिमौक्तानामानंदाश्चंद्ररूपकाः ॥ आह्लादनाच्चंद्रनामादेवोसावनिरुद्धकः ॥ सएवचंद्रमाविश्यस्थितस्त
न्नामकोपिसः ॥ अनिरुद्धसुखानांचमौक्तानामिंद्रआश्रयः ॥ नक्षत्रनामवानिंद्रोनैवान्यःक्षत्रियोस्य
हि ॥ विद्यतेत्रिषुलोकेषुब्रह्माद्यास्तूर्ध्वलोकगाः ॥ आनंदानांतथेंद्राणांमौक्तानांदेवआश्रयः ॥ देवेति
लिंगनामस्याल्लिंगात्मारुद्रउच्यते ॥ इंद्राश्रयःशिवस्यापिसुखानांमुक्तिगामिनाम् ॥ शिवोहीश्वरनामा

तींद्रलोकेषुगार्गीतिकस्मिन्नुखल्विंद्रलोकाओताश्चप्रोताश्चेतिप्रजापतिलोकेषुगार्गीतिकस्मि
न्नुखलुप्रजापतिलोकाओताश्चप्रोताश्चेतिब्रह्मलोकेषुगार्गीतिकस्मिन्नुखलुब्रह्मलोकाओता
श्चप्रोताश्चेतिसहोवाचगार्गीमातिप्राक्षीर्मातेमूर्धाव्यपप्तदनतिप्रश्न्यांवैदेवतामतिपृच्छसिगार्गी
मातिप्राक्षीरितिततोहगार्गीवाचक्नव्युपरराम ॥ १ ॥ गार्गीब्राह्मणम् ॥ ५ ॥ ६ ॥ ॥
अथहैनमुद्दालकआरुणिःपप्रच्छयाज्ञवल्क्येतिहोवाचमद्रेष्ववसामतेपतंचलस्यकाप्यस्य

स्यात्तत्पारम्यात्सरस्वती ॥ इंद्रेत्युक्तातत्सुखानांब्रह्माधिर्मुक्तिगामिनाम् ॥ तत्सुखानांपरंब्रह्ममुक्तिगानां
पराश्रयः ॥ एवमेवचसंसारेबिंबत्वादुत्तरोत्तरम् ॥ नपरब्रह्मणःकश्चिदाश्रयःस्वाश्रयंयतः ॥ तस्याश्रयो
स्तिवेत्येवंपृच्छतोपिशिरःसदा ॥ भिद्यतेपर्वतैरंधेतमसिस्थस्यदैवतैः ॥ तस्माद्ब्रह्मपरंनित्यंज्ञेयंपूर्णमनाश्रय
मितिब्रह्मांडे ॥ रुद्रसमाश्रितादेवारुद्रोब्रह्माणमाश्रितः ॥ ब्रह्मामामाश्रितोनित्यंनाहंकंचिदुपाश्रितइतिभा
रते ॥ अथातआनंदस्यमीमांसाभवतीत्यादेश्च ॥ संसाराद्धुमानांमुक्तानांकानिसुखानिलोकारोचमाना
निकानिलोकाः ॥ लीनंसुखंकइत्युक्तंकंनामक्षीयतेत्रयत् ॥ ॥ इतिगार्गिब्राह्मणम् ॥ ५ । ६ ॥

पुनस्तस्यैवसर्वनियंतृत्वमुच्यते॥योंतरोयमयतीतिद्वितीयोयशब्दोविष्णुशब्दपर्यायः॥अकयप्रविसंभूयस
स्वहाविष्णुवाचकाः॥एकाक्षराअइत्येषनिर्दोषत्वाज्जनार्दनः॥आनंदत्वात्कइत्युक्तःपूर्णत्वाद्यइतीर्यतइत्या
दिशब्दनिर्णये॥इतिस्वप्रतिज्ञातप्रकारेण॥ब्रह्मवित्पूर्णविज्ञानाल्लोकानांकर्तृवेदनात् ॥ लोकविद्देवविद्यासौदे
वानांदेववेदनात् ॥ वेदार्थवेदनाच्चैववेदविद्भूतवित्तथा ॥ तन्नियंतृपरिज्ञानादात्मविद्याप्रवेदनात्॥सर्ववित्स

गृहेषुयज्ञमधीयानास्तस्यासीद्भार्यागंधर्वगृहीतातमपृच्छामकोसीतिसोब्रवीत्कबंधआथर्वण
इतिसोब्रवीत्पतंचलंकाप्यंयाज्ञिकांश्चवेत्थनुत्वंकाप्यतत्सूत्रंयेनायंचलोकःपरश्चलोकःसर्वा
णिचभूतानिसंदृब्धानिभवंतीतिसोब्रवीत्पतंचलःकाप्योनाहंतद्भगवन्वेदेतिसोब्रवीत्पतंचलं
काप्यंयाज्ञिकांश्चवेत्थनुत्वंकाप्यतमंतर्यामिणंयइमंचलोकंपरंचलोकंसर्वाणिचभूतानियों
तरोयमयतीतिसोब्रवीत्पतंचलःकाप्योनाहंतंभगवन्वेदेतिसोब्रवीत्पतंचलंकाप्यंयाज्ञिकांश्च
योवैतत्काप्यसूत्रंविद्यात्तंचांतर्यामिणमितिसब्रह्मवित्सलोकवित्सदेववित्सवेदवित्सभूतवि
त्सआत्मवित्ससर्वविदिति तेभ्योब्रवीत्तदहंवेदतच्चेत्त्वंयाज्ञवल्क्यसूत्रमविद्वांस्तंचांतर्यामि
णंब्रह्मगवीरुदजसेमूर्धातेविपतिष्यतीतिवेदवाअहंगौतमतत्सूत्रंतंचांतर्यामिणमितियोवाइदं
कश्चिद्ब्रूयाद्वेदवेदेतियथाब्रूहीति ॥ १ ॥ सहोवाचवायुर्वैगौतमतत्सूत्रंवायुनावैगौतमसूत्रेणा

र्वसारज्ञोयोवेदपुरुषोत्तमम् ॥ देशाधिष्ठातृविज्ञानाद्देशज्ञइतिचोच्यते ॥ यथातद्वद्धरेर्ज्ञानात्सर्वज्ञइतिवैदि
कमितिब्रह्मतर्के॥स्यूतंजगदिदंयस्मिन्सूत्रंवायुरसौस्मृतः॥नंचादियमयेद्यस्मादंतर्यामीहरिःस्मृतः॥पृथिव्या
द्यादेवतास्तुदेहवद्यद्वशत्वतः ॥ शरीरमितिचोच्यंतेयस्यविष्णोर्महात्मनः ॥ अंतस्थोदेवतानांचनविदुर्यंच

देवताः ॥ प्रविष्टत्वाद्देवतास्थःसोंतरःस्ववशत्वतः ॥ बाह्यापेक्षांविनायस्तुरमतेसोंतरःस्मृतः ॥ अतिप्रियत्वा

॥४४॥ यंचलोकःपरश्चलोकःसर्वाणिचभूतानिसंदृब्धानिभवंतितस्माद्वैगौतमपुरुषंप्रेतमाहुर्व्यस्रꣳसि
षतास्यांगानीतिवायुनाहिगौतमसूत्रेणसंदृब्धानिभवंतीत्येवमेवैतद्याज्ञवल्क्यांतर्यामिणंब्रूही ५।७
ति ॥ २ ॥ यःपृथिव्यांतिष्ठन्पृथिव्याअंतरोयंपृथिवीनवेदयस्यपृथिवीशरीरंयःपृथिवीमंतरो
यमयत्येषतआत्मांतर्याम्यमृतः ॥ ३ ॥ योप्सुतिष्ठन्नद्भ्योंतरोयमापोनविदुर्यस्यापःशरीरंयो
पोंतरोयमयत्येषतआत्मांतर्याम्यमृतः॥ ४ ॥ योग्नौतिष्ठन्नग्नेरंतरोयमग्निर्नवेदयस्याग्निःशरीरं
योग्निमंतरोयमयत्येषतआत्मांतर्याम्यमृतः ॥ ५ ॥ योंतरिक्षेतिष्ठन्नंतरिक्षादंतरोयमंतरिक्षं
नवेदयस्यांतरिक्षꣳशरीरंयोंतरिक्षमंतरोयमयत्येषतआत्मांतर्याम्यमृतः ॥ ६ ॥ योवायौतिष्ठ
न्वायोरंतरोयंवायुर्नवेदयस्यवायुःशरीरंयोवायुमंतरोयमयत्येषतआत्मांतर्याम्यमृतः ॥ ७ ॥
योदिवितिष्ठन्दिवोंतरोयंद्यौर्नवेदयस्यद्यौःशरीरंयोदिवमंतरोयमयत्येषतआत्मांतर्याम्यमृतः
॥ ८ ॥ यआदित्येतिष्ठन्नादित्यादंतरोयमादित्योनवेदयस्यादित्यःशरीरंयआदित्यमंतरो
यमयत्येषतआत्मांतर्याम्यमृतः ॥ ९ ॥ योदिक्षुतिष्ठन्दिग्भ्योंतरोयंदिशोनविदुर्यस्यदि
शःशरीरंयोदिशोंतरोयमयत्येषतआत्मांतर्याम्यमृतः ॥ १० ॥ यश्चंद्रतारकेतिष्ठꣳश्चंद्रता
रकादंतरोयंचंद्रतारकंनवेदयस्यचंद्रतारकꣳशरीरंयश्चंद्रतारकमंतरोयमयत्येषतआत्मांतर्या
म्यमृतः ॥ ११ ॥ यआकाशेतिष्ठन्नाकाशादंतरोयमाकाशोनवेदयस्याकाशःशरीरंयआ ॥४४॥

च्चहरेरंतरत्वमुदाहृतम्॥जीवानांस्वप्रियत्वंचविष्णुनानियतंयतः॥तस्यप्रियत्वंनान्येनदेवस्यनियतंक्वचित्॥

स्वतंत्रःसन्नियंतासावंतर्यामीततःस्मृतः॥देवतानांस्वभावोपिस्वरूपमपिसवेदा ॥तदधीनंयतोयामीवासुदेवः
प्रकीर्तितः॥स्वभावसत्तादातृत्वंयंतृत्वमितिकथ्यतइतिब्रह्मतर्के॥अधिभूतंसर्वजीवा अध्यात्मंतच्छरीरगाः॥

काशमंतरोयमयत्येषतआत्मांतर्याम्यमृतः ॥ १२ ॥ यस्तमसितिष्ठंस्तमसोंतरोयंतमो
नवेदयस्यतमःशरीरंयस्तमसोंतरोयमयत्येषतआत्मांतर्याम्यमृतः ॥ १३ ॥ यस्तेज
सितिष्ठंस्तेजसोंतरोयंतेजोनवेदयस्यतेजःशरीरंयस्तेजोंतरोयमयत्येषतआत्मांतर्याम्यमृतइ
त्यधिदैवतमथाधिभूतम् ॥ १४ ॥ यःसर्वेषुभूतेषुतिष्ठन्सर्वेभ्योभूतेभ्योंतरोयंसर्वाणि
भूतानिनविदुर्यस्यसर्वाणिभूतानिशरीरंयःसर्वाणिभूतान्यंतरोयमयत्येषतआत्मांतर्याम्यमृत
इत्यधिभूतमथाध्यात्मम् ॥ १५ ॥ यःप्राणेतिष्ठन्प्राणादंतरोयंप्राणोनवेदयस्यप्राणःशरीरंयः
प्राणमंतरोयमयत्येषतआत्मांतर्याम्यमृतः ॥१६॥ योवाचितिष्ठन्वाचोंतरोयंवाङ्नवेदयस्यवा
क्शरीरंयोवाचमंतरोयमयत्येषतआत्मांतर्याम्यमृतः ॥ १७ ॥ यश्चक्षुषितिष्ठंश्चक्षुषोंत
रोयंचक्षुर्नवेदयस्यचक्षुःशरीरंयश्चक्षुरंतरोयमयत्येषतआत्मांतर्याम्यमृतः ॥ १८ ॥ यःश्रो
त्रेतिष्ठंश्श्रोत्रादंतरोयंश्रोत्रंनवेदयस्यश्रोत्रंशरीरंयःश्रोत्रमंतरोयमयत्येषतआत्मांतर्याम्य
मृतः ॥ १९ ॥ योमनसितिष्ठन्मनसोंतरोयंमनोनवेदयस्यमनःशरीरंयोमनोंतरोयमयत्ये
षतआत्मांतर्याम्यमृतः ॥ २० ॥ यस्त्वचितिष्ठंस्त्वचोंतरोयंत्वङ्नवेदयस्यत्वक्शरीरं

देवतास्ताःस्वलोकस्थाअधिदेवाभिधामताः ॥ लोकाभिमानिन्यस्ताएवाधिलोकाइतीरिताः ॥ यज्ञाभिमा
निनोदेवाअधियज्ञाइतिस्मृताइतिच ॥ भवनाधिकारेस्थितत्वादधिभूतम् ॥ पृथुंनारायणंवातिसमादायैवप

क्षिराट् ॥ अतःसपृथिवीत्युक्तस्त्वंतरिक्षंहरःस्मृतः ॥ स्वांतर्गतंयतःसर्वमिच्छयाक्षपयेदसौ॥ द्यौर्नामदेवीविद्यु
त्स्यात्साक्षाद्देवसरस्वती ॥ द्योतनात्सर्ववस्तूनांतमोदुर्गाप्रकीर्तिता ॥ यतःसंग्लपयेत्सर्वांस्तेजःश्रीःपरिकीर्ति
ता ॥ आकाशोविघ्नउद्दिष्टःकाशतेहिपृथूदरः ॥ आपोवरुणउद्दिष्टोयदेतत्पालयत्यसौ ॥ आत्माविज्ञानमि
तितुसर्वजीवाभिमानवान् ॥ ब्रह्मैवोक्तस्त्विमेसर्वेप्यनुक्तायाश्चदेवताः ॥ येचजीवाःपरेसर्वेनियताविष्णुने
वहि ॥ जीवानांनियमेऽजीवंकिमुवाच्यमितिश्रुतिः ॥ पृथक्तन्नियमंनैषावक्तिसिद्धत्वतःस्वतः ॥ सएव

यस्त्वचमंतरोयमयत्येषतआत्मांतर्याम्यमृतः ॥ २१ ॥ योविज्ञानेतिष्ठन्विज्ञानादंतरोयं
विज्ञानंनवेदयस्यविज्ञानꣳशरीरंयोविज्ञानमंतरोयमयत्येषतआत्मांतर्याम्यमृतः ॥ २२ ॥ यो
रेतसितिष्ठन्रेतसोंतरोयꣳरेतोनवेदयस्यरेतःशरीरंयोरेतोंतरोयमयत्येषतआत्मांतर्याम्यमृतोऽ
दृष्टोद्रष्टाश्रुतःश्रोताअमंतोमंताअविज्ञातोविज्ञातानान्योतोस्तिद्रष्टानान्योतोस्तिश्रोताना
न्योतोस्तिमंतानान्योतोस्तिविज्ञातैषतआत्मांतर्याम्यमृतोतोन्यदार्तंततोहोद्दालकआरुणि
रुपरराम ॥ २३ ॥ इत्यंतर्यामिब्राह्मणम् ॥ ५ । ७ ॥ ॥

अथहवाचक्नव्युवाचब्राह्मणाभगवंतोहंताहमिमंद्वौप्रश्नौप्रक्ष्यामितौचेन्मेवक्ष्यतिनवैजातु

सर्ववेत्ताहिपरमात्परमोहरिः ॥ नान्योवेत्तास्वतंत्रोस्तिजीवाःसर्वेहिदुःखिनः ॥ यदिस्वतंत्रानैवैतेदुःखिनः
स्युःकदाचन ॥ अतआर्तिमतामार्तिदातामुक्तिप्रदश्चसः ॥ भगवान्परमोविष्णुःस्वतंत्रःसर्वदैकराडि
त्यादिमहामीमांसायाम् ॥ इत्यंतर्यामिब्राह्मणम् ॥ ५ ॥ ७ ॥
पूर्वंगार्ग्याजीवानामुत्तरोत्तराश्रयत्वंसर्वेषांभगवदाश्रयत्वंचश्रुतम् ॥ नतुमूलप्रकृतेराधारत्वमाधेयत्वंवा ॥

अतःपुनःपृच्छति॥विजिगीषुकथात्वाद्ब्राह्मणानुज्ञया॥स्वभर्तुर्विद्याबलंजानंत्यपियुष्माकमयंजेतुंनशक्य
इतिज्ञापयित्वातेषामुपकारार्थंचपप्रच्छ ॥ नचयुक्त्यापूर्वमुपरता ॥ भार्यात्वाद्भगवतोन्याधारत्वंनाशं

युष्माकमिमंकश्चिद्ब्रह्मोद्यंजेतेतिपृच्छगार्गीति ॥१॥सहोवाचाहंवैत्वायाज्ञवल्क्ययथाकाश्यो
वावैदेहोवोग्रपुत्रउज्ज्यंधनुरधिज्यंकृत्वाद्वौबाणवंतौसपत्नातिव्याधिनौहस्तेकृत्वोपोत्तिष्ठेदेवमे
वाहंत्वाद्वाभ्यांप्रश्नाभ्यामुपोदस्थांतौमेब्रूहीतिपृच्छगार्गीति॥२॥सहोवाचयदूर्ध्वंयाज्ञवल्क्य
दिवोयदर्वाक्पृथिव्यायदंतराद्यावापृथिवीइमेयद्भूतंचभवच्चभविष्यच्चेत्याचक्षतेकस्मिंस्त
दोतंचप्रोतंचेति ॥ ३ ॥ साहोवाचयदूर्ध्वंगार्गिदिवोयदवाक्पृथिव्यायदंतराद्यावापृथिवीइ
मेयद्भूतंचभवच्चभविष्यच्चेत्याचक्षतआकाशेतदोतंचप्रोतंचेति ॥ ४ ॥ साहोवाचनमस्तेस्तु
याज्ञवल्क्ययोमएतंव्यवोचोपरस्मैधारयस्वेतिपृच्छगार्गीति ॥ ५ ॥ साहोवाचयदूर्ध्वंयाज्ञव
ल्क्यदिवोयदवाक्पृथिव्यायदंतराद्यावापृथिवीइमेयद्भूतंचभवच्चभविष्यच्चेत्याचक्षतेकस्मिं
स्तदोतंचप्रोतंचेति ॥ ६ ॥ सहोवाचयदूर्ध्वंगार्गिदिवोयदवाक्पृथिव्यायदंतराद्यावापृथिवीइ
मेयद्भूतंचभवच्चभविष्यच्चेत्याचक्षतआकाशएवतदोतंचप्रोतंचेतिकस्मिन्नुखल्वाकाशओत
श्चप्रोतश्चेति ॥ ७ ॥ सहोवाचैतद्वैतदक्षरंगार्गिब्राह्मणाअभिवदंत्यस्थूलमनण्वह्रस्वमदीर्घमलो
हितमस्नेहमच्छायमतमोवाय्वनाकाशमसंगमरसमगंधमचक्षुष्कमश्रोत्रमवागमनोतेजस्कम

क्यमित्युक्तेभीत्यैवोपरता ॥ भगवतोन्याधारत्वंचसर्वाधारमूलप्रकृतेरपिभगवानेवाधारइत्युक्तयुक्तिरएव
निवारितंभवति ॥ नान्यदतोस्तिद्रष्टृत्यादियुक्तिभिश्च ॥ अस्थूलत्वादियुक्तिभिश्च ॥ वादोजल्पोवितंडेति

त्रिविधाविदुषांकथा ॥ केवलंतत्त्वविज्ञानमुद्दिश्यगुरुशिष्ययोः॥अन्ययोर्वाबहूनांवानिर्दुष्टमनसांकथा ॥
वादइत्युच्यतेसद्भिर्जयस्तत्रार्थिकोभवेत् ॥ विजयेशिष्यतान्येषांपूजाचजयिनःसदा ॥ पुनश्चसंशयो





प्राणममुखममात्रमगोत्रमजरमभयममृतमरजोऽशब्दमविवृतमसंवृतमपूर्वमनपरमनंतरमबा
ह्यंनतदश्नातिकिंचनन तदश्नातिकश्चन ॥ ८ ॥ एतस्यवाअक्षरस्यप्रशासनेगार्गिसूर्याचंद्रम
सौविधृतौतिष्ठतएतस्यवाअक्षरस्यप्रशासनेगार्गिद्यावापृथिव्यौविधृतेतिष्ठतएतस्यवाअक्षर
स्यप्रशासनेगार्गिनिमेषामुहूर्ताअहोरात्राण्यर्धमासामासाऋतवःसंवत्सराइतिविधृतास्तिष्ठंत्ये
तस्यवाअक्षरस्यप्रशासनेगार्गिप्राच्योन्यानद्यःस्यंदंतेश्वेतेभ्यःपर्वतेभ्यःप्रतीच्योन्यायांयां
चदिशमन्वेतस्यवाअक्षरस्यप्रशासनेगार्गिददतोमनुष्याःप्रशंसंतियजमानंदेवादर्वींपितरोन्वा
यत्ताः ॥ ९ ॥ योवाएतदक्षरंगार्ग्यविदित्वाऽस्मिँल्लोकेजुहोतियजतेतपस्तप्यतेबहूनिव
र्षसहस्राण्यंतवदेवास्यतद्भवतियोवाएतदक्षरंगार्ग्यविदित्वास्माल्लोकात्प्रैतिसकृपणोऽथयएत
दक्षरंगार्गिविदित्वास्माल्लोकात्प्रैतिसब्राह्मणः॥१०॥तद्वाएतदक्षरंगार्ग्यदृष्टंद्रष्टृश्रुतꣳश्रोत्रमतं
मंत्रविज्ञातंविज्ञातृनान्यदतोस्तिद्रष्टृनान्यदतोस्तिश्रोतृनान्यदतोस्तिमंतृनान्यदतोस्तिविज्ञा
त्रेतस्मिन्नुखल्वक्षरेगार्ग्याकाशओतश्चप्रोतश्चेति ॥ ११ ॥ साहोवाचब्राह्मणाभगवंतस्तदेव
बहुमन्येध्वंयदस्मान्नमस्कारेणमुच्येध्वंनवैजातुयुष्माकमिमंकश्चिद्ब्रह्मोद्यंजेतेतिततोहवाच
क्नव्युपरराम ॥ १२ ॥ इत्यक्षरब्राह्मणम् ॥ ५ ॥ ८ ॥



यत्स्यात्तेषांतस्यापिवारणम् ॥ कर्तव्यंजयिनानित्यमशक्तस्यस्वतोधिकात् ॥ अन्योन्यनिर्णयश्चेत्स्या

त्तदासब्रह्मचारिणः ॥ पृष्टेनप्रथमंमानंवक्तव्यंवादिनाशुभम् ॥ वेदाःसर्वेशुभंमानंसेतिहासपुराणकाः ॥ स
पंचरात्रमीमांसाःस्मृतयश्चाप्यनंतरम् ॥ तदन्यदशुभंप्रोक्तंनप्रयोज्यंकथासुच ॥ मिश्रमक्षानुमाने
तुयाह्येशब्दार्थनिर्णये ॥ अदुष्टमिंद्रियंत्वक्षमुपपत्तिस्तथानुमा ॥ अनुमैवत्वभावाख्योह्यर्थापत्त्युप
मेतथा ॥ उपपत्तिभेदायत्तेपिवाक्यमेवागमःशुभम् ॥ तत्त्वनिर्णयवैलोम्यंसंवादोवाविरोधिते ॥ पराजय
इतिप्रोक्तःसमःसर्वकथासुच ॥ तत्त्वनिर्णयवैलोम्येदंड्योवादकथास्वपि ॥ गुरुणैवत्ववश्यानांराजादंडं
प्रयोजयेत् ॥ गुरुदंडस्तुवाचास्याद्राजदंडोर्थदेहतः ॥ गुरुदंडोप्यर्थतःस्यात्संवादेव्रततोपिच ॥ राजदंडोब
लाच्चस्याद्दोषस्यगुरुलाघवात् ॥ संवादेदंड्यतानास्तिजल्पादौचकथंचन ॥ तत्त्वविप्लवकर्तारंसंसत्सुचपरा
जितम् ॥ छित्त्वाजिह्वांचकाकांकंराजाराज्याद्विवासयेत् ॥ अन्यसाम्यमभेदोवानीचतावाकुतश्चन ॥ वि
ष्णोःश्रीपूर्वकाणांचव्यत्यासोगुणदोषतः ॥ तद्भक्तेरन्यधर्मत्वंपंचैतेतत्त्वविप्लवाः ॥ तत्त्वविप्लावकंशूद्रंवैश्यं
क्षत्रियमेववा॥हन्यादेवाविचारेणविप्रजिह्वांतथोद्धरेत्॥स्वसिद्धांतेप्रमाणंचपरसिद्धांतदूषणम्॥वक्तव्यमु
भयंवादेजल्पेचेतिसतांमतम्॥अवाक्यदूषणंतर्कादागमादेवसाधनम् ॥ वाक्यतात्पर्यविज्ञस्यैमानमन्यन्न
चान्यथा ॥ सतोरेवयदास्पर्धागुणतोर्थार्थमेववा ॥ तदाजल्पःसमुद्दिष्टस्तत्रविद्यांपरीक्षयेत् ॥ विद्यापरी
क्षापूर्वाहिसत्कथाजल्पउच्यते ॥ सर्वज्ञावैष्णवाःपंचसप्तवोभयसंमताः ॥ अधिकावायथालब्धाःप्राश्नि
कास्तुपरीक्षकाः ॥ उभयोःप्रश्नकर्तृत्वात्प्राश्निकाइतिकीर्तिताः ॥ तदभावेगुणोद्रेकंदर्शयेतांपृथग्जने ॥
विद्यासाम्येकथाकार्याह्यन्यथैकपराजयः ॥ विद्योनोदंड्यएवस्याद्यदिनोच्चस्यशिष्यताम् ॥ व्रजेत्पश्चाद्य
थावादएवंजल्पःप्रकीर्तितः ॥ अर्थनिर्णयहेतुत्वाद्वादेप्रश्नोजयेपितु ॥ नजल्पेतुपुनःप्रश्नःसभ्यानुज्ञांविना

भवेत् ॥ स्पर्धासतांवितंडास्यात्तत्त्वविप्लावकैर्यदा ॥ मूलपक्षग्रहापेतावितंडाकविभिर्मता ॥ सतामेववि
तंडास्यादसतांजल्पएवतु ॥ एवंजल्पोवितंडेतिह्युभयोःसहिताकथा ॥ अप्रकाश्यःस्वपक्षोहिपाषंडानांय
तस्ततः ॥ अग्रहेणैवपक्षस्यतर्कागमबलेनतु ॥ दूषयेदेवपाषंडास्तत्त्वविप्लावकान्सदा ॥ तत्पक्षाणांनिषेध्य
त्वात्तेषांपक्षग्रहोभवेत् ॥ विष्णुभक्त्यन्यधर्माख्यस्तत्त्वविप्लवएवतु ॥ बौद्धादीनांयतःसर्वेतत्त्वविप्लाव
कास्तथा ॥ सर्वनास्तिकवादीवास्वमनीषामतोपिवा ॥ तस्यापिपक्षंसंश्रित्यदूषयेद्वाक्ययुक्तितः ॥ यस्य
नैवागमोमानंतंब्रूयादागमाश्रयः ॥ धर्मार्थौथवैवायंतवपक्षस्यसंग्रहः ॥ धर्मार्थश्चेन्नधर्मोहिशक्योद्र
ष्टुंविनागमात् ॥ यथानुमीयतेहिंसापापहेतुस्तथैवहि ॥ धर्महेतुत्वमप्यस्याअनुमातुंसुशक्यते ॥ वृथाप
क्षंवृथाहन्यायदिकश्चित्किमुत्तरम्॥इत्यशक्तौसतांसर्वैसंभूयापिनिवारणम् ॥ कुर्युरेवासतांसंतस्तत्त्वविप्ला
विनांजये ॥ येषांविष्णोःसमंकिंचिदधिकंवानतुक्वचित् ॥ क्षराक्षराभ्यांभिन्नंचविष्णुंपश्यंतियेसदा ॥ ता
रतम्यविदःसर्वजीवानांप्रकृतेरपि ॥ भगवद्धर्मिणोनित्यंतेसंतःपरिकीर्तिताः ॥ पराजितेष्वसत्सूक्तंराजदंडंप्र
पातयेत् ॥ जितेषुसत्स्वसद्भिस्तुराजोदासीनतांव्रजेत्॥यावदेषांविजेतास्यादथदंडंनिपातयेदित्यादिब्रह्मतर्के॥
बाणस्त्वयोमयःप्रोक्तःशरोनालोस्यकीर्तितइत्यभिधानम् ॥कर्मारस्तुतदाबाणंतीक्ष्णमंजलिकाभिधम्॥संद
धानःशरेयांतंराजानंनददर्शहेतिपाद्मे॥दीप्तेराकाशशब्दोक्ताश्रीर्हिसर्वाश्रयामता॥तदाश्रयपरोविष्णुःसोस्थू
लादिगुणोमतइतिस्कांदे ॥ पुनःप्रश्नःसर्वाधाराप्रकृतिरित्यनुपचरितत्वेनावधारणार्थम् ॥ आकाशएवेत्यत्र
धारणात् ॥ पुनरुक्तिःशब्ददोषोन्यूनाधिक्यादिकंतथा ॥ नजिगीषुकथायांचकारणंस्यात्पराजये ॥
क्वचिद्विद्याधिकस्यापिस्खलनंसंभवेद्यतः ॥ तत्त्वनिर्णयवैलोम्यंविलंबोवामुहूर्ततः ॥ विद्यादौर्बल्यहेतुः

स्यादतस्तस्मिन्पराजयइतिब्रह्मांडे ॥ अतस्तत्त्वनिर्णयविरोधिपुनरुक्त्यादीनिनिग्रहः ॥ प्रसिद्धस्थूलसूक्ष्मादिवैलक्षण्याज्जनार्दनः ॥ अस्थूलादिरितिप्रोक्तोनैवस्थौल्याद्यभावतः ॥ अनावृतेस्तमोनास्यस्वातंत्र्यान्नाद्यलेकंचित्॥द्यावापृथिव्यौश्रीभूमीकेशौसूर्यविधूमतौ॥दीप्तेःपृथुत्वाज्ज्ञानाच्चतथाह्लादविधेरपि ॥ तदाधारोहरिर्नित्यंस्वातंत्र्येणप्रशासकः ॥ आधारत्वंश्रियोयच्चतच्चविष्णोःप्रशासनात् ॥ तद्वशान्नस्वतंत्रत्वंसस्वतंत्रोहरिःसदेतिमहामीमांसायाम् ॥ नतस्यप्राकृतीमूर्तिर्मांसमेदोस्थिसंभवा ॥ नयोगित्वादीश्वरत्वात्सत्यरूपाच्युतोविभुरितिवाराहे ॥ आदित्यवर्णंतमसस्तुपारइत्यादेश्च ॥ नसत्तन्नासदुच्यते ॥ अदुःखमसुखंसमम् ॥ नप्रज्ञंनाप्रज्ञमित्यादिच ॥ ॥ इत्यक्षरब्राह्मणम् ॥ ५ ॥ ८ ॥

अथहैनंविदग्धःशाकल्यःपप्रच्छकतिदेवायाज्ञवल्क्येतिसहैतयैवनिविदाप्रतिपेदेयावंतोवैश्वदेवस्यनिविद्युच्यंतेत्रयश्चत्रीचशतात्रयश्चत्रीचसहस्रेत्योमितिहोवाचकत्येवदेवायाज्ञवल्क्येतित्रयस्त्रिंशदित्योमितिहोवाचकत्येवदेवायाज्ञवल्क्येतिषडित्योमितिहोवाचकत्येवदेवाया

येयेवराःसुरास्तेतुपरेषांमहिमात्मकाः ॥ महीत्युक्तंहिमाहात्म्यंमहिमानोहितन्मिताः ॥ एवंहिमहिमाशब्दस्तद्वशत्वंवदत्ययम् ॥ यत्रमाहात्म्यवाचीस्यान्महत्त्वंमहिमातथा ॥ त्रयस्त्रिंशत्सुराणांहिपरिवारास्ततःपरे ॥ षण्णामेतेत्रयाणांतेतेद्वयोःसाधिकस्यतौ ॥ एकस्यसोपिक्रमतःपराधीनस्वरूपिणः ॥ पराधीनबलाश्चैवपराधीनप्रवृत्तयः ॥ एकएवस्वतंत्रोसौभगवान्पुरुषोत्तमः ॥ अयंविष्णुंनयेद्यस्मात्सुपर्णोग्निरुदाहृतः ॥ प्रथितंहरिमादायवातीतिप्रथिवःस्मृतः ॥ तद्भार्यापृथिवीनामयत्तदिच्छानुसारिणी ॥ सर्वज्ञत्वात्तथायुष्वात्सूत्रात्मावायुरुच्यते ॥ श्रद्धानामैवतत्पत्नीसर्वस्यांतर्निरीक्षणात् ॥अंतरिक्षमितिप्रोक्तादेवेभ्यो

धिकवीक्षणात् ॥ आदिकालस्थितोयस्मादादित्यस्तुसदाशिवः॥द्यौरुमाचसमुद्दिष्टावायूपाद्योतिकायतः॥
तएतेसर्वदेवेभ्योविशिष्टास्तद्वशाःपरे ॥ नक्षत्रमिंद्रउद्दिष्टश्चंद्रःकामउदाहृतः ॥ अत्राणात्सूर्यचंद्राद्यैराह्ला



दाच्चैवहेतुतः ॥ वासयंतिजगद्यस्मादेतेष्टौवसवःस्मृताः ॥ ज्ञानादिषड्गुणाःषट्सुतदन्येभ्योधिकाय ५।९

ज्ञवल्क्येतित्रयइत्योमितिहोवाचकत्येवदेवायाज्ञवल्क्येतिद्वावित्योमितिहोवाचकत्येवदेवा
याज्ञवल्क्येत्यर्धइत्योमितिहोवाचकत्येवदेवायाज्ञवल्क्येत्येकइत्योमितिहोवाचकतमेतेत्रय
श्चत्रीचशतात्रयश्चत्रीचसहस्रेति ॥ १ ॥ सहोवाचमहिमानएवैषामेतेत्रयस्त्रिंशत्त्वेवदेवा
इतिकतमेतेत्रयस्त्रिंशदित्यष्टौवसवएकादशरुद्राद्वादशादित्यास्तएकत्रिंशदिंद्रश्चैवप्रजाप
तिश्चत्रयस्त्रिंशाइति ॥ २ ॥ कतमेवसवइत्यग्निश्चपृथिवीचवायुश्चांतरिक्षंचादित्यश्चद्यौश्चचं
द्रमाश्चनक्षत्राणिचैतेवसवएतेषुहीदंवसुसर्वंहितमितितस्माद्वसवइति ॥ ३ ॥ कतमेरुद्रा
इतिदशेमेपुरुषेप्राणाआत्मैकादशस्तेयदास्माच्छरीरान्मर्त्यादुत्क्रामंत्यथरोदयंतितद्यद्रोदयं
तितस्माद्रुद्राइति ॥ ४ ॥ कतमआदित्याइतिद्वादशवैमासाःसंवत्सरस्यएतआदित्याएते
हीदंसर्वमाददानायंति तेयदिदंसर्वमाददानायंतितस्मादादित्याइति ॥ ५ ॥ कतमइंद्रः
कतमःप्रजापतिरितिस्तनयित्नुरेवेंद्रोयज्ञःप्रजापतिरितिकतमःस्तनयित्नुरित्यशनिरितिकतमो
यज्ञइतिपशवइति ॥ ६ ॥ कतमेषडित्यग्निश्चपृथिवीचवायुश्चांतरिक्षंचादित्यश्चद्यौश्चैतेषडेते

तः॥वसुष्वपितएवोच्चार्वींद्राद्याःपूर्वकीर्तिताः ॥ प्राणाद्यावायुपुत्रास्तुदशबुद्ध्यभिमानवान् ॥ बृहस्प
तिरितिश्चैतेरुद्राइत्येवकीर्तिताः ॥ मासाभिमानिनोयेतुयमचंद्रयुताद्विषट् ॥ धात्रर्यमाद्याआदित्याइं

द्राविष्णूविनैवतु ॥ स्तनयित्नोरभीमानीवायुजस्त्विद्रउच्यते ॥ सएववज्रइंद्रस्यसोशनिश्चाशनादरः ॥ यज्ञोनामेंद्रपुत्रोयोजयंतइतिचोच्यते ॥ सएवपशुमानित्वात्पशवश्चेतिकथ्यते ॥ एवंप्राधान्यतोदेवास्त्र यस्त्रिंशत्प्रकीर्तिताः ॥ दक्षाग्निप्रमुखाःसर्वेप्राणाएवहिवायुजाः ॥ रुद्राअपितदावेशात्पृथङ्नोदी रिताइह ॥ कामएवानुविष्टत्वादनिरुद्धश्चनोदितः ॥ मन्वावेशादिंद्रजस्तुसंख्यायामनुवेशितः ॥ अश्वि नौनिर्ऋतिश्चैवकुबेरश्चविनायकः ॥ अर्यम्णंशादिचतुर्षुविशेषावेशसंयुताः ॥ अत्रोक्ताअपिपृथिव्या द्याअंतर्यामिब्राह्मणेभवंति ॥ षट्सुप्रधानास्तिस्रोहिवायुर्वींद्रमहेश्वराः ॥ स्वभार्याणांस्वाश्रयत्वात्तेलो

षुहीदंसर्वंषडिति ॥ ७ ॥ कतमेतेत्रयोदेवाइतीमएवत्रयोलोकाएषुहीमेसर्वेदेवाइतिकतमौतौ द्वौदेवावित्यन्नंचैवप्राणश्चेतिकतमोध्यर्धइतियोयंपवतइति ॥ ८ ॥ तदाहुर्यदयमेकइवैवपव तेथकथमध्यर्धइतियदस्मिन्निदंसर्वमध्यर्ध्नोत्तेनाध्यर्धइतिकतमएकोदेवइतिप्राणइतिसब्रह्म त्यदित्याचक्षते ॥ ९ ॥ पृथिव्येवयस्यायतनमग्निर्लोकोमनोज्योतिर्योवैतंपुरुषंविद्यात्सर्व

काज्ञानरूपतः ॥ पदैक्याद्ब्रह्मवाय्वोस्तुपदसाम्याच्छिवस्यच ॥ शेषस्यापितुनैवोक्तिःपृथक्श्रद्धाचमारु तः ॥ द्वौदेवाविहसंप्रोक्तावन्नंश्रद्धाप्रकीर्तिता ॥ अतीतत्वाद्देवताभ्योनेतृत्वाच्चान्नमुच्यते ॥ श्रद्धेतिवा योःपत्नीसाप्राणोवैविष्णुरुत्तमः ॥ णेत्येवानंदउद्दिष्टआसमंतात्प्रकृष्टतः ॥ प्राणोहिभगवान्विष्णुरध्यर्धो वायुरुच्यते ॥ अध्यर्धोहिगुणानित्यंवायोरध्यर्धएवतत् ॥ नचैकत्वंभवेद्वायोस्तद्विशिष्टोयतोहरिः ॥ न चद्वितीयतातस्मिन्प्रीतिरत्यधिकाहरेः ॥ तेनाध्यर्धगुणोयस्मात्सर्वस्माद्देवतागणात् ॥ नचाशक्यंनचाप्रा प्यमतोध्यर्धइतीरितः ॥ अत्यंतरंगंयत्तस्मान्नहरेःपृथगितीरिता ॥ श्रीःस्वरूपविभेदेपिसर्वोत्कृष्टापिनित्य

शः ॥ तस्याअपिपरोविष्णुर्गुणैःसर्वैर्दोषवान् ॥ एकइत्युच्यतेनित्यंयस्मान्नान्यस्तथाविधः ॥ तत्परोवा गुणोद्रेकेब्रह्मासौगुणपूर्तितः ॥ तथात्वेनयतोनित्यमविकारेणयातिहि ॥ त्यदित्युक्तास्ततोविष्णुःसर्वदेवेश्व रेश्वरइतिमहामीमांसायाम् ॥ शारीरोमनुरुद्दिष्टःकामःप्रद्युम्नउच्यते ॥ आदित्यस्थस्तथारुद्रःश्रोत्रश्चंद्रः उदाहृतः ॥ छायामयस्तुनिर्ऋतिरादर्शेसूर्यएवच ॥ पर्जन्यस्त्वप्सुपुरुषःशक्रःपुत्राभिमानवान् । अ मृतंवायुरुद्दिष्टःस्त्रियःश्रीर्गीरुमातथा ॥ सत्यंब्रह्मासमुद्दिष्टोगरुत्मच्छेषकादिशः ॥ आदेशनाद्दिश प्रोक्तामृत्युर्यमउदाहृतः ॥ अंतर्गतेनरूपेणवायुरेवत्वसुःस्मृतः ॥ पालकेनस्वरूपेणब्रह्मैवचप्रजापतिः ॥ प्र

**स्यात्मनःपरायणंसवैवेदितास्याद्याज्ञवल्क्यवेदवाअहंतंपुरुषंसर्वस्यात्मनःपरायणंयमात्थयए वायꣳशारीरःपुरुषःसएषवदेवशाकल्यतस्यकादेवतेत्यमृतमितिहोवाच ॥ १० ॥ कामएवय स्यायतनꣳहृदयंलोकोमनोज्योतिर्योवैतंपुरुषंविद्यात्सर्वस्यात्मनःपरायणꣳसवैवेदितास्याद्या ज्ञवल्क्यवेदवाअहंतंपुरुषꣳसर्वस्यात्मनःपरायणंयमात्थयएवायंकाममयःपुरुषःसएषवदेवशा**

काशस्त्वांतरोज्योतिर्लोकोबाह्यइतीर्यते ॥ मनःस्थितामनोनाम्नीबोधरूपत्वतोरमा ॥ सैवाग्निस्थादनान्नि त्यमग्निरित्येवगीयते ॥ हृदयंबुद्धिसंस्थासात्वयनंहृदियत्ततः ॥ चक्षुःसादृष्टिहेतुत्वाद्दृष्टानांलोकएव सेतिच ॥ बुद्धिवृत्त्यपेक्षयाबहिःप्रकाशहेतुत्वमपिदेव्यानविरुध्यते ॥ इमएवत्रयोलोकाइतिपूर्वो क्तानांदेवानामनुक्तौकथंलोकमात्रेसर्वदेवानामंतर्भावः ॥ उक्तांगीकारेनंतर्भावःकथम् ॥ कथंचाग्न्या दिषु ॥ नचावासमात्रमत्रविवक्षितम् ॥ प्रतिशरीरमपिसर्वदेवानामावासान्नलोकादीनांविशेषः ॥ साम र्थ्याधिक्यंचात्रविवक्षितम् ॥ एतेषुहीदंसर्वंषळिति ॥ यदस्मिन्निदंसर्वमध्यार्षोत्सब्रह्मत्यदित्याचक्षते ॥ म

हिमानएवैषामित्यादिषुषड्गुणोद्रेकादीनामुक्तेः ॥ अंतर्भावस्यचमहिमकारणकत्वोक्तेः ॥ इदंसर्वंगुणषट्कंपूर्णंगुणषट्कमित्यर्थः ॥ इदंशब्दोविवक्षितत्वादयंभगवानितिवत् ॥ एवमेवेदंसर्वमध्याप्नोदितिचगुणाधिक्येनतदधीनत्वेविवक्षितेनिवासत्वादिकमंतर्भवति ॥ उत्तमानामधिकव्याप्त्यादेः ॥ नतुनिवासत्वादौगुणाधिक्यादिकंकथंचतन्महिमत्वेनांतर्भावमुक्त्वानिवासत्वमात्रेणांतर्भावउच्यते ॥ कथंचान्यथाकामादीनांप्रसिद्धमहिमानांस्त्रीमात्रादिकंदेवतोच्यते ॥ प्रसिद्धंचैतत् ॥ आत्मादेवानांभुवनस्यगर्भः ॥ आत्मातेवातः ॥ इंद्रोवैदेवानामोजिष्ठः ॥ ब्रह्मादेवानांप्रथमःसंबभूव ॥ अयंवावशिशुर्योयंमध्यमःप्राणः ॥

कल्यतस्यकादेवतेतिस्त्रियइतिहोवाच ॥ ११ ॥ रूपाण्येवयस्यायतनंचक्षुर्लोकोमनोज्योतिर्योवैतंपुरुषंविद्यात्सर्वस्यात्मनःपरायणꣳसवैवेदितास्याद्याज्ञवल्क्यवेदवाअहंतंपुरुषꣳसर्वस्यात्मनःपरायणंयमात्थयएवासावादित्येपुरुषःसएषवदैवशाकल्यतस्यकादेवतेतिसत्यमितिहोवाच ॥ १२ ॥ आकाशएवयस्यायतनꣳश्रोत्रंलोकोमनोज्योतिर्योवैतंपुरुषंविद्यात्सर्वस्यात्मनःपरायणꣳसवैवेदितास्याद्याज्ञवल्क्यवेदवाअहंतंपुरुषꣳसर्वस्यात्मनःपरायणंयमात्थयएवा

तमेतासम्राक्षितयउपतिष्ठंते ॥ तद्याइमाअक्षँल्लोहिन्योराजयस्ताभिरेनंरुद्रोन्वायत्तोयच्छुक्लंतेनेंद्रः ॥ अश्वमेधःक्रतुश्रेष्ठोज्योतिःश्रेष्ठोदिवाकरः ॥ ब्राह्मणोद्विपदांश्रेष्ठोदेवश्रेष्ठश्चमारुतः ॥ वायुर्भीमोभीमनादोमहौजास्सर्वेषांचप्राणिनांप्राणभूतः ॥ अनावृत्तिर्देहिनांदेहपातेतस्माद्वायुर्देवदेवोविशिष्टः ॥ क्रतुंसचंतमारुतस्यवेधसः ॥ वायोरात्मानंकवयोनिचिक्युः ॥ आत्मतएषप्राणोजायते ॥ योवायौतिष्ठन् ॥ देवानांदेवतावायुर्वायोर्देवोजनार्दनः ॥ सप्राणमसृजत ॥ प्राणाच्छ्रद्धाम् ॥ एतस्माज्जायतेप्राणः ॥ रुद्रंसमाश्रिता

देवारुद्रोब्रह्माणमाश्रितः ॥ ब्रह्मामामाश्रितोनित्यंनाहंकंचिदुपाश्रितइत्यादिषुसर्वत्र ॥ श्रियःप्रसादंसकु
शेशयेशयःश्रितःसंचिंत्यःप्रशशंसशौरिमित्यादिच ॥ दिशोवेदसदेवाःसप्रतिष्ठाइतियाज्ञवल्क्यवचनम् ॥
सर्वप्रतिष्ठात्वेनब्रह्मणोपिज्ञानंभवतीतिकिंब्रह्मविद्वानित्यस्यचोत्तरम् ॥ यदिदिशोवेत्थतर्हिकिंदेवतोस्या
म् ॥ आदित्यस्याश्रयश्चक्षुर्नामास्वायंभुवोमनुः ॥ चक्षुस्थोदृष्टिशक्तीशोरूपात्मेंद्रस्तदाश्रयः ॥ बुद्धित

यꣳश्रौत्रःप्रातिश्रुत्कःपुरुषःसएषवदैवशाकल्यतस्यकादेवतेतिदिशइतिहोवाच ॥ १३ ॥ तम
एवयस्यायतनꣳहृदयंलोकोमनोज्योतिर्योवैतंपुरुषंविद्यात्सर्वस्यात्मनःपरायणꣳसवैवेदिता
स्याद्याज्ञवल्क्यवेदवाअहंतंपुरुषꣳसर्वस्यात्मनःपरायणंयमात्थयएवायंछायामयःपुरुषःसए
षवदैवशाकल्यतस्यकादेवतेतिमृत्युरितिहोवाच ॥ १४ ॥ रूपाण्येवयस्यायतनंचक्षुर्लोकोम
नोज्योतिर्योवैतंपुरुषंविद्यात्सर्वस्यात्मनःपरायणꣳसवैवेदितास्याद्याज्ञवल्क्यवेदवाअहंतंपुरुष
ꣳसर्वस्यात्मनःपरायणंयमात्थयएवायमादर्शेपुरुषःसएषवदैवशाकल्यतस्यकादेवतेत्यसुरिति
होवाच ॥ १५ ॥ आपएवयस्यायतनꣳहृदयंलोकोमनोज्योतिर्योवैतंपुरुषंविद्यात्सर्वस्यात्म
नःपरायणꣳसवैवेदितास्याद्याज्ञवल्क्यवेदवाअहंतंपुरुषꣳसर्वस्यात्मनःपरायणंयमात्थयएवा
यमप्सुपुरुषःसएषवदैवशाकल्यतस्यकादेवतेतिवरुणइतिहोवाच ॥ १६ ॥ रेतएवयस्यायत

स्वात्मिकोमाचशक्रस्यापिसमाश्रयः ॥ एवंयमस्याश्रयश्चयज्ञमान्यनिरुद्धकः ॥ दक्षिणामानिनीदेवी
रतिरेवतदाश्रयः ॥ श्रद्धारूपःसदाकामस्तस्याअपिसमाश्रयः ॥ हृदयात्मिक्युमातस्यकामस्यापिसमा
श्रयः ॥ अब्देवतासदाचंद्रोवरुणस्यसमाश्रयः ॥ रेतआत्मासुरगुरुःसोमस्यापिसमाश्रयः ॥ तस्याप्युमै

वाश्रयःस्यात्तस्यैवतुदिगीशितुः ॥ सोमस्यदीक्षारूपातुशतरूपासमाश्रयः ॥ तस्याःसत्यात्मकोदेवोमनुरेवसमाश्रयः ॥ तस्याप्युमैवाश्रयःस्यात्स्रष्टृरूपस्यनित्यदा ॥ मध्यदिक्स्वामिनोग्नेश्चस्वाधारोवाग्बृहस्पतिः ॥ तस्याप्युमैवहृदयरूपानित्यंसमाश्रयः ॥ तस्याःसमाश्रयोरुद्रस्त्वमहंचेतिरूपवान् ॥ अहंकारात्मकोनित्यमात्मोमापरिकीर्तिता ॥ बुद्ध्यात्मनैवाततत्वाद्यस्यानाश्रयोहरः ॥ तदाबोधात्मिकाशक्तिर्ना

नꣳहृदयंलोकोमनोज्योतिर्योवैतंपुरुषंविद्यात्सर्वस्यात्मनःपरायणꣳसवैवेदितास्याद्याज्ञवल्क्य वेदवाअहंतंपुरुषꣳसर्वस्यात्मनःपरायणंयमात्थयएवायंपुत्रमयःपुरुषःसएषवदैवशाकल्यतस्यकादेवतेतिप्रजापतिरितिहोवाच॥ १७॥ शाकल्येतिहोवाचयाज्ञवल्क्यस्त्वाꣳस्विदिमेब्राह्मणाअंगारावक्षयणमक्रता३इति ॥ १८॥ याज्ञवल्क्येतिहोवाचशाकल्योयदिदंकुरुपांचालानांब्राह्मणानत्यवादीःकिंब्रह्मविद्वानितिदिशोवेदसदेवाःसप्रतिष्ठाइतियद्दिशोवेत्थसदेवाःसप्रतिष्ठाः ॥ १९ ॥ किंदेवतोस्यांप्राच्यांदिश्यसीतिआदित्यदेवतइतिसआदित्यःकस्मिन्प्रतिष्ठितइतिचक्षुषीतिकस्मिन्नुचक्षुःप्रतिष्ठितमितिरूपेष्वितिचक्षुषाहिरूपाणिपश्यतिकस्मिन्नुरूपा

स्यादेहाभिरक्षणे ॥ अरक्षितान्मानुषादीन्श्वानोवायुर्वयांसिवा ॥ शिवस्यचतथोमायाःप्राणात्माशेषआश्रयः ॥ शेषस्यापानरूपासाभारत्येवव्यपाश्रयः ॥ तस्याव्यानाभिधोवायुर्विशिष्टानोयतोहिसः ॥ उन्नेतृत्वादुदानाख्यातस्यश्रीराश्रयःसदा ॥ समानाख्योहरिस्तस्याःसहैवस्वनयत्यसौ॥ स्थावरस्थानकास्त्वन्येसर्वेषांचेष्टकोहिसः ॥ सएषभगवान्नैवंश्रीवदन्याश्रयोहरिः ॥ नचब्रह्मादिवद्विष्णुर्नैवासौबद्धवत्क्वचि

त् ॥ नचमुक्तवदीशेशः कुतएवजडोपमः ॥ अपाद्योशीर्यसंगोसावसितश्चनरिष्यति ॥ नहिसर्वा
त्मनाक्कापिकेनचिज्ज्ञायतेक्वचित् ॥ स्वल्पोपिशीर्यतेनैवकारणात्कार्यतोपिवा ॥ नलिप्यतेजगन्नाथःक
चिद्दोषेणकेनचित् ॥ भूतपूर्वोभविष्योवाबंधोनास्यकुतश्चन ॥ नचनाशोभवेत्क्कापिननशिष्यतिचक्कचि
त् ॥ अन्यत्सर्वंगृहीतंहितेनज्ञानादिनासदा ॥ अशीर्यत्वादयोन्येषांसर्वेषांतत्प्रसादतः ॥ अतस्तस्यापिवै

णिप्रतिष्ठितानीतिहृदयइतिहोवाचहृदयेनहिरूपाणिजानातिहृदयेह्येवरूपाणिप्रतिष्ठितानिभ
वंतीत्येवमेवैतद्याज्ञवल्क्य ॥२०॥ किंदेवतोस्यांदक्षिणायांदिश्यसीतियमदेवतइतिसयमःक
स्मिन्प्रतिष्ठितइतियज्ञइतिकस्मिन्नुयज्ञःप्रतिष्ठितइतिदक्षिणायामितिकस्मिन्नुदक्षिणाप्रति
ष्ठितेतिश्रद्धायामितियदाह्येवश्रद्धत्तेऽथदक्षिणांददातिश्रद्धायांह्येवदक्षिणाप्रतिष्ठितेति
कस्मिन्नुश्रद्धाप्रतिष्ठितेतिहृदयइतिहोवाचहृदयेनहिश्रद्धांजानातिहृदयेह्येवश्रद्धाप्रतिष्ठि
ताभवतीत्येवमेवैतद्याज्ञवल्क्य ॥ २१ ॥ किंदेवतोस्यांप्रतीच्यांदिश्यसीतिवरुणदेवतइति
सवरुणःकस्मिन्प्रतिष्ठितइत्यप्स्वितिकस्मिन्न्वापःप्रतिष्ठिताइतिरेतसीतिकस्मिन्नुरेतःप्रतिष्ठि
तमितिहृदयइतितस्मादपिप्रतिरूपंजातमाहुर्हृदयादिवसृप्तोहृदयादिवनिर्मितइतिहृदयेह्ये

वम्यान्नेतिनेत्याहतंश्रुतिरित्यादिच ॥ तद्गुणानांसुपूर्णानांविप्रुट्कंप्रतिबिंबितम् ॥ श्रीर्भुंक्तेतद्गुणान्ब्रह्मातस्य
रुद्रादयोपिचेत्यादिच ॥ अहर्ज्ञानमस्यलीनमित्यहर्लीकएवाहल्लिकः ॥ अज्ञेत्याक्षिपति ॥ नहिगृह्यतइ
त्यादिनायहणशीरणादिषुसर्वप्रमाणाभावंदर्शयति ॥ नेतिनेत्यादिरूपेणविज्ञापितगुणोपितु ॥ विशेषापे
क्षयापृष्टोनशाकल्योविवेदतमितिब्रह्मांडे ॥ तदपेक्षांविनैवासौनिर्गत्यपुरुषोत्तमः ॥ वहत्येवानिशंसर्वंनि

रूढंतेनतज्जगत् ॥ प्रतिप्रतिस्थितोरूपैर्यस्माद्धत्तेहरिःसदा ॥ अतःप्रत्यूह्यतेतेनव्यक्ताव्यक्तमिदंजगदि
तिब्रह्मतर्कें ॥ नविनोपनिषद्भिःसज्ञेयःकेनापिकस्यचित् ॥ अतऔपनिषत्कंतंप्राहुर्विष्णुंसनातनमिति
च ॥ प्रश्नोवादेचजल्पादौकर्तव्यःप्रतिवादिना ॥ तदुक्तिमात्रेप्रामाण्यंयदिनास्यागमांतरम् ॥ अपेक्षि
तंयदाशंकादर्शनीयस्तदागमः ॥ निःशंकत्वेनयोवक्ताप्रश्नानामुत्तरंसदा ॥ आनुकूल्येनागमानांनाशंक्यंत

वरेतःप्रतिष्ठितंभवतीत्येवमेवैतद्याज्ञवल्क्य ॥ २२ ॥ किंदेवतोऽस्यामुदीच्यांदिश्यसीतिसोम
देवतइतिससोमःकस्मिन्प्रतिष्ठितइतिदीक्षायामितिकस्मिन्नुदीक्षाप्रतिष्ठितेतिसत्यइतितस्मा
दपिदीक्षितमाहुःसत्यंवदेतिसत्येह्येवदीक्षाप्रतिष्ठितेतिकस्मिन्नुसत्यंप्रतिष्ठितमितिहृदयइति
होवाचहृदयेनहिसत्यंजानातिहृदयेह्येवसत्यंप्रतिष्ठितंभवतीत्येवमेवैतद्याज्ञवल्क्य ॥ २३ ॥
किंदेवतोऽस्यांध्रुवायांदिश्यसीत्यग्निदेवतइतिसोऽग्निःकस्मिन्नुप्रतिष्ठितइतिवाचीतिकस्मिन्नुवा
क्प्रतिष्ठितेतिहृदयइतिकस्मिन्नुहृदयंप्रतिष्ठितमिति ॥ २४ ॥ अहल्लिकेतिहोवाचयाज्ञव
ल्क्योयत्रैतदन्यत्रास्मन्मन्यासैयद्ध्येतदन्यत्रास्मत्स्याच्छ्वानोवैनदद्युर्वयाꣳसिवैनद्विमथ्नीर
न्निति॥२५॥कस्मिन्नुत्वंचात्माचप्रतिष्ठितौस्थइतिप्राणइतिकस्मिन्नुप्राणःप्रतिष्ठितइत्यपान

द्वचःक्वचित् ॥ दशतालोदशमुखोललाटत्रिंशकस्तथा ॥ सार्धोन्नतश्चैवपुनःपर्यग्दशशिरास्तथा ॥
पंचोराःसप्तपादोयोनाशंक्यंतद्वचःक्वचित् ॥ नवांगुलमुखोयस्तुगलेचचतुरंगुलः ॥ चतुर्विंशांगुलतनुस्त
द्वाक्यंदेवपूजितम् ॥ प्राधान्याल्लक्षणोपेतोदुर्लक्षणयुतोपिसन् ॥ तस्यापिवाक्यंमानंस्यात्किमुसर्वयुत
स्यतु ॥ प्रायोदेवाश्चऋषयोनसर्वशुभलक्षणाः ॥ ऋतेविष्णुंसुरश्रेष्ठंब्रह्माणंवाप्यनंतरम् ॥ यस्मान्नविदु

षांवाक्यमाशंक्यंकेनचित्क्वचित् ॥ तस्माद्वेदेषुसर्वेषुकथाःप्रश्नोत्तरात्मिकाः ॥ नप्रमाणांतरंतत्रपृच्छंतिघ
टनांविना ॥ एतस्मादाश्वलाद्याश्वपप्रच्छुर्नैवकुत्रचित् ॥ आगमंयाज्ञवल्क्योक्तेरन्यंतंमिथिलोपिचेतिब्र
ह्मतर्के ॥ यश्छिन्नविचिकित्सस्तुच्छिनत्त्यपिचसंशयान् ॥ तस्यपर्येषणंकुर्यात्प्रतीच्छन्नोतदक्षिणामिति
चभारते ॥ षण्णवत्यंगुलोयस्तुन्यग्रोधपरिमंडलः ॥ दशतालश्चतुर्हस्तःसदेवैरपिपूज्यतइतिवायुप्रोक्ते ॥

इतिकस्मिन्न्वपानःप्रतिष्ठितइतिव्यानइतिकस्मिन्नुव्यानःप्रतिष्ठितइत्युदानइतिकस्मिन्नुदा
नःप्रतिष्ठितइतिसमानइतिसएषनेतिनेत्यात्माऽगृह्योनहिगृह्यतेऽशीर्योनहिशीर्यतेऽसंगोनहिस
ज्यतेऽसितोनव्यथतेनरिष्यत्येतान्यष्टावायतनान्यष्टौलोकाअष्टौदेवाअष्टौपुरुषास्सयस्तान्पुरु
षान्निरुह्यप्रत्युह्यात्यक्रामत्तंत्वौपनिषदंपुरुषंपृच्छामितंचेन्मेनविवक्ष्यसिमूर्धातेविपतिष्यतीति
तꣳहनमेनेशाकल्यस्तस्यहमूर्धाविपपातापिहास्यपरिमोषिणोस्थीन्यपजह्रुरन्यन्मन्यमानाः
॥ २६ ॥ अथहोवाचब्राह्मणाभगवंतोयोवःकामयतेसमापृच्छतुसर्वेवामापृच्छतयोवःकाम
यतेतंवःपृच्छामिसर्वान्वावःपृच्छामीतितेहब्राह्मणानदधृषुः ॥ २७ ॥ तान्हैतैःश्लोकैः
पप्रच्छ ॥ यथावृक्षोवनस्पतिस्तथैवपुरुषोमृषा ॥ तस्यलोमानिपर्णानित्वगस्योत्पाटिकाब

अतएवचसर्वागमेषुप्रतिसंहितमाचार्यलक्षणमुच्यते ॥ यथावनस्पतौवृक्षइत्ययंशब्दोऽमृषातथैवपुरुषेपु
रुषशब्दोविद्यमानएव ॥ सचनित्यत्वेसंभवति ॥ पुरुकालेपिसन्पुरुषइति ॥ स्नावमध्येयत्स्थिरंविद्य
तेस्थिसल्लीनंतद्दारुसंश्लिष्टपाशवत् ॥ वृक्षोमूलाद्रोहतीत्यंगीकारमात्रम् ॥ यत्समूलमावृहेयुरितितस्या
पिदूषणात्॥अन्यस्यरेतसोजननमपिजीवतःपुरुषांतरस्याभावे ॥ प्रलयेतुसर्वप्रलयात्कस्मादुत्पत्तिः ॥ त

त्पृष्टंसर्वंवक्तुमशक्यत्वात्पुरुषस्यपुनरुत्पत्तौकारणंभगवंतंजानंतोपितूष्णीमृषयोबभूवुः ॥ पुरुषनामक
त्वान्नित्यस्यजीवस्ययावन्मुक्तिःपुनरुत्पत्त्याभवितव्यंनशरीरेणसहनाशः ॥ तस्यचस्वोत्पत्तावस्वातंत्र्याद
न्येनोत्पादकेनभाव्यम् ॥ कोसावितिप्रश्नाशयः ॥तेषुतूष्णीभूतेषुस्वयमेवपरिहरति विज्ञानमानंदंब्रह्मेति॥
तस्याप्यन्यउत्पादकइत्याशंकामाभूदितिजातएवनजायतइत्याह ॥ पुरुषांतरापेक्षयापुनःशब्दोनतुक्रिया
भ्यासापेक्षया ॥ एकएवहरिर्बंधुःपुनरन्योनविद्यतइतिवत् ॥ रातिरिष्टः ॥ तिष्ठमानस्यतद्विदःपरायणम् ॥

ह्निः ॥ त्वचएवास्यरुधिरंप्रस्यंदित्वचउत्पटः ॥ तस्मात्तदातृण्णात्प्रैतिरसोवृक्षादिवाहतात् ॥
मांसान्यस्यशकराणिकिनाटंस्नावतत्स्थिरम्॥अस्थीन्यंतरतोदारूणिमज्जामज्जोपमाकृता॥
यद्वृक्षोवृक्णोरोहतिमूलान्नवतरःपुनः॥मर्त्यःस्विन्मृत्युनावृक्णःकस्मान्मूलात्प्ररोहति ॥रेतसइ
तिमावोचतजीवतस्तत्प्रजायते॥ धानारुहइववैवृक्षोंजसाप्रेत्यसंभवः॥ यत्समूलमावृहेयुर्वृक्षं
नपुनराभवेत् ॥ मर्त्यःस्विन्मृत्युनावृक्णःकस्मान्मूलात्प्ररोहति ॥ जातएवनजायतेकोन्वेनं
जनयेत्पुनः ॥ विज्ञानमानंदंब्रह्मरातिर्दातुःपरायणम् ॥ तिष्ठमानस्यतद्विदइति ॥ २८ ॥ इ
तिशाकल्यब्राह्मणम्॥५ ॥ ९ ॥ इतिश्रीबृहदारण्यकेपंचमोध्यायः ॥ ५॥

विजित्यसर्वान्प्रश्नच्छयाज्ञवल्क्यःपुनर्मुनीन् ॥ यथावनस्पतौवृक्षशब्दएवंयथार्थतः ॥ पुरुषेपिहितच्छदो
नित्यत्वादेवयुज्यते ॥ तस्मान्नास्यशरीरेणनाशस्तस्मात्पुनर्जनिः ॥ आमुक्तेर्भवितानित्यंकुतस्तदितिचो
च्यताम् ॥ रेतसोजननंयावत्प्रलयस्तावदेहि ॥ निर्मूलस्यचवृक्षस्यप्रलयेपुरुषस्यच॥ पुनरुत्पादकोयस्तं
वदंतुममकृत्स्नशः ॥ धानाजातइवायंहिदृश्यतेविदुषांतरुः ॥ अस्वातंत्र्यात्तुविदुषांनैवतत्कारणंभवेत् ॥

अंजसाप्रेत्यसंभूतिकारणंतद्वदंतुनः ॥ प्रेत्यसंभूतिकर्ताहित्वतंत्रोघटतेयतः ॥ इतिपृष्टास्तुमुनयोनवक्तुंशेकुरंजसा ॥ तद्वेत्तारोपितत्प्रश्ननिर्मूलनबलोज्झिताः ॥ अधाष्ण्यांत्तत्प्रभावेनधर्षितानाशकन्यदा ॥ स्वयमेवतदोवाचयाज्ञवल्क्योमहामुनिः ॥ पूर्णानंदोहरिर्नान्यःकारणंसृज्यसर्जने ॥ नैवास्यजनकःकश्चिन्नित्यजातोप्यसौहरिः ॥ सप्रियःसर्वदानॄणांज्ञानिनांपरमप्रियः ॥ येतुतद्भाविताभित्यंतेषामेषपरायणमितिनारायणीये ॥ इतिशाकल्यब्राह्मणम् ॥५॥९ ॥ इतिश्रीमदानंदतीर्थभगवत्पादाचार्यविरचितेबृहदारण्यकोपनिषद्भाष्येपंचमोध्यायः ॥ ५ ॥

जनकोहवैदेहआसांचक्रेथहयाज्ञवल्क्यआवव्राजतंहोवाचयाज्ञवल्क्यकिमर्थमचारीःपशूनिच्छन्नण्वंतानित्युभयमेवसम्राळितिहोवाच ॥१ ॥ यत्तेकश्चिदब्रवीत्तच्छृणवामेत्यब्रवीन्मेजित्वाशैलिनिर्वाग्वैब्रह्मेतियथामातृमान्पितृमानाचार्यवान्ब्रूयात्तथातच्छैलिनोब्रवीद्वाग्वैब्रह्मेत्यवदतोहिकिंस्यादित्यब्रवीत्तुतेतस्यायतनंप्रतिष्ठांनमेब्रवीदित्येकपाद्वाएतत्सम्राडितिसवैनोब्रूहियाज्ञवल्क्यवागेवायतनमाकाशःप्रतिष्ठाप्रज्ञेत्येनदुपासीतकाप्रज्ञतायाज्ञवल्क्यवागेवसम्राळितिहोवाचवाचावैसम्राड्बंधुःप्रज्ञायतऋग्वेदोयजुर्वेदःसामवेदोथर्वांगिरसइतिहासःपुराणंविद्याउपनिषदःश्लोकाःसूत्राण्यनुव्याख्यानानिव्याख्यानानीष्टंहुतमाशितंपायितमयं

अणुर्भगवांस्तद्विषयान्निर्णयान्वक्तुंवा ॥ प्रतिष्ठाप्रतिमाप्रोक्ताप्रतिरूपेणसंस्थितेः ॥ प्रतिमाधिकसादृश्यान्मुख्याविष्णोःसदारमा ॥ दीप्तत्वादासमंतात्साचाकाशइतिगीयते ॥ प्रत्येकंविष्णुरूपाणामन्यदायतनंपृथगित्यध्यात्मे ॥ प्रतिमानमवस्थानंरहस्यंनामसार्थकम्॥ चतुष्टयंयदाज्ञातंसम्यग्विद्याफलंतदेतिच ॥ काप्रज्ञतावागेवेत्यादेर्धर्मधर्म्यभेदः ॥ अमिताक्षरंपंचरात्रंविद्येत्याहुर्मनीषिणः ॥ मिताक्षरंश्लोकवाच्यमुभ

यंवेदईर्यतइतिब्रह्मांडे ॥ सूत्रंतुब्रह्मसूत्राख्यंमहामीमांसिकातथा ॥ तथासांकर्षणंसूत्रंब्रह्मतर्कादयस्तथा ॥ प्रकाशिकानिर्णयश्चतत्त्वनिर्णयएवच ॥ व्याख्येतिकथिताःसर्वाःस्वयंभगवताकृताः ॥ बृहत्तर्कादयःसर्वाअनुव्याख्याःप्रकीर्तिताइतिप्रतिसंख्याने ॥ वाग्विष्णुर्वाचकत्वेनप्राणःप्रणयनात्स्वयम् ॥ मनोमंतृत्वतोनित्यंसचक्षुःसर्वदर्शनात् ॥ श्रोत्रंश्रवणशक्तित्वाद्धृदयंहृद्गतोयतइतिप्र

चलोकःपरश्चलोकःसर्वाणिचभूतानिवाचैवसम्राट्प्रज्ञायतेवाग्वैसम्राट्परमंब्रह्मनैनंवाग्जहाति सर्वाण्येनंभूतान्यभिक्षरंतिदेवोभूत्वादेवानप्येतियएवंविद्वानेतदुपास्तेहस्त्यृषभंसहस्रंददामीतिहोवाचजनकोवैदेहःसहोवाचयाज्ञवल्क्यःपितामेमन्यतनाननुशिष्यहरेतेति॥२॥यदेवतेकश्चिदब्रवीत्तच्छृणवामेत्यब्रवीन्मउदंकःशौल्बायनःप्राणोवैब्रह्मेतियथामातृमान्पितृमानाचार्यवान्ब्रूयात्तथातच्छौल्बायनोब्रवीत्प्राणोवैब्रह्मेत्यप्राणतोहिकिंस्यादित्यब्रवीत्तुतेतस्यायतनंप्रतिष्ठांनमेब्रवीदित्येकपाद्वाएतत्सम्राडितिसवैनोब्रूहियाज्ञवल्क्यप्राणएवायतनमाकाशःप्रतिष्ठाप्रियमित्येनदुपासीतकाप्रियतायाज्ञवल्क्यप्राणएवसम्राडितिहोवाचप्राणस्यवैसम्राट्कामायायाज्यंयाजयत्यप्रतिगृह्यस्यप्रतिगृह्णात्यपितत्रवधाशंकंभवतियांदिशमेतिप्राणस्यैवस

त्याहारे ॥ अन्नंप्राणंचक्षुःश्रोत्रंमनोवाचमितीत्यादिच ॥ वागादिषुस्थितंविष्णुंयउपास्तेसदैवतु ॥ वागादिनाम्नानैनंसप्रजहातिकदाचनेतिसत्तत्त्वे ॥ अतआयतनमेववागिंद्रियादि ॥ परमंब्रह्मेतिवचनान्नवागिंद्रियादिमात्रमुपास्यम् ॥ प्रतिमाद्यंहरित्वेनपृथिव्याद्यमथापिवा ॥ इंद्रियप्राणजीवाद्यमथवायउपासते ॥ मिथ्योपास्तिमतांतेषांनिष्कृतिर्नकदाचन ॥ अतिदुःखेपतंत्यद्धातमस्यंधेपतंगवदि

त्युपासनानिर्णये ॥ सर्वेंद्रियेषुयाविष्णोरुपासायुगपत्सदा ॥ देवानामेवयोग्यासातयादेवत्वमाप्नुयुः ॥ सर्वे देवपदेयोग्याःसायुज्यंस्वोत्तमेष्वथ ॥ संप्राप्यब्रह्मणासार्धंप्राप्नुयुःपुरुषोत्तमम् ॥ दुहंतिसर्वभोगांश्चतेभ्यो न्येमुक्तिगानराः ॥ स्वोत्तमेभ्यश्चदेवेभ्यस्तेमुक्ताहरयेसदेतिच ॥ प्रविश्यदेहंयोभोगःस्वरूपव्यतिरेकतः ॥ सायुज्यमितितंप्राहुःसंयुक्तत्वाद्विशेषतइतिच ॥ इंद्रियेषुस्थितंविष्णुमुपासीतक्रमेणतु ॥ सदादेवपदायो

स्राट्कामायप्राणोवैसम्राट्परमंब्रह्मनैनंप्राणोजहातिसर्वाण्येनंभूतान्यभिक्षरंतिदेवोभूत्वादे वानप्येतियएवंविद्वानेतदुपास्तेहस्त्यृषभꣳसहस्रंददामीतिहोवाचजनकोवैदेहःसहोवाचयाज्ञ वल्क्यःपितामेमन्यतनाननुशिष्यहरेतेति ॥ ३ ॥ यदेवतेकश्चिदब्रवीत्तच्छृणवामेत्यब्रवी न्मेबर्कुर्वार्ष्णश्चक्षुर्वैब्रह्मेतियथामातृमान्पितृमानाचार्यवान्ब्रूयात्तथावार्ष्णोऽब्रवीच्चक्षुर्वैब्रह्मे त्यपश्यतोहिकिंस्यादित्यब्रवीत्तुतेतस्यायतनंप्रतिष्ठांनमेऽब्रवीदित्येकपाद्वाएतत्सम्राडितिसवै नोब्रूहियाज्ञवल्क्यचक्षुरेवायतनमाकाशःप्रतिष्ठासत्यमित्येनदुपासीतकासत्यतायाज्ञवल्क्य चक्षुरेवसम्राडितिहोवाचचक्षुषावैसम्राट्पश्यंतमाहुरद्राक्षीरितिसआहाद्राक्षमितितत्सत्यंभ वतिचक्षुर्वैसम्राट्परमंब्रह्मनैनंचक्षुर्जहातिसर्वाण्येनंभूतान्यभिक्षरंतिदेवोभूत्वादेवानप्येतिय

ग्यःसमानुषसुरोभवेत् ॥ मानुषादेवलोकस्थास्तेप्रोक्तामानुषाःसुराः ॥ मानुषादेवसायुज्यंयांत्युपासनया नयेतिच ॥ ऋषभान्गजमिश्रांस्तुक्षत्रियोगुरुदक्षिणाम् ॥ विप्रोदद्याद्वृषानेववैश्योगाःप्रतिविद्यकमितिच मानसंहितायाम् ॥ अन्यथाविद्ययामुक्तिःसुराणामन्यथानृणाम् ॥ तत्रापियोग्यताभेदात्प्रतिभेदाअवां तराः ॥ ययायस्यविमुक्तिःस्यात्तद्दातामुख्यतोगुरुः ॥ एकदेशेगुरुत्वंस्यादन्यविद्याप्रदस्यत्वितिच ॥ प्रा

णसंस्थस्यैवैविष्णोःसंप्रीत्यैभोजनंभवेत् ॥ तदिच्छयैवचौर्यादिकुर्युरज्ञाअपिध्रुवम् ॥ तथापितंनजानीयुः
प्राणात्मानंजनार्दनमितिप्रवृत्ते ॥ यच्चक्षुषिस्थितंरूपंविष्णोश्चक्षुस्तदुच्यते ॥ शब्दादेरप्यापरोक्ष्येतद्धेतु
र्विश्वनामकम् ॥ तद्गतस्यततोविष्णोःकंठस्थानागमोयदा ॥ तदास्वमोभवेज्जाग्रद्दर्शनंनैवजायते ॥ चक्षु

एवंविद्वानेतदुपास्तेहस्त्यृषभꣳसहस्रंददामीतिहोवाचजनकोहवैदेहःसहोवाचयाज्ञवल्क्यः
पितामेमन्यतनाननुशिष्यहरेतेति ॥ ४ ॥ यदेवतेकश्चिदब्रवीत्तच्छृणवामेत्यब्रवीन्मे
गर्दभीविपीतोभारद्वाजःश्रोत्रंवैब्रह्मेतियथामातृमान्पितृमानाचार्यवान्ब्रूयात्तथाभारद्वाजो
ब्रवीच्छ्रोत्रंवैब्रह्मेत्यशृण्वतोहिकिंस्यादित्यब्रवीत्तुतेतस्यायतनंप्रतिष्ठांनमेब्रवीदित्येकपाद्वा
एतत्सम्राडितिसवैनोब्रूहियाज्ञवल्क्यश्रोत्रमेवायतनमाकाशःप्रतिष्ठानंतइत्येनदुपासीतकानं
तताःयाज्ञवल्क्यदिशएवसम्राडितिहोवाचतस्माद्वैसम्राडपियांकांचदिशंगच्छतिनैवास्याअं
तंगच्छत्यनंताहिदिशःदिशोवैसम्राट्श्रोत्रꣳश्रोत्रंवैसम्राट्परमंब्रह्मनैनꣳश्रोत्रंजहातिसर्वाण्येनं
भूतान्यभिक्षरंतिदेवोभूत्वादेवानप्येतियएवंविद्वानेतदुपास्तेहस्त्यृषभꣳसहस्रंददामीतिहोवाच
जनकोहवैदेहःसहोवाचयाज्ञवल्क्यःपितामेमन्यतनाननुशिष्यहरेतेति ॥ ५ ॥ यदेवतेकश्चि
दब्रवीत्तच्छृणवामेत्यब्रवीन्मेसत्यकामोजाबालोमनोवैब्रह्मेतियथामातृमान्पितृमानाचार्यवा
न्ब्रूयात्तथातज्जाबालोब्रवीन्मनोवैब्रह्मेत्यमनसोहिकिꣳस्यादित्यब्रवीत्तुतेतस्यायतनंप्रतिष्ठांन

र्निमीलनंचस्यात्सर्वेंद्रियगुणैःसह ॥ चक्षुरात्माततोविष्णुःसत्यमित्यभिधीयतइतिच ॥ सर्वव्यापीतुभग
वाननंतइतिकीर्तितः ॥ दिङ्नामासतुविज्ञेयोदिक्षुस्थोनित्यदेशनादितिच ॥ मनःस्थितस्ययद्विष्णोःसं

बंधादेवकामतः ॥ जातःसुतःसुखेहेतुःपरानंदोहरिःकिम्विति ब्रह्मतर्के ॥ सदाप्रतिष्ठितानिभवंतिविशेषतोपि प्रतिष्ठितानिसुप्तौ ॥ हृदयेसर्वशोव्यापीप्रादेशःपुरुषोत्तमः ॥ जीवानांस्थानमुद्दिष्टःसर्वदेवसनातनः ॥ हृ

मेब्रवीदित्येकपाद्वाएतत्सम्राडितिसवैनोब्रूहियाज्ञवल्क्यमनएवायतनमाकाशःप्रतिष्ठाऽऽनंद इत्येनदुपासीतकानंदतायाज्ञवल्क्यमनएवसम्राडितिहोवाचमनसावैसम्राट्स्त्रियमभिहार्य तेतस्यांप्रतिरूपःपुत्रोजायतेसआनंदोमनोवैसम्राट्परमंब्रह्मनैनंमनोजहातिसर्वाण्येनंभूता न्यभिक्षरंतिदेवोभूत्वादेवानप्येतियएवंविद्वानेतदुपास्तेहस्त्यृषभꣳसहस्रंददामीतिहोवाचज नकोवैदेहःसहोवाचयाज्ञवल्क्यःपितामेमन्यतनाननुशिष्यहरेतेति ॥ ६ ॥ यदेवतेकश्चिदब्र वीत्तच्छृणवामेत्यब्रवीन्मेविदग्धःशाकल्योहृदयंवैब्रह्मेतियथामातृमान्पितृमानाचार्यवान्ब्रू यात्तथातच्छाकल्योब्रवीद्धृदयंवैब्रह्मेत्यहृदयस्यकिꣳस्यादित्यब्रवीत्तुतेतस्यायतनंप्रतिष्ठांन मेब्रवीदित्येकपाद्वाएतत्सम्राडितिसवैनोब्रूहियाज्ञवल्क्यहृदयमेवायमायतनमाकाशःप्रतिष्ठा स्थितिरित्येनदुपासीतकास्थिततायाज्ञवल्क्यहृदयमेवसम्राडितिहोवाचहृदयंवैसम्राट्सर्वेषां भूतानामायतनꣳहृदयंवैसम्राट्सर्वेषांभूतानांप्रतिष्ठाहृदयेह्येवसम्राट्सर्वाणिभूतानिप्रतिष्ठि तानिभवंतिहृदयंवैसम्राट्परमंब्रह्मनैनꣳहृदयंजहातिसर्वाण्येनंभूतान्यभिक्षरंतिदेवोभूत्वादे वानप्येतियएवंविद्वानेतदुपास्तेहस्त्यृषभꣳसहस्रंददामीतिहोवाचजनकोवैदेहःसहोवाचयाज्ञ

त्कर्णिकामूलगतःसोंगुष्ठाग्रप्रमाणकः ॥ मूलेशइतिनामास्मिन्सर्वेजीवाःप्रतिष्ठिताः ॥ अंगुष्ठमात्रेपुरुषे कर्णिकाग्रस्थितेहरौ ॥ प्रविशंतिसुषुप्तौतुप्रबुध्यंतेततस्तथा ॥ सोयंत्रिरूपोभगवान्हृदयाख्यःप्रकीर्तितइ

तिच ॥ स्थानमायतनंप्रोक्तंप्रतिष्ठाधारकःपुमानितिच ॥ ॥ इतिषडाचार्यब्राह्मणम् ॥ ६ । १ ॥
स्वयोग्यंज्ञानंश्रोतुंसिंहासनादवरुह्योपसदनंकृत्वोवाच ॥ यत्स्वात्मनाप्राप्यंमुक्तौतदुपास्यैवमुक्तिर्भवती
त्यतःप्राप्यंपृच्छति ॥ वृंदैःप्राप्यतमत्वात्तुवृंदारकइतिस्मृतइतिचपाद्मे ॥ राज्ञांहृदयसंस्थोयइंद्रोनामज
नार्दनः ॥ सइंद्रेचयमेचैवसंप्राप्योमुक्तराजभिः ॥ तस्मात्तेषामुपास्यःसविराण्नामातदाश्रय॥॥श्रीस्तयोः

वल्क्यःपितामेमन्यतनाननुशिष्यहरेतेति ॥ ७ ॥ इतिषडाचार्यब्राह्मणम् ॥ ६ ॥ १ ॥

जनकोहवैदेहःकूर्चादुपावसर्पन्नुवाचनमस्तेस्तुयाज्ञवल्क्यानुमाशाधीतिसहोवाचयथावैस
म्राण्महांतमध्वानमेष्यन्रथंवानावंवासमाददीतैवमेवैताभिरुपनिषद्भिःसमाहितात्मास्येवंवृंदा
रकआढ्यःसन्नधीतवेदउक्तोपनिषत्कइतोविमुच्यमानःक्वगमिष्यसीतिनाहंतद्भगवन्वेदयत्रग

स्तुतिरेषाहिप्राणेनक्रियतेसदा ॥ कर्णौपिधाययाज्ञेयासर्ववेदात्मिकाहिसा ॥ काशनात्सर्वजीवानामाका
शइतिसास्तुतिः ॥ जायतांसर्वजीवानांसविष्णुर्दक्षिणाक्षिगः ॥ तस्यपूर्वदिशींद्राग्नीसभार्यौसंप्रतिष्ठितौ ॥
यमराक्षसौदक्षिणस्यांवरुणोवायुरेवच ॥ पश्चिमायामुत्तरस्यांसोमेशानौप्रतिष्ठितौ ॥ ब्रह्माप्रधानवायु
श्चतथोर्ध्वायांदिशिस्थितौ ॥ अधरस्यांशेषकामौसभार्याःसर्वएवच ॥ एकैकस्यांहिचत्वारोनेतृत्वात्प्राण
नामकाः ॥ इंद्रियाभिमतेश्चैवप्राणाइत्येवशब्दिताः ॥ त्वत्प्रसादाद्यदभयमस्माकंप्राप्तंतदेवतवतृप्तयेस्तुना

न्यद्वयंप्रत्युपकर्तुंशक्नुमइत्यर्थः ॥ सभगवान्स्वकृतेनतुष्येदितिवत् ॥ इंधोदीप्तः ॥ जीवभोगस्यभोक्तेशो



मिष्यामीत्यर्थवैलेहंतद्वक्ष्यामियत्रगमिष्यसीतिसहोवाचब्रवीतुभगवानिति ॥ १ ॥ इंधोहवै
नामैषयोयंदक्षिणेक्षन्पुरुषस्तंवाएतमिंधꣳसंतमिंद्रइत्याचक्षतेपरोक्षेणैवपरोक्षप्रियाइवहिदेवाः
प्रत्यक्षद्विषः ॥ २ ॥ अथैतद्वामेक्षिणिपुरुषरूपमेषास्यपत्नीविराट्तयोरेपसꣳस्तावोयएषोंत
र्हृदयआकाशोऽथैनयोरेतदन्नंयएषोंतर्हृदयेलोहितपिंडोथैनयोरेतत्प्रावरणंयदेतदंतर्हृदयेजा
लकमिवाथैनयोरेषासृतिःसंचरणीयैषाहृदयादूर्ध्वानाड्युच्चरतियथाकेशःसहस्रधाभिन्नएवम
स्यैताहितानामनाड्योंतर्हृदयेप्रतिष्ठिताभवंत्येताभिर्वाएतदास्रवतितस्मादेषप्रविविक्ताहारत
रइवैवभवत्यस्माच्छारीरादात्मनः ॥ ३ ॥ तस्यप्राचीदिक्प्राञ्चःप्राणादक्षिणादिग्दक्षिणाः
प्राणाःप्रतीचीदिक्प्रत्यञ्चःप्राणाउदीचीदिगुदञ्चःप्राणाऊर्ध्वादिगूर्ध्वाःप्राणाअवाचीदिगवाञ्चः
प्राणाःसर्वादिशःसर्वेप्राणाःसएषनेतिनेत्यात्माऽगृह्योनहिगृह्यतेऽशीर्योनहिशीर्यतेअसंगोनहि
सज्यतेऽसितोनव्यथतेनरिष्यत्यभयंवैजनकप्राप्तोसीतिहोवाचयाज्ञवल्क्यःसहोवाचजनकोह
वैदेहोऽभयंत्वागच्छताद्ययाज्ञवल्क्ययोनोभगवन्नभयंवेदयसेनमस्तेस्त्विमेविदेहाअयमहम
स्मि ॥ ४ ॥ द्वितीयंकूर्चब्राह्मणम् ॥ ६ ॥ २ ॥ ॥ ॥



जीवस्तद्भोगभुङ्नतु ॥ विविक्तभुगिवातोसौभगवान्पुरुषोत्तमइतिपाद्मे॥ ॥ इतिकूर्चब्राह्मणम् ॥६॥२॥

याज्ञवल्क्योवरंदत्त्वाराज्ञासंवादकामुकः ॥ वैदेहनगरंप्रायात्संतोयच्छास्त्रलोलुपाइतिस्कांदे ॥ तथापिस
म्राडेवपूर्वंपप्रच्छ ॥ आत्माभगवानेवास्यज्योतिः ॥ भावेऽभावेपिसूर्यादेर्जीवानांविष्णुरेवहि ॥ ज्योति

जनकꣳहवैदेहंयाज्ञवल्क्योजगामसमेतेनवदिष्यइत्यथहयज्जनकश्चवैदेहोयाज्ञवल्क्यश्चा
ग्निहोत्रेसमूदातेतस्मैहयाज्ञवल्क्योवरंददौसहकामप्रश्नमेववव्रेतꣳहास्मैददौतꣳहसम्राडेवपूर्वं
पप्रच्छ ॥ १ ॥ याज्ञवल्क्यकिंज्योतिरयंपुरुषइत्यादित्यज्योतिःसम्राडितिहोवाचादि
त्येनैवायंज्योतिषास्तेपल्ययतेकर्मकुरुतेविपल्येतीत्येवमेवैतद्याज्ञवल्क्य ॥ २ ॥ अस्त
मितआदित्येयाज्ञवल्क्यकिंज्योतिरेवायंपुरुषइतिचंद्रमाएवास्यज्योतिर्भवतीतिचंद्रमसैवा
यंज्योतिषास्तेपल्ययतेकर्मकुरुतेविपल्येतीत्येवमेवैतद्याज्ञवल्क्य ॥ ३ ॥ अस्तमित
आदित्येयाज्ञवल्क्यचंद्रमस्यस्तमितेकिंज्योतिरेवायंपुरुपइत्यग्निरेवास्यज्योतिर्भवतीत्यग्नि
नैवायंज्योतिषास्तेपल्ययतेकर्मकुरुतेविपल्येतीत्येवमेवैतद्याज्ञवल्क्य ॥ ४ ॥ अस्त
मितआदित्येयाज्ञवल्क्यचंद्रमस्यस्तमितेशांतेग्नौकिंज्योतिरेवायंपुरुषइतिवागेवास्यज्यो-
तिर्भवतीतिवाचैवायंज्योतिषास्तेपल्ययतेकर्मकुरुतेविपल्येतीतितस्माद्वैसम्राडपियत्रस्वः
पाणिर्नविनिर्ज्ञायतेऽथयत्रवागुच्चरत्युपैवतत्रन्येतीत्येवमेवैतद्याज्ञवल्क्य ॥ ५ ॥ अस्त
मितआदित्येयाज्ञवल्क्यचंद्रमस्यस्तमितेशांतेग्नौशांतायांवाचिकिंज्योतिरेवायंपुरुषइत्यात्मै

स्तथाप्यभावेतुतज्ज्ञेयंहिविशेषतः ॥ अस्वातंत्र्यात्तुजीवस्यद्योतयन्बुद्धिमस्यसः ॥ प्रवर्तयतिसर्वेशस्त
मस्यपिजनार्दनइतिच ॥ स्वातंत्र्याद्ध्यायतीवासौध्यायय्ञ्जीवमंजसा ॥ गृह्णातीवग्राहयन्सजीवंसर्वेश्व

रेश्वरः ॥ सदाविज्ञानपूर्णोसौसमानोसौसदासमः ॥ अविकारात्समानःसञ्जीवमादायसंचरेत् ॥ उभौलो
कौस्वापकत्वाद्भूत्वासौस्वमनामकः ॥ इमंलोकंजायदाख्यंमृत्युरूपात्मकंसदा ॥ बहुपापैकहेतुत्वात्तार
येस्वममानयन् ॥ इमंलोकंचभूराख्यंतारयित्वांतरिक्षगम्॥जीवंकुर्यान्मृतौविष्णुर्भूलोकःक्षिप्रमृत्युमान्॥
बहवोमृत्यवश्चात्रमृत्योरूपाण्यतस्त्वयम्॥पापहेतुत्वतश्चायंभूर्लोकोमृत्युरूपकः॥जाग्रच्चपृथिवीचैवद्यौः
सुषुप्तिस्तथैवच ॥ स्वमश्चैवांतरिक्षंचज्ञेयाअन्योन्यनामकाः ॥ तद्द्वयभिप्रायिकायस्मादुभौलोकाविति श्रु
तिः॥सवाअयंजायमानइतिचद्व्याश्रयाश्रुतिः ॥ यस्यज्योतिरयंविष्णुःसपरामृश्यतेतथा॥यदातुभगवानुक्त

वास्यज्योतिर्भवतीत्यात्मनैवायंज्योतिषास्तेपल्ययतेकर्मकुरुतेविपल्येतीति ॥ ६ ॥
कतमआत्मेतियोयंविज्ञानमयःप्राणेषुहृद्यंतर्ज्योतिःपुरुषःससमानःसन्नुभौलोकावनुसंचर-
तिध्यायतीवलेलायतीवसहिस्वमोभूत्वेमंलोकमतिक्रामतिमृत्योरूपाणि ॥ ७ ॥ सवाऽयं
पुरुषोजायमानःशरीरमभिसंपद्यमानःपाप्मभिःसंसृज्यतेसउत्क्रामन्म्रियमाणःपाप्मनोविज

स्तदास्वातंत्र्यतोविभुः ॥ म्रियमाणोजायमानइत्युक्तस्तन्नियामकः॥फलदानायपापानांग्रहस्संसर्गउच्य
ते ॥ मोक्षदानेफलादानाद्विजहातीतिचोच्यते ॥ जीवोपिमुक्तिकालेतुहातापापस्यकथ्यते ॥ स्वर्गःसुषु
प्तिरित्याख्यामुक्तेरपियतःसमा ॥ परलोकेयतोमुख्योमुक्तिरेवनचापरः ॥ अतोद्युसुप्तिमोक्षाणामभिप्रा
यादिदंवचः ॥ सुप्तिरित्यादिकंस्वेतिविष्णोराख्यासुखत्वतः ॥ पुनरागमनंनाममुक्तानामपिविद्यते ॥ प्र
लयेतुप्रविश्यैनंभगवंतंजनार्दनम् ॥ स्थित्वाज्ञानाविलोपेननिर्गच्छंतिपुनस्ततः ॥ नचज्ञानसुखादीनांते
षांसृष्टौलयेपिवा ॥ विशेषःकश्चिदंतश्चबहिश्चैवरमंतिते ॥ स्वापयत्येनमितिसस्वपितीत्युच्यतेहरिः ॥ आ

नंदपापलोकाद्दर्शनंस्वप्नसुप्तयोः ॥ अपिविष्णोःसदैवास्तिनजीवस्यकथंचन ॥ अत्रायंभगवान्विष्णुर्जीवस्यस्वयमेवतु ॥ ज्योतिर्विशेषतोभूयान्नैवान्यज्ज्योतिरत्रयत्॥नहिजीवःस्वयंद्रष्टुंसुप्तःशक्नोतिहिध्रुवम्॥ अतःसनैवजीवोयंसर्वंपश्यतिसूक्ष्मदृक् ॥ स्वप्नेंतरिक्षेस्वर्गेवानरथाद्याःपुरास्थिताः ॥ तदैवतत्कर्मयोग्यान्निर्मिमीतेहरिःस्वयमित्यादिमहामीमांसायाम्॥जीवपक्षेप्रसिद्धत्वात्कतमआत्मेतिप्रश्नोनयुक्तः॥ नचजीवःसमानःसन्नुभौलोकौसंचरति ॥ सुखदुःखविशेषवत्त्वात् ॥ नचसुखदुःखादेर्मिथ्यात्वेकिंचिन्मानम् ॥ याथातथ्यतोर्थान्व्यदधाच्छाश्वतीभ्यःसमाभ्यः॥असत्यमप्रतिष्ठंतेजगदाहुरनीश्वरम् ॥ वैधर्म्याच्चनस्वप्ना

**हाति ॥ ८ ॥ तस्यवाएतस्यपुरुषस्यद्वेएवस्थानेभवतइदंचपरलोकस्थानंचसंध्यंतृतीयंस्वप्नस्थानंतस्मिन्संध्येस्थानेतिष्ठन्नेतेउभेस्थानेपश्यतीदंचपरलोकस्थानंचाथयथाक्रमोयंपरलोकस्थानेभवतितमाक्रममाक्रम्योभयान्पाप्मनआनंदांश्चपश्यतिसयत्रप्रस्वपित्यस्यलोकस्यसर्वावतोमात्रामुपादायस्वयंविहत्यस्वयंनिर्मायस्वेनभासास्वेनज्योतिषाप्रस्वपित्यत्रायंपुरुषःस्व**

दिवदित्यादिभगवद्वचनविरुद्धत्वाच्च ॥ नचैतन्नासीदस्तिभविष्यतीत्यनुभवः ॥ कदाचिद्भविष्यतीत्यत्रकिंचिन्मानम् ॥ किंचित्कालंस्थिरत्वमात्रस्यशून्यवादिनामपिसिद्धत्वाद्वैधर्म्याच्चनस्वप्नादिवदित्यादिवचनंव्यर्थंस्यात्॥ अतोनकदाचिदस्यनासीदस्तिभविष्यतीत्यनुभवोभविष्यतीत्यभिप्रायेणैवतद्वचनम्॥ नचतथानुभवेशून्यस्यानिर्वचनीयस्यचकश्चिद्विशेषः ॥ नचशून्यवादिनांतद्वादिनांचकश्चिद्विशेषोमोक्षे ॥ नचनित्यज्ञानस्वरूपमस्तीतिवचनेनकश्चिविशेषः ॥ ज्ञेयाभावेज्ञानस्याप्यभावात् ॥ नहिज्ञेयरहितंज्ञानंनामास्तीत्यत्रकिंचिन्मानम्॥नचस्वविषयंतदितितेषांपक्षः॥नदाकर्तृकर्मविरोधआपततीतिहितेषांवचनम् ॥

नचजानातीत्यादिकर्तृत्वंज्ञानस्यतैरंगीक्रियते ॥ निर्विशेषत्वांगीकारात् ॥ अतःशून्यवादिनएवतेपि ॥ स्व
मोभूत्वास्वापकोभूत्वा ॥ नहिजीवोपिस्वमएवभवति ॥ स्वापंनयतीतिस्वमइतिचव्युत्पत्तिः ॥ जायमा
नोम्रियमाणःस्वपितीत्यादितुकत्वाविवाहंतुकुरुप्रवीराः ॥ तदेतन्मेविजानीहियथाहंमंदधीर्हरे ॥ सुखंबु
ध्येयदुर्बोधंयेषांभवदनुग्रहात् ॥ जज्ञेबहुज्ञंपरमाभ्युदारम्॥द्रष्टुश्चक्षुषोनास्तिजिह्वेत्यादिवदंतर्णीतणिच्त्वे
नभवति॥ स्वातंत्र्यस्नेहयोरंतर्णीतणिजितिहिसूत्रम्॥ कथमन्यथास्वयंनिहत्यस्वयंनिर्मायस्रवंत्यःसृजते ॥
सहिकर्तास्वमेनशारीरमभिप्रहत्यासुप्तःसुप्तानभिचाकशीतीत्यादियुज्यते ॥ उक्तार्थेचस्वमेनशारीरमित्या
दिजीवेश्वरभेदमंत्राउक्ताःप्रमाणत्वेन ॥ ईश्वरोजीवस्यभयानिपश्यन्जक्षदिवहसदिवप्राज्ञेनात्मनासंपरि

यंज्योतिर्भवति ॥ ९ ॥ नतत्ररथारथयोगानपंथानोभवंत्यथरथान्रथयोगान्पथःसृजतेनतत्रा
नंदामुदःप्रमुदोभवंत्यथानंदान्मुदःप्रमुदःसृजतेनतत्रवेशांताःपुष्करिण्यःस्रवंत्योभवंत्यथवेशां
तान्पुष्करिण्यःस्रवंत्यःसृजतेसहिकर्ता ॥ १० ॥ तदेतेश्लोकाभवंति स्वमेनशारीरमभिप्र

ष्वक्तःप्राज्ञेनात्मनान्वारूढइत्यादिषुचाभ्यासेनसर्वत्रभेदएवनिर्दिश्यतेसुषुप्त्युत्क्रांत्योर्भेदेनेतिचनिर्णयात्म
कंभगवद्वचनम्॥ नचावस्थाभेदेनजीवभेदोव्यावहारिकोप्यस्तीत्यत्रकिंचिन्मानम्॥नहिजाग्रत्स्वप्नस्थश्च
द्वावित्यज्ञप्रयोगोपिकश्चिदस्तिलौकिकः ॥ नचभ्रमस्तादृशः ॥ तस्माद्भगवानेवात्रोच्यतेसर्वकर्तृत्वेन ॥
वेशांतावेश्यागृहाः ॥ सुषुप्तिमोक्षोभयविवक्षयैवतद्वचनमपिभगवताप्युक्तंस्वाप्ययसंपत्त्योरन्यतरापे
क्षमाविष्कृतंहीति ॥ उभयापेक्षमित्युक्तेमोक्षस्थसुप्तिरितिमंदस्याशंकास्यादतोमोक्षेसुप्तिरेवनास्तीतिज्ञा
पयितुमन्यतरापेक्षमित्युक्तंनत्वन्यतरएवार्थइति ॥ ज्ञानेविकल्पायोगात् ॥ अतोवस्थाश्चलोकाश्चसर्वे

विवक्षिताः ॥ सर्वांवतआसमंतात्सर्वंवतःसर्वज्ञानान्युपादाय ॥ बाह्यप्रकाशोभेत्युक्तोज्योतिरांतरउच्यते ॥ सुखंस्वरूपभूतंयदानंदइतिकथ्यते ॥ मुन्नामविषयोत्थंयत्प्रकृष्टविषयात्प्रमुदितिच ॥ शुक्रंजीवमादाय ॥ शोकेनरत्यायुक्तत्वाच्छुक्रोजीवउदाहृतइतिच ॥ रत्यानंदौपूर्णनित्यौहितौतेनहिरण्मयः ॥ स्वर्णवर्णतयावापिवासुदेवोहिरण्मयः ॥ प्रधानहंसरूपत्वादेकहंसइतीरितइतिच ॥ अंशेनजीवमादायक्चिदीशोबहिर्नयेत् ॥ स्वमेषुफल्गुनंयद्वत्कृष्णःकैलासमानयत् ॥ वासनारूपकान्प्रायस्त्वंतरेवप्रदर्शयेत् ॥ अतोबहिःकुलायादित्यपिवाङ्नविरुध्यतइतिच ॥ उच्चावचेषुरूपेषुप्रविशन्पुरुषोत्तमः ॥ बहुरूप

हत्यासुप्तःसुप्तानभिचाकशीति ॥ शुक्रमादायपुनरेतिस्थानंहिरण्मयःपुरुषएकहंसः॥११॥
प्राणेनरक्षन्नवरंकुलायंबहिष्कुलायादमृतश्चरित्वा ॥ सईयतेऽमृतोयत्रकामꣳहिरण्मयः
पुरुषएकहꣳसः ॥ १२ ॥ स्वमांतउच्चावचमीयमानोरूपाणिदेवःकुरुतेबहूनि ॥ उतेवस्त्री
भिःसहमोदमानोजक्षदुतेवापिभयानिपश्यन् ॥ १३ ॥ आराममस्यपश्यंतिनतंपश्यतिक

त्वमायातिस्वमेसजगतःप्रभुरितिच ॥ मोदरूपत्वतोविष्णोस्त्रीःभिर्मोदोविडंबनम् ॥ जीवस्यमृतिकालेचस्वमकालेचकेशवः ॥ एवंविधानिकर्माणिकुर्वाणोपिनदृश्यते ॥ तथाजागरितेसुप्तौमुक्तैरेवतुदृश्यते॥ तथापिनायतेभ्यस्तंज्ञानीब्रूयाज्जनार्दनम् ॥ यस्यगोचरतांविष्णुःकदाचिन्नप्रपद्यते ॥ तस्यायतस्यपापस्यभेषजंनहिविद्यते ॥ सुप्तिकालेप्ययंविष्णुःसदाजागरितात्मकः ॥ यानिजागरितेपश्येत्तानिसुप्तेपिपश्यति ॥ नित्यज्ञानस्वरूपत्वाद्भगवान्पुरुषोत्तमः ॥ नित्यानन्यप्रकाशत्वेप्यन्यज्योतिर्यदाभवेत ॥ तदास्यात्संशयोऽज्ञानावित्यत्रेतिविशेषणमितिच ॥ जीवस्यापिस्वमावस्थायांजागरित्वेऽस्येति

विशेषणंव्यर्थम् ॥ पूर्वोक्तमपिमोक्षायैवभवति॥ अतऊर्ध्वंविशिष्टमोक्षायब्रूहि ॥ स्वयोग्यभगवद्दृष्टेःसर्वैर्मुक्तिरवाप्यते ॥ पुनर्ज्ञानांतराधिक्यात्सुखाधिक्यंविमोक्षगमितिब्रह्मतर्के ॥ स्वप्नसुषुप्त्युभयाभिप्रायेणतानिसुप्तइत्युक्तम्॥तत्रसुषुप्तिमात्राभिप्रायेणसवाएषएतस्मिन्संप्रसादइत्याह॥यत्रोभयविवक्षास्यात्परा

श्नेति ॥ तंनायतंबोधयेदित्याहुर्दुर्भिषज्यंहास्मैभवतियमेषनप्रतिपद्यतेऽथोखल्वाहुर्जागरितदेशएवास्यैषइति ॥ यानिह्येवजाग्रत्पश्यतितानिसुप्तइत्यत्रायंपुरुषःस्वयंज्योतिर्भवति सोहंभगवतेसहस्रंददाम्यतऊर्ध्वंविमोक्षायब्रूहीति ॥ १४ ॥ सवाएषएतस्मिन्संप्रसादेरत्वाचरित्वादृष्ट्वैवपुण्यंचपापंचपुनःप्रतिन्यायंप्रतियोन्याद्रवतिस्वप्नायैवसयत्तत्रकिंचित्पश्यत्यनन्वागतस्तेनभवत्यसंगोह्ययंपुरुषइत्येवमेवैतद्याज्ञवल्क्यसोहंभगवतेसहस्रंददाम्यतऊर्ध्वंविमोक्षायैवब्रूहीति ॥ १५ ॥ सवाएषएतस्मिन्स्वप्नेरत्वाचरित्वादृष्ट्वैवपुण्यंचपापंचपुनःप्रतिन्यायंप्रतियोन्याद्रवतिबुद्धांतायैवसयत्तत्रयत्किंचित्पश्यत्यनन्वागतस्तेनभवत्यसंगोह्ययंपुरुषइत्येवमेवैतद्याज्ञवल्क्यसोहंभगवतेसहस्रंददाम्यतऊर्ध्वंविमोक्षायैवब्रूहीति ॥ १६ ॥ सवाएषएतस्मिन्बुद्धांतेरत्वाचरित्वादृष्ट्वैवपुण्यंचपापंचपुनःप्रतिन्यायंप्रतियोन्याद्रवतिस्वप्नांतायैव ॥ १७ ॥ तद्यथामहामत्स्यउभेकूलेअनुसंचरतिपूर्वंचापरंचैवमेवायंपुरुषएतावुभावंतावनुसंचरतिस्वप्नांतंचबुद्धांतंच ॥ १८ ॥ तद्यथास्मिन्नाकाशेश्येनोवासुपर्णोवावि

मर्शस्तदोभयोः॥एकस्यापिभवेन्नैकविवक्षायांक्वचिद्द्वयोरितिशब्दनिर्णये॥ स्वप्नाख्यांतस्थानंस्वप्नांतम् ॥ अंतःस्थानंस्थलंवासःप्रदेशइतिचोच्यतइतिच ॥स्वप्नांतंचबुद्धांतंचेत्यत्रापिस्वप्नांतशब्दःस्वप्नसुषुप्त्युभया

भिप्रायेण ॥ शुभाशुभंतुदृष्ट्वैवस्वप्नेजागरितेपिच ॥ असंस्पृष्टःसदादुःखैश्वरतीशःपुनःपुनः ॥ स्वप्नसु
प्त्यात्मकंकूलमेकंबुद्धात्मकंपरम् ॥ महामत्स्यइवासंगीचरत्येकोजनार्दनः ॥ यंविष्णुंश्येनवच्छ्रांतो
जीवोजागरितेभ्रमन् ॥ स्वप्नेचसुप्तावभ्येतिसंश्रांतःसयहंयथा ॥ स्वित्यानंदःपरोविष्णुस्तमाप्तःसुप्तउ
च्यते ॥ संप्राप्यतमयंजीवःकामयेन्नैवकिंचन ॥ नचस्वप्नसमभ्रांतिज्ञानंयातिकदाचन ॥ सुषुप्तौ
चकिमुज्ञानान्मुक्तौप्राप्तोजनार्दनम् ॥ निहितोभगवान्यत्रहितानाड्यःप्रकीर्तिताः ॥ नानावर्णोहरि
स्तासुनानारूपीव्यवस्थितः ॥ तासांमध्येसुषुम्नाचतत्रसुप्तिंव्रजत्ययम् ॥ ताएवकंठदेशस्थाजीवस्तत्रव्य

परिपत्यश्रांतःसंहृत्यपक्षौसल्लयायैवध्रियतएवमेवायंपुरुषएतस्माअंतायधावतियत्रसुप्तोन
कंचनकामंकामयतेनकंचनस्वप्नंपश्यति ॥ १९ ॥ तावाअस्यैताहितानामनाड्योयथाके
शःसहस्रधाभिन्नस्तावताणिम्नातिष्ठंति शुक्लस्यनीलस्यपिंगलस्यहरितस्यलोहितस्यपूर्णाअ
थयत्रैनंघ्नंतीवजिनंतीवहस्तीवविच्छाययतिगर्तमिवपतति ॥ यदेवजाग्रद्भयंपश्यतितदत्रा
विद्ययामन्यतेऽथयत्रदेवइवराजेवाहमेवेदंसर्वोस्मीतिमन्यतेसोस्यपरमोलोकः ॥ २० ॥

वस्थितः ॥ स्वमान्पश्यतिजाग्रद्भयंचप्रतिपद्यते ॥ अइत्यादिश्यतेविष्णुरविद्यातन्निरीक्षणम् ॥ तेनस्व
मानयंपश्येज्जीवोजागरितंतथेतिमहामीमांसायाम् ॥ जिनंतीवताडयंतीव ॥ विच्छाययतिभयेनविच्छा
यंकरोति ॥ अहमेवेदंसर्वोस्मिस्वयोग्यतापेक्षयापूर्णोस्मि ॥ विषयभोगानन्वितस्वरूपानंदेनेत्येवशब्दः ॥
इदमितिपूर्णत्वविशेषणम् ॥ अजानतामहिमानंतवेदमितिवत्स्वपूर्णतामापरोक्ष्येणानुभूयेदंपूर्णोस्मीतिम
न्यते ॥ क्वचित्तद्भावशेषःस्यात्क्रियाशेषःक्वचिद्भवेत् ॥ क्वचित्पदार्थशेषःस्यादिदमादिस्त्रिधास्मृतइतिश

द्वनिर्णये ॥ नहिराजादेवोवासर्वंजगद्भवति ॥ राज्ञोभोगापेक्षयापूर्तिर्भवतीतिदेवदृष्टांतः ॥ प्रत्यक्षदर्शनार्थंराजदृष्टांतः ॥ स्वयोग्यपूर्तेःस्वातंत्र्याद्राज्ञोदेवगणस्यच ॥ सर्वभावस्तथामोक्षेनतुसर्वस्वरूपतइतिब्रह्मतर्के ॥ छंदसामप्यवाच्यत्वादतिच्छंदाहरिःस्मृतः ॥ तेनाश्लिष्टोस्त्वयंजीवःसुप्तोमुक्तोथवाभवेत् ॥ विष्णोरूपंहियन्नित्यमभयंपापवर्जितम् ॥ आप्तकामंचपूर्णत्वादात्मकामंसुखत्वतः ॥ शोकंविनासुरमणा

तद्वाअस्यैतदतिच्छंदाअपहतपाप्माऽभयꣳरूपꣳतद्यथाप्रिययास्त्रियासंपरिष्वक्तोनबाह्यंकिंचनवेदनांतरमेवमेवायंपुरुषःप्राज्ञेनात्मनासंपरिष्वक्तोनबाह्यंकिंचनवेदनांतरंतद्वाअस्यैतदाप्तकाममात्मकाममकामंरूपंशोकांतरम्॥२१॥अत्रपिताऽपिताभवतिमाताऽमातालोकाअलोकादेवाअदेवावेदाअवेदाअत्रस्तेनोऽस्तेनोभवतिभ्रूणहाऽभ्रूणहाचांडालोऽचांडालःपौल्कसोऽपौल्कसःश्रमणोऽश्रमणस्तापसोऽतापसोनन्वागतंपुण्येनानन्वागतंपापेनतीर्णोहितदासर्वाꣳश्छोकान्हृदयस्यभवति ॥ २२ ॥ यद्वैतन्नपश्यतिपश्यन्वैतन्नपश्यतिनहिद्रष्टुर्दृष्टेर्विपरिलोपोविद्यतेऽविनाशित्वान्नतुतद्वितीयमस्तिततोन्यद्विभक्तंयत्पश्येत् ॥ २३ ॥ यद्वैतन्नजिघ्रतिजिघ्रन्वैतन्नजिघ्रतिनहिघ्रातुर्घ्रातेर्विपरिलोपोविद्यतेऽविनाशित्वान्नतुतद्वितीयसम

च्छोकांतरमितीरितम् ॥ तेनाश्लिष्टःस्वपुत्राणांदायादानांनवैपिता ॥ तेषांदुःखाददुःखित्वान्नमातालोकमान्यपि ॥ अलोकमानान्नोलोकोदेवोपिस्वाधिकारतः ॥ वर्षणादेर्व्युत्थितत्वान्नदेवोवेदमान्यपि ॥ अवेदमानान्नोवेदःपापीपापफलाप्ययात् ॥ अपापःश्रमणश्चापियतिधर्मात्समुत्थितः ॥ अयतिस्तापसश्चैवमनिष्टंपुण्यमप्यमुम्॥नान्वेत्येवंविधोमुक्तोविष्णोःसंप्राप्तिमात्रतः ॥यत्तन्नविष्णुःपश्येतपश्यन्वैतन्नपश्य

ति ॥ नित्यज्ञानस्वरूपत्वात्तत्समंनान्यदिष्यतइतिच ॥ यत्किंचिद्वस्तुभगवतानदृष्टंतन्नास्त्येव ॥ विद्यमा
नंसर्वंपश्यत्येव ॥ नहिद्वितीयोद्रष्टायोभक्तत्वेनजगत्पश्यति ॥ तद्विरोधेनपश्यत्यभ्रांतः ॥ तद्दृष्टादन्यद्वा॥
नान्योतोस्तिद्रष्टेत्यादिश्रुतेः ॥ यत्तदृष्टंभगवतातदेवास्तिनचापरम् ॥ नह्यन्योविद्यतेद्रष्टायःपश्येत्तददर्शि
नम् ॥ ब्रह्मादिरपियोद्रष्टापश्येत्तस्यप्रसादतः ॥ तददृष्टंकुतःपश्येदतःकोवाविरोधतइतिच ॥ यदवतारादि
कंद्वैतत्वेननपश्यतिनतुतत्तमोद्वितीयम् ॥ नित्यज्ञानत्वाद्भ्रमाभावात् ॥ यद्विभक्तत्वेनविष्णुःपश्यतितत्ततो
न्यदस्तिचेतिच ॥ यस्माद्विष्णुर्विश्वंविभक्तत्वेनैवपश्यतितस्मात्तदन्यदस्त्येव ॥ नचजगदभावोत्रोच्यते ॥

स्तिततोन्यद्विभक्तंयज्जिघ्रेत् ॥ २४ ॥ यद्वैतन्नरसयतेरसयन्वैतन्नरसयतेनहिरसयितूरसयते
र्विपरिलोपोविद्यतेऽविनाशित्वान्नतुतद्द्वितीयमस्तिततोन्यद्विभक्तंयद्रसयेत् ॥ २५ ॥ यद्वै
तन्नवदतिवदन्वैतन्नवदतिनहिवक्तुर्वक्तेर्विपरिलोपोविद्यतेऽविनाशित्वान्नतुतद्द्वितीयमस्तित
तोन्यद्विभक्तंयद्वदेत् ॥ २६ ॥ यद्वैतन्नशृणोतिशृण्वन्वैतन्नशृणोतिनहिश्रोतुःश्रुतेर्विप

अन्यद्विभक्तमितिविशेषणवैयर्थ्यात् ॥ नचभ्रांतिकल्पितंजगदित्यत्रकिंचिन्मानम् ॥ असत्यमप्रतिष्ठंते
जगदाहुरनीश्वरमित्यादिनिंदनाच्च ॥ द्रष्ट्रंतरनिषेधेनतस्यैवसर्वद्रष्टृत्वमेवचयत्रवाअन्यदिवस्यादित्यादि
नोपसंह्रियते ॥ अन्यथान्योन्यत्पश्येदित्यादिकमनर्थकम् ॥ नह्येकस्यान्यत्वेऽन्यस्यानन्यत्वंभवति ॥
अतोद्वितीयोन्यशब्दोव्यर्थएवस्यात् ॥ नचतत्पक्षेदृश्यत्वादिकमात्मनोविद्यते ॥ तस्माद्यत्रकिंचिदपिस्वा
तंत्र्यमन्यस्यभवतितत्रैवभगवतोन्यःपुरुषोभगवद्दृष्टादन्यत्पश्यतीत्यादियुज्यतेतदेवनास्तिस्वतः ॥ अतोना
न्योन्यत्पश्येदित्यर्थः ॥ अन्यदिवेतीवशब्दोल्पस्वातंत्र्यार्थे ॥ राज्ञःपृथगिवभृत्यइतिवत् ॥ उपमार्थे

तथाल्पत्वेपीवशब्दःप्रयुज्यतइतिशब्दनिर्णये ॥ स्वरूपभेदेस्वातंत्र्येविरोधेचविलक्षणे ॥ अन्यशब्दश्च
तुष्वेंषुप्रयोक्तव्योमनीषिभिरितिच ॥ अनन्याःसर्वएवैतेयोधाःकुंतीसुनादपीतिप्रयोगाच्च ॥ दशरात्रैर्भुक्त
मिवनसम्यक्स्वल्पभोजनादितिच ॥ प्रकृतेःपुरुषाणांचनाणुमात्रमपिकंचित् ॥ स्वातंत्र्यंविष्णुनासर्वेनि
यताःसर्वदेवहि॥तदद्दृष्टंततःकोहिपश्येत्किंवापितद्भवेदितिमहामीमांसायाम् ॥ अभेदेनस्वावताराश्चीवाजी
वंतुभेदतः ॥ यदभ्रमोहरिर्वेत्तिसतदन्यच्चतद्व्यमितिच ॥ अन्यदप्यस्वातंत्र्येणान्यवदवस्थितंयस्मिन्पक्षे
स्तितत्रैवान्यदर्शनादिव्यवहारोयुज्यते ॥ सप्तमरसादिदर्शनाभावादितिच ॥ सर्वेंद्रियोपभोगोपिविष्णोःस्वा

रिल्लोपोविद्यतेऽविनाशित्वान्नतुतद्द्वितीयमस्तिततोन्यद्विभक्तंयच्छृणुयात् ॥ २७ ॥ यद्वैत
न्नमनुतेमन्वानोवैतन्नमनुतेनहिमंतुर्मतेर्विपरिल्लोपोविद्यतेऽविनाशित्वान्नतुतद्द्वितीयमस्तित
तोन्यद्विभक्तंयन्मन्वीत ॥ २८ ॥ यद्वैतन्नस्पृशतिस्पृशन्वैतन्नस्पृशति नहिस्प्रष्टुःस्पृष्टे
र्विपरिल्लोपोविद्यतेऽविनाशित्वान्नतुतद्द्वितीयमस्ति ततोन्यद्विभक्तंयत्स्पृशेत् ॥ २९ ॥ य
द्वैतन्नविजानातिविजानन्वैतन्नविजानाति नहिविज्ञातुर्विज्ञातेर्विपरिल्लोपोविद्यतेऽविनाशि

त्मनिविद्यते ॥ यदिजगदेवनस्यात्तदाकथंमोक्षेप्यन्यानिभूतानिमात्राउपजीवंतीतियुज्यते ॥ मोक्षप्रकर
णंचैतत् ॥ स्वाप्ययसंपत्त्योरन्यतरापेक्षमाविष्कृतंहीतिभगवद्वचनम् ॥ यदाहिसलिलत्वेनप्रकृतिर्व्याप्य
तिष्ठति ॥ तदातस्यांपरोविष्णुरेकोद्रष्टाव्यवस्थितः॥ अविरोधादद्वितीयएकोसौसमवर्जनात् ॥ बृहज्ज्ञाना
द्ब्रह्मलोकःसदैवपुरुषोत्तमः ॥ सर्वगत्वादस्यगतिःपराविष्णोःसदैवहि ॥ पूर्णैश्वर्यादस्यसंपत्परमासंप्रकीर्ति
ता ॥ सर्वज्ञात्परमोलोकोविष्णोरानंदएवच ॥ स्वातंत्र्यात्परमोज्ञेयःसहिपूर्णःसदोदितः ॥ प्रतिबिंबरूपवि

ष्टास्तदानंदस्यचाखिलाः ॥ मुक्ताब्रह्मादयोश्चंतितारतम्येननित्यदा ॥ सलीलःसलिलइतिवा ॥ अन्ये
भ्यस्तुविमुक्तेभ्यआनंदश्चक्रवर्तिनाम् ॥ मुक्तानांहिशतोद्रिक्तःपितॄणांतेभ्यएवच ॥ तेभ्योप्यृषीणांमुक्ता
नांकर्मदेवाभिधायिनाम् ॥ तेभ्यश्चमुक्तदेवानांतेभ्यश्चोमापतेस्तथा ॥ तस्माच्चब्रह्मणस्त्वेवंमुक्तस्यगरुडा
दपि ॥ एषएवततोविष्णुःपूर्णानंदःप्रकीर्तितः॥ यस्यब्रह्मापिमुक्तःसन्विष्णुमात्रंसमश्नुतइतिच ॥ राद्धोमु
क्तः ॥ मनुष्याणांयोग्यतयास्वसमेभ्यःप्रयत्नाधिक्यादाधिक्यंमुक्तौप्राप्तुंशक्यतइत्यतःसमृद्धइत्युक्तम्॥

त्वान्नतुतद्द्वितीयमस्ति ततोन्यद्विभक्तंयद्विजानीयात् ॥ ३० ॥ यत्रवाअन्यदिवस्यात्त
त्रान्योन्यत्पश्येदन्योन्यज्जिघ्रेदन्योन्यद्रसयेदन्योन्यद्वदेदन्योन्यच्छृणुयादन्योन्यन्मन्वीता
न्योन्यत्स्पृशेदन्योन्यद्विजानीयात् ॥ ३१ ॥ सलिलएकोद्रष्टाद्वैतोभवत्येषब्रह्मलोकः
सम्राडितिहैनमनुशशासयाज्ञवल्क्यएषास्यपरमागतिरेषास्यपरमासंपदेषोस्यपरमोलोकए
षोस्यपरमआनंदएतस्यैवानंदस्यान्यानिभूतानिमात्रामुपजीवंति ॥ ३२ ॥ सयोहवै
मनुष्याणाꣳराद्धःसमृद्धोभवत्यन्येषामधिपतिस्सर्वैर्मानुष्यकैर्भोगैःसंपन्नतमःसमनुष्याणांपर

यावत्साधयितुंशक्यतेतावत्साधनैःसंपूर्णत्वेनमुक्तइत्यर्थः ॥ स्वराष्ट्रेज्ञानोपदेष्टृत्वान्मुक्तावपितेषामधिप
तिः ॥ ज्ञानपूर्वकत्वेनमनुष्यत्वेदानादिकंकृत्वातत्फलैरपिभोगैर्मुक्तौसंपन्नतमः ॥ नहास्यकर्मक्षीयतइति
श्रुतेः ॥ अन्यथाराद्धइतिविशेषणंव्यर्थंभवति ॥ समनुष्याणांपरमआनंदइतिस्वरूपानंदश्चात्रोच्य
ते ॥ नह्यमुक्तानांस्वरूपानंदाविर्भावोस्ति ॥ भुज्यतेस्वसुखंमुक्तैराभासोन्यैस्ततोपरइतिच ॥ जि
तलोकाइत्यपिमुक्ताएवोच्यंते ॥ गंधर्वलोकेगंधर्वाणांब्रह्मज्ञानेमुक्तावित्यर्थः ॥ तदाहिब्रह्मज्ञानंसदो

दितमवतिष्ठते ॥ एषब्रह्मलोकःसम्राडित्यादिषुज्ञानस्यैवलोकशब्दोदितत्वात् ॥ यश्वश्रोत्रियइ
तिवचनंतेषामजादीनामपिमुक्तानामेवायंनियमेनानंदशतगुणोद्रेकः ॥ अन्यदातुकदाचिद्भवति ॥
कदाचिद्व्याकुलतयानभवतीतिदर्शयितुम् ॥ चशब्दस्तुश्रोत्रियत्वावृजिनत्वाकामहतत्वादीनांगुणानां
मुक्तौसमुच्चयार्थः ॥ मुक्तस्यैवैतेगुणाभवंतीतिमुक्तस्वीकारार्थंयइतिविशेषणम् ॥ सर्वंश्रुतिफलं
मुक्तैःप्राप्यंनान्येनकेनचित् ॥ अतस्तुश्रोत्रियोमुक्तोह्यन्यःश्रोत्रियकोभवेत् ॥ अदुःखत्वंचतस्यै
वकामैरहततातथा ॥ यःकामितंनप्राप्नोतिसकामहतउच्यते ॥ काम्याप्राप्तेश्वपापाच्चकामात्का

मआनंदोऽथयेशतंमनुष्याणामानंदाःसएषपितॄणांजितलोकानामानंदोऽथयेशतंपितॄणांजित
लोकानामानंदाःसएकोगंधर्वलोकआनंदोऽथयेशतंगंधर्वलोकआनंदःसएकःकर्मदेवानामानं
दोयेकर्मणादेवत्वमभिसंपद्यंतेऽथयेशतंकर्मदेवानामानंदाः सएकआजानदेवानामानंदोयश्च
श्रोत्रियोऽवृजिनोऽकामहतोऽथयेशतमाजानदेवानामानंदाःसएकःप्रजापतिलोकआनंदोय
श्चश्रोत्रियोऽवृजिनोऽकामहतोऽथयेशतंप्रजापतिलोकआनंदाःसएकोब्रह्मलोकआनंदोयश्च

महतःस्मृतः ॥ उभयस्याप्यभावेनमुक्तोकामहतोमतइतिच ॥ आजानदेवाइंद्राद्याजातेभ्यस्तेवरायत
इतिच ॥ प्रजापतिलोकइत्युक्तेनैवमुक्तप्रजापतिसिद्धावपिमुक्तस्यैवप्रजापतेर्ब्रह्मणश्चायंविशेषइतिस्व
रूपकथनार्थंयश्चश्रोत्रियइत्यादि॥अनुपचरितश्रोत्रियादित्वमितिज्ञापयितुमभ्यासः॥सर्वेषामपिमुक्तानां
नियमेनतदस्तीतिज्ञापयितुंच ॥ प्रजास्तुपशुशब्दोक्तापशुपस्तुप्रजापतिरितिच ॥ अथशब्दादेषब्रह्मलो
कइतिविशेषणाच्चद्वितीयब्रह्मलोकशब्देनपरब्रह्मैवोच्यते ॥ अन्यथैषएवपरमआनंदइत्युक्त्वापुनरेषइ

तिशब्दोनर्थकःस्यात् ॥ तस्यैवब्रह्मलोकशब्देनपूर्वमभ्यासाच्च ॥ नचतैत्तिरीयादिश्रुतिविरोधः ॥ शतश ब्दस्यायुतेदशलक्षादावपिसमत्वात् ॥ अतश्चक्रवर्तिभ्योमनुष्यगंधर्वाःशताधिकाः ॥ देवगंधर्वाअयुता धिकाः ॥ पितरोदशलक्षाधिकाइत्यविरोधः ॥ उत्तमगंधर्वापेक्षयापितृभ्योगंधर्वाणामाधिक्यंचयुज्य ते ॥ आजानदेवेभ्योजाताआजानजाइत्यतस्तत्राप्यविरोधः॥यत्राजानजाइत्युपरिपाठस्तत्राजानेभ्योब्र ह्मादिभ्योजातइतिभवति ॥ इंद्रबृहस्पत्यादीनांविशेषस्तुविशेषवचनत्वादत्राप्यंगीकर्तव्यएव ॥ सामा न्यधर्मोबलवान्धर्माद्विशेषिकाद्यथा ॥ बलवद्विशेषवचनंसामान्यवचनात्तथेतिच ॥ नृपामनुष्यगंधर्वा देवाश्चपितरस्तथा ॥ देवैःसहितगंधर्वाऋषयोदेवतास्तथा ॥ इंद्रोबृहस्पतिश्चैवप्रधानेंद्रःपुरंदरः ॥ रुद्रोब्रह्मे

**श्रोत्रियोऽवृजिनोऽकामहतोऽथैषएवपरमआनंदएषब्रह्मलोकःसम्राडितिहोवाचयाज्ञवल्क्यः सोहंभगवतेसहस्रंददाम्यतऊर्ध्वंविमोक्षायैवब्रूहीत्यत्रहयाज्ञवल्क्योबिभयांचकारमेधावी राजासर्वेभ्योमांतेभ्यउदरौत्सीदिति ॥ ३३ ॥ सवाएषएतस्मिन्स्वप्नांतेरत्वाचरित्वा**

तिक्रमशोमुक्ताःशतगुणोत्तराइतिच ॥ अतिप्रयत्नतोयावत्प्राप्तुंशक्यंविमुक्तिगम् ॥ सुखाद्यंतस्यसंप्राप्त्यै ज्ञानश्रेण्यःक्रमात्स्मृताः ॥ एकांश्रेणींप्रविज्ञायतदुत्कृष्टांचतद्वराम् ॥ क्रमेणैवविजिज्ञासुर्जनकःपृच्छति स्मह ॥ पुनःपुनर्विमोक्षायब्रूहीत्यद्धावरात्पुरेतिच ॥ रहस्यमस्यायोग्यंचयदिमामेषपृच्छति ॥ दत्तोमयाव रोस्येतिवक्तव्यंमेभविष्यति ॥ इतिभीतोभवद्राज्ञोयाज्ञवल्क्यःसुमेधयेतिब्रह्मांडे॥ तेभ्यआश्वलादिभ्यः॥ सर्वदाजीवमादायनियमाद्विष्णुरेवहि ॥ जाग्रदादिषुसंयातिनान्यथातुकथंचन ॥ एवंनियमविज्ञस्यैजीवा स्वातंत्र्यवित्तये ॥ परिवृत्तिमवस्थासुसाभ्यासावक्तिहिश्रुतिरितिनिर्णये ॥ अतस्तात्पर्यार्थंपुनर्वचनम् ॥

ग्रामादिकमुत्सर्जद्यायात् ॥ यथाग्रामंपरित्यज्ययात्यनःपुमधिष्ठितम् ॥ एवंदेहंपरित्यज्यविष्णुनाधिष्ठितः पुमानितिच ॥ अणिमानंभगवंतम् ॥ सएषोणिमातेजःपरस्यांदेवतायामितिहिश्रुतिः ॥ उपतपतारोगादिना ॥ आम्रंबाल्येपिपततिपरिणामेह्युदुंबरम् ॥ सम्यक्पाकेयथाश्वत्थंफलंजीवमृतिस्तथा ॥ कलावाम्रोपमाजीवास्त्रेतास्वौदुंबरोपमाः ॥ कृतेश्वत्थसमाश्चैवयांतिब्रह्मवशाःसदेतिपाद्मे ॥ प्राणायैववायुमेवाद्रवत्येषजीवोमोक्षायतत्त्ववित् ॥ तदनुज्ञयैवज्ञानित्वमतस्तंपुनराव्रजेत् ॥ सर्वेपिवायुमासाद्यजायस्वज्ञानमाप्नुहि ॥ इतितस्यवरादेवजायंतेज्ञानिनोखिलाः ॥ पुनस्तंप्राप्नुयुस्तदनुज्ञयेतिप्रवृत्ते ॥ इदंमुक्तजी

दृष्ट्वैवपुण्यंचपापंचपुनःप्रतिन्यायंप्रतियोन्याद्रवतिबुद्धांतायैवतद्यथानःसुसमाहितमुत्सर्जद्यायादेवमेवायंशारीरआत्माप्राज्ञेनात्मनाऽन्वारूढउत्सर्जद्यातियत्रैतदूर्ध्वोच्छ्वासीभवति

॥ ३४ ॥ सयत्रायमणिमानंन्येतिजरयावोपतपतावाणिमानंनिगच्छतितद्यथाम्रंवोदुंबरंवापिप्पलंवाबंधनात्प्रमुच्यतएवमेवायंपुरुषएभ्योंगेभ्यःसंप्रमुच्यपुनःप्रतिन्यायंप्रतियोन्या

वस्वरूपमायाति ॥ अतोनेनसहेदंपरंब्रह्मायातीतिपरब्रह्मणःपूजार्थंप्रतिकल्पंते ॥ यथाराज्ञोध्वजादिकंदृष्ट्वायंध्वजआगच्छतितस्माद्राजायातीतिपूजांप्रतिकल्पंतेतद्वत्॥ अन्यथेदंब्रह्मायातीदमागच्छतीतिद्विरुक्तिर्व्यर्थास्यात् ॥ वीप्सात्वेत्वयमायातीत्येकप्रकारेणशब्दाभ्यासःस्यात् ॥ एकप्रकारशब्दानामभ्यासस्त्वादरार्थकः ॥ स्वरवर्णादिमात्रंवाप्यन्यथाचेत्तदापरः ॥ अर्थःस्यादेषनियमोवाक्येवीप्सापदेतथा ॥ प्रातिस्विकार्थेपिभवेदभ्यासेवातथास्थितइतिशब्दनिर्णये ॥ नचकुत्रचिदादरार्थेद्विरूपप्रयोगोदृष्टोनंतरितः ॥ यदामुक्तोव्रजत्यूर्ध्वंतदातत्सहितोहरिः ॥ नियमाद्दृश्यतेदेवैरमुक्तेनियमोनतु ॥ यथाध्वजादिकं

दृष्ट्वापूजांराज्ञःप्रकुर्वते ॥ एवंविमुक्तिगंदृष्ट्वाविष्णोःपूजांप्रकुर्वनइतितत्त्वनिर्णये ॥ तस्मादणिमानंन्येती
त्यादिनाजीवगतंब्रह्मैवोच्यते ॥ जीवोपतापादितुनैव ॥ जीवमादायगच्छंतमनुयांतिदिवौकसः ॥ प्राणा
भिमानिनोविष्णुंनृपंपरिजनायथेतिच ॥ उग्रास्तुश्रेणयःप्रोक्तायोधाःप्रत्येनसःस्मृताः ॥ ग्रामण्यस्तुचमू
पालास्तेसर्वेद्विविधामताः ॥ राज्ञासहस्थिताश्चैवतथाजनपदेस्थिताः ॥ तेसर्वेपिनियंतव्याःश्रेणीभिर्द्विवि
धैःसदेतिराजनीतौ ॥ अनुयांतिशरीरस्थाअभियांतिस्वलोकगाः ॥ मुक्तमादायगच्छंतंविष्णुंस

द्रवतिप्राणाथैव ॥ ३५ ॥ तद्यथाराजानमायांतमुग्राःप्रत्येनसःसूतग्रामण्योन्नैःपानै
रावसथैःप्रतिकल्पंतेऽयमायात्ययमागच्छतीत्येवꣳहैवंविदꣳसर्वाणिभूतानिप्रतिकल्पंतइदंब्र
ह्मयातीदमागच्छतीति ॥ ३६ ॥ तद्यथाराजानंप्रयियासंतमुग्राःप्रत्येनसःसूतग्रामण्योभिस
मायंत्येवमेवेममात्मानमंतकालेसर्वेप्राणाअभिसमायंतियत्रैतदूर्ध्वोच्छ्वासीभवति ॥ ३७ ॥
इतिज्योतिर्ब्राह्मणम् ॥ ६ ॥ ३ ॥ ॥

सयत्रायमात्मावल्यन्येत्यसंमोहमिवन्येत्यथैनमेतेप्राणाअभिसमायंतिसएतास्तेजोमात्रासम

वेदिवौकसइत्यध्यात्मे ॥ ॥ इतिज्योतिर्ब्राह्मणम् ॥ ६ । २ ॥ ॥
सर्वेषांबलकारित्वाद्बल्योविष्णुःप्रकीर्तितः ॥ तंयदाप्राप्यजीवात्माम्रतेःपूर्वंविमुग्धताम् ॥ यातिविष्णुंत
दादेवायांतितेजःस्वरूपिणः ॥ तानादायहरिश्चक्षुस्थानाद्धृदयमाव्रजेत् ॥ तदानकिंचिज्जानातिजीवो
ब्रह्मसमाश्रितंइतिच ॥ एनंबल्यमभिसमायांति ॥ पराक्स्थितश्चाक्षुषोभगवान्प्रत्यक्पर्यावर्तते ॥ इंधोह
वैनामैषयोयंदक्षिणेक्षन्पुरुषइत्यादिश्रुतेः॥ हृदयेसंस्थितोजीवोविशेषेणहरिस्तथा॥चक्षुरादिषुरूपाणिजा

यत्कालेतयोःसदा॥ बहूनिसंतितान्येवयदेकीभावमाप्नुयुः॥हृदयस्थेनरूपेणतदाजीवोनकिंचन ॥ जानातीतिविदुःप्राज्ञास्तदाविष्णोःस्वतेजसा ॥ द्योततेहृदयाग्रंचतेनद्वारेणकेशवः ॥ निष्क्रामेज्जीवमादायप्राणएनमनुव्रजेत्॥प्राणमन्येतथादेवाविद्याकर्मचयोग्यतेतिमहामीमांसायाम् ॥ कर्माभिमानीगरुडोब्रह्माज्ञानाभिमानवान् ॥ पूर्णप्रज्ञायोग्यतास्याद्रमातदभिमानिनी ॥ एतेपिविष्णुंगच्छंतमनुयांतिसदैवतु ॥ वायुर्ज्ञानात्मकश्चैवप्राणात्मकइतिद्विधा॥अनुयातिहृषीकेशंसर्वैर्देवैःसमन्वितइतिच ॥ देवलोकेचिरंत्वायस्तुमु

भ्यादददानोऽहृदयमेवान्ववक्रामतिसयत्रैवचाक्षुषःपुरुषःपराङ्पर्यावर्ततेऽथारूपज्ञोभवति॥१॥ एकीभवतिनपश्यतीत्याहुरेकीभवतिनजिघ्रतीत्याहुरेकीभवतिनरसयतइत्याहुरेकीभवतिनवदतीत्याहुरेकीभवतिनशृणोतीत्याहुरेकीभवतिनमनुतइत्याहुरेकीभवतिनस्पृशतीत्याहुरेकीभवतिनविजानातीत्याहुस्तस्यहैतस्यहृदयस्याग्रंप्रद्योततेतेनप्रद्योतेनैषआत्मानिष्क्रामतिचक्षुषोवामूर्ध्नोवान्येभ्योवाशरीरदेशेभ्यस्तमुत्क्रामंतंप्राणोनूत्क्रामतिप्राणमनूत्क्रामंतꣳसर्वेप्राणाअनूत्क्रामंतिसविज्ञानोभवतिसविज्ञानमेवान्ववक्रामतितंविद्याकर्मणीसमन्वारभेतेपूर्वप्रज्ञाच

त्किंव्रजिष्यति ॥ सतुतद्देवताद्वारेणोत्क्रामतिनसंशयः ॥ विष्णोर्लोकंपरंगच्छन्नुत्क्रामेन्मूर्ध्नएवतु ॥ तथैवब्रह्मणोलोकंसुषुम्नायाविभेदतइत्यध्यात्मे ॥ सविज्ञानोभवति ॥ जीवेनसहितोभवति ॥सविज्ञानंजीवमेवान्ववक्रामति ॥ जीवमारुह्यगच्छतिभगवान्प्राज्ञेनात्मनान्वारूढइतिह्युक्तम्॥योविज्ञानेतिष्ठन्यआत्मनितिष्ठन्नित्युभयोर्जीवाभिप्रायेणहिपाठः ॥ शारीरश्चोभयेपिहिभेदेनैनमधीयतइतिभगवद्वचनम्॥विज्ञानात्मासहदेवैश्चसर्वैःप्राणाभूतानिसंप्रतिष्ठंतियत्रेतिच ॥ एषआत्मानिष्क्रामतीतिजीवांगीकारेशरीरंनिहत्या

विद्यांगमयित्वाऽन्यन्नवतरंकल्याणतरंरूपंकुरुतइत्यादिकमयुक्तंस्यात् ॥ नहिजीवःशरीरंनिहत्याविद्यांग
मयतिरूपांतरंवाकरोति ॥ नचसर्वमयत्वंजीवस्य ॥ ब्रह्मेतिविशेषणाच्च ॥ यथातृणजलूकैवंभगवान्पुरु
षोत्तमः ॥ जीवस्यसूक्ष्मरूपंतुप्राप्यस्थूलंपरित्यजेत् ॥ इदंशरीरंभूतेषुविलापयतिकेशवः ॥ अविद्यां
चैवजीवस्यगमयेज्ज्ञानसर्जनात्॥ स्वर्णकारोयथास्वर्णमलमग्नौनिहत्यच॥शुद्धेनतेनचात्मेष्टंकुरुतेरूपमं

॥ २ ॥ तद्यथातृणजलायुकातृणस्यांतंगत्वाअन्यमाक्रममाक्रम्यात्मानमुपसꣳहरत्येवमे
वायमात्मेदꣳशरीरंनिहत्याविद्यांगमयित्वान्यमाक्रममाक्रम्यात्मानमुपसꣳहरति ॥ ३ ॥
तद्यथापेशस्कारीपेशसोमात्रामुपादायान्यन्नवतरंकल्याणतरꣳरूपंतनुतएवमेवायमात्मेदꣳश
रीरंनिहत्याविद्यांगमयित्वान्यन्नवतरंकल्याणतरꣳरूपंकुरुतेपित्र्यंवागांधर्वंवादैवंवाप्राजापत्यं
वाब्राह्मंवान्येषांवाभूतानाम् ॥ ४ ॥ सवाअयमात्माब्रह्मविज्ञानमयोमनोमयःप्राणमय
श्चक्षुर्मयःश्रोत्रमयःपृथिवीमयअपोमयोवायुमयआकाशमयस्तेजोमयोतेजोमयःकाममयो
काममयःक्रोधमयोऽक्रोधमयोधर्ममयोऽधर्ममयस्सर्वमयस्तद्यदेतदिदंमयोदोमयइतियथाका
रीयथाचारीतथाभवतिसाधुकारीसाधुर्भवतिपापकारीपापोभवतिपुण्यःपुण्येनकर्मणाभवति

जसा ॥ एवंसभगवान्विष्णुर्जीवस्वर्णस्ययन्मलम् ॥ अविद्याकामकर्माद्यमात्माग्नौनाश्यसर्वकृत् ॥ स्वेच्छ
याकुरुतेरूपंयद्योग्यंतस्यमुक्तिगम् ॥ पितृजीवस्यपित्र्यंसगांधर्वंतस्यचैवहि॥ दैवंतुदेवजीवस्यप्राजापत्यं
प्रजापतेः ॥ ब्रह्मणोब्राह्ममेवेतिनित्यानंदस्वरूपकम् ॥ नयोग्यतांविनाकापिपूर्वप्रज्ञाश्रुतेःक्वचित्॥ यदामु
क्तोभवेद्ब्रह्मातदाब्रह्मासमुच्यतः ॥ एवंप्रजापतिश्चैवतथैवान्येपिसर्वशः ॥ यथाहिस्वर्णरूप्याद्यंमलहानौ

हितद्भवेत् ॥ पूर्वंतुयोग्यतामात्रंद्विजत्वंबालकेयथेत्यादिच ॥ नह्यमुक्तानांकल्याणतरत्वम् ॥ नचमृगादी
नांकल्याणत्वमपि ॥ मरणमात्रंचेदत्रोच्यतेतदाकल्याणतरमितिविशेषणंव्यर्थंस्यात् ॥ पूर्वोक्तश्रोत्रि
याद्वजिनाकामहतदेवादीनांचात्रोक्तिः ॥ पूर्वाननुभूतत्वान्नवतरंचभवति ॥ अल्पतेजस्तथैवाल्पंजीव
रूपंहिसंसृतौ॥तथैवसुमहत्तेजःकरोतिभगवान्महत्॥ अतोनवतरंचैतद्ब्रह्मादीनांकरोत्यजः ॥ अन्येषांवाभू
तानांमनुष्यादीनांनासुरादीनांभविष्यतिच॥मयंतुमानुषंस्वर्णंपीतंगांधर्वमेवच॥ इंद्रगोपनिभंनाम्नाजांबूनद

पापःपापेनाथोखल्वाहुःकाममयएवायंपुरुषइतिसयथाकामोभवतितत्क्रतुर्भवतियत्क्रतुर्भव
तितत्कर्मकुरुतेयत्कर्मकुरुतेतदभिसंपद्यते ॥ ५ ॥ तदेषश्लोकोभवति ॥ तदेवसक्तःसहक
र्मणैतिलिंगंमनोयत्रनिषिक्तमस्य ॥ प्राप्यांतंकर्मणस्तस्ययत्किंचेहकरोत्ययम्॥ तस्माल्लोका
त्पुनरेत्यस्मैलोकायकर्मणइतिनुकामयमानोथाकामयमानोयोकामोनिष्काम आप्तकाम आत्म
कामोनतस्यप्राणाउत्क्रामंतिब्रह्मैवसन्ब्रह्माप्येति ॥ ६ ॥ तदेषश्लोकोभवति ॥ यदासर्वेप्रमु
च्यंतेकामायेस्यहृदिश्रिताः ॥ अथमर्त्योमृतोभवत्यत्रब्रह्मसमश्नुतइति ॥ तद्यथाहिनिर्ल्व

मितिस्मृतम् ॥ दैवंचामीकरंनामप्रोद्यदादित्यसन्निभम्॥तैजोविशेषःस्वर्णानामेतेषांसर्वदैवच॥ नाग्न्यादिना
पिसमतांयांतितानिकथंचन ॥ एवंमानुषगंधर्वपितृदेवाःप्रजापतिः ॥ ब्रह्मेतिक्रमशोजीवाविशिष्टाउत्तरो
त्तरम्॥स्वभावेनैवमुक्तानांस्वभावोव्यक्तिमाव्रजेदित्यादिच॥ सयत्राणिमानंन्येतितस्यहैवतस्यहृदयस्याग्रं
प्रद्योततेतेनधीराअपियंतिब्रह्मविदः ॥ स्वर्गंलोकमितऊर्ध्वाविमुक्तास्तेनैतिब्रह्मवित्पुण्यकृत्तैजसश्चेत्येव
मादेश्च ॥ मुक्तविषयमेवैतत् ॥ मुक्तविषयत्वेनचैतत्प्रकरणंसूचयामासभगवान् ॥ तदोकोग्रज्वलनंतत्प्र
काशितद्वारोविद्यासामर्थ्यादित्यादिना ॥ नचान्यामुक्तिरस्तीत्यत्रकिंचिन्मानम्॥सोश्नुतेसर्वान्कामान्सह

ब्रह्मणाविपश्चिता ॥ एतमानंदमयमात्मानमुपसंक्रम्येमाँल्लोकान्कामान्नीकामरूप्यनुसंचरन् ॥ ऋचां त्वःपोषमास्तेपुपुष्वान्गायत्रंत्वोगायतिशक्करीषु ॥ परंज्योतिरुपसंपद्यस्वेनरूपेणाभिनिष्पद्यतएषआत्मेतिहोवाच ॥ सतत्रपर्यैतिजक्षन्क्रीडन्रममाणः ॥ सयएवंविदेवंपश्यन्नेवंमन्वानस्तस्यसर्वेषुलोकेषुकामचारोभवति॥सएकधाभवतित्रिधाभवतिपंचधासप्तधापुनश्चैकादशधास्मृतः॥नह्यस्यकर्मक्षीयतेऽस्माद्धेवात्मनोयद्यत्कामयतेतत्तत्सृजते ॥ यथोदकंशुद्धेशुद्धमासिक्तंतादृगेवभवति ॥ एवंमुनेर्विजानतआ

यनीवल्मीकेमृताप्रत्यस्ताशयीतैवमेवेदंशरीरंशेतेथायमशरीरोमृतःप्राणोब्रह्मैवतेजएवसोहंभगवतेसहस्रंददामीतिहोवाचजनकोवैदेहः ॥ ७ ॥ तदेतेश्लोकाभवंति ॥ अणुःपंथाविततःपुराणोमांस्पृष्टोनुवित्तोमयैव ॥ तेनधीराअपियंतिब्रह्मविदःस्वर्गंलोकमितऊर्ध्वोविमुक्ताः ॥ ८ ॥ तस्मिंञ्छुक्लमुतनीलमाहुःपिंगलंहरितंलोहितंच ॥ एषपंथाब्रह्मणाहानुवित्तस्तेनैतिब्रह्मवित्पुण्यकृत्तैजसश्च ॥ ९ ॥ अंधंतमःप्रविशंतियेऽविद्यामुपासते ॥ ततोभूयइवतेतमोयउविद्यायांरताः ॥ १० ॥ आनंदानामतेलोकाअंधेनतमसावृताः ॥ तांस्तेप्रेत्याभिगच्छंत्य

त्माभवतिगौतम ॥ तदाविद्वान्पुण्यपापेविधूयनिरंजनःपरमंसाम्यमुपैति ॥ परंभूयःप्रवक्ष्यामिज्ञानानांज्ञानमुत्तमम् ॥ यज्ज्ञात्वामुनयःसर्वेपरांसिद्धिमितोगताः ॥ इदंज्ञानमुपाश्रित्यममसाधर्म्यमागताः ॥ सर्गेपिनोपजायंतेप्रलयेनव्यथंतिच॥नवर्ततेयत्ररजस्तमस्तयोःसत्त्वंचमिश्रंनचकालविक्रमः॥नयत्रमायाकिमुतापरेहरेरनुव्रतायत्रसुरासुरार्चिताः ॥ श्यामावदाताःशतपत्रलोचनाःपिशंगवस्त्राःसुरुचःसुपेशसइत्यादिश्रुतिस्मृतीतिहासपुराणेषुतेषांनिर्गुणमुक्तिविषयत्वेनप्रसिद्धेष्वेवस्थलेषुमुक्त्यनंतरंभोगोक्तेश्च ॥ अशरीरक्रियागौणदेहादेस्तेह्यभावतः ॥ चिदानंदशरीरादेःसदेहाद्याविमोक्षिणः ॥ अनिंद्रियाअनाहाराअनिष्पं

दाःसुगंधिनइत्यादेश्च ॥ मयट्प्राचुर्यैस्वरूपेच ॥ आत्मायमाततत्वाद्धिब्रह्मपूर्णगुणत्वतः ॥ दूरस्थत्वा
त्सइत्युक्तःसमीपस्थोह्ययंस्मृतः ॥ पूर्णज्ञानस्वरूपत्वाद्विज्ञानमयईर्यते ॥ सर्वमंत्रस्वरूपत्वात्सएवोक्तो

विद्वांसोबुधाजनाः ॥ ११ ॥ आत्मानंचेद्विजानीयादयमस्मीतिपूरुषः ॥ किमिच्छन्कस्य
कामायशरीरमनुसंज्वरेत् ॥ १२ ॥ यस्यानुवित्तःप्रतिबुद्धआत्मास्मिन्संदेहेगहनेप्रविष्टः ॥
सविश्वकृत्सहिसर्वस्यकर्तातस्यलोकःसउलोकएव ॥ १३ ॥ इहैवसंतोथविद्मस्तद्वयंनचेदवे
दिर्महतीविनष्टिः ॥ यएतद्विदुरमृतास्तेभवंत्यथेतरेदुःखमेवापियंति ॥ १४ ॥ यदैतमनुपश्यंत्या
त्मानंदेवमंजसा ॥ ईशानंभूतभव्यस्यनततोविजुगुप्सते ॥ १५ ॥ यस्मादर्वाक्संवत्सरोहोभिः
परिवर्तते ॥ तद्देवाज्योतिषांज्योतिरायुर्होपासतेमृतम् ॥ १६ ॥ यस्मिन्पंचपंचजनाआकाश
श्चप्रतिष्ठितः ॥ तमेवमन्यआत्मानंविद्वान्ब्रह्मामृतोमृतम् ॥ १७ ॥ प्राणस्यप्राणमुतचक्षुपश्च
क्षुरुतश्रोत्रस्यश्रोत्रंमनसोयेमनोविदुस्तेनिचिक्युर्ब्रह्मपुराणमग्र्यम् ॥ १८ ॥ मनसैवानुद्रष्टव्यंनेह
नानास्तिकिंचन ॥ मृत्योःसमृत्युमाप्नोतियइहनानेवपश्यति ॥ १९ ॥ एकधैवानुद्रष्टव्यमेतदप्रमयं
ध्रुवम् ॥ विरजःपरआकाशादजआत्मामहान्ध्रुवः ॥ २० ॥ तमेवधीरोविज्ञायप्रज्ञांकुर्वीतब्रा
ह्मणः ॥ नानुध्यायाद्बहूञ्छब्दान्वाचोविग्लापनंहितदिति ॥ २१ ॥ सवाएषमहानजआत्मा
योयंविज्ञानमयःप्राणेषुयएषोंतर्हृदयआकाशस्तस्मिञ्छेतेसर्वस्यवशीसर्वस्येशानःसर्वस्याधि

मनोमयः ॥ बलपूर्णस्वरूपत्वात्सप्राणमयईरितः ॥ सर्वद्रष्टृस्वरूपत्वाच्चक्षुर्मयइतीर्यते ॥ सर्वश्रोतृस्वरू
पत्वात्सश्रोत्रमयईरितः ॥ सर्वाधारात्सुगंधत्वात्पृथिवीमयउच्यते ॥ सर्वतृप्तिकरत्वाच्चविष्णुरापोमयः
स्मृतः ॥ सर्वकर्तृस्वरूपत्वाच्छुतोवायुमयोहरिः ॥ अवकाशप्रदातृत्वादाकाशमयईर्यते ॥ पूर्णतेजःस्वरू

पत्वात्तेजोमयउदाहृतः ॥ सृष्ट्यादीच्छास्वरूपत्वात्स्मृतःकाममयोहरिः ॥ सर्वदुष्टप्रतीपत्वात्सहिक्रोधम
योमतः ॥ सुखादिधर्मरूपत्वाज्ज्ञेयोधर्ममयःप्रभुः ॥ अप्राकृतस्वरूपत्वादनेतन्मयएवच ॥ अपार्थिवोह
रेर्गंधोनतृप्तिश्चाप्यबात्मिका ॥ नाग्नेयंतस्यतेजोपिनचवायुर्बलंहरेः ॥ श्रोत्राद्यानास्यचाकाशोमनस्त
त्त्वंनतन्मनः ॥ बुद्धितत्त्वंनतद्बुद्धिर्नाहमस्याहमुच्यते ॥ महदात्मकंनतच्चित्तंप्रकृतिर्नास्यचेतना ॥ प्रकृ
त्यादिगुणायस्मात्तद्गुणप्रतिबिंबकाः ॥ अतःसर्वमयोविष्णुःसर्वाद्यत्वादतन्मयः ॥ चिदानंदात्मकास्तस्यगु
णाःसर्वगुणात्मकाः ॥ सर्वदातःसर्ववैलक्षण्यमेषांप्रकीर्तितम् ॥ क्रोधःक्षमात्मकोयस्यचिदानंदात्मकस्त
था ॥ अन्यक्रोधसमःक्रोधस्तस्यविष्णोःकथंभवेत् ॥ एवंसर्वगुणास्तस्यसर्वेभ्योपिविलक्षणाः ॥ पूर्वप्र
ज्ञानुसारेणविमुक्तस्तमुपेष्यति ॥ अनादिकालसंबंधायाप्रज्ञाविष्णुसंश्रया ॥ पूर्वप्रज्ञेतिसाप्रोक्ताब्रह्मादे
स्तारतम्यतइतिचमहामीमांसायाम् ॥ वर्तमानंयतोविष्णोर्वशेतस्मादिदंमयः ॥ अतीतानागतंयस्मात्तद्वशे
तोह्यदोमयः ॥ प्राधान्येचमयट्प्रोक्तःस्वरूपेचयतोभवेत् ॥ इदंरूपोह्यदोरूपस्ततोनित्यत्वतोहरिः ॥ अ
स्यतस्यप्रधानश्चनित्यपूर्णबलत्वतइतिच ॥ यथापूर्वंतथेदानीमितिविष्णुस्तदुच्यते ॥ यथाबाल्येतथैवांते
ततोयदितिचोच्यते ॥ यथेदानींतथानित्यंयस्मादेषभविष्यति ॥ अतएतदितिप्रोक्तोवासुदेवोजगत्पतिः ॥
सयथाकरोतिपुरुषंतथैवायंभविष्यति ॥ साधुर्भवतिसाधुंचेत्करोतिपुरुषोत्तमः ॥ पापोभवतिपापंचेत्सक
रोतिजनार्दनः ॥ तत्प्रेरितेनपुण्येनपुण्योभवतिमानवः ॥ तत्प्रेरितेनपापेनतथापापःपुमान्भवेत् ॥ आहुश्चत
त्कामाधीनंजीवमेनंसदैवहि॥तत्कामादस्यकामःस्याद्यथाकामस्तथाभवेत् ॥ कामानुसारिणीनिष्ठाकर्मनि
ष्ठानुसारतः ॥फलंकर्मानुसारेणविष्णोःकाममयस्ततः॥जीवोयंसर्वदैवस्यान्नान्यथातुकथंचनेत्यादिच॥जी

वेश्वराभेदांगीकारेसुषुम्युत्क्रांत्योर्भेदेनेतिसूत्रविरोधः ॥ प्राज्ञेनात्मनान्वारूढःप्राज्ञेनात्मनासंपरिष्वक्तइत्यादिश्रुतिविरोधश्च ॥ नचव्यावहारिकभेदोनामकश्चिदस्तीत्यत्रकिंचिन्मानम् ॥ भ्रांतिभेदत्वेश्रुतिसिद्धत्वमेवनस्यात् ॥ नहिनिर्दोषश्रुतिवाक्यसिद्धंभ्रांतमितियुक्तम् ॥ उन्मत्तवाक्यवत्सर्ववेदस्याप्रामाण्यप्रसक्तेः ॥ नचस्वविषयभ्रमत्वादन्यदप्रामाण्यंनामकिंचित् ॥ तन्मतेप्युन्मत्तवाक्यविषयस्याप्यनिर्वाच्यत्वमेव ॥ सत्यःसोअस्यमहिमागृणेशवः ॥ तएतेसत्याःकामाइत्यादिश्रुतिभिर्भगवद्गुणानांसत्यत्वमेवज्ञायते ॥ सत्यमेनमनुविश्वेमदंतिरातिंदेवस्यगृणतोमघोनइतिसर्वजीवानांभगवदनुजीवनंचसत्यमित्ये

पतिःसनसाधुनाकर्मणाभूयान्नोएवासाधुनाकनीयानेषसर्वेश्वरएषभूताधिपतिरेषभूतपालएषसेतुर्विधरणएषांलोकानामसंभेदायतमेतंवेदानुवचनेनब्राह्मणाविविदिषंतियज्ञेनदानेनतपसानाशकेनैतमेवविदित्वामुनिर्भवत्येतमेवप्रव्राजिनोलोकमिच्छंतःप्रव्रजंत्येतद्धस्मवैतत्पूर्वेविद्वांसःप्रजांनकामयंतेकिंप्रजयाकरिष्यामोयेषांनोयमात्मायंलोकइतितेहस्मपुत्रैषणायाश्चवित्तै

वोच्यते ॥ तदाकथंजीवेशभेदस्यासत्यता ॥ नचसर्वविध्यर्थक्रियासिद्धस्यकुत्रचिद्बाधोदृष्टः ॥ नहास्यकर्मक्षीयतेऽस्माद्ध्येवात्मनोयद्यत्कामयतेतत्तत्सृजतइतिमुक्त्यनंतरमपितदधीनत्वप्रतीतेश्च ॥ नभेदस्यासत्यता ॥ नहिसंसारावस्थायामक्षीणकर्मताभवति ॥ नचमुख्यार्थंपरित्यज्यामुख्योयुक्तः ॥ अतःसत्यएवभेदः ॥ सभगवान्यथाकारीयथाकारयतियथाचारीयथाचारयतितथाभवति ॥ सभगवान्यथाकामोभवतितथाकामोजीवोभवति॥इत्थंकामोस्यभूयादितिभगवदिच्छावशादस्यकामोभवतीत्यर्थः॥ क्रतुरितीत्थंकरिष्याम्येवेतिनिश्चयरूपःकामः ॥ सभगवदिच्छयाहिभवति॥ कामेनमेकामआगादितिच

श्रुतिः ॥ अयोग्यकामराहित्यान्मुक्तोनिष्कामउच्यते ॥ अइत्युक्तःपरोविष्णुस्तत्कामोऽकामईरितः ॥ त
थाकामयमानःसयोग्यकामस्यचापितु ॥ कादाचित्कसमुद्भूतेर्भगवत्कामनांविना ॥ कामितस्याखिल
स्याप्तेराप्तकामश्चमुक्तिगः ॥ चिदानंदात्मकंरूपंकामत्वेनभविष्यति ॥ यतस्तेनैवात्मकामइतिमुक्तोभि
धीयते ॥ मुक्तस्यनपुनःप्राणाउत्क्रामंतिकदाचन ॥ जीवोपिब्रह्मशब्दोक्तोजडाद्गुणबृहत्त्वतः ॥ प्राप्नोति
परमंब्रह्मप्रलयेप्रलयेसदा ॥ अन्यदास्वेच्छयाविष्णोःस्वरूपाद्बहिरेष्यति ॥ स्वेच्छयांतर्बहिश्चैवंरमतेमु
क्तआत्मवानित्यादिच ॥ नचामुक्तस्यकथंचिदाप्तकामतामुख्यतः ॥ ब्रह्माप्येतीतिवचनात्पूर्वंब्रह्मशब्दो
जीववाच्येव ॥ यद्यज्ञाननाशात्परिज्ञानमात्रंतदास्वस्यब्रह्मतांविजानातीत्येवस्यात् ॥ नतुब्रह्माप्येतीति॥
नहिराजपुत्रःपूर्वमात्मानमजानन्पश्चाद्राजपुत्रइतिविज्ञायराजपुत्रमप्येतीत्युच्यते ॥ किंतुराजपुत्रत्वेना
त्मानंव्यजानादित्येवोच्यते ॥ विस्मृतकंठमणिरपिविज्ञातइत्येवोच्यते ॥ नतुप्राप्तइति ॥ अतःपूर्वंब्रह्मश
ब्दोजीववाच्येव ॥ अथमर्त्योमृतोभवति ॥ अथमुक्त्यनंतरंनकदाचिन्मृतिरस्यभवतीत्यर्थः ॥ मुक्तए
वपरेब्रह्मणीच्छयाप्रविशतिनिःसरतिच ॥ दर्शनादीन्ब्रह्मणोभोगांश्चकरोति ॥ स्वरूपभूताःकामामुक्तानां
भवंतीत्यतोहृदिश्रिताइतिविशेषणम् ॥ हृदयस्यैवमोचनात्तत्स्थाःकामामुक्तानामपगच्छंतीतियुक्तमेव॥
नह्यमुक्तस्यकदाचित्सर्वेकामामुच्यंते ॥ सुप्त्यादावप्यभिभवएववासनायाविद्यमानत्वात् ॥ वासनाया
हिपुनरुद्भवः ॥ यावद्विमुच्येत्पुरुषस्तावत्कामाहृदिस्थिताः ॥ चित्ताभावाद्विमुक्तस्यस्युःकामास्तद्गताः
कुतः॥स्वरूपभूतचित्तेनकामाद्याःस्युःसुखात्मकाः॥दुःखात्मकाःप्राकृतावामुक्तानांनकथंचनेतिब्रह्मतर्के॥
अयंजीवोथमुक्त्यनंतरमेवाशरीरोभवति॥अमृतःकदापिनमृतः॥प्राणाख्यंपरब्रह्मैव॥ कतमएकोदेवइतिप्रा

णइति॥ सब्रह्मेत्याचक्षतइत्यादिश्रुतेः॥तेजएवचतेजइतिश्रीः॥ अन्येषाममृतत्वंचभवेद्विष्णुप्रसादतः॥ नि
त्यामृतःसभगवान्श्रीश्चनान्यःकथंचनेतिनारदीये॥प्राणस्तुभगवान्विष्णुःसर्वनेतृत्वतोविभुः॥ तेजस्तुसर्वते
जस्त्वाच्छ्रीरेवसमुदाहृतेतिच॥ तत्प्राप्तेःसुखहेतुत्वात्पंथाइतिहरिःश्रुतः॥ अणुश्चविततश्चासौयतोंतर्बहिरेव
च॥श्रियास्पृष्टःश्रीपतित्वादनुवित्तस्तथैवच॥तस्यप्रसादात्संयांतितल्लोकंसर्वमोक्षिणः॥ऊर्ध्वःसभगवान्सर्व
विशिष्टोयत्सदैवहि ॥ रूपमाहुःपंचविधंतस्यविष्णोर्महात्मनः॥ शुक्लंतुवासुदेवाख्यमनिरुद्धंतुनीलकम् ॥
संकर्षणंपिंगलंचप्रद्युम्नंहरितंस्मृतम् ॥ नारायणंलोहितंस्यात्पंचरूपाण्यजेहरौ ॥ पंचभेदविभिन्नोयस्त्व
भिन्नोपिस्वरूपतः ॥ सपंथाब्रह्मणाज्ञातःपद्मजेनैवसंततम् ॥ परब्रह्मस्वरूपज्ञोमहातेजःश्रियस्तथा ॥ स
म्यक्स्वरूपविज्ञानात्तैजसत्वेनकीर्तितः ॥ भगवत्कर्मकर्तृत्वात्पुण्यकृच्चाभिधीयते ॥ एवंविधोपितस्यैव
प्रसादाद्यातितांगतिम् ॥ अतःपंथास्समुद्दिष्टोभगवान्केशवःस्वयम् ॥ स्वगताखिलभेदेनविहीनोपिससर्व
दा ॥ सर्वेषांव्यवहाराणांभेदोत्थानांसईश्वरः ॥ अभिन्नोपिह्यतोभिन्नःपंचभेदादिनामृषा ॥ अन्यथो
पासकायेस्यतेयांतिह्यधरंतमः ॥ ततःकिंचिद्विशेषेणदुर्ज्ञानस्याविनिंदकाः ॥ सम्यगाचार्यवचनमव
ज्ञायविरोधिनि ॥ सत्त्वबुद्धिंयतःकुर्युस्ततस्तेधिकपापिनः ॥ अप्राप्तत्यागिनःप्राप्तनिष्ठाहीनोहिदोष
वान् ॥ नित्यदुःखस्वरूपत्वादानंदंतत्तमोमतम् ॥ बोधकेविद्यमानेपियेविदुर्नपरंहरिम् ॥ तेपियांतित
मोघोरंनित्योद्रिक्तासुखात्मकमितिच ॥ बुधस्सकाशेप्यविद्वांसइत्यर्थः ॥ बोधनाज्ज्ञानवान्भुत्स्यात्तत्स
काशाच्चयेहरिम् ॥ नविदुस्तेतमोयांतिसर्वदुःखात्मकंपरम् ॥ यदिजीवःपरात्मानमयमस्तीतिवेदितुम् ॥

योग्यःशरीरभेदादेःकथंदुःखीतदाभवेत् ॥ दुःखीशरीरसंबंधाज्जीवोविष्णोःप्रसादतः ॥ अदुःखीविष्णुडानंदं
मुक्तएवचभोक्ष्यति ॥ नित्यमुक्तःपूर्णसुखःस्वतंत्रःपुरुषोत्तमः ॥ परतंत्रःकथंजीवोयोग्यःसोस्मीतिवेदितु
म् ॥ यस्मात्सोस्मीतिनैवायंविजानीयात्कदाचन ॥ तदीयोस्मीतिजानीयात्सर्वदैवबुधस्ततइतिच ॥ य
स्यज्ञातोनित्यबुद्धोभगवान्पुरुषोत्तमः ॥ तस्यलोकःसएवैकोयोलोकःपरमात्मनः ॥ सहिविष्णुःपरोवायो
रपिकर्ताप्रकीर्तितः ॥ विश्वोवायुःसमुद्दिष्टःपूर्णत्वाज्जीवसंघतः ॥ तदन्यस्यापिसर्वस्यकर्तैकोविष्णुरेव

षणायाश्चलोकैषणायाश्चव्युत्थायाथभिक्षाचर्यंचरंतियाह्येवपुत्रैषणासावित्तैषणायावित्तैषणा
सालोकैषणोभेह्येतेएषणेएवभवतःसएषनेतिनेत्यात्मागृह्योनहिगृह्यतेशीर्योनहिशीर्यतेऽसंगोन
हिसज्यतेऽसितोनव्यथतेनरिष्यत्येतमुहैवैतेनतरतइत्यतःपापमकरवमित्यतःकल्याणमकरवमि
त्युभेउहैवैषएतेतरतिनैनंकृताकृतेतपतः॥२२॥तदेतदृचाभ्युक्तंएषनित्योमहिमाब्राह्मणस्यनव
र्धतेकर्मणानोकनीयान्तस्यैवस्यात्पदंवित्तंविदित्वानलिप्यतेकर्मणापापकेनेति॥ तस्मादेवंवि

हि ॥ प्रविष्टोगहनेदेहमध्येसंदोघनामनि ॥ तज्ज्ञानीयातितंलोकंतत्प्रसादाच्चवर्तते ॥ नवत्सराश्चनाहानि
यस्यनित्याविकारतः ॥ ज्योतिषांज्योतिरचलंतद्देवाःसमुपासते ॥ प्राणश्चक्षुस्तथैवान्नंमनःश्रोत्रंचपंच
मम् ॥ मूलप्रकृतिसंयुक्तंयद्व्रतंप्रतिपूरुषम् ॥ तस्यरूपगुणाद्येषुनकश्चिद्भेदइष्यते ॥ तद्भेददर्शीसंया
तिम्रत्योर्मृत्युमभिधंतमः ॥ तस्मादेकप्रकारेणद्रष्टव्योभगवान्हरिः ॥ परिमाणविहीनत्वादप्रमेयइती
रितः ॥ इत्यादिवचनादप्रमेयत्वमवाच्यत्वममनोविषयत्वंचसर्वात्मनानमनसैवानुद्रष्टव्यमित्युक्तत्वात् ॥
नचकेनाप्यवाच्यस्यलक्षणादृष्टा ॥ क्षीरमाधुर्यविशेषादेरपितत्तच्छब्दैनैववाच्यत्वात् ॥ विशदंक्षीरमा

धुर्यंगुडेतीक्ष्णंघृतेस्थिरमित्यादिच ॥ नचनिर्गुणस्यसत्वमेवास्ति ॥ गुणभेदादीनामपिसंत्येवगुणाः ॥
नचानवस्थास्वनिर्वाहकत्वात् ॥ अवाच्यममनोगम्यमगुणंचेत्कुतोस्तितत् ॥ तस्मादेवंवदन्वस्तुशून्य
तामर्थतोवदेत् ॥ गुणाश्चगुणिनःसर्वैस्वेनैवगुणिनोगुणाइत्यादिच ॥ सर्वमस्यवशेयस्माद्धरिःसर्ववशीततः ॥
सर्वस्यब्रह्मरुद्रादेरनईशानएवच ॥ गुणाधिकःपालकश्चेत्यतोधिपतिरीरितइतिच ॥ भूतएवाधिपतिर्नास्या
धिपत्यमादिमत् ॥ नित्यबोधात्मकत्वाद्योमुनिःप्रोक्तोजनार्दनः ॥ तंविद्वांश्चमुनिर्नामबोधस्तस्याप्यमुख्य
तः ॥ यंविदित्वाविमुक्ताश्चायुक्तकामविवर्जिताः ॥ उत्पत्तिलयहीनाश्चनित्यानंदैकभोगिनः ॥ आनंदभि

च्छांतोदांतउपरतस्तितिक्षुःसमाहितोभूत्वात्मन्येवात्मानंपश्यतिसर्वमात्मानंपश्यतिनैनंपाप्मातर
तिसर्वंपाप्मानंतरतिनैनंपाप्मातपतिसर्वंपाप्मानंतपतिविपापोविरजोविचिकित्सोब्राह्मणोभव

क्षांविष्णूत्थांचरंत्यज्ञानवर्जिताः ॥ सएषमोक्षदोविष्णुर्यत्कल्याणंकृतंमया ॥ पापंकृतंमयेत्येतन्नकदाचि
त्करिष्यति ॥ कृतेमयापुण्यपापेइतियच्चेतनात्मनाम्॥ तत्सर्वमतएवोक्तंविष्णोःसर्वैश्वरेश्वरात्॥ तीर्णोहिव
र्तते नित्यंपुण्यपापेजनार्दनः ॥ नैनंकदाचित्तपतःपुण्यपापेजनार्दनमितिच ॥ शांतिस्तुभगवन्निष्ठादमोमद
विनिग्रहः ॥ हृदिस्थविष्णौसंतोषःसदैवोपरमःस्मृतः ॥ तितिक्षाद्वंद्वसहिताक्षमाक्रोधासमुत्थितिरितिशब्द
निर्णये ॥ सर्वःपूर्णःसमुद्दिष्टस्तथाज्ञेयोजनार्दनः ॥ रागसंदेहपापानितथाजानंस्तरिष्यति ॥ नित्यंहिराग
पापादेर्मुक्तोयत्पुरुषोत्तमः ॥ वेदाख्यब्रह्मणान्यत्वाद्विष्णुर्ब्राह्मणउच्यते ॥ पूर्णत्वाज्ज्ञानरूपत्वाद्ब्रह्मलो
कश्चसप्रभुः ॥ नमरिष्यतीतिह्यमरोनमृतोयत्ततोमृतः ॥ ब्रह्मायमाप्तकामत्वादेवंयोवेदतंपरम्॥आप्तकामो

भयश्चैवभवेद्विष्णोरनुग्रहादितिच ॥ परमार्थैविचिकित्साब्रह्मणोभवतीतिनित्यमेवतथाभवतीत्यर्थः ॥ अ

त्येषब्रह्मलोकःसम्राडितिहोवाचयाज्ञवल्क्यःसोहंभगवतेविदेहान्ददामिमांचापिसहदास्याये
येति ॥ २३ ॥ सवाएषमहानजआत्मान्नादोवसुदानोविंदतेवसुयएवंवेद ॥ २४ ॥ सवाएष
महानजआत्माजरोमरोमृतोभयोब्रह्माभयंवैब्रह्माभयंहिवैब्रह्मभवतियएवंवेद ॥ २५ ॥ इ
तिशारीरब्राह्मणम् ॥ ६ ॥ ४ ॥

अथहयाज्ञवल्क्यस्यद्वेभार्येबभूवतुः मैत्रेयीचकात्यायनीचतयोर्हमैत्रेयीब्रह्मवादि
नीबभूवस्त्रीप्रज्ञैवतर्हिकात्यायन्यथहयाज्ञवल्क्योन्यद्वृत्तमुपाकरिष्यन् ॥ १ ॥ मैत्रेयी
तिहोवाचयाज्ञवल्क्यःप्रव्रजिष्यन्वाअरेऽहमस्मात्स्थानादस्मिहंततेनयाकात्यायन्यांतंकर
वाणीति ॥ २ ॥ सहोवाचमैत्रेयीयन्नुमइयंभगोःसर्वापृथिवीवित्तेनपूर्णास्यात्स्यान्वहं
तेनामृताहोनेतिनेतिहोवाचयाज्ञवल्क्योयथैवोपकरणवतांजीवितंतथैवतेजीवितंस्यादमृत
त्वस्यतुनाशास्तिवित्तेनेति ॥ ३ ॥ साहोवाचमैत्रेयीयेनाहंनामृतास्यांकिमहंतेनकुर्यां
यदेवभगवान्वेत्थतदेवमेब्रूहीति ॥ ४ ॥ सहोवाचयाज्ञवल्क्यःप्रियावैखलुनोभवतीसती
प्रियमवृद्धंतर्हिभवत्येतद्व्याख्यास्यामित्याचक्षाणस्यतुमेनिदिध्यासस्वेति ॥ ५ ॥ सहोवाच
नवाअरेपत्युःकामायपतिःप्रियोभवत्यात्मनस्तुकामायपतिःप्रियोभवतिनवाअरेजायायैका

भूद्भविष्यतिभवत्येवमाद्यपदानितु ॥ नित्यभावाभिधायीनियत्रवाच्याहरेर्गुणाइतिशब्दनिर्णये ॥ इ
तिशारीरब्राह्मणम् ॥ ६ ॥ ४ ॥

मायजायाप्रियाभवत्यात्मनस्तुकामायजायाप्रियाभवतिनवाअरेपुत्राणांकामायपुत्राःप्रिया
भवंत्यात्मनस्तुकामायपुत्राःप्रियाभवंतिनवाअरेवित्तस्यकामायवित्तंप्रियंभवत्यात्मनस्तुका
मायवित्तंप्रियंभवतिनवाअरेपशूनांकामायपशवःप्रियाभवंत्यात्मनस्तुकामायपशवःप्रियाभवं
तिनवाअरेब्रह्मणःकामायब्रह्मप्रियंभवत्यात्मनस्तुकामायब्रह्मप्रियंभवतिनवाअरेक्षत्रस्यका
मायक्षत्रंप्रियंभवत्यात्मनस्तुकामायक्षत्रंप्रियंभवतिनवाअरेलोकानांकामायलोकाःप्रियाभवं
त्यात्मनस्तुकामायलोकाःप्रियाभवंतिनवाअरेदेवानांकामायदेवाःप्रियाभवंत्यात्मनस्तुकामाय
देवाःप्रियाभवंतिनवाअरेवेदानांकामायवेदाःप्रियाभवंत्यात्मनस्तुकामायवेदाःप्रियाभवंतिन
वाअरेभूतानांकामायभूतानिप्रियाणिभवंत्यात्मानस्तुकामायभूतानिप्रियाणिभवंतिनवाअरे
सर्वस्यकामायसर्वंप्रियंभवत्यात्मनस्तुकामायसर्वंप्रियंभवत्यात्मावाअरेद्रष्टव्यःश्रोतव्योमंत
व्योनिदिध्यासितव्योमैत्रेय्यात्मनिखल्वरेदृष्टेश्रुतेमतेविज्ञातइदंसर्वंविदितम् ॥ ६ ॥ ब्रह्म
तंपरादाद्योन्यत्रात्मनोब्रह्मवेदक्षत्रंतंपरादाद्योन्यत्रात्मनःक्षत्रंवेदलोकास्तंपरादुर्योन्यत्रात्मनो
लोकान्वेददेवास्तंपरादुर्योन्यत्रात्मनोदेवान्वेदवेदास्तंपरादुर्योन्यत्रात्मनोवेदान्वेदभूतानितंप
रादुर्योन्यत्रात्मनोभूतानिवेदसर्वंतंपरादाद्योन्यत्रात्मनःसर्ववेदेदंब्रह्मेदंक्षत्रमिमेलोकाइमेदेवाइ
मेवेदाइमानिभूतानीदंसर्वंयदयमात्मा ॥ ७ ॥ सयथादुंदुभेर्हन्यमानस्यनबाह्याञ्छब्दाञ्श
क्नुयाद्ग्रहणायदुंदुभेस्तुग्रहणेनदुंदुभ्याघातस्यवाशब्दोगृहीतः॥ ८॥ सयथाशंखस्यध्मायमान
स्यनबाह्याञ्छब्दाञ्छक्नुयाद्ग्रहणायशंखस्यतुग्रहणेनशंखध्मस्यवाशब्दोगृहीतः ॥ ९ ॥ सय

प्रियांवाचमवर्धयद्भवतीः बाह्याभ्यंतरविशेषाभावेनसर्वत्रलवणरसघनएव ॥ नवाअहमिमंविजानातीति ॥
अहेयमिमंपरमात्मानंजीवोनजानातीत्यत्रैवभगवान्मोहांतंमोहाख्यनाशमापीपिपत्प्रापयामास ॥ अतो

थावीणायैवाद्यमानायैनब्राह्यान्छब्दाञ्छक्नुयाद्ग्रहणायवीणायैतुग्रहणेनवीणावादस्यवाशब्दो
गृहीतः ॥ १० ॥ सयथार्द्रैधाग्नेरभ्याहितस्यपृथग्धूमाविनिश्चरंत्येवंवाअरेऽस्यमहतो
भूतस्यनिःश्वसितमेवैतद्यदृग्वेदोयजुर्वेदःसामवेदोथर्वांगिरसइतिहासःपुराणंविद्याउपनिषदः
श्लोकाःसूत्राण्यनुव्याख्यानानीष्टंहुतमाशितंपायितमयंचलोकःपरश्चलोकःसर्वाणिचभूता
न्यस्यैवैतानिसर्वाणिनिःश्वसितानि ॥ ११ ॥ सयथासर्वासामपांसमुद्रएकायनमेवंसर्वे
षांस्पर्शानांत्वगेकायनमेवंसर्वेषांरसानांजिह्वैकायनमेवंसर्वेषांगंधानांनासिकैकायनमेवंसर्वेषां
रूपाणांचक्षुरेकायनमेवंसर्वेषांशब्दानांश्रोत्रमेकायनमेवंसर्वेषांसंकल्पानांमनएकायनमेवंसर्वा
साविद्यानांहृदयमेकायनमेवंसर्वेषांकर्मणांहस्तावेकायनमेवंसर्वेषामानंदानामुपस्थएकायनमे
वंसर्वेषांविसर्गाणांपायुरेकायनमेवंसर्वेषामध्वनांपादावेकायनमेवंसर्वेषांवेदानांवागेकायनंसय
थासैंधवघनोनंतरोबाह्यःकृत्स्नोरसघनएवैवंवाअरेऽयमात्मानंतरोबाह्यःकृत्स्नःप्रज्ञानघनएवैते
भ्योभूतेभ्यःसमुत्थायतान्येवानुविनश्यतिनप्रेत्यसंज्ञास्तीत्यरेब्रवीमीतिहोवाचयाज्ञवल्क्यः
॥ १२ ॥ साहोवाचमैत्रेय्यत्रैवमाभगवान्मोहांतमापीपिपन्नवाअहमिमंविजानाती

हंब्रह्मास्मीत्यादिष्वहंशब्दोहेयत्ववाचीतिसिद्धम् ॥ अन्यथाकथमहंविजानातीतियुज्यते ॥ एतावद्विज्ञा
तुःपरमात्मनोविज्ञानादिकमेवह्यमृतत्वंमोक्षः ॥ विष्णोर्ज्ञानादिकंमोक्षस्तदभावेकुतःसुखम् ॥ ज्ञेयाभावा

न्नहिज्ञानंज्ञानाभावेहिशून्यता ॥ तस्माज्ज्ञेययुतोमोक्षःसुखरूपत्वतःसदेतिब्रह्मतर्के ॥ ॥ इतिमैत्रेयी

तिसहोवाचनवाअरेहंमोहंब्रवीम्यविनाशीवाअरेयमात्मानुच्छित्तिधर्मा ॥ १३ ॥
यत्रहिद्वैतमिवभवतितदितरइतरंपश्यतितदितरइतरंजिघ्रतितदितरइतरꣳरसयतेतदितरइत
रमभिवदतितदितरइतरꣳशृणोतितदितरइतरंमनुतेतदितरइतरंस्पृशतितदितरइतरंविजानाति
यत्रत्वस्यसर्वमात्मैवाभूत्तत्केनकंपश्येत्तत्केनकंजिघ्रेत्तत्केनकंरसयेत्तत्केनकमभिवदेत्तत्केनकं
शृणुयात्तत्केनकंमन्वीततत्केनकंस्पृशेत्तत्केनकंविजानीयाद्येनेदंसर्वंविजानातितंकेनविजा
नीयात्सएषनेतिनेत्यात्माऽगृह्योनहिगृह्यतेऽशीर्योनहिशीर्यतेऽसंगोनहिसज्यतेऽसितोनव्यथ
तेनरिष्यतिविज्ञातारमरेकेनविजानीयादित्युक्तानुशासनासिमैत्रेय्येतावदरेखल्वमृतत्वमिति
होक्त्वायाज्ञवल्क्योविजहार ॥ १४ ॥ मैत्रेयीब्राह्मणम् ॥ ६ ॥ ५ ॥

अथवꣳशाःपौतिमाष्योगौपवनाद्गौपवनःपौतिमाष्यात्पौतिमाष्योगौपवनाद्गौपवनःकौशि
कात्कौशिकःकौण्डिन्यात्कौण्डिन्यःशाण्डिल्याच्छाण्डिल्यःकौशिकाच्चगौतमाच्चगौतमः॥१॥आग्नि
वेश्यादाग्निवेश्योगार्ग्याद्गार्ग्योगार्ग्याद्गार्ग्योगौतमाद्गौतमःसैतवात्सैतवःपाराशर्यायणात्पारा
शर्यायणोगार्ग्यायणाद्गार्ग्यायणउद्दालकायनादुद्दालकायनोजाबालायनाज्जाबालायनोमाध्यं
दिनायनान्माध्यंदिनायनःसौकरायणात्सौकरायणःकाषायणात्काषायणःसायकायनात्साय
कायनःकौशिकायनेःकौशिकायनिः ॥२॥ घृतकौशिकाद्घृतकौशिकःपाराशर्यायणात्पाराश



ब्राह्मणम् ॥ ६ ॥ ५ ॥

अवरेभ्योपिशृण्वंतिपरमाश्वकचित्कचित् ॥ लीलयैवनचैतेषांपरमत्वंविहीयतइतिच ॥ इतिब्राह्मणम्

र्यायणःपाराशर्यात्पाराशर्योजातूकर्ण्याज्जातूकर्ण्यआसुरायणाच्चयास्काच्चासुरायणस्त्रैवर्णेस्त्रै
वर्णिरौपंचधनेरौपंचधनिरासुरेरासुरिर्भारद्वाजाद्भारद्वाजआत्रेयादात्रेयोमांटेर्मांटिर्गौतमाद्गौ
तमोवात्स्याद्वात्स्यःशांडिल्याच्छांडिल्यःकैशोर्यात्काप्यात्कैशोर्यःकाप्यःकुमारहारितात्कुमा
रहारितोगालवाद्गालवोविदर्भात्कौंडिन्याद्विदर्भीकौंडिन्योवत्सनपातोबाभ्रवाद्वत्सनपाद्बाभ्रवः
पथःसौभरात्पंथाःसौभरोऽयास्यादांगिरसादयास्यांगिरसआभूतेस्त्वाष्ट्रादाभूतिस्त्वाष्ट्रोविश्व
रूपात्त्वाष्ट्राद्विश्वरूपस्त्वाष्ट्रोश्विभ्यामश्विनौदधीचआथर्वणाद्दध्यङ्ङाथर्वणोथर्वणोदैवाद
थर्वादैवोमृत्योःप्राध्वंसनान्मृत्युःप्राध्वंसनःप्रध्वंसनात्प्रध्वंसनएकर्षेरेकर्षिर्विप्रचित्तेर्विप्रचि
त्तिर्व्यष्टेर्व्यष्टिःसनारोःसनारुःसनातनात्सनातनःसनकात्सनकःपरमेष्ठिनःपरमेष्ठीब्रह्मणोब्रह्मस्व
यंभुब्रह्मणेनमः ॥ ६ ॥ ६ ॥ इतिबृहदारण्यकेषष्ठोध्यायः ॥ ६ ॥

॥ ६ ॥ ६ ॥ इतिश्रीमदानंदतीर्थभगवत्पादाचार्यविरचितेश्रीमद्बृहदारण्यकभाष्येषष्ठोध्यायः ॥ ६ ॥ ॥

॥ ॐ अवतारामहाविष्णोःसर्वेपूर्णाःप्रकीर्तिताः ॥ पूर्णंचतत्परंरूपंपूर्णात्पूर्णाःसमुद्गताः ॥ परावरत्वंतेषां
तुव्यक्तिमात्रविशेषतः ॥ नदेशकालसामर्थ्यैःपारावर्यंकथंचन ॥ पूर्वरूपस्यपूर्णस्यपूर्णंयदवतारगम् ॥
रूपंतदात्मन्यादायपूर्णमेवावतिष्ठते ॥ लौकिकव्यवहारोयोभूभारक्षपणादिकः ॥ तददृष्टिंविनानान्यो
लयःकृष्णादिनांकचित् ॥ ओताःसर्वगुणायस्मादस्मिन्नोविष्णुरुच्यते ॥ स्वंप्रकाशस्वरूपत्वाद्ब्रह्मतद्धा

पूर्णमदःपूर्णमिदंपूर्णात्पूर्णमुदच्यते ॥ पूर्णस्यपूर्णमादायपूर्णमेवावशिष्यते ॥ ॐखंब्र
ह्मखंपुराणंवायुरंखमितिहस्माहकौरव्यायणीपुत्रोवेदोयंब्राह्मणाविदुर्वेदैनेवयद्वेदितव्यम् ॥ प्र
थमंब्राह्मणम् ॥ ७ ॥ १ ॥

त्रयःप्राजापत्याःप्रजापतौपितरिब्रह्मचर्यमूषुर्देवामनुष्याअसुराउषित्वाब्रह्मचर्यंदेवाऊचुर्ब्र
वीतुनोभवानितितेभ्योहैतदक्षरमुवाचदइतिव्यज्ञासिष्टा३इतिव्यज्ञासिष्मेतिहोचुर्दाम्यतेतिन
आत्थेत्योमितिहोवाचव्यज्ञासिष्टेति ॥ १ ॥ अथहैनंमनुष्याऊचुर्ब्रवीतुनोभवानितितेभ्योहै
तदेवाक्षरमुवाचदइतिव्यज्ञासिष्टा३इतिव्यज्ञासिष्मेतिहोचुर्दत्तेतिनआत्थेत्योमितिहोवाचव्य
ज्ञासिष्टेति ॥ २ ॥ अथहैनमसुराऊचुर्ब्रवीतुनोभवानितितेभ्योहैतदेवाक्षरमुवाचदइतिव्यज्ञा
सिष्टा३इतिव्यज्ञासिष्मेतिहोचुर्दयध्वमितिनआत्थेत्योमितिहोवाचव्यज्ञासिष्टेतितदेतदेवैषा

मरूपतः ॥ पुनःखंसुखरूपत्वात्पुराणंतदनादितः ॥ वायोश्वरतिदंयस्माद्वायुरंब्रह्मतत्परम् ॥ ख्यातत्वाच्चा
पितत्खंस्याद्रौहिणेयस्तथावदत् ॥ वेदोयंज्ञानरूपत्वादितियंब्राह्मणाविदुः ॥ निर्दोषत्वाददइत्युक्तस्तेनवेद्यं
सदाखिलमितिच ॥ बाह्लीकसुताहिरोहिणीअतोबलभद्रःकौरव्यायणीपुत्रः ॥ ज्ञानदानंतुदेवानांफलदा
नंचकर्मणाम् ॥ विष्णुनाविहितंपूर्वंपुनर्देवनरासुराः ॥ ब्रह्माणमपिपप्रच्छुर्देवानांसद्गुणोच्छ्रितेः ॥ अनहं

कारमात्रंतुब्रह्मणाविहितंसदा ॥ सर्वोच्चमोक्षसंप्राप्त्यैनराणांज्ञानसाधनम् ॥ देवादीनांदानमेवह्विरादेःप्र
कीर्तितम् ॥ तमःप्राप्तिविलंबायदैत्यानांविहितादयेतिप्रवृत्ते ॥ हरणाद्यज्ञभागादेर्ज्ञानादेर्दानतस्तथा ॥
यानाद्व्यवधानेनपरस्यब्रह्मणस्तथा ॥ ब्रह्माहृदयइत्युक्तस्तस्यैवंविदपिध्रुवम् ॥ हृतिदानस्वर्गयानपात्रं
स्यात्तत्प्रसादतः ॥ हृत्वैवास्मैददत्यद्धास्वकीयाश्चान्यएवचेतिनिर्णये ॥ परमात्माचप्रजापतिः ॥ ततत्वा
देकरूपत्वात्तत्परंब्रह्मकीर्तितम् ॥ तदेवतादृशंप्रोक्तंनैवान्यत्तादृशंक्वचित् ॥ तदेतत्सत्यमेवासीद्वासुदेवा

दैवीवागनुवदतिस्तनयित्नुर्ददद इतिदाम्यतदत्तदयध्वमितितदेतत्त्रयꣳशिक्षेद्दमंदानंदयामिति
॥ ३ ॥ द्वितीयंब्राह्मणम् ॥ ७ ॥ २ ॥

एषप्रजापतिर्यद्धृदयमेतद्ब्रह्मैतत्सर्वंतदेतत्त्र्यक्षरꣳहृदयमितिहृइत्येकमक्षरमभिहरन्त्यस्मैस्वा
श्चान्येचयएवंवेददइत्येकमक्षरंददत्यस्मैस्वाश्चान्येचयएवंवेदयमित्येकमक्षरमेतिस्वर्गंलोकंय
एवंवेद ॥ तृतीयंब्राह्मणम् ॥ ७॥३ ॥

तद्वैतदेतदेवतदाससत्यमेवसयोहैतंमहद्यक्षंप्रथमजंवेदसत्यंब्रह्मेतिजयतीमाँल्लोकान्जितइन्व
सावसद्यएवमेतंमहद्यक्षंप्रथमजंवेदसत्यंब्रह्मेतिसत्यꣳह्येवब्रह्म॥चतुर्थंब्राह्मणम् ॥ ७ ॥ ४ ॥

ख्यमव्ययमितिब्रह्मतर्के ॥ तदेवहितत् ॥ तन्नारायणाख्यंपरंब्रह्मैतदेवसत्यंवासुदेवाख्यमासीदित्यर्थः ॥
स्वस्मात्स्वयंसमुत्पन्नोवासुदेवात्मनाप्रभुः ॥ सत्यंब्रह्मेतियोवेदमहायाज्यंतुतंपरम् ॥ प्राप्नोत्येवहितल्लोका
ञ्जीवन्नप्युत्तमोभवेदितिप्रध्याने ॥ स्वभागहरणाद्दानात्फलानांयापनान्नृणाम्॥हृदयंभगवान्विष्णुःसत्यं
तद्गुणरूपतइतिसत्तत्त्वे ॥ प्रजापतिरितिब्रह्मावेदेषूक्तोप्तमुख्यतः ॥ यस्मिन्नृषुर्ब्रह्मचर्यंदेवासुरनरोब्ज

जे ॥ एषवैभगवान्विष्णुर्मुख्यतरस्तुप्रजापतिः ॥ यज्ज्ञानान्मुक्तिमायांतिख्यगर्ख्यांहृदयंचसः ॥ हृदि सद्दानयानेभ्यःसत्यंसद्गुणरूपतः ॥ यत्तद्धृदयमित्युक्तंब्रह्मतत्सत्यतामगात् ॥ सत्यत्वंसदनीयत्वमासाद्यं यन्मुमुक्षुभिः ॥ एवंतद्ब्रह्मयोवेदसहिलोकानिमाञ्जयेत् ॥ एतल्लोकजयोनामधर्मज्ञानादिपूर्णता ॥ जि तएवह्यसौलोकोयदावेदजनार्दनमितिगुणपरमे ॥ परलोकोजितएवाभवदित्यर्थः ॥ सदासर्वगुणापाना दापोनारायणःस्मृतः ॥ द्वितीयंरूपमसृजद्वासुदेवंसआत्मनः ॥ ब्रह्मसत्यमितिप्राहुर्वासुदेवाभिधंप्रभुम् ॥ तस्माद्ब्रह्माजनिततोदेवाःसर्वेपिजज्ञिरे ॥ तस्माद्ब्रह्मादयोदेवावासुदेवमुपासते ॥ ततत्वादन्यथाज्ञानं

आपएवेदमग्रआसुस्ताआपःसत्यमसृजंतसत्यंब्रह्मब्रह्मप्रजापतिंप्रजापतिर्देवास्तेदेवाःसत्य मेवोपासतेतदेतत्र्यक्षरꣳसत्यमितिसइत्येकमक्षरंतीत्येकमक्षरंयमित्येकमक्षरंप्रथमोत्तमेअक्षरे सत्यंमध्यतोनृतंतदेतदनृतमुभयतःसत्येनपरिगृहीतंसत्यभूयमेवभवतिनैवंविद्वांꣳसमनृतंहिन स्ति॥ १ ॥ तद्यत्तत्सत्यमसौसआदित्योयएषएतस्मिन्मंडलेपुरुषोयश्चायंदक्षिणेक्षन्पुरुषस्ता

तीत्येवसमुदीर्यते ॥ तस्याधस्तात्सदात्मातुसादयन्ननृतंहरिः ॥ उपरिष्टाच्चयन्नामानाशयन्ननृतंस्थितः ॥ एवंयोवेदतंविष्णुंनास्यमिथ्यादृशिर्भवेत् ॥ योग्यतापेक्षयोपासाऽथापरोक्ष्याच्चतत्फलम् ॥ सम्यग्द दात्यन्यथाचभवेदेवोपकारिणी ॥ अत्ययोग्यायचेत्सास्याद्विपरीतफलप्रदा ॥ वैपरीत्यंतुविघ्नःस्या न्नतुपापंकथंचनेत्याधारे ॥ ७ ॥ सवासुदेवोभगवानादित्यस्थोजनार्दनः ॥ आदित्यनामासंप्रो क्तआदानाद्धविषांसदा ॥ सएवदक्षिणाक्षिस्थस्तच्चरूपद्वयंहरेः ॥ अन्योन्यस्मिन्स्थितंनित्यंप्राणै श्वसहरश्मिभिः ॥ दक्षिणाक्षिस्थितोविष्णुर्यदास्मादुत्क्रमिष्यति ॥ तदैवम्रियमाणस्तुजीवःपश्येद्विरश्मि

कम् ॥ सूर्यस्यमंडलंनास्यप्रतीयंतेहिरश्मयः ॥ तत्क्षणेनियमेनैवकेषांचित्सप्तभिर्दिनैः ॥ तस्यविष्णोःशिरोनामभावनाद्भूरितिस्मृतम् ॥ भावनंरक्षणंप्रोक्तंदृष्ट्यावाचाचरक्षति ॥ उत्पादनाद्भुनामास्याद्दक्षिणोबाहुरस्यतु ॥ विनाशनाद्वइत्युक्तःसव्योबाहुःपरात्मनः ॥ स्वित्यानंदस्समुद्दिष्टोवरितिज्ञानमुच्यते ॥ मुक्तिदानेनतद्दानात्सुवरस्यपदद्वयम् ॥ दक्षिणश्चैवसव्यश्चक्रमाद्वर्णद्वयोदितौ॥पादावस्यहितत्प्राप्तिर्मुक्तिरित्यभिधी

वेतावन्योन्यस्मिन्प्रतिष्ठितौरश्मिभिरेषोस्मिन्प्रतिष्ठितःप्राणैरयममुष्मिन्सयदोत्क्रमिष्यन्भवतिशुद्धमेवैतन्मंडलंपश्यतिनैनमेतेरश्मयःप्रत्यायंति ॥ २ ॥ यएपएतस्मिन्मंडलेपुरुषस्तस्यभूरितिशिरएकꣳशिरएकमेतदक्षरंभुवइतिबाहूद्वौबाहूद्वेएतेअक्षरेसुवरितिप्रतिष्ठाद्वेप्रतिष्ठेद्वेएतेअक्षरेतस्योपनिषदहरितिहंतिपाप्मानंजहातिचयएवंवेद ॥ ३ ॥ योयंदक्षिणेक्षन्पुरुपस्तस्यभूरितिशिरएकꣳशिरएकमेतदक्षरंभुवइतिबाहूद्वौबाहूद्वेएतेअक्षरेसुवरितिप्रतिष्ठाद्वेप्रतिष्ठेद्वेएतेअक्षरेतस्योपनिपदहमितिहंतिपाप्मानंजहातिचयएवंवेद॥४॥पंचमंब्राह्मणम्॥७॥५॥

मनोमयोयंपुरुषोभाःसत्यस्तस्मिन्नंतर्हृदयेयथाव्रीहिर्वायवोवासएपसर्वस्येशानःसर्वस्याधिपतिःसर्वमिदंप्रशास्तियदिदंकिंच ॥ षष्ठंब्राह्मणम् ॥ ७ ॥ ६ ॥ ॥

विद्युद्ब्रह्मेत्याहुर्विदानाद्विद्युद्विद्यत्येनंपाप्मनोयएवंवेदविद्युद्ब्रह्मेतिविद्युद्ध्येवब्रह्म ॥ सप्तमंब्राह्मणम् ॥ ७ ॥ ७ ॥

यते ॥ अहमेषोस्महेयत्वाज्जीवेनसहभावतः ॥ असावहरितिप्रोक्तःसर्वलोकप्रकाशनात् ॥ तद्वेदनात्सर्वपापंहंतिचैवजहातिच ॥ कानिचिद्धंतिपापानिकल्पादीन्संजहातिचेतिप्रवृत्ते ॥ मनोमयोज्ञानमयःप्रधानंमयउच्यते ॥ महाज्ञानात्मकश्चैवभारूपःसद्गुणात्मकः ॥ सर्वप्रशासकोविष्णुर्विद्युत्सर्वस्यवेदनात् ॥ यए

नंवेदंवेत्तारंसर्वस्यपरमेश्वरम् ॥ पादेभ्योमोचयित्वैनंस्वात्मानंवेदयेद्धरिरितिमाहात्म्ये॥ सरस्वतीतुगोरूपात स्यादेवादयोखिलाः ॥ स्तनानेवोपजीवंतितस्यावायुःपतिःप्रभुः ॥ वत्सोमनोभिमान्यस्याःसरस्वत्याःसदा शिवइतिप्रभंजने ॥ अग्निनामातुभगवानौदर्याग्नौप्रतिष्ठितः ॥ विश्वैर्गुणैःसमेतत्वादनंतत्वाच्चसप्रभुः ॥ वै श्वानरइतिप्रोक्तःसोग्निरंगप्रणेतृतः ॥ तस्यविष्णोःस्तुतिरियंक्रियतेवायुनासदा ॥कर्णौपिधाययानित्यंश्रोतुं

वाचंधेनुमुपासीततस्याश्चत्वारःस्तनाःस्वाहाकारोवषट्कारोहंतकारःस्वधाकारस्तस्यैद्वौस्तनौ देवाउपजीवंतिस्वाहाकारंचवषट्कारंचहंतकारंमनुष्याःस्वधाकारंपितरस्तस्याःप्राणऋषभोम नोवत्सः ॥ अष्टमंब्राह्मणम् ॥ ७ ॥ ८ ॥

अयमग्निर्वैश्वानरोयोयमंतःपुरुषेयेनेदमन्नंपच्यतेयदिदमद्यतेतस्यैषघोषोभवतियमेतत्क र्णावपिधायशृणोतिसयदोत्क्रमिष्यन्भवतिनैनंघोषंशृणोति ॥ नवमंब्राह्मणम् ॥ ७ ॥ ९ ॥

यदावैपुरुषोस्माल्लोकात्प्रैतिसवायुमागच्छतितस्मैसतत्रविजिहीतेयथारथचक्रस्यखंतेनस ऊर्ध्वआक्रमतेसआदित्यमागच्छतितस्मैसतत्रविजिहीतेयथालंबरस्यखंतेनसऊर्ध्वआक्रमते सचंद्रमसमागच्छतितस्मैसतत्रविजिहीयतेयथादुंदुभेःखंतेनसऊर्ध्वआक्रमतेसलोकमागच्छ त्यशोकमहिमंतस्मिन्वसतिशाश्वतीःसमाः ॥ दशमंब्राह्मणम् ॥ ७ ॥ १० ॥

शक्याखिलैःसदेतितंत्रमालायाम्॥ प्रवहंवायुपुत्रंचसूर्यसोमौचविद्युतम्॥ प्राप्यप्रधानवायुंचयातितत्पर मंपदमितिब्रह्मांडे ॥ ७ ॥ व्याधीञ्छवहृतिंचैवशवदाहादिकंतथा ॥ विष्णवेतपइत्येवाचिंतयन्यातितत्पर मितिच ॥ क्लेशितोपिक्लेशादीनतीतैष्यानपीहयः ॥ विष्णवेतपइत्येवप्रार्थयेत्सपरंव्रजेत् ॥ विष्णोःस्वरूप वेत्ताचेदन्यथानकथंचन ॥ यथास्वरूपवेत्तुःस्यादेकैकापिह्युपासना ॥ मोक्षायसहिताःसर्वाअप्यज्ञस्य





अ

नतुक्कचित् ॥ यथावत्केशवंज्ञात्वास्त्वयोग्यैकामुपासनाम्॥ अपिकृत्वाहरिंदृष्ट्वामुच्यतेनात्रसंशयइतिब्रह्म
तर्के ॥ अन्नाभिमानीब्रह्मैवप्राणोवायुरुदाहृतः ॥ अन्योन्यानुप्रविष्टौतौसर्वदैवसुसंस्थितौ॥ वायुंविनाब्रह्म
णोपिशरीरंपूतिमेष्यति ॥ वायुश्चशोषमायातिविनाब्रह्माणमंजसा ॥ तयोरेवंपरिज्ञानीवासिष्ठःपाणिनाम

एतद्वैपरमंतपोयद्व्याधितस्तप्यतेपरमंहैवलोकंजयतियएवंवेदैतद्वैपरमंतपोयंप्रेतमरण्यंहरं
तिपरमंहैवलोकंजयतियएवंवेदैतद्वैपरमंतपोयंप्रेतमग्नावभ्यादधतिपरमंहैवलोकंजयति
यएवंवेद ॥ एकादशंब्राह्मणम् ॥ ७ ॥ ११ ॥

अन्नंब्रह्मेत्येकआहुस्तन्नतथापूयतिवाअन्नमृतेप्राणात्प्राणोब्रह्मेत्येकआहुस्तन्नतथाशुष्य
तिवैप्राणऋतेअन्नादेतेह्येवदेवतेएकधाभूयंभूत्वापरमतांगच्छतस्तद्धस्माहप्रातृदःपितरंकिं
स्विदेवैवंविदुषेसाधुकुर्यांकिमेवास्माअसाधुकुर्यामितिसहस्माहपाणिनामाप्रातृदः कस्त्वेन
योरेकधाभूयंभूत्वापरमतांगच्छतीतितस्माउहैतदुवाचवीत्यन्नंवैविअन्नेहीमानिसर्वाणिभूता
निविष्टानिरमितिप्राणोवैरंप्राणेहीमानिसर्वाणिभूतानिरमंतेसर्वाणिहवाअस्मिन्भूतानिविशंति
सर्वाणिभूतानिरमंतेयएवंवेद ॥ द्वादशंब्राह्मणम् ॥ ७ ॥ १२ ॥

कः ॥ ब्रह्मवायुविदेकार्यंकिंमयासाध्वसाधुवा ॥ नासाधुनासाधयितुंशक्योसौसाधुनापिवा ॥ नार्थोस्यकृ
तकृत्यत्वाद्यदिवेदपरंहरिम्॥ इतिप्रशस्यतज्ज्ञानंवसिष्ठंप्राब्रवीत्ततः॥ अन्योन्यानुप्रवेशेनब्रह्मवाय्वोर्विशे
षतः॥प्रयोजनंकस्यभवेदितितंप्रतृदोब्रवीत्॥ ब्रह्मानिवेशनीयःस्याद्वायुश्चास्यरतिप्रदः॥अतःप्रयोजनंतुल्य
मन्योन्यात्मप्रवेशनादितिसंधाने॥उत्थापनादुक्थनामामोक्षेप्राप्योयतोखिलैः॥ यजुश्चाथक्षतत्राणात्क्षत्रं

सम्यक्त्वकारणात् ॥ सर्वेषांसामचप्रोक्तोवायुरेवजगत्पतिरितिच ॥ ५ ॥ ऋग्यजुःसामसंस्थोयोभगवा
न्पुरुषोत्तमः ॥ सद्वितीयपदेनोक्तोगायत्र्याःप्रथमेनतु॥ भूम्यंतरिक्षस्वर्गस्थतृतीयेनसमीरग॥ चतुर्थपादो
गायत्र्याःप्रणवःसमुदीरितः ॥ तद्वाच्योभगवान्सूर्यमंडलस्थातुयारमा ॥ सत्वात्मिक्येवतत्संस्थोरजआ

उक्थंप्राणोवाउक्थंप्राणोहीदंसर्वमुत्थापयत्युद्धास्माउक्थविद्वीरस्तिष्ठत्युक्थस्यसायुज्यंस
लोकतांजयतियएवंवेद ॥ १ ॥ यजुःप्राणोवैयजुःप्राणेहीमानिसर्वाणिभूतानियुज्यंतेहास्मै
सर्वाणिभूतानिश्रैष्ठ्यायययजुषःसायुज्यंसलोकतांजयतियएवंवेद ॥ २ ॥ सामप्राणोवैसा
मप्राणेहीमानिसर्वाणिभूतानिसम्यञ्चिसम्यञ्चिहास्मैसर्वाणिभूतानिश्रैष्ठ्यायकल्पंतेसाम्नःसा
युज्यंसलोकतांजयतियएवंवेद ॥ ३ ॥ क्षत्रंप्राणोवैक्षत्रंप्राणेहिवैक्षत्रंत्रायतेहैनंप्राणःक्षणि
तोःप्रक्षत्रमत्रमाप्नोतिक्षत्रस्यसायुज्यंसलोकतांजयतियएवंवेद ॥४॥ त्रयोदश०॥७॥१२ ॥
भूमिरंतरिक्षंद्यौरित्यष्टावक्षराण्यष्टाक्षरंहवाएकंगायत्र्यैपदमेतदुहैवास्याएतत्सयावदेषुत्रिषु
लोकेषुतावद्धजयतियोस्याएतदेवंपदंवेद॥१॥ऋचोयजूंषिसामानीत्यष्टावक्षराण्यष्टाक्षरंह
वाएकंगायत्र्यैपदमेतदुहैवास्याएतत्सयावतीयंत्रयीविद्यातावद्धजयतियोस्याएतदेवंपदंवेद

ख्यप्रधानतः ॥ परःपरोरजस्तस्माद्यएवंवेदतंप्रभुम् ॥ लोकानांचैववेदानांसर्वेषांप्राणिनामपि ॥ सदेवाधि
पतिर्भूत्वायशःश्रीमांश्चजायते ॥ गायत्र्युपासनेयोग्योब्रह्मैवहिचतुर्मुखः ॥ तस्मादुक्तफलंसर्वंसर्वोपासा
चतस्यहि ॥ अंशेनोपासनान्येषांफलमल्पंचयोग्यतः॥ गायत्र्यानह्ययोग्योपिद्विजोयोग्योपिनकश्चित्॥
ऋतेविरिंचंतस्मात्तुतस्यैवह्यखिलंफलम् ॥ यःपरोरजास्तपतिसतुरीयपदेनप्रणवेनपद्यते ॥ तुरीयंपदंदद

शइवद्दृष्टइव ॥ तदधीनतेजःपुंजस्यसूर्यमंडलस्यदृष्टत्वात् ॥ सूर्यमंडलगोविष्णुःसर्वेषांदृष्टवत्स्थितः ॥ यस्मात्तदुत्थितंतेजोमंडलंदृश्यतेखिलैरितित्रैविध्ये ॥ सर्वैरजःसर्वाप्रकृतिम् ॥ रंजनात्प्रकृतिःप्रोक्तारजइत्येववैदिकैः ॥ तस्याअप्युत्तमोविष्णुर्यतोतःसपरोरजाः ॥ अभिमानिनीतुगायत्र्यामुख्याश्रीःपरिकीर्तिता॥ ब्रह्माण्यमुख्यातोज्ञेयासातुब्रह्माणमाश्रिता ॥ ब्रह्मातुमुख्यगायत्रींसापरोरजआश्रयेदितिच ॥ तद्वा

॥२॥ प्राणोपानोव्यानइत्यष्टावक्षराण्यष्टाक्षरंहवाएकंगायत्र्यैपदमेतदुहैवास्याएतत्सयावदिदंप्राणितावद्धजयतियोस्याएतदेवंपदंवेदाथास्याएतदेवतुरीयंदर्शतंपदंपरोरजायएषतपतियद्वैचतुर्थंतत्तुरीयंदर्शतंपदमितिदहशइवह्येषपरोरजाइतिसर्वमुह्येवैषरजउपर्युपरितपतिएवंहैवश्रियायशसातपतियोस्याएतदेवंपदंवेद ॥३॥ सैषागायत्र्येतस्मिंस्तुरीयेदर्शतेपदेपरोरजसिप्रतिष्ठितातद्वैतत्सत्येप्रतिष्ठितंचक्षुर्वैसत्यंचक्षुर्हवैसत्यंतस्माद्यदिदानींद्वौविवदमानावेयातामहमदर्शमहमश्रौषमितियएवब्रूयादहमदर्शमितितस्माएवश्रद्दध्यामतद्वैतत्सत्यंबलेप्रतिष्ठितंप्राणोवैबलंतत्प्राणेप्रतिष्ठितंतस्मादाहुर्बलंसत्यादोजीयइत्येवमेषागायत्र्यध्यात्मंप्रतिष्ठितासाहैषागयांस्तत्रेप्राणावैगयास्तत्प्राणांस्तत्रेतद्यद्गयांस्तत्रेतस्माद्गायत्रीनामसयामेवामूंसावित्रीमन्वाहैषैवसासयस्माअन्वाहतस्यप्राणांस्त्रायते ॥ ४ ॥ तांहैतामेकेसावित्रीमनु

एतज्जगत्सत्येप्रतिष्ठितम् ॥ भूमिरंतरिक्षंद्यौरित्यादिनाप्रस्तुतत्वात् ॥ तद्वाएतज्जगत्सर्वंचक्षुःसूर्याभिमानिनी ॥ विराणनामविशेषाख्येसर्वदासंप्रतिष्ठितम् ॥ शेषःप्रतिष्ठितोवायौसह्यस्माद्बलवत्तरः ॥ ससत्यइतिसंप्रोक्तःसन्नस्मिन्यातियद्धरिः ॥ वायुःसमाश्रितोदेवींमुख्यांगायत्रिनामिकाम् ॥ साचात्मनामधिप

निमेवंपरममाश्रिता ॥ प्राणानांरक्षणाद्देवगायत्रीसाप्रकीर्तिता॥ सावित्रीतिचयामाहसविष्णुःपरतोरजाः॥ एषैवसाहिगायत्रीसविताहिजनार्दनः ॥ तस्माद्धिसूयतेसर्वंसावित्रीचतदाश्रिता ॥आदित्यस्तत्प्रतीकत्वात्स वितेतिप्रकीर्तितः ॥ प्रतिमायांचतच्छब्दःप्रयोज्योह्युपचारतः॥यस्माआहसविष्णुस्तांगायत्रींजगदीश्वरः॥ ब्रह्मणेनस्यसाप्राणान्सर्वदापातिपुत्रवत् ॥ ब्रह्माहिपुत्रस्तस्यास्तुतत्पुत्राइतरेखिलाः ॥ तामाहुःपरमांदेवीं श्रृणीमहऋगात्मिकाम्॥नैवसाप्रतिमामुख्यागायत्रीपरमास्मृता॥गायत्रीमुख्यवेत्तारोयोग्याब्रह्मपदस्यये॥ तेषांप्रतिग्रहाद्दोषोनकश्चनभविष्यति ॥ नचैकपदविज्ञानफलायालंसुखानिच ॥ विष्णोर्यदाभगवतो

ष्टुभमन्वाहुर्वागनुष्टुबेतद्वाचमनुब्रूमइतितन्नतथाकुर्याद्गायत्रीमेवसावित्रीमनुब्रूयाद्यदिहवाअ प्येवंविद्बह्विवप्रतिगृह्णातिनहवैतद्गायत्र्याएकंचनपदंप्रति ॥ ५ ॥ सयइमांस्त्रींल्लोकान्पूर्णा न्प्रतिगृह्णीयात्सोस्याएतत्प्रथमंपदमाप्नुयादथयावतीयंत्रयीविद्यायस्तावत्प्रतिगृह्णीयात्सोस्या एतद्द्वितीयंपदमाप्नुयादथयावदिदंप्राणियस्तावत्प्रतिगृह्णीयात्सोस्याएतत्तृतीयंपदमाप्नुयादथा स्याएतदेवतुरीयंदर्शतंपदंपरोरजायएषतपतिनैवकेनचनाप्यंकुतउएतावत्प्रतिगृह्णीयात्॥६॥

लोकान्वेदांश्चचेतनान् ॥ विरिंचिजन्मन्यखिलान्प्रतिगृह्णंतिकृत्स्नशः ॥ गायत्रीपदविज्ञानफल मात्रंतदाभवेत् ॥ प्रणवप्रतिपाद्यंयत्तुरीयंभगवत्पदम् ॥ सर्वगंवासुदेवाख्यंनतत्केनचिदाप्यते ॥ गायत्रीत्रि पदज्ञेयमनिरुद्धादिकंत्रयम् ॥ ब्रह्माप्राप्नोतिमुक्तःसन्वासुदेवंनकश्चन ॥ लोकस्थमनिरुद्धंचप्रद्युम्नंवेदगंत था ॥ संकर्षणंवायुसंस्थंव्याप्याब्रह्माविमुक्तिगः ॥ गायत्रीज्ञानसामर्थ्यात्प्रणवज्ञानशक्तितः ॥ वासुदेवं चसंपश्येन्नव्याप्नोतिकथंचन ॥ अनंतत्वाद्वासुदेवःकथंव्याप्योभवेत्प्रभुः ॥ वर्णत्रयात्मप्रकृतिमतीतःसू

र्थमंडले ॥ गुणत्रयात्मिकांबाह्येयतोतःसपरोरजाः ॥ यतोनव्याप्यतेसोसौब्रह्मणापिकथंचन ॥ अतःप्रति
ग्रहोनास्यवासुदेवस्यविद्यतइतिप्रकाशिकायाम्॥तावदेतावत्प्रतिगृह्णीयादितितस्यैवसामर्थ्येनग्रहणार्थम्।
एतावदेवममहस्तेविद्यतइतिवत् ॥ नह्यन्यदेवतावत्प्रतिग्राह्यमस्ति ॥ अष्टाक्षरत्वाद्गायत्र्याःप्रोक्तासैकपदी
तिच ॥ प्रणवेनसहैतास्तुगायत्र्याश्चतुरस्तदा ॥ अकाराद्यतिशांतांतःप्रणवोष्टाक्षरोयतः ॥ पादःप्रणवसंयु

तस्याउपस्थानंगायत्र्यस्येकपदीद्विपदीत्रिपदीचतुष्पद्यपदसिनहिपद्यसेनमस्तेतुरीयायदर्श
तायपदायपरोरजसेसावदोमाप्रापदितियंद्विष्यादसावस्मैकामोमासमृद्धीतिवानहैवास्मैसका
मऋध्यतेयस्माएवमुपतिष्ठतेहमदःप्रापमितिवा ॥ ७ ॥ एतद्धवैतज्जनकोवैदेहोबुडिलमाश्व
तराश्विमुवाचयन्नुहोतद्गायत्रीविद्ब्रूथाअथकथꣳहस्तीभूतोवहसीतिमुखꣳह्यस्याःसम्राण्न
विदांचकारेतिहोवाचतस्याग्निरेवमुखंयदिहवाअपिबह्विवाग्नावभ्यादधतिसर्वमेवतत्संदहत्ये
वꣳहैवैवंविद्यद्यपिबह्विवपापंकुरुतेसर्वमेवतत्संस्थायशुद्धःपूतोजरोमृतःसंभवति ॥ ८ ॥ च
तुर्दशंब्राह्मणम् ॥ ७ ॥ १४ ॥

क्तोगायत्रीसापृथग्यदा ॥ द्विपदींततदाप्रोक्तात्रिपदीस्वपदैस्त्रिभिः ॥ चतुष्पदीसप्रणवाब्रह्मणोन्यैर्नगम्य
ते ॥ अपदीचततःप्रोक्तागायत्र्येवमुपस्थिता ॥ कामाप्राप्तिमपूर्तिंवाशत्रवेसाकरिष्यति ॥ असावदोमेव
प्रापन्नास्मैकामःसमृध्यताम्॥उपस्थिताचेदित्थंसायद्यदोहंसमाप्नुयाम् ॥ इतिसाकामपूर्तिंचस्वस्यसम्यक्क
रिष्यति ॥ सम्यग्ब्रह्मपदावाप्तिंतद्योग्यांमुक्तिमेवच ॥ ब्रह्मणोपासितोदद्याद्गायत्र्याःपुरुषोत्तमः ॥ अले
पंसर्वपापेभ्योविशेषेणप्रतिग्रहात् ॥ तद्योग्यांमुक्तिमन्येषांयथायोग्यमुपासितः ॥ वक्तव्योभगवान्विष्णु

र्गायत्र्यामुखसंस्थितः॥ अग्निमंडलगोनित्यमग्निनामाग्रणीत्वतः॥गायत्र्यास्तुपरिज्ञानंज्ञानेमुखगतेहरौ॥
सफलंभवेदन्यथातुनसम्यक्फलदंभवेत्॥ गायत्रीमुखगोविष्णुर्ज्ञेयःसर्वात्मनाततः ॥ संहर्तासर्वदोषाणा
मग्निस्थःसर्वदाहकः॥ नित्यानंदोग्निवर्णश्चरामःपरशुभृत्सदेतिगायत्रीसंहितायाम्॥ सूर्यमंडलनाम्नातुपात्रे
णस्वमुखंहरिः॥ पिधायैवजगत्सर्वंपश्यत्यमितविक्रमः॥ उदकंपीयतेतेनतमसस्त्रायतेजगत्॥ यतोतःपा
त्रमुद्दिष्टंविद्वद्भिःसूर्यमंडलम्॥ पूषापूर्णत्वतोविष्णुर्दृष्टयेविष्णुधर्मिणः॥ स्वमुखंप्रकाशयेदेकंनान्यथातु

**हिरण्मयेनपात्रेणसत्यस्यापिहितंमुखम्॥ तत्त्वंपूषन्नपावृणुसत्यधर्मायदृष्टये पूषन्नेक**
**र्षेयमसूर्यप्राजापत्यव्यूहरश्मीन्समूहतेजोयत्तेरूपंकल्याणतमंतत्तेपश्यामियोसावसौपुरुषः**
**सोहमस्मिवायुरनिलममृतमथेदंभस्मांतꣳशरीरम् ॐक्रतोस्मरकृतꣳस्मरक्रतोअग्नेनयसुपथा**
**रायेअस्मान्विश्वानिदेववयुनानिविद्वान्॥ युयोध्यस्मज्जुहुराणमेनोभूयिष्ठांतेनमउक्तिंविधे**
**म॥पंचदशंब्राह्मणम्॥७॥१५॥इतिबृहदारण्यकेसप्तमोध्यायः॥७॥**

कथंचन॥ नान्योयत्तादृशोज्ञातातस्मादेकऋषिर्हरिः॥ यमोनियमनात्प्रोक्तःसूर्यऊरीकृतेरयम्॥ ज्ञेयःप्र
जापतेरेवप्राजापत्यस्ततःस्मृतः॥ प्राणेस्थितोयःपुरुषःसोसावहमितिस्मृतः॥ अहेयत्वादसुत्वाच्चमेयत्वा
दस्मिनामकः॥ अदोषत्वादइत्युक्तोवायुस्तन्निलयोयतः॥अनिलंततएवासावमृतंचेतिकीर्त्यते॥ तदाश्रयो
पिह्यमृतःकिमुसाक्षात्स्वयंहरिः॥ क्रतुश्चज्ञानरूपत्वात्सएवहिजनार्दनः॥ सोग्निरंगप्रणेतृत्वाद्विश्वज्ञानवि
द्वांवरइतिच॥ जुहुराणमल्पंकुर्वत्॥ नवाअहमिमंजानातीतिवत्॥ सर्वत्राप्यहंशब्दोऽहेयवाच्येव॥
॥ इतिश्रीमदानंदतीर्थभगवत्पादाचार्यविरचितेश्रीमद्बृहदारण्यकभाष्येसप्तमोध्यायः॥ ७॥

अहंश्रेयोविवादंतुयेनकृत्वाखिलाःसुराः ॥ असमर्थाःस्वरक्षायांसवायुःसुरनायकः ॥ विवदंतोखिलादेवा
ययुर्नारायणंप्रभुम् ॥अहंश्रेयानहंश्रेयानितिवायुपुरःसराः॥उक्तंभगवतातेनयेनत्यक्तेखिलाअपि॥स्थातुंन

योहवैज्येष्ठंचश्रेष्ठंचवेदज्येष्ठश्चश्रेष्ठश्चस्वानांभवतिप्राणोवैज्येष्ठश्चश्रेष्ठश्चज्येष्ठश्चश्रेष्ठश्चस्वानां
भवत्यपिचयेषांबुभूषतियएवंवेद ॥ १ ॥ योहवैवसिष्ठांवेदवसिष्ठःस्वानांभवतिवाग्वैवसिष्ठाव
सिष्ठःस्वानांभवत्यपिचयेषांबुभूषतियएवंवेद॥ २ ॥योहवैप्रतिष्ठांवेदप्रतितिष्ठतिसमेप्रतितिष्ठ
तिदुर्गेचक्षुर्वैप्रतिष्ठाचक्षुषाहिसमेचदुर्गेचप्रतितिष्ठतिप्रतितिष्ठतिसमेप्रतितिष्ठतिदुर्गेयएवंवेद
॥ ३ ॥ योहवैसंपदंवेदसर्वꣳहास्मैपद्यतेयंकामंकामयतेश्रोत्रंवैसंपच्छ्रोत्रेहीमेसर्वेवेदाअभि
संपन्नाःसर्वꣳहास्मैपद्यतेयंकामंकामयतेयएवंवेद ॥ ४ ॥ योहवाआयतनंवेदायतनंस्वानां
भवत्यायतनंवैजनानांमनोवाआयतनमायतनꣳस्वानांभवत्यायतनंजनानांयएवंवेद ॥५॥ यो
हवैप्रजापतिंवेदप्रजायतेहप्रजयापशुभीरेतोवैप्रजापतिःप्रजायतेहप्रजयापशुभिर्यएवंवेद ॥
॥ ६ ॥ तेहेमेप्राणाअहꣳश्रेयसेविवदमानाब्रह्मजग्मुस्तद्धोचुःकोनोवसिष्ठइतितद्धोवाचय
स्मिन्वउत्क्रांतइदꣳशरीरंपापीयोमन्यतेसवोवसिष्ठइति ॥ ७ ॥ वाग्घोच्चक्रामसासंवत्सरंप्रो
ष्यागत्योवाचकथमशकतमदृतेजीवितुमितितेहोचुर्यथाऽकलाअवदंतोवाचाप्राणंतःप्राणेनप
श्यंतःचक्षुषाशृण्वंतःश्रोत्रेणविद्वाꣳसोमनसाप्रजायमानारेतसैवमजीविष्मेतिप्रविवेशहवाक्
॥ ८ ॥ चक्षुर्होच्चक्रामतत्संवत्सरंप्रोष्यागत्योवाचकथमशकतमदृतेजीवितुमितितेहोचुर्यथाअं

शक्ताःसश्रेयानित्युक्ताःपुनरागताः ॥ उत्क्रांताश्चपुनःसर्वेतद्विज्ञप्त्यैपृथक्पृथक्॥ सुपर्णशेषरुद्रेंद्रसूर्यादिपु

पृथक्पृथक् ॥ उत्क्रांतेषुब्रह्मदेहाच्छरीरंनपपातह ॥ क्वतउत्क्रांतमेकंतुतदन्येनिवसंतिच ॥ प्राणउच्चक्र

धाअपश्यंतश्चक्षुषाप्राणंतःप्राणेनवदंतोवाचाशृण्वंतःश्रोत्रेणविद्वांसोमनसाप्रजायमानारेतसैव
मजीविष्मेतिप्रविवेशहचक्षुः ॥ ९ ॥ श्रोत्रंहोच्चक्रामतत्संवत्सरंप्रोष्यागत्योवाचकथमशकत
मद्दतेजीवितुमितितेहोचुर्यथाबधिराअशृण्वंतःश्रोत्रेणप्राणंतःप्राणेनवदंतोवाचापश्यंतश्चक्षु
षाविद्वांसोमनसाप्रजायमानारेतसैवमजीविष्मेतिप्रविवेशहश्रोत्रम् ॥ १० ॥ मनोहोच्चक्राम
तत्संवत्सरंप्रोष्यागत्योवाचकथमशकतमद्दतेजीवितुमितितेहोचुर्यथामुग्धाअविद्वांसोमनसा
प्राणंतःप्राणेनवदंतोवाचापश्यंतश्चक्षुषाशृण्वंतःश्रोत्रेणप्रजायमानारेतसैवमजीविष्मेतिप्रविवे
शहमनः ॥ ११ ॥ रेतोहोच्चक्रामतत्संवत्सरंप्रोष्यागत्योवाचकथमशकतमद्दतेजीवितुमिति
तेहोचुर्यथाक्लीबाअप्रजायमानारेतसाप्राणंतःप्राणेनवदंतोवाचापश्यंतश्चक्षुषाशृण्वंतःश्रोत्रेण
विद्वांसोमनसैवमजीविष्मेतिप्रविवेशहरेतः ॥ १२ ॥ अथहप्राणउत्क्रमिष्यन्यथामहासुहयः
सैंधवःपड्वीशशंकून्संवृहेदेवंहैवेमान्प्राणान्संबबर्हतेहोचुर्माभगवउत्क्रामीर्नवैशक्ष्यामस्त्वद्दते
जीवितुमितितस्योमेबलिंकुरुतेतितथेति ॥ १३ ॥ साहवागुवाचयद्वाअहंवसिष्ठास्मित्वंतद्व
सिष्ठोसीतियद्वाअहंप्रतिष्ठास्मित्वंतत्प्रतिष्ठोसीतिचक्षुर्यद्वाअहंसंपदस्मित्वंतत्संपदसीतिश्रो
त्रंयद्वाअहमायतनमस्मित्वंतदायतनमसीतिमनोयद्वाअहंप्रजातिरस्मित्वंतत्प्रजातिरसीतिरे
तस्तस्योमेकिमन्नंकिंवासइतियदिदंकिंचआश्वभ्यआक्रिमिभ्यआकीटपतंगेभ्यस्तत्तेन्नमापो

मिषतिस्थातुंनाशक्नुवन्परे ॥ प्राणंविनानचब्रह्मातंविनाप्राणएवच ॥ अन्योन्यापाश्रयाच्छक्तौस्थातुमन्ये

वासइतिनहवाअस्यानन्नंजग्धंभवतिनानन्नंपरिगृहीतंयएवमेतदनस्यान्नंवेदतद्विद्वांसःश्रो
त्रियाअशिष्यंतआचामंत्यशित्वाचाचामंत्येतमेवतदनमनग्नं कुर्वंतोमन्यंतेतस्मादेवंविद्वानशि
ष्यन्नाचामेदशित्वाचाचामेत् ॥ १४ ॥ इतिप्रथमंब्राह्मणम् ॥ १ ॥

श्वेतकेतुर्हवाआरुणेयःपंचालानांपरिषदमाजगामसआजगामजैवलिंप्रवाहणंपरिचारयमा
णंतमुदीक्ष्याभ्युवादकुमारा३इतिसभो३इतिप्रतिशुश्रावानुशिष्टोन्वसिपित्रेत्योमितिहोवाच
॥ १ ॥ वेत्थयथेमाःप्रजाःप्रयंत्योविप्रतिपद्यंता३इतिनेतिहोवाच वेत्थयथेमंलोकंपुनरा
पद्यंता३इतिनेतिहैवोवाचवेत्थयथासौलोकएवंबहुभिःपुनःपुनःप्रयद्भिर्नसंपूर्यता३इतिनेतिहो
वाचवेत्थोयतिथ्यामाहुत्यांहुतायामापःपुरुषवाचोभूत्वासमुत्थायवदंती३इतिनेतिहैवोवाच
वेत्थोदेवयानस्यवापथःप्रतिपदंपितृयाणस्यवा यत्कृत्वादेवयानंवापंथानंप्रतिपद्यंतेपितृयाणंवा
पिहिनर्षेर्वचःश्रुतं द्वेसृतीअशृणवंपितॄणामहंदेवानामुतमर्त्यानांताभ्यामिदंविश्वमेजत्समेति
यदंतरापितरंमातरंचेतिनाहमतएकंचनवेदेतिहोवाच ॥ २ ॥ अथैनंवसत्योपमंत्रयांचक्रेना
दृत्यवसतिंकुमारःप्रदुद्रावसआजगामपितरंतंहोवाचेतिवावकिलनोभवान्पुरानुशिष्टानवोच
दितिकथंसुमेधइतिपंचमाप्रश्नान्राजन्यबंधुरप्राक्षीत्ततोनैकंचनवेदेतिकतमेतइतीमइतिहप्र
तीकान्युदाजहार ॥ ३ ॥ सहोवाचतथानस्त्वंतातजानीथायथायदहंकिंचवेदसर्वमहंतत्तु
भ्यमवोचंप्रेहितुतत्रप्रतीत्यब्रह्मचर्यंवत्स्यावइतिभवानेवगच्छत्वितिसआजगामगौतमोयत्र

कुतस्ततः ॥ तस्मात्प्राणोवरोदेवेष्वितिसर्वेपिमेनिरइतिपवमाने ॥ द्युपर्जन्यधरापुंस्त्रीसंस्थितंपंचरूपिणम्॥
नारायणंवासुदेवंतथासंकर्षणंप्रभुम्॥ प्रद्युम्नंचानिरुद्धंचक्रमाद्ध्यायंस्तुसर्वदा ॥ पंचाग्निविन्नामभवेत्सया
तिपरमंपदम् ॥ नास्यसंसर्गदोषोपिकदाचनभविष्यतीतित्रैविध्ये॥ दृष्टादृष्टमहत्त्वमनेनोपनिषदुक्तविधाने
नजातःपुत्रःप्रायःस्वर्गापवर्गयोग्योभवतीतिप्रजातिकर्मवचनम्॥यथोपनिषदंजातोयोग्यःस्वर्गापवर्गयोः॥
भवेद्यदिमनःपित्रोर्विष्णोर्नान्यत्रगच्छति॥नकुर्याद्यदिकर्मैतन्मनःपित्रोस्तुविष्णुगम् ॥ दृष्टसामर्थ्यहीनश्च

प्रवाहणस्यजैबलेरासतस्माआसनमाहृत्योदकमाहरयांचकाराथहास्माअर्घ्यंचकारतंहो
वाचवरंभवतेगौतमायदद्मइति ॥४॥ सहोवाचप्रतिज्ञातोमएषवरोयांतुकुमारस्यांतेवाचमभा
षथास्तांमेब्रूहीति ॥ ५॥ सहोवाचदैवेषुवैगौतमतद्वरेषुमानुषाणांब्रूहीति ॥ ६ ॥ सहोवा
चविज्ञायतेहास्तिहिरण्यस्योपात्तंगोअश्वानांदासीनांप्रवराणांपरीधानस्यमानोभवानूबहोर
नंतस्यापर्यंतस्याभ्यवदान्योभूदितिसवैगौतमतीर्थेनेच्छसी३इत्युपैम्यहंभवंतमितिवाचाहस्मै
वपूर्वउपयंतिसहोपायनकीर्त्योवास ॥ ७॥ सहोवाच तथानस्त्वंगौतममापराधास्तवचपि
तामहायथेयंविद्येतःपूर्वंनकस्मिंश्चनब्राह्मणउवासतांत्वहंतुभ्यंवक्ष्यामिकोहित्वैवंब्रुवंतमर्हति

मोक्षयोग्यःस्थिरंयदि ॥ दृष्टसामर्थ्यवांश्चस्याद्यज्ञाद्यैःकरणैःक्वचित् ॥ विशेषकारणाभावेयथोक्तंनान्य
थाभवेदितिच ॥ नारायणोद्युशब्दोक्तःसर्वदाद्युतिहेतुतः ॥ वासुदेवस्तुपर्जन्यःपरंसजनयेद्यतः ॥ संकर्ष
णस्तुपृथिवीप्रथितत्वात्सदैवहि ॥ प्रद्युम्नःपुरुषेत्युक्तःपूरयेत्सजगद्यतः ॥ स्त्रीशब्दोक्तोनिरुद्धःस्यात्सहित
स्त्रिषुयत्सदा ॥ अनिरुद्धोहिदेवेषुसर्वदात्रिषुसंस्थितः ॥ द्युवादिषुप्रसिद्धेषुतत्संबंधाद्द्युवादिकः ॥ शब्दोभ

वेत्तथान्यादिरदनात्परमोभवेत्॥ अंगत्वेनार्यतेयस्मादंगारस्तेनकीर्तितः ॥ अर्च्यत्वादर्चिरुद्दिष्टोविष्वक्त्का
द्विष्फुलिंगकाः ॥ समेधनाच्चसमिधस्तत्रतत्रस्थितोहरिः ॥ तत्तच्छब्दैःसदावाच्यइतरेतुतदन्वयात् ॥ आ
दित्योरश्मिरित्याद्याःशब्दाश्चैवमवस्थिताः ॥ एकैकस्मिन्पंचभेदाअर्चिरादिविभागतः ॥ नारायणादिभेदे
नतथैवप्रतिपादिताइतिप्रवृत्ते ॥ धूत्काराद्धूमउद्दिष्टःशत्रूणांपुरुषोत्तमः ॥ अर्चिरर्चतमत्वाच्चस्वांगोंगारइ
तीर्यते ॥ अंगित्वेनांगरूपेणयतएकोव्यवस्थितइत्यादित्रैविध्ये॥ नीचादप्युत्तमाज्ज्ञानंश्रृणुयुर्लीलयाक्वचि

प्रत्याख्यातुमिति ॥ ८ ॥ असौवैलोकोग्निर्गौतमतस्यादित्यएवसमिद्रश्मयोधूमोहरर्चिर्दि
शोंगाराअवांतरदिशोविष्फुलिंगास्तस्मिन्नेतस्मिन्नग्नौदेवाःश्रद्धांजुह्वतितस्याआहुत्यैसोमो
राजासंभवति ॥ ९ ॥ पर्जन्योवाअग्निर्गौतमतस्यसंवत्सरएवसमिदभ्राणिधूमोविद्युदर्चिर
शनिरंगाराह्लादुनयोविष्फुलिंगास्तस्मिन्नेतस्मिन्नग्नौसोमंराजानंजुह्वतितस्याआहुत्यैवृष्टिःसं
भवति ॥ १० ॥ अयंवैलोकोग्निर्गौतमतस्यपृथिव्येवसमिदग्निर्धूमोरात्रिरर्चिश्चंद्रमाअं
गारानक्षत्राणिविष्फुलिंगास्तस्मिन्नेतस्मिन्नग्नौदेवावृष्टिंजुह्वतितस्याआहुत्याअन्नंसंभवति
॥ ११ ॥ पुरुषोवाअग्निर्गौतमतस्यव्यात्तमेवसमित्प्राणोधूमोवागर्चिश्चक्षुरंगाराःश्रोत्रंवि

त् ॥ श्रोतृवक्तृविभेदोयंनाधिक्यज्ञापकस्ततः ॥ यस्याधिक्यंतुवेदोक्तंपंचरात्रेथवाभवेत् ॥ इतिहासपुरा
णेवासोधिकोनेतरःक्वचिदितिब्रह्मतर्के ॥ आदानादादित्यः ॥ रमणाच्छमनाच्चरश्मयः ॥ अहीनत्वाद
हः ॥ चंदनाच्चंद्रः ॥ अस्यक्षत्रमन्यन्नास्तीतिनक्षत्रम्॥ बहुरूपत्वाद्बहुवचनम्॥ज्ञानादायुष्ट्वाच्चवायुः॥अ
न्यैरभरणीयत्वादभ्रम्॥विद्योतनाद्विद्युत्॥अशनादशनिः॥निर्ह्लादनाद्ध्रादुनिः॥आसमंतात्काशनादाकाशः॥

सम्यग्वत्सान्नमयतीतिसंवत्सरः ॥ आदेशनाद्दिशः ॥ अवांतरमादिशतीत्यवांतरदिशः ॥ रतिकरत्वाद्रात्रिः ॥
वचनाद्वाक् ॥ प्रणयनात्प्राणः ॥ जहातिगमयतीतिजिह्वा॥चष्टइतिचक्षुः॥शृणोतीतिश्रोत्रम्॥उपस्थितत्वा



ष्फुलिंगास्तस्मिन्नेतस्मिन्नग्नौअन्नंजुह्वतितस्याआहुत्यैरेतःसंभवति ॥ १२ ॥ योषा
वाअग्निर्गौतमतस्याउपस्थएवसमिल्लोमानिधूमोयोनिरर्चिर्यदंतःकरोतितेंगाराअभिनंदावि
ष्फुलिंगास्तस्मिन्नेतस्मिन्नग्नौदेवारेतोजुह्वतितस्याआहुत्यैपुरुषःसंभवतिसजीवतियावज्जी
वत्यथयदाम्रियते ॥ १३ ॥ अथैनमग्नयेहरंतितस्याग्निरेवाग्निर्भवतिसमित्समिद्धूमो
धूमोर्चिरर्चिरंगाराअंगाराविष्फुलिंगाविष्फुलिंगास्तस्मिन्नेतस्मिन्नग्नौदेवाःपुरुषंजुह्वति तस्या
आहुत्यैपुरुषोभास्वरवर्णःसंभवति ॥ १४ ॥ तेयएवमेतद्विदुर्येचामीअरण्येश्रद्धांसत्य
मुपासतेतेर्चिरभिसंभवंत्यर्चिषोहरह्न आपूर्यमाणपक्षमापूर्यमाणपक्षाद्यान्षण्मासानुदङ्ङादि
त्यएतिमासेभ्योदेवलोकंदेवलोकादादित्यमादित्याद्वैद्युतंतान्वैद्युतान्पुरुषोमानवएत्यब्रह्म
लोकान्गमयतितेतेषुब्रह्मलोकेषुपराःपरावतोवसंतितेषांनपुनरावृत्तिः ॥ १५ ॥ अथये
यज्ञेनदानेनतपसालोकाञ्जयंतितेधूममभिसंभवंतिधूमाद्रात्रिंरात्रेरपक्षीयमाणपक्षमपक्षीय
माणपक्षाद्यान्षण्मासान्दक्षिणादित्यएतिमासेभ्यःपितृलोकंपितृलोकाच्चंद्रंतेचंद्रंप्राप्यान्नंभ
वंतितांस्तत्रदेवायथासोमंराजानमाप्यायस्वापक्षीयस्वेत्येवमेनांस्तत्रभक्षयंतितेषांयदातत्पर्य



द्रुपस्थः ॥ यापयतिनयतिचेतियोनिः ॥ अभिनंदयतीत्यभिनंदः ॥ उपमंत्रणमंतःकरणंचसएवकरोति ॥

तद्धीनंयतःसर्वंसर्वशब्दैस्ततोहरिः ॥ मुख्याभिधेयस्त्वन्यानितत्संगादुपचारतइतिब्रह्मतर्के ॥ तदधीनत्वा

वैत्यथेममेवाकाशमभिनिष्पद्यंतआकाशाद्वायुंवायोर्वृष्टिंवृष्टेःपृथिवींतेपृथिवींप्राप्यान्नंभवंति
पुनःपुरुषाग्नौहूयंतेततोयोषाग्नौततोजायंतेलोकान्प्रत्युत्थायिनस्तएवमेवानुपरिवर्तंतेऽथयए
तौपंथानौनविदुस्तेकीटाःपतंगायदिदंदंदशूकम् ॥ १६ ॥ द्वितीयंब्राह्मणम् ॥ ८ ॥ २ ॥

सयःकामयतेमहत्प्राप्नुयामित्युदगयनंआपूर्यमाणपक्षस्यपुण्याहेद्वादशाहमुपवसद्व्रतीभूत्वौदुंबरे
कंसेचमसेवासर्वौषधंफलानीतिसंभृत्यपरिसमूह्यपरिलिप्याग्निमुपसमाधायपरिस्तीर्यावृता
ज्यंसंस्कृत्यपुंसानक्षत्रेणमंथंसन्नीयजुहोतियावंतोदेवास्त्वयिजातवेदस्तिर्यंचोघ्नंतिपु
रुषस्यकामांस्तेभ्योहंभागधेयंजुहोमितेमातृप्ताःसर्वैःकामैस्तर्पयंतुस्वाहायातिरश्चीनिपद्यतेहं
विधरणीइतितांत्वाघृतस्यधारयायजेसंराधनीमहंस्वाहा॥ १॥ज्येष्ठायस्वाहाश्रेष्ठायस्वाहेत्य
ग्नौहुत्वामंथेसंस्रवमवनयतिप्राणायस्वाहावसिष्ठायैस्वाहेत्यग्नौहुत्वामंथेसंस्रवमवनयतिवा
चेस्वाहाप्रतिष्ठायैस्वाहेत्यग्नौहुत्वामंथेसंस्रवमवनयतिचक्षुषेस्वाहासंपदेस्वाहेत्यग्नौहुत्वामंथेस
ंस्रवमवनयतिश्रोत्रायस्वाहायतनायस्वाहेत्यग्नौहुत्वामंथेसंस्रवमवनयतिमनसेस्वाहाप्रजात्यै
स्वाहेत्यग्नौहुत्वामंथेसंस्रवमवनयतिरेतसेस्वाहेत्यग्नौहुत्वामंथेसंस्रवमवनयति ॥ २ ॥ अग्न
येस्वाहेत्यग्नौहुत्वामंथेसंस्रवमवनयतिसोमायस्वाहेत्यग्नौहुत्वामंथेसंस्रवमवनयतिभूःस्वाहे

दर्थवदितिभगवद्वचनम् ॥ समाकर्षादितिच ॥ पंचाग्निविद्ययाचैवतथैवप्राणविद्यया ॥ प्रजातिकर्मणाचै
वतथाज्ञानप्रदानतः ॥ आचार्यवंशविज्ञानाद्यःपूज्यःपुरुषोत्तमः ॥ सर्वांतर्यामिकोनित्योनमस्तस्मैपरात्म

त्यग्नौहुत्वामंथेसꣳस्रवमवनयतिभुवःस्वाहेत्यग्नौहुत्वामंथेसꣳस्रवमवनयतिस्वःस्वाहेत्यग्नौहुत्वा
मंथेसꣳस्रवमवनयतिभूर्भुवःस्वःस्वाहेत्यग्नौहुत्वामंथेसꣳस्रवमवनयतिब्रह्मणेस्वाहेत्यग्नौहुत्वामं
थेसꣳस्रवमवनयतिक्षत्रायस्वाहेत्यग्नौहुत्वामंथेसꣳस्रवमवनयतिभूतायस्वाहेत्यग्नौहुत्वामंथेसꣳ
स्रवमवनयतिभविष्यतेस्वाहेत्यग्नौहुत्वामंथेसꣳस्रवमवनयतिविश्वायस्वाहेत्यग्नौहुत्वामंथेसꣳ
स्रवमवनयतिसर्वायस्वाहेत्यग्नौहुत्वामंथेसꣳस्रवमवनयतिप्रजापतयेस्वाहेत्यग्नौहुत्वामंथेसꣳस्र
वमवनयति।।३।। अथैनमभिमृशतिभ्रमदसिज्वलदसिपूर्णमसिप्रस्तब्धमस्येकशफमसिहिंकृत
मसिहिंक्रियमाणमस्युद्गीथमस्युद्गीयमानमसिश्रावितमसिप्रत्याश्रावितमस्यार्द्रेसंदीप्तमसिविभु
रसिप्रभुरस्यन्नमसिज्योतिरसिनिधनमसिसंसर्गोसीति।४।अथैनमुद्यच्छत्यामꣳस्यामꣳहितेम
हिसहिराजेशानोधिपतिःसमाꣳराजेशानोधिपतिंकरोत्विति।५।अथैनमाचामतितत्सवितुर्वरेण्यं
मधुवाताऋतायतेमधुक्षरंतिसिंधवः माध्वीर्नःसंत्वोषधीर्भूःस्वाहा भर्गोदेवस्यधीमहिमधुनक्तमु
तोषसोमधुमत्पार्थिवꣳरजः मधुद्यौरस्तुनःपिताभुवःस्वाहाधियोयोनःप्रचोदयात् मधुमान्नोवन
स्पतिर्मधुमाꣳअस्तुसूर्यः माध्वीर्गावोभवंतुनः स्वःस्वाहेतिसर्वांचसावित्रीमन्वाहसर्वाश्चमधुम
तीःसर्वाश्चव्याहृतीरहमेवेदꣳसर्वꣳभूयासंभूर्भुवःस्वःस्वाहेत्यंततआचम्यपाणीप्रक्षाल्यजघने
नाग्निंप्राक्शिराःसंविशतिप्रातरादित्यमुपतिष्ठतेदिशामेकपुंडरीकमस्यहंमनुष्याणामेकपुंडरी
कंभूयासमितियथेतमेत्यजघनेनाग्निमासीनोवंशंजपति ।। ६ ।। तंहैतमुद्दालकआरुणिर्वाज
सनेयाययाज्ञवल्क्यायांतेवासिनउक्त्वोवाचापियएनंशुष्केस्थाणौनिषिंचेज्जायेरञ्छाखाःप्र

रोहेयुःपलाशानीति ॥ ७॥ एतमुहैववाजसनेयोयाज्ञवल्क्योमधुकायपैंग्यायांतेवासिनउक्त्वो
वाचापियएनंशुष्केस्थाणौनिषिंचेज्जायेरन्शाखाःप्ररोहेयुःपलाशानीति॥८॥एतमुहैवमधुकः
पैंग्यश्चूलायभागवित्तयेंतेवासिनउक्त्वोवाचापियएनंशुष्केस्थाणौनिषिंचेज्जायेरञ्छाखाःप्ररो
हेयुःपलाशानीति।९।एतमुहैवचूलोभागवित्तिर्जानकायआयस्थूणायांतेवासिनउक्त्वोवाचा
पियएनंशुष्केस्थाणौनिषिंचेज्जायेरञ्छाखाःप्ररोहेयुःपलाशानीति॥१०॥एतमुहैवजानकिराय
स्थूणःसत्यकामायजाबालायांतेवासिनउक्त्वोवाचापियएनंशुष्केस्थाणौनिषिंचेज्जायेरञ्छा
खाःप्ररोहेयुःपलाशानीति ॥११॥एतमुहैवसत्यकामोजाबालोंतेवासिभ्यउक्त्वोवाचापियएनं
शुष्केस्थाणौनिषिंचेज्जायेरञ्छाखाःप्ररोहेयुःपलाशानीतितमेतंनापुत्रायवानंतेवासिनेवाब्रूया
त् ॥ १२॥ चतुरौदुंबरोभवत्यौदुंबरःस्रुवऔदुंबरश्चमसऔदुंबरइध्मऔदुंबर्यावुपमंथन्यौदश
ग्राम्याणिधान्यानिभवंतिव्रीहियवास्तिलमाषाअणुप्रियंगवोगोधूमाश्चमसूराश्चखल्वाश्चखल
कुलाश्चतान्पिष्टान्दधिनिमधुनिघृतउपसिंचत्याज्यस्यजुहोति॥१३॥तृतीयंब्राह्मणम् ॥८।३॥
एषांवैभूतानांपृथिवीरसःपृथिव्याआपोऽपामोषधयओषधीनांपुष्पाणिपुष्पाणांफलानिफ
लानांपुरुषःपुरुषस्यरेतः ॥ १ ॥ सहप्रजापतिरीक्षांचक्रेहंतास्मैप्रतिष्ठांकल्पयानीतिसस्त्रि
यंससृजेतांसृष्ट्वाथउपासततस्मात्स्त्रियमधउपासीतसएतंप्राञ्चंग्रावाणमात्मनएवसमुदपारयत्ते
नैनामभ्यसृजत् ॥ २ ॥ तस्यावेदिरुपस्थोलोमानिबर्हिश्चर्माधिषवणेसमिद्धोमध्यतस्तौमु
ष्कौसयावान्हवैवाजपेयेनयजमानस्यलोकोभवतितावानस्यलोकोभवतियएवंविद्वानधोपहा

संचरत्यासांस्त्रीणांसुकृतंवृंक्ते ऽथयदिदमविद्वानधोपहासंचरत्यस्यस्त्रियःसुकृतंवृंजते ॥ ३ ॥
एतद्धस्मवैतद्विद्वानुद्दालकआरुणिराहैतद्धस्मवैतद्विद्वान्नाकोमौद्गल्यआहैतद्धस्मवैतद्विद्वान्कुमारहारीतआहबहवोमर्याब्राह्मणायनानिरिंद्रियाविसुकृतोस्माल्लोकात्प्रयंतियइदमविद्वाꣳसोधोपहासंचरंतीतिबहुवाइदंसुप्तस्यवाजाग्रतोवारेतःस्कंदति ॥ ४ ॥ तदभिमृशेदनुवामंत्रयेतयन्मेद्यरेतःपृथिवीमस्कात्सीद्यदोषधीरप्यसरद्यदपइदमहंतद्रेतआददेपुनर्मामैत्विंद्रियंपुनस्तेजःपुनर्भगःपुनरग्निर्धिष्ण्यायथास्थानंकल्पंतामित्यनामिकांगुष्ठाभ्यामादायांतरेणस्तनौवाभ्रुवौवानिमृज्यात् ॥ ५ ॥ अथयद्युदकआत्मानंपरिपश्येत्तदभिमंत्रयेतमयितेजइंद्रियंयशोद्रविणंसुकृतमितिश्रीर्हवाएषास्त्रीणांयन्मलोद्वासास्तस्मान्मलोद्वाससंयशस्विनीमभिक्रम्योपमंत्रयेत ॥ ६ ॥ साचेदस्मैनदद्यात्काममेनामवक्रीणीयात्साचेदस्मैनैवदद्यात्काममेनांयष्ट्यावापाणिनावोपहत्यातिक्रामेदिंद्रियेणतेयशसायशआददइत्ययशाएवभवति ॥ ७ ॥ साचेदस्मैदद्यादिंद्रियेणतेयशसायशआदधामीतियशस्विनावेवभवतः ॥ ८ ॥ सयामिच्छेत्कामयेतमेतितस्यामर्थंनिष्ठायमुखेनमुखꣳसंधायोपस्थमस्याअभिमृश्यजपेत् अंगादंगात्संभवसिहृदयादधिजायसे सत्वमंगकषायोसिदिग्धविद्धामिवमादयेमाममूंमयीति॥ ९ ॥अथयामिच्छेन्नगर्भंदधीतेतितस्यामर्थंनिष्ठायमुखेनमुखंसंधायाभिप्राण्यापान्यादिंद्रियेणतेरेतसारेतआददइत्यरेताएवभवति॥ १० ॥अथयामिच्छेद्दधीतेतितस्यामर्थंनिष्ठायमुखेनमुखंसंधायापान्याभिप्राण्यादिंद्रियेणतेरेतसारेतआदधामीतिगर्भिण्येवभवति॥ ११ ॥अथयस्यजायायैजारःस्यात्तं

चेद्विष्यादामपात्रेऽग्निमुपसमाधायप्रतिलोमंशरबर्हिस्तीर्त्वातस्मिन्नेताःशरभृष्टीःप्रतिलोमाःस
र्पिषाक्ताजुहुयान्ममसमिद्धेहौषीःप्राणापानौतआददेसावितिममसमिद्धेहौषीःपुत्रंपशूंस्तआ
ददेसावितिममसमिद्धेहौषीरिष्टासुकृतेतआददेसावितिममसमिद्धेहौषीराशापराकाशौतआद
देसावितिसवाएषनिरिंद्रियोविसुकृतोस्माल्लोकात्प्रैतियमेवंविद्वान्ब्राह्मणःशपतितस्मादेवंवि
च्छ्रोत्रियस्यदारेणनोपहासमिच्छेदुतह्येवंवित्परोभवति॥ १२॥अथयस्यजायामार्तवंविंदेत्त्र्य
हंकंसेनपिबेदहतवासानैनांवृषलोनवृषल्युपहन्यात्त्रिरात्रांतआप्लुत्यव्रीहीनवघातयेत्॥ १३॥
सयइच्छेत्पुत्रोमेशुक्लोगौरोजायेतवेदमनुब्रवीतसर्वमायुरियादितिक्षीरौदनंपाचयित्वासर्पिष्मं
तमश्नीयातामीश्वरौजनयितवै ॥ १४॥ अथयइच्छेत्पुत्रोमेकपिलःपिंगलोजायेतद्वौवेदावनु
ब्रवीतसर्वमायुरिया[illegible]दध्योदनंपाचयित्वासर्पिष्मंतमश्नीयातामीश्वरौजनयितवै ॥ १५ ॥
अथयइच्छेत्पुत्रोमेश्यामो[illegible]हिताक्षोजायेतत्रीन्वेदाननुब्रवीतसर्वमायुरियादित्युदौदनंपाच
यित्वासर्पिष्मंतमश्नीयातामीश्वर[illegible]वै ॥ १६ ॥ अथयइच्छेद्दुहितामेपंडिताजायेतस
र्वमायुरियादितितिलौदनंपाचयित्वासर्पिष्मं[illegible]श्नीयातामीश्वरौजनयितवै ॥ १७ ॥ अ
थयइच्छेत्पुत्रोमेपंडितोविजिगीतःसमितिंगमःशु[illegible]पिताजायेतसर्वान्वेदाननुब्र
वीतसर्वमायुरियादितिमांसौदनंपाचयित्वासर्पिष्मंतमश्नी[illegible]यितवैऔक्षेणवर्ष
भेणवा ॥ १८ ॥ अथाभिप्रातरेवस्थालीपाकावृताज्यंचेष्टित्वा[illegible]कस्[illegible]तंजुहो
त्यग्नयेस्वाहानुमतयेस्वाहादेवायसवित्रेसत्यप्रसवायस्वाहेतिहुत्वोद्धृत्यप्राश्नाति[illegible]

प्रयच्छतिप्रक्षाल्यपाणीउदपात्रंपूरयित्वातेनैनांत्रिरभ्युक्षत्युत्तिष्ठातोविश्वावसोन्यामिच्छप्र
पूर्व्यांसंजायांपत्यासहेति ॥ १९ ॥ अथैनामभिपद्यतअमोहमस्मिसात्वंसात्वमस्यमोहंसा
माहमस्मिऋक्त्वंद्यौरहंपृथिवीत्वंतावेहिसꣳरभावहैसहरेतोदधावहैपुंसेपुत्रायवित्तयइति ॥
॥ २० ॥ अथास्याऊरूविहापयतिविजिहीथांद्यावापृथिवीइतितस्यामर्थंनिष्ठायमुखेनमु
खंसंधायत्रिरेनामनुलोमामनुमार्ष्टि विष्णुर्योनिंकल्पयतुत्वष्टारूपाणिपिꣳशतु ॥ आसिंच
तुप्रजापतिर्धातागर्भंदधातुते ॥ गर्भंधेहिसिनीवालिगर्भंधेहिपृथुष्टुके ॥ गर्भंतेअश्विनौदेवावा
धत्तांपुष्करस्रजौ ॥ २१ ॥ हिरण्मयीअरणीयाभ्यांनिर्मंथतामश्विनौ ॥ तंतेगर्भंहवाम
हेदशमेमासिसूतवेइति ॥ यथाग्निगर्भापृथिवीयथाद्यौरिंद्रेणगर्भिणी॥वायुर्दिशांयथागर्भएवंगर्भंदधा
मितेसाविति ॥२२॥ सोष्यंतीमद्भिरभ्युक्षतियथावायुःपुष्करिणींसमिंगयतिसर्वतएवातेगर्भए
जतुसहावैतुजरायुणाइंद्रस्यायंव्रजःकृतःसार्गलःसपरिश्रयस्तमिंद्रनिर्जहिगर्भेणसावरांसहेति
॥२३॥ जातेग्निमुपसमाधायांकआधायकꣳसेपृषदाज्यंसन्नीयपृषदाज्यस्योपघातंजुहोत्य
स्मिन्सहस्रंपुष्यासमेधमानःस्वेगृहे ॥ अस्योपसद्यामाच्छेत्सीःप्रजयाचपशुभिश्चस्वाहामयि
प्राणाꣳस्त्वयिमनसाजुहोमिस्वाहा यत्कर्मणात्यरीरिचंयद्वान्यूनमिहाकरम्॥ अग्निष्टत्स्विष्टकृ
द्विद्वान्स्विष्टꣳसुहुतंकरोतुनःस्वाहेति॥२४॥अथास्यदक्षिणंकर्णमभिनिधायवाग्वागितित्रिरथ
दधिमधुघृतंसंनीयानंतर्हितेनजातरूपेणप्राशयतिभूस्तेदधामिभुवस्तेदधामिस्वस्तेदधामिभूर्भु
वःस्वःसर्वंत्वयिदधामीति ॥ २५ ॥ अथास्यनामकरोतिवेदोसीतितदस्यतद्गुह्यमेवनामभव

ति ॥ २६ ॥ अथैनंमात्रेप्रदायस्तनंप्रयच्छति यस्तेस्तनःशशयोयोमयोभूर्योरत्नधावसुविद्यः सुदत्रः येनविश्वापुष्यसिवार्याणिसरस्वतितमिहधातवेकरिति ॥ २७ ॥ अथास्यमातरमभिमंत्रयतइलासिमैत्रावरुणीवीरेवीरमजीजनत् सात्वंवीरवतीभवयास्मान्वीरवतोकरदितिनंवा एतमाहुरतिपिताबताभूरतिपितामहोबताभूःपरमाबतकाष्ठांप्रापच्छ्रियायशसाब्रह्मवर्चसेनय एवंविदोब्राह्मणस्यपुत्रोजायतइति ॥ २८ ॥ चतुर्थंब्राह्मणम् ॥ ८ ॥ ४ ॥ ॥

अथवंशः पौतिमाषीपुत्रःकात्यायनीपुत्रात्कात्यायनीपुत्रोगौतमीपुत्राद्गौतमीपुत्रोभारद्वाजीपुत्राद्भारद्वाजीपुत्रःपाराशरीपुत्रात्पाराशरीपुत्रऔपस्वस्थीपुत्रादौपस्वस्थीपुत्रःपाराशरीपुत्रात्पाराशरीपुत्रःकात्यायनीपुत्रात्कात्यायनीपुत्रःकौशिकीपुत्रात्कौशिकीपुत्रआलंबीपुत्राच्चवैयाघ्रपदीपुत्राच्चवैयाघ्रपदीपुत्रःकाण्वीपुत्राच्चकापीपुत्राच्चकापीपुत्रः ॥ १ ॥ आत्रेयीपुत्रादात्रेयीपुत्रोगौतमीपुत्राद्गौतमीपुत्रोभारद्वाजीपुत्राद्भारद्वाजीपुत्रःपाराशरीपुत्रात्पाराशरीपुत्रोवात्सीपुत्राद्वात्सीपुत्रःपाराशरीपुत्रात्पाराशरीपुत्रोवार्कारुणीपुत्राद्वार्कारुणीपुत्रोवार्त्तभागीपुत्रादार्त्तभागीपुत्रःशौंगीपुत्राच्छौंगीपुत्रःसांकृतीपुत्रात्सांकृतीपुत्रआलंबायनीपुत्रादालंबायनीपुत्रआलंबिनीपुत्रादालंबिनीपुत्रोजायंतीपुत्राज्जायंतीपुत्रोमांडूकायनीपुत्रान्मांडूकायनीपुत्रोमांडूकीपुत्रान्मांडूकीपुत्रःशांडिलीपुत्राच्छांडिलीपुत्रोराथीतरीपुत्राद्राथीतरीपुत्रोभालुकीपुत्राद्भालुकीपुत्रःक्रौंचिकीपुत्राभ्यांक्रौंचिकीपुत्रौवैधृपतीपुत्राद्वैधृपतीपुत्रःकार्षकेयीपुत्रात्कार्षकेयीपुत्रःप्राचीनयोगीपुत्रात्प्राचीनयोगीपुत्रःसांजीवीपुत्रात्सांजीवीपुत्रःप्रा

नइतिसद्भावे ॥ नित्यानंदमनौपमंपरमजंसर्वत्रगंसुस्थिरंसर्वज्ञंप्रनिबोधमात्रममलंपूर्णंगुणैरच्युतेः ॥ विश्वो
त्पत्तिलयस्थितिप्रमतिसन्मोक्षेपरंकारणंप्रेष्ठंमेसततंप्रियात्प्रियतमंनित्यंसदोपास्महे ॥ यस्यत्रीण्युदितानि
वेदवचनेरूपाणिदिव्यान्यलंबट्तद्दर्शनमित्थमेवनिहितंदेवस्यभर्गोमहत् ॥ वायोरामवचोनयंप्रथमकंपृ

श्रीपुत्रादासुरिवासिनःप्राश्नीयपुत्राआसुरायणादासुरायणआसुरेरासुरिः ॥२॥ याज्ञवल्क्या
द्याज्ञवल्क्यउद्दालकादुद्दालकोअरुणादरुणउपवेशेरुपवेशिःकुश्रेःकुश्रिर्वाजश्रवसोवाजश्रवा
जिह्वावतोबाध्योगाज्जिह्वावान्बाध्योगोसितावार्षगणादसितोवार्षगणोहरितात्कश्यपाद्धरितः
कश्यपःशिल्पात्कश्यपाच्छिल्पःकश्यपःकश्यपान्नैध्रुवेःकश्यपोनैध्रुविर्वाचोवागंभिण्याअंभि
ण्यादित्यादादित्यानीमानिशुक्लानियजूंषिवाजसनीयेनयाज्ञवल्क्येनाख्यायंते ॥ ३ ॥
समानमासांजीवीपुत्रात्सांजीवीपुत्रोमांडूकायनेर्मांडूकायनिर्मांडव्यान्मांडव्यःकौत्सात्कौत्सो
माहित्थेर्माहित्थिर्वामकक्षायणाद्वामकक्षायणःशांडिल्याच्छांडिल्योवात्स्याद्वात्स्यःकुश्रेःकुश्रि
र्यज्ञवचसोराजस्तंबायनाद्यज्ञवचाराजस्तंबायनस्तुरात्कावषेयात्तुरःकावषेयःप्रजापतेःप्रजा
पतिःब्रह्मणोब्रह्मस्वयंभुब्रह्मणेनमः ॥ ४ ॥ पञ्चमंब्राह्मणम् ॥ ८ ॥ ५ ॥ इतिबृहदारण्यकेऽ
ष्टमोऽध्यायः ॥ श्रीकृष्णार्पणमस्तु ॥ इतिश्रीमद्बृहदारण्यकोपनिषत्समाप्ता ॥

क्षोद्वितीयंवपुर्मध्वोयत्तुतृतीयकंकृतमिदंभाष्यंहितेनप्रभौ ॥ हनुशब्दोज्ञानवाचीहनुमान्मतिशब्दितः ॥
रामस्यस्वत्तरूपस्यवाचस्तेतानयंतहि ॥ भृतमोभीमइत्युक्तोवाचोमामातरःस्मृताः ॥ ऋगाद्याइतिहासश्च
पुराणंपंचरात्रकम्॥प्रोक्ताःसप्तशिवास्तत्रशयोभीमःस्ततःस्मृतः॥मध्वित्यानंदउद्दिष्टोवेतिर्तीर्थमुदाहृतम् ॥

मध्वआनंदतीर्थःस्यात्तृतीयामारुतीतनुः ॥ इतिसूक्तगतंरूपत्रयमेतन्महात्मनः॥योवेदवेदवित्सस्यात्तत्त्ववित्तत्प्रसादतः ॥ साधकोरामकार्याणांतत्समीपगतःसदा ॥ हनुमान्प्रथमोज्ञेयोभीमस्तुबहुभुक्पितोः ॥ पृतनाक्षयकारीचद्वितीयस्तुतृतीयकः ॥ पूर्णप्रज्ञस्तथानंदतीर्थनामाप्रकीर्तितः ॥ दशेतिसर्वमुद्दिष्टंसर्वंपूर्णमिहोच्यते ॥ प्रज्ञाप्रमतिरुद्दिष्टापूर्णप्रज्ञस्ततःस्मृतः ॥ आसमंतात्पतित्वेतुगूढंकलियुगेहरिम् ॥ असत्यमप्रतिष्ठंतुजगदेतदनीश्वरम् ॥ वदद्भिर्गूहितंसंतंतृतीयोसुर्मथायति ॥ येनविष्णोर्हिवपाख्यानृगुणानज्ञासिषुःपरान् ॥ ईशानासःसूरयश्वनिगूढान्निर्गुणोक्तिभिः ॥ त्रेतायांद्वापरेचैवकलौचैतेक्रमात्त्रयः ॥ येषांहिपरमोविष्णुर्भतासर्वेश्वरेश्वरः ॥ स्वयंतुब्रह्मसंज्ञोसौपरस्मैब्रह्मणेनमइतिच ॥ पूर्णागण्यगुणोदारधाम्नेनित्यायवेधसे ॥ अमंदानंदसांद्रायप्रेयसेविष्णवेनमः ॥ इतिश्रीमदानंदतीर्थभगवत्पादाचार्यविरचितेश्रीमद्बृहदारण्यकोपनिषद्भाष्येऽष्टमोध्यायः ॥ ८ ॥ समाप्तोयंग्रंथः ॥ ॥ ॥ ॥



॥ इति बृहदारण्योपनिषद्भाष्यसमेता॥ १८॥

॥ अथ भाष्ययुते ईशावास्यकाठकोपनिषदौ ॥ १९॥२०॥

श्रीमन्मध्वहृत्सरोजवर्तिश्रीमन्नारायणायनमः ॥ हरिः ॐ ॥ नित्यानित्यजगद्धात्रेनित्यायज्ञानमूर्तये॥ पू
र्णानंदायहरयेसर्वयज्ञभुजेनमः ॥१॥ यस्माद्ब्रह्मेंद्ररुद्रादिदेवतानांश्रियोपिच ॥ ज्ञानस्फूर्तिस्सदातस्मैहरये
गुरवेनमः ॥ २ ॥ स्वायंभुवोमनुरेतैर्मंत्रैर्भगवंतमाकूतिसूनुंयज्ञनामानंविष्णुंतुष्टाव ॥ स्वायंभुवस्स्वदौहित्रं
विष्णुंयज्ञाभिधंमनुः ॥ ईशावास्यादिभिर्मंत्रैस्तुष्टावाऽवहितात्मना ॥ रक्षोभिरुग्रैस्संप्राप्तःखादितुंमो
चितस्तदा ॥ स्तोत्रंश्रुत्वैवयज्ञेनतान्हत्वाऽवध्यतांगतान् ॥ प्रादाद्धिभगवांस्तेषामवध्यत्वंहरःप्रभुः ॥ तैर्व
ध्यत्वंतथान्येषामितःकोन्योहरेःप्रभुरितिब्रह्मांडे ॥ भागवतेचायमेवार्थउक्तः ॥ ईशस्यावासयोग्यमी

श्रीमद्भारतीरमणमुख्यप्राणांतर्वर्तिश्रीनृपंचास्यायनमः ॥ ॥ हरिः ॐ ॥ ईशावास्यमिदꣳ
सर्वंयत्किंचजगत्यांजगत् ॥ तेनत्यक्तेनभुञ्जीथामागृधःकस्यस्विद्धनम् ॥ १ ॥ कुर्वन्नेवेहक
र्माणिजिजीविषेच्छतꣳसमाः ॥ एवंत्वयिनान्यथेतोऽस्तिनकर्मलिप्यतेनरे ॥ २ ॥ असुर्याना
मतेलोकाअंधेनतमसावृताः ॥ ताꣳस्तेप्रेत्याभिगच्छंतियेकेचात्महनोजनाः ॥ ३ ॥ अ

शावास्यम् ॥ जगत्यांप्रकृतौ ॥ तेनेशेनत्यक्तेनदत्तेनभुंजीथाः ॥ स्वतःप्रवृत्त्यशक्तत्वादीशावास्यमिदंजग
त् ॥ प्रवृत्तयेप्रकृतिगंयस्मात्सप्रकृतीश्वरः ॥ तदधीनप्रवृत्तित्वात्तदीयंसर्वमेवतत् ॥ तद्दत्तेनैवभुंजीथाअ
तोनान्यंप्रयाचयेदितिब्रह्मांडे ॥ १ ॥ अकुर्वतःकर्मनलिप्यतइतिनास्ति ॥ अज्ञस्यकर्मलिप्येतकृष्णोपा
स्तिमकुर्वतः ॥ ज्ञानिनोपियतोह्रासआनंदस्यभवेद्ध्रुवम् ॥ अतोऽलेपेपिलेपस्स्यादतःकार्यैवसासदेतिना
रदीये ॥ २ ॥ सुष्ठुरमणविरुद्धत्वादसुराणांप्राप्यत्वाच्चासुर्याः ॥ नचरमंत्यहोअसदुपासनयात्महनइत्यु
क्तत्वात् ॥ महादुःखैकहेतुत्वात्प्राप्यत्वादसुरैस्तथा ॥ असुर्यानामतेलोकास्तान्यांतिविमुखाहराविति च

वामने ॥ येकेचेतिनियमउक्तः ॥ नियमेनतमोयांतिसर्वेपिविमुखाहराविति च ॥ २ ॥ अनेजन्निर्भय
त्वात्तदेकंप्राधान्यतस्तथा ॥ सम्यग्ज्ञातुमशक्यत्वादगम्यंतत्सुरैरपि ॥ स्वयंतुसर्वानगमत्पूर्वमेवस्वभावतः ॥
अचिंत्यशक्तितश्चैवसर्वगत्वाच्चतत्परम् ॥ द्रवतोत्येतिसंतिष्ठत्तस्मिन्कर्माण्यधान्मरुत् ॥ मारुत्येवयतश्चे
ष्टासर्वातांहरयेर्पयेदितिब्रह्मांडे ॥ ऋषज्ञाने ॥ तदेजतिततएवएजत्यन्यत् ॥ तत्स्वयंनेजति ॥ ततोबिभे
तिसर्वोपिनबिभेतिहरिःस्वयम् ॥ सर्वगत्वात्सदूरेचबाह्येंतश्चसमीपगइतितत्त्वसंहितायाम् ॥ ५ ॥ सर्वगं

नेजदेकंमनसोजवीयोनैनद्देवाआप्नुवन्पूर्वमर्षत् ॥ तद्धावतोऽन्यानत्येतितिष्ठत्तस्मिन्नपोमात
रिश्वादधाति ॥ ४ ॥ तदेजतितन्नैजतितद्दूरेतद्वंतिके ॥ तदंतरस्यसर्वस्यतदुसर्वस्यबाह्यतः
॥ ५॥ यस्तुसर्वाणिभूतानिआत्मन्येवानुपश्यति ॥ सर्वभूतेषुचात्मानंततोनविजुगुप्सते॥६॥
यस्मिन्त्सर्वाणिभूतानिआत्मैवाभूद्विजानतः ॥ तत्रकोमोहःकःशोकएकत्वमनुपश्यतः ॥७॥
सपर्यगाच्छुक्रमकायमव्रणमस्नाविरंशुद्धमपापविद्धम् ॥ कविर्मनीषीपरिभूःस्वयंभूर्याथात

परमात्मानंसर्वंचपरमात्मनि ॥ यःपश्येत्सभयाभावान्नात्मानंगोप्तुमिच्छतीतिसौकरायणश्रुतिः ॥ ६ ॥
यस्मिन्परमात्मनिसर्वभूतानिसपरमात्मैवतत्रसर्वभूतेष्वभूत् ॥ एवंसर्वभूतेष्वेकत्वेनपरमात्मानंविजानतः
कोमोहः ॥ यस्मिन्सर्वाणिभूतानिसआत्मासर्वभूतगः ॥ एवंसर्वत्रयोविष्णुंपश्येत्तस्यविजानतः ॥
कोमोहःकोथवाशोकःसविष्णुंपर्यगाद्यतइतिपिप्पलादशाखायाम् ॥ पूर्वोक्तानुवादेनशोकमोहाभावे
पिविजानतश्चात्रोच्यते ॥ अभ्यासश्चसर्वगतत्वस्यतात्पर्यद्योतनार्थः ॥ ७ ॥ शुक्रंतच्छोकराहि
त्यादव्रणंनित्यपूर्णतः ॥ पावनत्वात्सदाशुद्धमकायंलिंगवर्जनात् ॥ स्थूलदेहस्यराहित्यादस्नाविरंमुदा

हृतम् ॥ एवंभूतोपिसार्वज्ञ्यात्कविरित्येवशब्द्यते ॥ ब्रह्मादिसर्वमनसांप्रकृतेर्मनसोपिच ॥ ईशितृत्वा न्मनीषीसपरिभूःसर्वतोवरः ॥ सदाऽनन्यश्रयत्वाच्चस्वयंभूःपरिकीर्तितः ॥ ससत्यंजगदेतादृङ्नित्यमेव प्रवाहतः ॥ अनाद्यनंतकालेषुप्रवाहैकप्रकारतः ॥ नियमेनैवसस्त्रजेभगवान्पुरुषोत्तमः ॥ सज्ज्ञा नानंदशीर्षोसौसज्ज्ञानानंदबाहुकः ॥ सज्ज्ञानानंददेहश्वसज्ज्ञानानंदपादवान् ॥ एवंभूतोमहावि ष्णुर्यथार्थंजगदीदृशम् ॥ अनाद्यनंतकालीनंससर्जात्मेच्छयाप्रभुरितिवाराहे ॥ ८ ॥ अन्यथो

ध्यतोर्थान्व्यदधाच्छाश्वतीभ्यस्समाभ्यः ॥ ८ ॥ अंधंतमःप्रविशंतियेअविद्यामुपासते ॥
ततोभूयइवतेतमोयउविद्यायांरताः ॥ ९ ॥ अन्यदेवाहुर्विद्ययाअन्यदाहुरविद्यया
इतिशुश्रुमधीराणांयेनस्तद्विचचक्षिरे ॥ १० ॥ विद्यांचाविद्यांचयस्तद्वेदोभयंसह ॥ अ
विद्ययामृत्युंतीर्त्वाविद्ययाऽमृतमश्नुते ॥ ११ ॥ अंधंतमःप्रविशंतियेऽसंभूतिमुपासते॥ततोभू
यइवतेतमोयउसंभूत्यांरताः ॥ १२ ॥ अन्यदेवाहुस्संभवादन्यदाहुरसंभवात् ॥ इतिशुश्रु
मधीराणांयेनस्तद्विचचक्षिरे ॥ १३ ॥ संभूतिंचविनाशंचयस्तद्वेदोभयंसह ॥ विनाशेनमृ

पासकायेतुतमोंधंयांत्यसंशयम् ॥ ततोधिकमिवव्यक्तंयांतितेषामनिंदकाः ॥ तस्माद्यथास्वरूपंच नारायणमनामयम् ॥ अयथार्थस्यनिंदांच ॥ ९ ॥ १० ॥ येविदुस्सहसज्जनाः ॥ तेनिंदयाऽयथार्थस्यदुःखा ज्ञानादिरूपिणः ॥ दुःखाज्ञानादिसंतीर्णाःसुखज्ञानादिरूपिणः ॥ यथार्थस्यपरिज्ञानात्सुखज्ञानादिरूपताम् ॥ यान्ति ॥ ११ ॥ एवंसृष्टिकर्तृत्वंनांगीकुर्वंतियेहरेः ॥ तेपियांतितमोघोरंतथासंहारकर्तृताम् ॥ नांगीकुर्वंतिते प्येवंतस्मात्सर्वगुणात्मकम् ॥ सर्वकर्तारमीशेशंसर्वसंहारकारणम् ॥ १२ ॥ १३ ॥ योवेदसंहृतिज्ञानाद्देह

बंधाद्विमुच्यते ॥ सुखज्ञानादिकर्तृत्वज्ञानात्तद्व्यक्तिमाव्रजेत् ॥ सर्वदोषविनिर्मुक्तंगुणरूपंजनार्दनम् ॥ जा
नीयान्नगुणानांचभागहानिंप्रकल्पयेत् ॥ नमुक्तानामपिहरेस्साम्यंविष्णोरंशभिन्नताम् ॥ नैवप्रचिंतयेत्त
स्माद्ब्रह्मादेस्साम्यमेववा ॥ मानुषादिविरिंचांतंतारतम्यंविमुक्तिगम् ॥ ततोविष्णोःपरोत्कर्षंसम्यग्ज्ञात्वा
विमुच्यतइतिकौर्मे ॥ १४ ॥ पात्रंहिरण्मयंसूर्यमंडलंसमुदाहृतम् ॥ विष्णोःसत्यस्यतेनैवसर्वदाऽपिहितं
मुखम् ॥ तत्तुपूर्णत्वतःपूषाविष्णुर्दर्शयतिस्वयम् ॥ सत्यधर्मायभक्ताय॥ १५॥ प्रधानज्ञानरूपतः ॥ विष्णु

त्युंतीर्त्वासंभूत्याऽमृतमश्नुते ॥ १४ ॥ हिरण्मयेनपात्रेणसत्यस्यापिहितंमुखम् ॥ तत्त्वंपू
षन्नपावृणुसत्यधर्मायदृष्टये ॥ १५ ॥ पूषन्नेकर्षेयमसूर्यप्राजापत्यव्यूहरश्मीन्समूहतेजोय
त्तेरूपंकल्याणतमंतत्तेपश्यामि ॥ १६ ॥ योसावसौपुरुषस्सोहमस्मि ॥ १७ ॥ वायुरनिल

रेकऋषिर्ज्ञेयोयमोनियमनाद्धरिः॥सूर्यस्ससूरिगम्यत्वात्प्राजापत्यःप्रजापतेः ॥विशेषेणैवगम्यत्वाद् ॥ १६॥
अहंचासावहेयतः॥ अस्मिन्नित्यास्तितामानात्सर्वजीवेषुसंस्थितः ॥ स्वयंतुसर्वजीवेभ्योव्यतिरिक्तःपरोह
रिः ॥ सक्तुर्ज्ञानरूपत्वादग्निरंगप्रणेतृतइतिब्रह्मांडे ॥ सत्यंब्रह्महृदयेधारयतीतिसत्यधर्मा ॥ एकोऽसौश
ब्दःप्राणेस्थितइति ॥ १७ ॥ यस्मिन्नयंस्थितःसोप्यमृतःकिमुपरः ॥ अःब्रह्मैवनिलयनंयस्यवायोःसोऽ

निलम् ॥ अतिरोहितविज्ञानाद्वायुरप्यमृतःस्मृतः ॥ मुख्यामृतःस्वयंरामःपरमात्मासनातनइतिरामसंहिता
याम् ॥ १८ ॥ भक्तानांस्मरणंविष्णोर्नित्यज्ञप्तिस्वरूपतः ॥ अनुग्रहोन्मुखत्वंतुनैवान्यत्कचिदिष्यतइतिब्र
ह्मतर्के ॥ १९ ॥ वयुनंज्ञानम् ॥ त्वद्दत्तयावयुनयेहमचष्टविश्वमितिवचनात् ॥ जुहुराणमस्मानल्पी

ममृतमथेदंभस्मांतꣳशरीरम् ॥ १८ ॥ ॐक्रतोस्मरकृतꣳस्मर ॥ ॐक्रतोस्मरकृतꣳस्मर
॥ १९ ॥ अग्नेनयसुपथारायेअस्मान्विश्वानिदेववयुनानिविद्वान् ॥ युयोध्यस्मज्जुहुराणमे
नोभूयिष्ठांतेनमउक्तिंविधेम ॥ २० ॥ ईशावास्योपनिषत्समाप्ता ॥

कुर्वत् ॥ युयोधिवियोजय ॥ यदस्मान्कुरुतेऽत्यल्पांस्तदेनोऽस्मद्वियोजय ॥ नयनोमोक्षवित्तायेत्यस्तौ
द्यज्ञंमनुरस्वराडितिस्कांदे ॥ युयुवियोगइतिधातुः ॥ भक्तिज्ञानाभ्यांभूयिष्ठांनमउक्तिंविधेम ॥ २० ॥
पूर्णशक्तिचिदानंदश्रीतेजःस्पष्टमूर्तये ॥ ममाभ्यधिकमित्रायनमोनारायणायते ॥ १ ॥ इतिश्रीमदा
नंदतीर्थभगवत्पादाचार्यविरचितमीशावास्योपनिषद्भाष्यंसमाप्तम् ॥ ॥



श्रीमद्भारतीजानिमुख्यप्राणांतर्गतश्रीमन्नारायणायनमः ॥ हरिःॐ ॥ नमोभगवतेतस्मैसर्वतःपरमायते ॥
सर्वप्राणिहृदिस्थायवामनायनमोनमः ॥ अग्नौविष्णुंसदाध्यायंस्त्रिशोग्निंनाचिकेतकम् ॥ यश्चयीतसतुप्रा
प्यस्वर्गंतत्रभयातिगः ॥ उष्यमन्वंतरंकालममृतत्वंभजेत्क्रमादिनिब्रह्मसारे ॥ इच्छन्वाजश्रवोतमाददौसर्व

श्रीमद्भारतीरमणमुख्यप्राणांतर्गतश्रीमन्नारायणायनमः॥ ॥हरिःॐ॥उशन्हवैवाजश्रवसःसर्व
वेदसंददौ॥तस्यहनचिकेतानामपुत्रआस॥तंहकुमारंसंतंदक्षिणासुनीयमानासुश्रद्धाविवेश॥
पीतोदकाजग्धतृणादुग्धदोहानिरिंद्रियाः॥आनंदानामतेलोकास्तान्सगच्छतिताददत्॥सहो
वाचपितरंततकस्मैमांदास्यतीति॥द्वितीयंतंहोवाचमृत्यवेत्वाददानीति ॥बहूनामेमिप्रथमोब
हूनामेमिमध्यमः॥किंस्विद्यमस्यकर्तव्यंयन्मयाद्यकरिष्यति॥अनुपश्ययथापूर्वेप्रतिपश्यतथा
परे ॥ सस्यमिवमर्त्यःपच्यतेसस्यमिवजायतेपुनः॥वैश्वानरःप्रविशत्यतिथिर्ब्राह्मणोगृहान् ॥
तस्यैतांशांतिंकुर्वंतिहरवैवस्वतोदकम्॥आशाप्रतीक्षेसंगतंसूनृतांचेष्टापूर्तेपुत्रपशूंश्चसर्वान्॥ए
तद्वृङ्क्तेपुरुषस्याल्पमेधसोयस्यानश्नन्वसतिब्राह्मणोगृहे ॥ तिस्रोरात्रीर्यदवात्सीर्गृहेमेअनश्नन्
ब्रह्मन्नतिथिर्नमस्यः ॥ नमस्तेस्तुब्रह्मन्स्वस्तिमेस्तु ॥ तस्मात्प्रतित्रीन्वरान्वृणीष्व ॥ शांत
संकल्पःसुमनायथास्याद्वीतमन्युर्गौतमोमाभिमृत्यो ॥ त्वत्प्रसृष्टंमाभिवदेत्प्रतीतएतत्त्रयाणां
प्रथमंवरंवृणे ॥ यथापुरस्ताद्भविताप्रतीतऔद्दालकिरारुणिर्मत्प्रसृष्टः॥सुखंरात्रीःशयितावीत

स्वदक्षिणाम् ॥ उद्दालकःस्वर्गलोकंददौगाश्चनिरिंद्रियाः॥मांदत्त्वापिनतेगावोदातव्याईदृशाइति॥उवाचपु
त्रस्तंबालस्तंशशापपितास्वयम ॥ सजगामयमंबालोब्रह्मचारीयमस्यतु ॥ पत्न्यासंपूज्यमानोपिजग्राहा

ष्यादिकंनतु ॥ आगतेतुयमेप्राहयमंसोदकमाहर॥ इत्युक्तस्सयमस्तंतुसंपूज्याऽदाद्वरत्रयम्॥ सौमनस्यंपि तुश्चैवनाचिकेताग्निगंहरिम्॥मुक्तेस्थितंचतंविष्णुमितिप्रादाद्वरत्रयमितिगतिसारे॥अग्र्यत्वादग्निनामासौना चिकेताग्निगोहरिः ॥ लोकोविष्णोरनंतस्यतज्ज्ञानान्नित्यआप्यते ॥ प्रतिष्ठासर्वलोकस्यसविष्णुस्सर्वहृद्ग तः ॥ सएवसर्वलोकादिस्तंज्ञात्वामुच्यतेध्रुवमितिच ॥ याइष्टकायाइष्टकादेवताः ॥ इष्टकादेवतांविष्णुंष

मन्युस्त्वांदद्दशिवान्मृत्युमुखात्प्रमुक्तम्॥स्वर्गेलोकेनभयंकिंचनास्तिनतत्रत्वंनजरयाबिभेति ॥
उभेतीर्त्वाअशनायापिपासेशोकातिगोमोदतेस्वर्गलोके ॥ सत्वमग्निंस्वर्ग्यमध्येषिमृत्योप्रब्रूहि
त्वंश्रद्दधानायमह्यम् ॥ स्वर्गलोकाअमृतत्वंभजंते ॥ एतद्द्वितीयेनवृणेवरेण ॥ प्रतेब्रवीमितदु
मेनिबोधस्वर्ग्यमग्निंनचिकेतःप्रजानन् ॥ अनंतलोकाप्तिमथोप्रतिष्ठांविद्धित्वमेतंनिहितंगुहा
याम्॥लोकादिमग्निंतमुवाचतस्मैयाइष्टकायावतीर्वायथावा ॥ सचापितत्प्रत्यवदद्यथोक्तम
थास्यमृत्युःपुनराहतुष्टः ॥ तमब्रवीत्प्रीयमाणोमहात्मावरंतवेहाद्यददामिभूयः ॥ तवैवनाम्ना
भवितायमग्निःश्रृंकांचेमामनेकरूपांगृहाण॥ त्रिनाचिकेतस्त्रिभिरेत्यसंधिंत्रिकर्मकृत्तरतिजन्म

ष्ठ्युत्तरशतत्रिकम् ॥ यथावदेवविज्ञायमुच्यतेकर्मबंधनादितिच ॥ त्रिभिरेत्यसंधिंवेदैरविरुद्धः ॥ वेदोक्त प्रकारेणभगवत्तत्त्वादिकंजानन्नित्यर्थः॥त्रिकर्मकृद्यज्ञदानतपःकर्ता॥यज्ञदानतपःकर्मनत्याज्यंकार्यमेवत दितिवचनात्॥ त्रयमेतद्याइष्टकाइत्यादि॥ब्रह्मेतिवेदउद्दिष्टस्तस्माद्ब्रह्मोक्तोयतोहरिः॥ब्रह्मजस्तेनकथितस्स एवज्ञोखिलज्ञतइतिनामनिरुक्तौ ॥ अनेकरूपांस्वर्णमयीम् ॥ बहुरूपंचपुरटंकार्तस्वरमितीर्यतइत्यभि धानात् ॥ यमोऽनुवादसंतुष्टोवह्नेस्तन्नामतामपि ॥ श्रृंकांस्वर्णमयींचैवकण्ठमालामदाद्विभुरितिपाद्मे ॥

लोकादिःप्रतिष्ठाब्रह्मजज्ञोऽनंतलोकाप्तिरित्यादिविशेषणैश्चभगवानेव ॥ स्तोममहदुरुगायंप्रतिष्ठांमितिप
रागर्शाच्च॥ भगवतोह्युरुगायनामप्रसिद्धम्॥गुहानिहितत्वंचतस्यैवविशेषतःप्रसिद्धम्॥नचाग्निपरिज्ञानमात्रे
णानंतलोकाप्तिर्भगवज्ज्ञानंविना॥ तद्वाएतदक्षरंगार्ग्यविदित्वाऽस्मिँल्लोकेजुहोतियजतेतपस्तप्यतेबहूनिवर्ष
सहस्राण्यंतवदेवास्यतद्भवतीत्यादिश्रुतेः॥ नचमुख्येसत्यमुख्यार्थोयुज्यते ॥ प्रेतेमुक्तेमनुष्येनियामकत्वे

मृत्यू ॥ ब्रह्मजज्ञंदेवमीड्यंविदित्वानिचाय्येमांशांतिमत्यंतमेति ॥ त्रिनाचिकेतस्त्रयमेतद्विदि
त्वायएवंविद्वांश्चिनुतेनाचिकेतम् ॥ समृत्युपाशान्पुरतःप्रणोद्यशोकातिगोमोदतेस्वर्गलोके ॥
एषतेग्निर्नाचिकेतःस्वर्ग्योयमवृणीथाद्वितीयेनवरेण ॥ एतमग्निंतवैवप्रवक्ष्यंतिजनासः ॥ तृतीयं
वरंनचिकेतोवृणीष्व ॥ येयंप्रेतेविचिकित्सामनुष्येअस्तीत्येकेनायमस्तीतिचैके ॥ एतद्विद्या
मनुशिष्टस्त्वयाहंवराणामेषवरस्तृतीयः ॥ देवैरत्रापिविचिकित्सितंपुरानहिसुज्ञेयोणुरेषधर्मः॥
अन्यंवरंनचिकेतोवृणीष्वमामोपरोत्सीरतिमासृजैनम् ॥ देवैरत्रापिविचिकित्सितंकिलत्वंचमृ
त्योयन्नसुज्ञेयमात्थ ॥ वक्ताचास्यत्वादृगन्योनलभ्योनान्योवरस्तुल्यएतस्यकश्चित्॥ शता
युषःपुत्रपौत्रान्वृणीष्वबहून्पशून्हस्तिहिरण्यमश्वान्॥भूमेर्महदायतनंवृणीष्वस्वयंचजीवशर

नभगवानस्तीतिज्ञानिनोवदंति ॥ नास्तीत्यज्ञाः ॥ तस्यनियामकस्यस्वरूपंयथावदहंविद्याम् ॥ अस्य
विस्रंसमानस्यशरीरस्थस्यदेहिनः॥ देहाद्विमुच्यमानस्यकिमत्रपरिशिष्यते ॥ एतद्वैतदितिपरिहाराच्चमुक्ते
स्थितोभगवान्पृच्छ्यतइतिसिद्धम् ॥ देहाद्विशेषेणमोचनंनाममुक्तिरेव ॥ मुक्तेरपिमरणात्मकत्वान्मरण
मित्यपिभवति ॥ स्थूलदेहपरित्यागस्तुविस्रंसमानस्येत्यनेनैवोक्तोभवति ॥ अग्निस्थंपरमात्मानंसामा

न्याज्ञानतोपितु ॥ अजानतस्तुमुक्तौचजीवांतस्थितमीश्वरम् ॥ नियामकंचजीवानांमुक्तानामपिस
र्वदा ॥ गुणान्सर्वोत्तमत्वादीनविज्ञायहरेस्तथा ॥ नैवमुक्तिर्भवेत्तस्मात्कच्छ्रात्तदवदद्यमः ॥ तस्यगोप्य
त्वविज्ञप्त्यैतथाप्यग्निस्थवेदनात् ॥ सुखाधिक्यंभवेन्मुक्तौतस्मात्तत्पृथगीरितमितितत्त्वसारे ॥ स्थाणुम

दोयावदिच्छसि॥एततुल्यंयदिमन्यसेवरंवृणीष्ववित्तंचिरजीविकांच॥महाभूमौनचिकेतस्त्व
मेधिकामानांत्वाकामभाजंकरोमि॥येयेकामादुर्लभामर्त्यलोकेसर्वान्कामांश्छंदतःप्रार्थयस्व॥
इमारामाःसरथाःसतूर्यानहीदृशालंभनीयामनुष्यैः॥आभिर्मत्प्रत्ताभिःपरिचारयस्वनचिकेतोमर
णंमानुप्राक्षीः॥श्वोभावामर्त्यस्ययदंतकैतत्सर्वेंद्रियाणांजरयंतितेजः॥अपिसर्वंजीवितमल्पमे
वतवैववाहास्तवनृत्तगीतम्॥नवित्तेनतर्पणीयोमनुष्योलप्स्यामहेवित्तमद्राक्ष्मचेत्त्वाम्॥जीवि
ष्यामोयावदीशिष्यसित्वंवरस्तुमेवरणीयःसएव ॥ अजीर्यताममृतानामुपेत्यजीर्यन्मर्त्यःक्वाध
स्थःप्रजानन्॥अभिध्यायन्वर्णरतिप्रमोदानतिदीर्घेजीवितेकोरमेत॥यस्मिन्निदंविचिकित्संति
मृत्योसांपरायेमहतिब्रूहिनस्तत्॥योयंवरोगूढमनुप्रविष्टोनान्यंतस्मान्नचिकेतावृणीते ॥२९॥
इतिप्रथमाध्यायस्यप्रथमावल्ली ॥ १ ॥ १ ॥

न्येऽनुसंयंतियथाकर्मयथाश्रुतमित्युक्त्वायएषसुप्तेषुजागर्तिकामंकामंपुरुषोनिर्ममाणइतिवचनाच्चजी
वेषुस्थितोभगवान्पृच्छयतइतिसिद्धम् ॥ मृतजीवेस्थितोमुक्तजीवेस्थितश्वोभयात्मकोभगवान्विवक्षित
इत्येतस्माच्चाविरोधः ॥ गुह्यंतत्परमंब्रह्मशीर्यमाणंशरीरिणम् ॥ संप्राप्तमपिजीवेषुजागर्तिस्वपितेष्वपीति
ब्रह्मांडे ॥ धारकत्वाद्धर्मोभगवान् ॥ मरणेस्थितंभगवंतमानुप्राक्षीः ॥ महतिसांपरायेमुक्तौ ॥ १ ॥ १ ॥

श्रंकांश्रंखलाम् ॥ अन्योभगवानन्योऽहमित्यजानन्ननन्यः ॥ तेनप्रोक्तेगतिर्ज्ञानंनास्ति ॥ प्रोक्ताऽन्येनैव सुज्ञानायप्रेष्ठेतिवाक्यशेषात् ॥ जीवानांचैवविष्णोश्चयोनवेत्तिभिदांपुमान् ॥ तदनुव्रताश्चयेकेचित्तेषां

अन्यच्छ्रेयोन्यदुतैवप्रेयस्तेउभेनानार्थेपुरुषंसिनीतः॥तयोःश्रेयआददानस्यसाधुभवतिहीयतेर्थाद्यउप्रेयोवृणीते ॥ श्रेयश्चप्रेयश्चमनुष्यमेतस्तौसंपरीत्यविविनक्तिधीरः ॥ श्रेयोधीरोभिप्रेयसोवृणीतेप्रेयोमंदोयोगक्षेमान्वृणीते ॥ सत्वंप्रियान्प्रियरूपांश्चकामानभिध्यायन्नचिकेतोत्यस्राक्षीः ॥ नैतांश्रृंकांवित्तमयीमवाप्तोयस्यांमज्जंतिबहवोमनुष्याः॥ दूरमेतेविपरीतेविषूचीअविद्यायाचविद्येतिज्ञाता ॥ विद्याभीप्सितंनचिकेतसंमन्येनत्वाकामाबहवोल्लोलुपंतः ॥ अविद्यायामंतरेवर्तमानाःस्वयंधीराःपंडितंमन्यमानाः ॥ दंद्रम्यमाणाःपरियंतिमूढाअंधेनैवनीयमानायथांधाः ॥ नसांपरायःप्रतिभातिबालंप्रमाद्यंतंवित्तमोहेनमूढम्॥ अयंलोकोनास्तिपरइतिमानीपुनःपुनर्वशमापद्यतेमे ॥ श्रवणायापिबहुभिर्योनलभ्यःशृण्वंतोबहवोयन्नविद्युः ॥ आश्चर्योस्यवक्ताकुशलोस्यलब्धाआश्चर्योज्ञाताकुशलानुशिष्टः॥ननरेणावरःप्रोक्तएषसुज्ञेयोबहुधाचिंत्यमानः ॥ अनन्यप्रोक्तेगतिरत्रनास्तिअणीयान्ह्यतर्क्यमणुप्रमाणात् ॥ नैषातर्केणमतिरापनेयाप्रोक्तान्येनैवसुज्ञानायप्रेष्ठ ॥ यांत्वमापःसत्यधृतिर्बतासित्वादृङ्नोभूयान्नचिकेतःप्रष्टा ॥ जानाम्यहंशेवधिरित्यनित्यंनह्यध्रुवैःप्राप्यतेहिध्रुवंतत् ॥ ततोमयानचिकेतश्चितोग्नि

ज्ञानंनजायतइतिब्रह्मवैवर्ते ॥ आख्यंविष्णवाख्यंनित्यंशेवधिरितिजानामि॥ नित्यमाख्यविष्णुविषयैर्द्रव्यैर्मनआदिभिः॥आख्यनित्यविषयैर्विष्णवाख्यनित्यविषयैर्द्रव्यैः॥ नित्यंभगवंतंप्राप्तवानस्मि॥ध्रुवोभगवान्॥

अध्रुवैस्तद्भक्तिवर्जितैर्नप्राप्यते॥क्रतोरानंत्यहेतुम् ॥ स्तोमैरपिसर्वात्मनाप्राप्तुमशक्यम्॥ स्तोमेभ्योपिमहांतम्॥उरुगायमित्युक्तत्वाच्चनजीवविषयोयंप्रश्नः॥ शरोह्यात्माब्रह्मतल्लक्ष्यमुच्यते ॥ शरवत्तन्मयोभवेत् ॥ अभयंतितीर्षतांपारम् ॥ तादृगेवभवतीत्यादौसर्वत्रभेदस्यैवोक्तेश्चनजीवाभेदः ॥ नाचिकेतंशकेमहीत्युक्तत्वाच्चनाचिकेताग्निस्थोभगवानेवोच्यतइतिसिद्धम् ॥ उरुगायंदृष्ट्वाकामस्याप्तिमद्राक्षीः ॥ नचमृतला

रनित्यद्रव्यैःप्राप्तवानस्मिनित्यम्॥कामस्याप्तिंजगतःप्रतिष्ठांक्रतोरानंत्यमभयस्यपारम्॥ स्तोममहदुरुगायंप्रतिष्ठांदृष्ट्वाधृत्याधीरोनचिकेतोत्यस्राक्षीः ॥ तंदुर्दर्शंगूढमनुप्रविष्टंगुहाहितंगह्वरेष्ठंपुराणम् ॥ अध्यात्मयोगाधिगमेनदेवंमत्वाधीरोहर्षशोकौजहाति॥एतच्छ्रुत्वासंपरिगृह्यमर्त्यःप्रवृह्यधर्म्यमणुमेनमाप्य ॥ समोदतेमोदनीयंहिलब्ध्वाविवृतंसद्मनचिकेतसंमन्ये ॥ अन्यत्रधर्मादन्यत्राधर्मादन्यत्रास्मात्कृताकृतात् ॥ अन्यत्रभूताच्चभव्याच्चयत्तत्पश्यसितद्वद ॥ सर्वेवेदायत्पदमामनंतितपांसिसर्वाणिचयद्वदंति ॥ यदिच्छंतोब्रह्मचर्यंचरंतितत्तेपदंसंग्रहेणब्रवीम्योमित्येतत् ॥ एतद्ध्येवाक्षरंब्रह्मएतद्ध्येवाक्षरंपरम्॥एतद्ध्येवाक्षरंज्ञात्वायोयदिच्छतितस्यतत् ॥ एतदालंबनंश्रेष्ठमेतदालंबनंपरम् ॥एतदालंबनंज्ञात्वाब्रह्मलोकेमहीयते ॥ नजाय

धर्मंप्राप्तस्यनचिकेतसोमृतोस्तिनवेतिसंशयोस्ति ॥ गह्वरेमुक्तजीवेस्थितम् ॥ प्रबद्धजीवात्पृथक्कृत्य ॥ मुक्तजीवेस्थितंविष्णुंविदित्वाजीवतःपृथक् ॥ मोदतेमोदनीयंतंप्राप्यमुक्तस्सदैवचेतिमहावाराहे ॥ एतद्ध्येवाक्षरंब्रह्मविष्णवाख्यंपरमव्ययम् ॥ सर्वस्यालंबनंज्ञात्वामुच्यतेनात्रसंशयइतिच ॥ देहोत्पत्तिविनाशाख्यौज्ञानिनोप्युद्भवाभवौ ॥ नकुतश्चिद्यतोविष्णुर्जायतेऽतस्तदीक्षणात् ॥ भावाभावौन

विदुषोयस्माज्जीवोनकश्चन ॥ जायतेम्रियतेवापिस्वरूपेणकथंचन ॥ अजोनित्योविकारश्चजीवःपु
रमणन्नपीतिच ॥ अयंभगवान्कुतोपिनबभूवयस्मादतस्तद्वेत्तापिविपश्चिन्नजायतेनम्रियतेच ॥ य
तःकश्चिज्जीवःस्वतोनबभूव ॥ देहसंबंधाद्धिजायते ॥ विपश्चितस्तुदेहसंबंधाभावान्नजायतेनम्रिय
तेच ॥ जीवस्यापिस्वतोमरणाभावादुभौतौनविजानीतः ॥ एवंनित्यस्यजंतोर्गुहायांनिहितः ॥ एवं

तेम्रियतेवाविपश्चिन्नायंकुतश्चिन्नबभूवकश्चित् ॥ अजोनित्यःशाश्वतोयंपुराणोनहन्यतेह
न्यमानेपिदेहे ॥ हंताचेन्मन्यतेहंतुंहतश्चेन्मन्यतेहतम्॥ उभौतौनविजानीतोनायंहंतिनहन्य
ते ॥ अणोरणीयान्महतोमहीयानात्मास्यजंतोर्निहितोगुहायाम् ॥ तमक्रतुःपश्यतिवीतशो
कोधातुःप्रसादान्महिमानमात्मनः ॥ आसीनोदूरंव्रजतिशयानोयातिसर्वतः ॥ कस्तंमदामदं
देवंमदन्योज्ञातुमर्हति ॥ अशरीरंशरीरेष्वनवस्थेष्ववस्थितम्॥महांतंविभुमात्मानंमत्वाधी
रोनशोचति ॥ नायमात्माप्रवचनेनलभ्योनमेधयानबहुनाश्रुतेन ॥ यमेवैषवृणुतेतेनलभ्यस्त
स्यैषआत्माविवृणुतेतनूंस्वाम् ॥ नाविरतोदुश्चरितान्नाशांतोनासमाहितः॥नाशांतमानसोवा
पिप्रज्ञानेनैनमाप्नुयात ॥ यस्यब्रह्मचक्षत्रंचोभेभवतओदनः ॥ मृत्युर्यस्योपसेचनंकइत्थावेद
यत्रसः ॥ इतिद्वितीयावल्ली ॥ १ ॥ २ ॥

विष्णौक्रतुर्यस्यसोऽक्रतुस्तन्निश्चयः ॥ आत्मनःसकाशान्महिमानंमहामानम् ॥ जीवाद्गुणपरिमाणंयस्मा
द्विष्णोर्महत्तरम् ॥ तस्माज्जीवात्समहिमाविष्णुरित्युच्यतेश्रुतावितिच ॥ ऐश्वर्याद्देवाऽऽसीनोदूरंव्रजतीत्या
दि ॥ आसीनोदूरंव्रजतिशयानोयातिसर्वतः ॥ ऐश्वर्याद्भगवान्विष्णुर्विरुद्धंघटयत्यसावितिच ॥ १॥२॥

आत्मांतरात्मेनिविभुरेकएवद्विधास्थितः ॥ सविष्णुःपरमेवार्यौपरेभ्योप्यूर्द्धरूपके ॥ शुभा
न्पिबतिभोगान्सच्छायेवविदुपांप्रभुः ॥ आतपःपापिनांनित्यंमर्यादाविष्णुयाजिनाम् ॥ संसारस्यच
पारस्थस्सविष्णुर्द्विस्वरूपकः ॥ देवेभ्यइंद्रियात्मभ्योज्यायांसोर्थाभिमानिनः ॥ सोमवित्तपसूर्याप्याअ

ऋतंपिबंतौसुकृतस्यलोकेगुहांप्रविष्टौपरमेपरार्धे ॥ छायातपौब्रह्मविदोवदंतिपंचाग्नयोयेच
त्रिनाचिकेताः ॥ यःसेतुरीजानानामक्षरंब्रह्मनत्परम् ॥ अभयंतितीर्षतांपारंनाचिकेतंशकेम
सि ॥ आत्मानंरथिनंविद्धिशरीरंरथमेवच ॥ बुद्धिंतुसारथिंविद्धिमनःप्रग्रहमेवच ॥ इंद्रिया
णिहयानाहुर्विषयांस्तेषुगोचरान् ॥ आत्मेंद्रियमनोयुक्तंभोक्तेत्याहुर्मनीषिणः ॥ यस्त्वविज्ञा
नवान्भवत्ययुक्तेनमनसासदा॥यस्येंद्रियाण्यवश्यानिदुष्टाश्वाइवसारथेः ॥ यस्तुविज्ञानवान्भ
वतियुक्तेनमनसासदा ॥ तस्येंद्रियाणिवश्यानिसदश्वाइवसारथेः ॥ यस्त्वविज्ञानवान्भवत्य
मनस्कःसदाऽशुचिः ॥ नसतत्पदमाप्नोतिसंसारंचाधिगच्छति ॥ यस्तुविज्ञानवान्भवतिसमन
स्कःसदाशुचिः॥ सतुतत्पदमाप्नोतियस्माद्भूयोनजायते॥विज्ञानसारथिर्यस्तुमनःप्रग्रहवान्न
रः ॥ सोध्वनःपारमाप्नोतितद्विष्णोःपरमंपदम् ॥ इंद्रियेभ्यःपराह्यर्थाअर्थेभ्यश्चपरंमनः ॥ मनस
स्तुपराबुद्धिर्बुद्धेरात्मामहान्परः ॥ महतःपरमव्यक्तमव्यक्तात्पुरुषःपरः ॥ पुरुषान्नपरंकिंचि
त्साकाष्ठासापरागतिः ॥ एषुसर्वेषुभूतेषुगूढोत्मानप्रकाशते ॥ दृश्यतेत्वग्र्ययाबुद्ध्यासूक्ष्मयासू ॥ ७ ॥

श्व्यग्नींद्रेंद्रसूनवः ॥ यमोदक्षश्चेंद्रियेशास्सुपर्णीवारुणीतथा ॥ उमेतिचार्थमानिन्यस्तिस्रोद्विद्व्येकदेव
ताः ॥ मनोभिमानिनोरुद्रवींद्रशेषास्त्रयोपितु ॥ तेश्रेष्ठाअर्थमानिभ्यस्तेभ्योबुद्धिस्सरस्वती ॥ तस्याब्रह्मा

महानात्माततोऽव्यक्ताभिधारमा॥तस्यास्तुपुरुषोविष्णुःपूर्णत्वान्नैवतत्समः॥कश्चित्कुतश्चिच्छ्रेष्ठस्तुनास्तीतिकिमुसाकथा ॥ तस्माद्वागात्मिकादेवीरुमाद्यास्तुशिवादिषु ॥ शिवादीन्ब्रह्मवाय्वोस्तुनियच्छेन्महदात्मनोः ॥ तौरमायांपरानंदेतांविष्णौपरमात्मनि ॥ तद्वशत्वेनतद्ध्यानंनियमोनामनापरः॥कुतस्तुमानुषो

क्ष्मदर्शिभिः ॥ यच्छेद्वाङ्मनसिप्राज्ञस्तद्यच्छेज्ज्ञानआत्मनि ॥ ज्ञानमात्मनिमहतितद्विच्छेच्छांतआत्मनि ॥ उत्तिष्ठतजाग्रतप्राप्यवरान्निबोधत ॥ क्षुरस्यधारानिशितादुरत्ययादुर्गंपथस्तत्कवयोवदंति ॥ अशब्दमस्पर्शमरूपमव्ययंतथारसंनित्यमगंधवच्चयत् ॥ अनाद्यनंतंमहतःपरंध्रुवंनिचाय्यतंमृत्युमुखात्प्रमुच्यते ॥ नाचिकेतमुपाख्यानंमृत्युप्रोक्तंसनातनम् ॥ उक्त्वाश्रुत्वाचमेधावीब्रह्मलोकेमहीयते ॥ यइदंपरमंगुह्यंश्रावयेद्ब्रह्मसंसदि ॥ प्रयतःश्राद्धकालेवातदानंत्यायकल्पते ॥ तदानंत्यायकल्पतइति ॥ इतितृतीयावल्ली ॥ १ ॥ ३ ॥ इति काठकोपनिषदिप्रथमोऽध्यायः ॥ १ ॥ ॥ ॥

पराञ्चिखानिव्यतृणत्स्वयंभूस्तस्मात्पराङ्पश्यतिनांतरात्मन् ॥ कश्चिद्धीरःप्रत्यगात्मानमैक्षदावृत्तचक्षुरमृतत्वमिच्छन् ॥ पराचःकामाननुयंतिबालास्तेमृत्योर्यंतिविततस्यपाशम् ॥ अथ

देवान्नियच्छेद्विनियामकानितिच ॥ स्वभार्यायाःपरत्वंसिद्धमितिमहतःपरमित्येवोक्तम् ॥ १ ॥ ३ ॥ इति श्रीमदानंदतीर्थभगवत्पादाचार्यविरचितेश्रीकाठकोपनिषद्भाष्येप्रथमोऽध्यायः ॥ १ ॥

तृण कात्करणइतिधातुः ॥ इदंगुह्यंब्रह्मप्रवक्ष्यामि ॥ यथामरणंप्राप्यजीवोभवतितच्चप्रवक्ष्यामिजीवेश्वरभेदज्ञापनाय ॥ यःकर्मफलभोक्तासुप्त्यादिमान्सजीवः ॥ यःप्रलयादिषुजीवेषुसुप्तेषुजागर्तिसविष्णुःपरं

ब्रह्मेत्यर्थः ॥ नहिजीवस्ययोन्यादिगमनंब्रह्म ॥ जीवाद्भेदेनज्ञातंहिब्रह्मयथावज्ज्ञातंभवति ॥ जीवस्यांति
के ॥ नहिस्वस्यस्वयंजीवोंतिकेभवति ॥ वस्त्वंतरस्यहिदूरत्वमंतिकत्वंवा ॥ अभ्द्यामभ्यश्चभूतेभ्यस्तपोना
म्नशिवादपि ॥ पूर्वयोजनयामासपूर्वाजातंचतुर्मुखम् ॥ स्वात्मानंचगुहासंस्थंसर्वभूतैस्सहाऽभिभूः ॥ यः
पश्यतिसदाविष्णुस्सएषहृदिसंस्थितइतिच ॥ यथामुखादिंद्रश्चाग्निश्चेत्यादिनाजाताएवेंद्रादयःकश्यपा
त्पुनर्जायंते ॥ नतथाभगवतोब्रह्म॥किंत्वजातमेवाऽद्भ्यःपूर्वमजायतजनयामास ॥ अजायतेनिजज्ञेबहुज्ञ

धीराअमृतत्वंविदित्वाध्रुवमध्रुवेष्विहनप्रार्थयंते ॥ येनरूपंरसंगंधंशब्दान्स्पर्शांश्चमैथुनान् ॥ए
तेनैवविजानातिकिमत्रपरिशिष्यते ॥ एतद्वैतत् ॥ स्वप्नांतंजागरितांतंचोभौयेनानुपश्यति ॥
महांतंविभुमात्मानंमत्वाधीरोनशोचति ॥ यइदंमध्वदंवेदात्मानंजीवमंतिकात् ॥ ईशानंभूत
भव्यस्यनततोविजुगुप्सते ॥ एतद्वैतत् ॥ यःपूर्वंतपसोजातमद्भ्यःपूर्वमजायत ॥ गुहांप्रविश्य
तिष्ठंतंयोभूतेभिर्व्यपश्यत ॥ एतद्वैतत् ॥ याप्राणेनसंभवत्यदितिर्देवतामयी ॥ गुहांप्रविश्य
तिष्ठंतींयाभूतेभिर्व्यजायत ॥ एतद्वैतत्॥अरण्योर्निहितोजातवेदागर्भइवसुभृतोगर्भिणीभिः॥

मितिवदंतर्णीतणिच् ॥ अदनाददितिर्विष्णुर्यःप्राणसहितःस्थितः ॥ उत्तमोदेवताभ्यश्चसोत्मानंविविधा
त्मना ॥ मत्स्यकूर्मादिरूपेणगुहासंस्थमजीजनत् ॥ भूतैस्सहमहाविष्णुःपरमात्मायुगेयुगइतिच ॥ दे
वतामयीदेवतोत्तमा ॥ प्राणेनसहितोभवति ॥ गुहांप्रविश्यतिष्ठंतंस्वात्मानंभूतैस्सहविविधंजनयामा
स ॥ सर्वज्ञोभगवान्विष्णुररण्योर्गुरुशिष्ययोः ॥ सुभृतस्तूयतेनित्यंजानद्भिःपुरुषोत्तमइतिच ॥ अयं
तेणआभ्यामित्यरणी ॥ यःप्रादुर्भावगोविष्णुर्देहादिषुचसंस्थितः ॥ सएवमूलरूपश्चसाक्षान्नारायणा

ऽिधः ॥ मूलरूपश्चयोविष्णुःप्रादुर्भावादिगश्वसः ॥ गुणतस्स्वरूपतोवापिविशेषंयोत्रपश्यति ॥ अ
त्यल्पमपिमृत्वासतमोऽधंयात्यसंशयम् ॥ भेदाभेदविदश्चात्रतमोयांतिनसंशयः ॥ तथैवाऽवयवानांच
गुणानांचपरस्परम् ॥ क्रियाणांतेनचैतेषांभेदविच्चोभयंविदः ॥ यांतेवांधंतमोनात्रकार्याकाचिद्विचारणे
तिच ॥ भवेदेकत्रसंयोगइवशब्दोविरुद्धयोः ॥ धर्मयोरुपमायांवास्वल्पत्वेवाविवक्षितइतिशब्दनिर्णये ॥
अतोनानेवेतीवशब्दोत्यल्पविषयोभेदाभेदविषयश्च ॥ प्रथमंयइहनानेवपश्यतीतिस्वरूपभेदनिषेधार्थम्॥

दिवेदिवईड्योजागृवद्भिर्हविष्मद्भिर्मनुष्येभिरग्निः ॥ यतश्चोदेतिसूर्योस्तंयत्रचगच्छति ॥ तंदे
वास्सर्वेअर्पितास्तदुनात्येतिकश्चन॥एतद्वैतत्॥यदेवेहतदमुत्रयदमुत्रतदन्विह॥मृत्योस्समृत्यु
माप्नोतियइहनानेवपश्यति ॥ मनसैवेदमाप्तव्यंनेहनानास्तिकिंचन॥मृत्योस्समृत्युंगच्छतिय
इहनानेवपश्यति ॥ अंगुष्ठमात्रःपुरुषोमध्यआत्मनितिष्ठति॥ ईशानोभूतभव्यस्यनततोविजु
गुप्सते ॥ एतद्वैतत् ॥ अंगुष्ठमात्रःपुरुषोज्योतिरिवाधूमकः ॥ ईशानोभूतभव्यस्यसएवाद्य
सउश्वः ॥ एतद्वैतत् ॥ यथोदकंदुर्गेवृष्टंपर्वतेषुविधावति ॥ एवंधर्मान्पृथक्पश्यंस्तानेवानुविधा

नेहनानास्तिकिंचनेतिकिंचनशब्दादवयवानांगुणानांक्रियाणांचपरस्परंतद्वताचभेदनिषेधार्थम् ॥ भेदाभे
दएवनिषिध्यतेनतुभेदइत्याशंकांनिवारयितुमेवंधर्मान्पृथक्पश्यन्निितिभगवद्धर्माणामवयवगुणकर्मणांभे
ददर्शनेपृथग्दोषमाह ॥ पर्वतेषुदुर्गेशिखरेवृष्टमधोविधावति ॥ एवंविष्णोश्चधर्मान्पृथक्पश्यन्नंधंतमोऽभि
धावति ॥ विजानतोमुनेरात्मावायुरपितादृगेवभवतिनतुसएवभवति ॥ किम्वन्येजीवाः ॥ सर्वेषांज्ञानि
नामात्मादेवानांचविशेषतः ॥ मुक्तोवायुश्चसादृश्यमेवविष्णोस्तुगच्छति ॥ ननुतद्रूपतांयातिकिम्वन्येदे

वमानुषाः ॥ आभासाभासरूपास्तुवायोर्देवस्यसर्वशइतिभविष्यत्पर्वणि ॥ ७ ॥ १ ॥ इदंपुरंभगवदधीनमि
त्यधिष्ठायाजस्येदंपुरमितिस्थितंकृत्वा ॥ विमुक्तोनिरभीमानात्पूर्वमेवापरोक्षवित् ॥ मुख्यतोमुच्यतेपश्चा
द्दुःखाद्याभासहानतइतिच ॥ नित्यहीनोखिलैर्दोषैःसाररूपोयतोहरिः ॥ हंसइत्युच्यतेतस्माद्वायुस्थ
श्शुचिषत्स्मृतः ॥ वरसुर्वसुरित्युक्तस्सएवाप्यंतरिक्षगः ॥ होतासर्वेंद्रियादिस्थोवेद्यांपूज्यश्चवेदिषत् ॥

वति ॥ यथोदकंशुद्धेशुद्धमासिक्तंतादृगेवभवति ॥ एवंमुनेर्विजानतआत्माभवतिगौतम ॥
द्वितीयाध्यायस्यप्रथमावल्ली ॥ २ ॥ १ ॥

पुरमेकादशद्वारमजस्यावक्रचेतसः ॥ अधिष्ठायनशोचतिविमुक्तश्चविमुच्यते ॥ एतद्वैतत् ॥
हंसःशुचिषद्वसुरंतरिक्षसद्धोतावेदिषदतिथिर्दुरोणसत् ॥ नृषद्वरसदृतसद्व्योमसदब्जागोजा
ऋतजाअद्रिजाऋतंबृहत् ॥ ऊर्ध्वंप्राणमुन्नयत्यपानंप्रत्यगस्यति ॥ मध्येवामनमासीनंविश्वे
देवाउपासते ॥ अस्यविस्रंसमानस्यशरीरस्थस्यदेहिनः ॥ देहाद्विमुच्यमानस्यकिमत्रपरिशि
ष्यते ॥ एतद्वैतत् ॥ नप्राणेननापानेनमर्त्योजीवतिकश्चन ॥ इतरेणतुजीवंतियस्मिन्नेतावुपा

अत्यन्नश्चातिथिःप्रोक्तोयस्मादन्नंथमुच्यते ॥ सद्रोणकलशेसोमेस्थितउक्तोदुरोणसत् ॥ नृषुस्थितश्च
देवेषुवरेष्वपिसएवतु ॥ ऋतरूपेतथावेदेव्योमाख्यप्रकृतावपि ॥ व्योतंजगदिदंयस्यांसाव्योमश्रीरुदाहृता ॥
अब्जगोजाद्रिजेष्वेवमास्तेसोब्जादिकस्ततः ॥ तथैवतेषुमुक्तेषुगतास्तेविष्णुमित्यृताः ॥ वेदैर्मुख्यतयाप्रो
क्तऋतमित्येवचोच्यते ॥ बृहत्पूर्णगुणत्वाच्चसएवपुरुषोत्तमः ॥ नकेवलंप्राणएवचेतनानांविधारकः ॥ किंतु
विष्णुंसमाश्रित्यप्राणोजीवान्बिभर्त्ययम् ॥ अतोमुख्याश्रयोविष्णुश्चेतनानांस्वतंत्रतः ॥ अग्निर्यथैकोलोके

षुप्रविष्टोन्योनविद्यते॥पाकादिकर्ताथाप्यस्यदेवस्यप्रतिरूपकाः॥रूपंरूपंप्रतिह्येतेसंत्यचेतनवद्द्वयः ॥ एवंदे
वोवायुरपिधारकोन्योनविद्यते॥रूपंरूपंतथाप्यस्यप्रत्यभूत्प्रतिरूपकाः ॥ अचेतनःस्पर्शगम्योयोऽयमेवंज
नार्दनः॥ एकस्वतंत्रोनान्योस्तिसर्वजीवांतरस्थितः ॥ रूपंरूपंप्रतिह्यस्यप्रतिबिंबाश्चचेतनाः ॥ बाह्याश्चते
नतोनास्यस्वरूपंतेकथंचन ॥ अनादिप्रतिबिंबाश्चबभूवुस्तेह्यनंतकाः ॥ सूर्योयथांतरंचक्षुःप्रतिबिंबो

श्रितौ ॥ हंततइदंप्रवक्ष्यामिगुह्यंब्रह्मसनातनम् ॥ यथामरणंप्राप्यात्माभवतिगौतम ॥ योनि
मन्येप्रपद्यंतेशरीरत्वायदेहिनः ॥ स्थाणुमन्येनुसंयंतियथाकर्मयथाश्रुतम् ॥ यएषुसुप्तेषुजाग
र्तिकामंकामंपुरुषोनिर्ममाणः ॥ तदेवशुक्रंतद्ब्रह्मतदेवामृतमुच्यते ॥ तस्मिँल्लोकाःश्रिताःसर्वे
तदुनात्येतिकश्चन ॥ एतद्वैतत् ॥ अग्निर्यथैकोभुवनंप्रविष्टोरूपंरूपंप्रतिरूपोबभूव ॥ एकस्त
थासर्वभूतांतरात्मारूपंरूपंप्रतिरूपोबहिश्च॥वायुर्यथैकोभुवनंप्रविष्टोरूपंरूपंप्रतिरूपोबभूव ॥
एकस्तथासर्वभूतांतरात्मारूपंरूपंप्रतिरूपोबहिश्च ॥ सूर्योयथासर्वलोकस्यचक्षुर्नलिप्यतेचा
क्षुषैर्बाह्यदोषैः ॥ एकस्तथासर्वभूतांतरात्मानलिप्यतेलोकदुःखेनबाह्यः ॥ एकोवशीसर्वभूतां
तरात्माएकंरूपंबहुधायःकरोति ॥ तमात्मस्थंयेनुपश्यंतिधीरास्तेषांसुखंशाश्वतंनेतरेषाम् ॥

स्यबाह्यकम् ॥ बाह्यचक्षुर्गतैर्दोषैरंतश्चक्षुर्नलिप्यते ॥ अंतश्चक्षुर्देवतातुबाह्यंचक्षुरचेतनम् ॥ एवंबाह्यस्स्व
तंत्रत्वाज्जीवेभ्यःपुरुषोत्तमः ॥ अस्वतंत्रस्यजीवस्यदुःखैर्नैवहिलिप्यते ॥ चेतनाभासकोजीवःपरमश्चेतनो
हरिः ॥ स्वतंत्रत्वात्स्वतंत्रोहिनैवदोषेणलिप्यतइतिकौर्मे ॥ सएकएवसर्वभूतांतरात्मा ॥ तस्यरूपंरूपं
प्रतिरूपाख्योजीवोबभूव ॥ बहिश्चासौपरमात्मनोनितरांभिन्नः ॥ परतंत्रत्वात् ॥ आत्मैवेदमग्रआसी

दित्यादिवदनादित्वापेक्षया ॥ आत्मनिस्थंहरिंजानन्मुच्यतेनात्रसंशयः ॥ जीवैक्येनतुतंध्यायंस्तमस्यंधे
पतेद्ध्रुवमितिच ॥ एतदेवभगवद्रूपंपरमंसुखम् ॥ ज्ञानिसुखंतुतद्बिंदुमात्रम् ॥ ब्रह्मादीनांतुमुक्तानांसु
खंविष्णुसुखस्यतु ॥ प्रतिबिंबस्तुविप्रुट्कोविष्णोरेवपरंसुखम् ॥ सम्यग्भातिनभातीतिजानीयांतत्कथंन्व
हम् ॥ तत्प्रसादस्तेदिव्यमनिर्देश्यंपरंसुखमितिचमहावाराहे ॥ २ ॥ २ ॥ सर्वोत्तमोभगवान्विष्णुर्मूलंभ्

नित्योनित्यानांचेतनश्चेतनानामेकोबहूनांयोविदधातिकामान् ॥ तमात्मस्थंयेनुपश्यंतिधीरा
स्तेषांशांतिःशाश्वतीनेतरेषाम् ॥ तदेतदितिमन्यंतेऽनिर्देश्यंपरमंसुखम् ॥ कथंनुतद्विजानी
यांकिमुभातिनभातिवा ॥ नतत्रसूर्योभातिनचंद्रतारकंनेमाविद्युतोभांतिकुतोयमग्निः ॥ तमे
वभांतमनुभातिसर्वंतस्यभासासर्वमिदंविभाति ॥ द्वितीयावल्ली ॥ २ ॥ २ ॥

ऊर्ध्वमूलोऽवाक्शाखएषोश्वत्थःसनातनः ॥ तदेवशुक्रंतद्ब्रह्मतदेवामृतमुच्यते ॥ तस्मिँल्लो
काःश्रिताःसर्वेतदुनात्येतिकश्चन ॥ एतद्वैतत् ॥ यदिदंकिंचजगत्सर्वंप्राणएजतिनिःसृतम् ॥
महद्भयंवज्रमुद्यतंयएतद्विदुरमृतास्तेभवंति ॥ भयादस्याग्निस्तपतिभयात्तपतिसूर्यः ॥ भया
दिंद्रश्चवायुश्चमृत्युर्धावतिपंचमः ॥ इहचेदशकद्बोद्धुंप्राक्शरीरस्यविस्रसः ॥ ततःस्वर्गेषुलोके

मिवदस्यतु ॥ जगदाख्यस्यवृक्षस्यशाखादेवास्ततोऽवमाः ॥ वृक्षमूलंरमादेवीसोश्वआशुगतेर्हरिः ॥
तद्व्याप्तत्वात्तदन्तत्वादश्वत्थोऽयंप्रकीर्तितः ॥ प्रवाहतस्त्वनादिश्चमुख्यतस्त्वमृतोहरिः ॥ मुख्यामृतस्सए
वैकोजगन्नित्यंप्रवाहतः ॥ प्राणाख्येतुहरौसर्वमेजत्यस्माच्चनिस्सृतम् ॥ वज्रवद्भयदंचैवस्वधर्मस्यातिलं
घने ॥ जीवेस्थितस्तुभगवान्दृश्यतेज्ञानदृष्टितः ॥ आदर्शेमुखवत्सम्यक्तथापितृलोकगः ॥ ततःकिंचि

त्स्पष्टतयागांधर्वेदृश्यतेहरिः॥ नाऽत्यातपेनच्छायायांयथैवाहनिदृश्यते ॥ स्पष्टंतथाब्रह्मलोकेदृश्यतेपुरुषो
त्तमइतिच ॥ पुनरिंद्रियेभ्यःपरंमनइत्यादिदेवतातारतम्यज्ञानपूर्वकंभगवतःसर्वोत्तमत्वज्ञानएवसर्ववाक्या
नांमहातात्पर्यमितिज्ञापयितुम् ॥ तारतम्यपरिज्ञानपूर्वकंसर्वतोहरेः ॥ आधिक्येसर्ववाक्यानांतात्पर्यमह

षुशरीरत्वायकल्पते ॥ यथादर्शेतथात्मनियथास्वप्नेतथापितृलोके ॥ यथाप्सुपरीवदृश्यतेतथा
गंधर्वलोके ॥ छायातपयोरिवब्रह्मलोके ॥ इंद्रियाणांपृथग्भावमुदयास्तमयौचयत्॥पृथगुत्प
द्यमानानांमत्वाधीरोनशोचति ॥ इंद्रियेभ्यःपरंमनोमनसःसत्वमुत्तमम् ॥ सत्वादधिमहानात्मा
महतोऽव्यक्तमुत्तमम् ॥ अव्यक्तात्तुपरःपुरुषोव्यापकोऽलिंगएवच ॥ तंज्ञात्वामुच्यतेजंतुरमृत
त्वंचगच्छति ॥ नसंदृशेतिष्ठतिरूपमस्यनचक्षुषापश्यतिकश्चिदेनम् ॥ हृदामनीषामनसाभि
क्लृप्तोयएनंविदुरमृतास्तेभवंति ॥ यदापंचावतिष्ठंतेज्ञानानिमनसासह ॥ बुद्धिश्चनविचेष्टति
तामाहुःपरमांगतिम् ॥ तांयोगमितिमन्यंतेस्थिरामिंद्रियधारणाम्॥ अप्रमत्तस्तदाभवतियोगो
हिप्रभवाप्ययौ ॥ नैववाचानमनसाप्राप्तुंशक्योनचक्षुषा ॥ अस्तीतिब्रुवतोन्यत्रकथंतदुपल
भ्यते ॥ अस्तीत्येवोपलब्धव्यस्तत्त्वभावेनचोभयोः ॥ अस्तीत्येवोपलब्धस्यतत्वभावःप्रसीद

दिष्यतइतिच ॥ प्रादुर्भावानृतेविष्णुमिंद्रियैर्नैवपश्यति ॥ प्रादुर्भावानपियदाज्ञानदृष्ट्यैवपश्यति ॥ तदैव
मुच्यतेयोगीनदुष्टैरिंद्रियैःक्वचिदितिच ॥ प्रभवाप्ययौप्रतिहियोगः॥भगवतःसकाशात्प्रभवाप्ययौ॥ अधि
कस्ततोऽयंभगवान्सर्वस्मादपिकेशवः ॥ अस्तीतिनामकस्तस्माज्ज्ञातव्यस्सतथैवच ॥ अनाधिक्यंजा
नतांतुकथंसउपलभ्यते ॥ प्रकृतेःपुरुषाणांचतत्त्वंभावयतिस्फुटम् ॥ तत्त्वभावस्ततोविष्णुस्तत्प्रसादात्तुत

स्यहि ॥ आधिक्यंज्ञायतेसत्तःप्रसादश्चतथाविदः ॥ अनादिकालादाधिक्यंसर्वस्माज्जानतोहरेः ॥ पुनः
पुनर्वृद्धिमेतितज्ज्ञानंहिभवेभवे॥येषामाधिक्यविज्ञानंनैवपूर्वंहरेर्भवेत्॥नेषांपश्चाच्चनैवस्यादभिभूतंतुतत्पु
नः॥व्यंजकाद्व्यक्तिमभ्येतितस्मात्तज्ज्ञानमुत्तममितिच॥अंतःकरणकामानांत्यागोव्यक्तिश्चिदात्मनाम् ॥
कामानांतुतदामुक्तौमूर्तिंनैवाभियास्यति ॥ मिथ्याज्ञानग्रंथिभिस्तुनितरांमुच्यतेयदा ॥ तदाऽमृतत्वमेवे
तितदर्थंचानुशासनम् ॥ शरीरभूतोविष्णोस्तुजीवस्तद्वशगोयतः ॥ अधिष्ठितश्चतेनैवविजानीयात्पृथक्त
ति ॥ यदासर्वेप्रमुच्यंतेकामायेस्यहृदिस्थिताः ॥ अथमर्त्योऽमृतोभवत्यत्रब्रह्मसमश्नुते ॥
यदासर्वेप्रभिद्यंतेहृदयस्येहग्रंथयः ॥ अथमर्त्योऽमृतोभवतिएतावदनुशासनम् ॥ शतंचैकाच
हृदयस्यनाड्यस्तासांमूर्धानमभिनिःसृतैका ॥ तयोर्ध्वमायन्नमृतत्वमेतिविष्वङन्याउत्क्रमणे
भवंति ॥ अंगुष्ठमात्रःपुरुषोंतरात्मासदाजनानांहृदयेसन्निविष्टः ॥ तंस्वाच्छरीरात्प्रवृहेन्मुंजा
दिवेषीकांधैर्येण॥तंविद्याच्छुक्रममृतंतंविद्याच्छुक्रममृतमिति॥मृत्युप्रोक्तांनचिकेतोथलब्ध्वा
विद्यामेतांयोगविधिंचकृत्स्नम्॥ब्रह्मप्राप्तोविरजोभूद्विमृत्युरन्योप्येवंयोविदध्यात्ममेव॥२॥३॥
इतिश्रीकाठकोपनिषत्संपूर्णा ॥
तः ॥ स्वाख्याच्छरीराज्जीवात्तुप्रवृहेद्विष्णुमव्ययमितिच ॥ यस्यात्माशरीरम्॥यआत्मानमंतरोयमयती
तिच ॥ जनानांहृदयइत्युक्तत्वाच्चजीवात्पृथग्घरिरितिसिद्धम् ॥ देहांगुष्ठमितोदेहेजीवांगुष्ठमितोहृदि ॥ जी
वस्यसतुविज्ञेयोजीवाद्भेदेनमुक्तयइतिच ॥ संसारिशरीरेणाभेदोवादिनाकेनापिनांगीकृतः ॥ नचलोकेसि
द्धः ॥ जनानामितिभेदात् ॥ नजीवोंगुष्ठमात्रः ॥ अतोविष्णोर्जीवाद्भेदउक्तः॥अतस्सर्वोत्तमोविष्णुरिति
सिद्धम् ॥ २॥३॥ नमोभगवतेतस्मैविष्णवेप्रभविष्णवे ॥ यस्याहमाप्तआप्तेभ्योयोमआप्ततमस्सदा ॥१॥
इतिश्रीमदानंदतीर्थभगवत्पादाचार्यविरचितेश्रीकाठकोपनिषद्भाष्येद्वितीयोऽध्यायः ॥ २ ॥

॥ इति भाष्ययुते ईशावास्यकाठकोपनिषदौ ॥ १९॥२०॥

॥ अथ छान्दोग्योपनिषद्भाष्यसमेता ॥ २१ ॥

श्रीमन्मध्वहृत्सरोजांतर्वर्तिश्रीसीतापतयेनमः ॥ ॐ ॥ अत्युद्रिक्तविशेषसत्सुखमहाज्ञानैकतानप्रभा सर्वप्राभवशक्तिभोगबलसत्सारात्मदिव्याकृतिम् ॥ सृष्टिस्थाननिरोधनित्यनियतिज्ञानप्रकाशावृतिध्वांतामोक्षविमोक्षदंहरिमजंनित्यंसदोपास्महे ॥ १ ॥ हयग्रीवमुखोद्गीर्णगीर्भिर्देवीरमापतिम् ॥ अस्तुवद्विस्तृतगुणंभोगिप्रस्तरशायिनम् ॥ ओमितिनामकमक्षरंसर्वसन्निहितत्वादेतत् ॥ उच्चत्वाद्गीतत्वात्सर्वस्थानत्वाच्चोद्गीथंभगवंतमुपासीत ॥ उक्तंचमहासंहितायाम् ॥ हयग्रीवोद्गीतवाक्यैरमादेवीरमापतिम् ॥

श्रीमद्भारतीरमणमुख्यप्राणांतर्गतरमाजानयेनमः ॥ ॥ हरिःॐ ॥ आप्यायंतुममांगानिवाक्प्राणश्चक्षुःश्रोत्रमथोबलमिंद्रियाणिचसर्वाणिसर्वंब्रह्मौपनिषदंमाहंब्रह्मनिराकुर्यांमामाब्रह्मनिराकरोदनिराकरणमस्त्वनिराकरणंमेअस्तुनदात्मनिनिरतेयउपनिषत्सुधर्मास्तेमयिसंतुतेमयिसंतु ॥ ॐशांतिःशांतिःशांतिः ॥ ओमित्येतदक्षरमुद्गीथमुपासीतोमितिह्युद्गायतिनस्योप

ओमित्येतन्मुखैर्देवमस्तुवत्सामवेदगैरिति ॥ ॐनामानमुपासीततदर्थगुणपूर्वकम् ॥ ओतत्वादवनान्मानादधिकोच्चत्वकारणात् ॥ आनंदादोजसश्चैवभरणादोमुदाहृतइतिसमन्वये ॥ ओतमस्मिञ्जगत्सर्वमत्युच्चश्चाखिलैर्गुणैः ॥ इत्योमितिसदोपास्यःसोक्षयःपुरुषोत्तमः ॥ उच्चत्वाद्गीयमानत्वात्स्थानादुद्गीथउच्यते॥ ॥ १ ॥
ओमित्येनंसमुद्दिश्यह्युद्गातागायतिस्फुटम् ॥ विष्णोरोमितिनाम्नोस्यव्याख्यानमधिकोच्चता ॥ अकारेणाधिकंप्रोक्तमुकारेणोच्चमुच्यते ॥ तथामितंसर्ववेदैर्मकारेणाभिधीयते ॥ अधिकोच्चमितिज्ञातमोमित्य

स्याथद्धारतः ॥ तदेतत्परमत्वंतुयथाक्रममुदीर्यते ॥ देवतानुक्रमज्ञाश्चविष्णोःपरमताविदः ॥ एकांतिनस्ते विज्ञेयायथाक्रमपरास्तथा ॥ अस्मादसावुच्चइतिक्रमस्यांतगतंहरिम् ॥ एकमेवतुयेविद्युस्तेह्येकांतिनईरिताः ॥ एवंयथाक्रमज्ञाश्चसदैकांतपरायणाः ॥ प्रविशंतिपरंदेवंनारायणमनामयम् ॥ उच्चक्रमांतगत्वेनकुर्युःपूजांहरेःसदा ॥ लक्ष्म्यादेःक्रमशःपूजांज्ञात्वाभागवताइति ॥ स्वतंत्रपूज्यताबुद्ध्यानदद्युःकिंचकस्यचित् ॥ ब्रह्माद्यामनुसंज्ञायेवर्णत्वेनोदिताःश्रुतौ ॥ मानवाख्याश्चमुनयस्तान्यजंतिनचेतरान् ॥ पितृत्वेनगुरुत्वेनसाक्षाद्भागवतत्वतः ॥ अपभ्रष्टाअदेवाश्चब्रह्माद्याख्यायुताअपि ॥ देवसंज्ञाश्चदीनत्वात्पूजयेयुर्नतान्कचित् ॥ यद्भागवतबुद्ध्यैवदत्तंब्रह्मादयःसुराः ॥ वैदिकाःप्रतिगृह्णीयुरपभ्रष्टास्तथेतरत् ॥ यथाक्रमपरि

व्याख्यानमेषांभूतानांपृथिवीरसःपृथिव्याआपोरसोऽपामोपधयोरसओपधीनांपुरुषोरसःपुरु

ज्ञानादेकांतित्वाच्चकेवलम् ॥ अच्छिद्रत्वाच्चनियतोमोक्षोन्यत्तुविडंबनम् ॥ विष्णोभक्तिविशेषेणमोक्षावामौहिकारणम् ॥ तद्भक्तेषुक्रमेणैवरमाद्येषुत्वनंतरम् ॥ तृतीयमपिवैराग्यंनचान्यन्मोक्षकारणम् ॥ एतत्साधनताहेतोस्तदन्यद्धिविधीयते ॥ अतोन्यत्सर्वकृच्चापिगच्छेदेवाधरंतमः ॥ अस्मिन्सुनिश्चितो नित्यंमोक्ष्येवान्योज्झकोपिसन् ॥ अतस्तेषांक्रमंवक्ष्येदेवानांयःश्रुतौश्रुतः ॥ पृथिवीसर्वभूतेभ्यःसदा सर्वगुणैर्वरा ॥ रसःसारोवरश्चेतिशब्दाएकार्थवाचकाः ॥ पृथिव्यावरुणःश्रेष्ठस्तस्मादोषधिदेवता ॥ सोमस्तस्मात्तुपुरुषोरुद्रोयत्पौंस्यदेवता ॥ तस्मात्सरस्वतीवाग्घिश्रेष्ठास्याक्रक्स्वरूपिणी ॥ सैवश्रेष्ठा ततोवायुर्वरिष्ठस्सामनामकः ॥ समत्वात्सर्वभूतेषुसामसाम्नांचदेवता ॥ ततःश्रेष्ठतमोविष्णुःश्रेष्ठश्रे

ष्ठतमःसदा ॥ श्रेष्ठाच्छ्रेष्ठतमाच्चापिपरमात्परमोविभुः ॥ परमर्द्धियुतत्वाच्चपरार्ध्यइतिकीर्तितइतिसारनि
र्णये ॥ अतिशयेनपरमार्धिगुणःपरमःपरार्ध्यः ॥ उत्तमेभ्योप्यतिपरमोत्तमोत्तमोरसानांरसतमःपरमःपरा
र्ध्यः ॥ रसानांसकाशादपिपरमपरार्ध्यरसतमइत्यर्थः ॥ प्राणादीनांभूतादिभ्यःश्रेष्ठत्ववदस्यश्रेष्ठत्वंनभव
तिकिंतुमहान्विशेषइतिज्ञापयितुंरसानांरसतमइत्यादिबहुविशेषणंभूतेभ्यःपृथिव्यारसत्वंतेभ्योवरुणस्यर
सतरत्वंसोमस्यरसतमत्वंरुद्रस्यपरमरसतमत्वंवाचःपरमपररसतमत्वंप्राणस्यपरमपरार्धरसतमत्वं अयंतुभ
गवान्प्राणादपिपरमपरार्धरसतममात्रोनभवति ॥ किंतुप्राणस्यापिरसभूतायारमायाअपिपरमपरार्ध्य
रसतमः ॥ अस्मादप्यतिशयेनपरमित्यसंख्यागोचरत्वेनपरमपरार्धेनज्ञेयंहिपरार्ध्यम् ॥ ऋगूपायावाचः

षस्यवाग्रसोवाचऋग्रसऋचःसामरसःसाम्नउद्गीथोरसःसएषरसानांरसतमःपरमःपरार्ध्योष्टमोय

पृथक्परत्वांगीकारेपिभूतेभ्यःप्राणस्यपरमपरार्धरसतमत्वमेवनतुपरमपरार्धिरसतमत्वम् ॥परस्मादप्यासमं
तादूर्द्धंहिपरार्धम् ॥ तेनोत्तमत्वेनज्ञेयंपरार्धि ॥ तेनासंख्यागोचरत्वेनज्ञेयंपरार्ध्यंपरार्धोत्तमंपरार्धिने
नासंख्यागोचरत्वेनज्ञेयंपरार्ध्यमित्यतःपरार्धित्वंश्रियोभवतिश्रियोपिपरार्ध्योभगवान् ॥ अतोरसानां
रसतमःपरमःपरार्ध्यः ॥ पृथिव्याःसोमवरुणयोश्चौषध्यब्देवतात्वेनरुद्रस्यचलिंगदेवतात्वेनप्रसिद्धेर्ऋ
गादीनामेवविमर्शःक्रियतेकतमाकतमर्गित्यादिना ॥ तज्ज्ञानस्यविशिष्टफलत्वाच्च ॥ वाचश्चसरस्व
तीत्वेनप्रसिद्धेर्वागृचोरैक्याच्चनविमर्शःकृतः ॥ विशेषात्प्राणसंयुक्तावागृगित्यभिधीयते ॥ ऋगता
वितिधातोर्हिऋक्त्वंसर्गाभिमानिनी ॥ विशेषसंयोगहीनायदासैवसरस्वती ॥ तदातस्यावरासैव

प्राणसंयोगिनीमता ॥ प्राणयोगवियोगाभ्यांसैषैकापिविभिद्यते ॥ वागेवर्क्कच्छ्रुतौप्रोक्ताप्राणःसामेति कीर्तितः ॥ अक्षयाद्भतिरूपत्वादक्षेपुरमणादपि ॥ अक्षरंभगवान्विष्णुरोमित्युच्चत्वहेतुतः ॥ इतिशब्दो न्यथाभावनिवृत्त्यर्थउदाहृतः ॥ एवमत्युच्चएवासौसर्वदैतद्धृदिस्थितेः ॥ उद्गीयमानउद्गीथोभगवान्पुरुषो त्तमः ॥ तस्मादोमित्यनुज्ञानंकुर्वंत्येतेजनाःसदा ॥ त्वदुक्तंतत्तथाकुर्याद्भगवानेवकेशवः ॥ इत्यभिप्रायतः

उद्गीथःकतमाकतमर्क्कतमत्कतमत्सामकतमःकतमउद्गीथइतिविमृष्टंभवतिवागेवर्क्प्राणःसामो मित्येतदक्षरमुद्गीथस्तद्वाएतन्मिथुनंयद्वाक्प्राणश्चर्क्कसामचतदेतन्मिथुनमोमित्येतस्मिन्नक्ष रेसंसृज्यतेयदावैमिथुनौसमागच्छतआपयतोवैतावन्योन्यस्यकाममापयिताहवैकामानांभव तियएतदेवंविद्वानक्षरमुद्गीथमुपास्तेतद्वाएतदनुज्ञाक्षरंयद्धिकिंचानुजानात्योमित्येवतदाहैषो एवसमृद्धिर्यदनुज्ञासमर्धयिताहवैकामानांभवतियएतदेवंविद्वानक्षरमुद्गीथमुपास्तेतेनेयंत्रयी विद्यावर्ततओमित्याश्रावयत्योमितिशंसत्योमित्युद्गायत्येतस्यैवाक्षरस्यापचित्यैमहिम्नारसे

शब्दःप्रवृत्तःसपुरातनैः ॥ तदेतदज्ञैस्तुजनैःस्वानुज्ञेतिप्रतीयते ॥ ओमित्ययंपूर्णवाचीसमृद्धिश्चोमिती रिता ॥ समृद्धस्तेहिकामोयमित्यनुज्ञाथवाभवेत् ॥ अतस्समृद्धिवाचीस्याद्धरेरोंशब्दईरितः ॥ इतिवादी यतेनुज्ञाहरिस्तवसमृद्धिदः ॥ वाक्प्राणौदंपतीचापिसंसृज्येतेजनार्दने ॥ मुक्तौतुतत्प्रसादेनसंसृज्यंतेततः परे ॥ तद्द्वारेणैवसाक्षात्तुप्राणःसंसृज्यतेहरौ ॥ तेनैवविष्णुनेयंचत्रयीविद्याप्रवर्तते ॥ ओमित्युक्त्वाहित द्व्याख्यासर्वैर्मंत्रैःप्रवर्तते ॥ ॐनामकस्यपूजार्थंविष्णोरेवसदैवहि ॥ महिम्नासारभूतेनविष्णुनाज्ञोज्ञएवच ॥

कुरुतःकर्मनाशस्यमुक्तिर्ज्ञस्यभवेत्तुसा ॥ स्वयोग्यंतुपरिज्ञानंयत्तस्योपनिषत्स्मृतम् ॥ अक्षरंभगवान्विष्णुस्तस्योपप्रणवःस्मृतः॥उपव्याख्यातुतद्व्याख्येत्येवमाहश्रुतिःपरेतितार्तीये ॥ परर्धपरमाद्युच्चंपरार्धंतुततोधिकम् ॥ ततोधिकंपरार्धिःस्यात्परार्ध्यमितितत्परम् ॥ परतःपरमाच्चैवपरार्धोवायुरीरितः ॥ परार्धिनीश्रीरुद्दिष्टापरार्ध्योभगवान्हरिरितिशब्दनिर्णये ॥ १ ॥ उद्गीथाख्यस्यविष्णोर्विशिष्टप्रतिमावायुरेव ॥ अतस्त

नतेनोभौकुरुतोयश्चैतदेवंवेदयश्चनवेदनानातुविद्याचाविद्याचयदेवविद्ययाकरोतिश्रद्धयोपनिपदातदेववीर्यवत्तरंभवतीतिखल्वेतस्यैवाक्षरस्योपव्याख्यानंभवत्यथहयएवायंमुख्यःप्राणस्तमुद्गीथमुपासीततस्यैतैःप्राणैरुपव्याख्यानंभवति ॥ १ ॥ देवासुराहवैयत्रसंयेतिरउभयेप्राजापत्यास्तद्धदेवाउद्गीथमाजह्रुरनेनैनानभिभविष्यामइतितेहनासिक्यंप्राणमुद्गीथमुपासांचक्रिरेतꣳहासुराःपाप्मनाविविधुस्तस्मात्तेनोभयंजिघ्रतिसुरभिचदुर्गंधिचपाप्मनाह्येषविद्धोथहवाचमुद्गीथमुपासांचक्रिरेताꣳहासुराःपाप्मनाविविधुस्तस्मात्तयोभयंवदतिसत्यंचानृतंचपाप्मनाह्येषाविद्धाऽथहचक्षुरुद्गीथमुपासांचक्रिरेतद्धासुराःपाप्मनाविविधुस्तस्मात्तेनोभयंपश्यतिदर्शनीयंचादर्शनीयंचपाप्मनाह्येतद्विद्धमथहश्रोत्रमुद्गीथमुपासांचक्रिरेतद्धासुराःपाप्मनाविविधु

स्यसर्वोत्तमत्वज्ञानपूर्वकंतस्मिंस्ततोप्युत्तमत्वेनोपासितएवभगवान्सम्यक्फलंददातीतिदर्शयति ॥ वायौमुख्यधियेतिचेतिभगवद्वचनम् ॥ यस्माद्वायौस्मृतोविष्णुर्वायोर्मुख्यतयाखिलात् ॥ स्वस्यमुख्यतयातस्मात्परांतुष्टिंगमिष्यति ॥ अतोविचार्यसकलैर्देवैःप्राणेजनार्दनः ॥ उपासितोदैत्यजयकारणात्पापवर्जिते ॥ वायुपुत्रंचनासिक्यमग्निंवागात्मकंतथा ॥ सोमंश्रोत्रात्मकंचैवसूर्यंचक्षुःस्वरूपिणम् ॥ रुद्रंमनःस्वरूपंचशे

षंचाहंस्वरूपिणम्॥चित्तात्मकंचगरुडंपापेनविविधुःसुरान्॥ असुरास्तैर्यतोविद्धास्तस्मात्तेदोषयोगिनः॥ मुख्यवायौयदादेवाःशरीरस्थेचसूर्यगे॥ विष्णुमुद्गीथनामानंतदातंचविदध्वसुः॥ यदाविदध्वसुःप्राणंविध्वस्तास्तेतदासुराः॥ अखन्याश्मानमेवाप्यलोष्टोविध्वंसतेयथा॥ प्रतिमांप्रेयसींप्राप्यविष्णोःप्राणंतथा

स्तस्मात्तेनोभयꣳशृणोतिश्रवणीयंचाश्रवणीयंचपाप्मनाह्येतद्विद्धमथहमनउद्गीथमुपासांचक्रिरेतद्धासुराःपाप्मनाविविधुस्तस्मात्तेनोभयंसंकल्पयतेसंकल्पनीयंचासंकल्पनीयंचपाप्मनाह्येतद्विद्धमथहयएवायंमुख्यःप्राणस्तमुद्गीथमुपासांचक्रिरेतꣳहासुराऋत्वाविदध्वसुर्यथाश्मानमाखणमृत्वाविध्वꣳसेतैवंयथाश्मानमाखणमृत्वाविध्वꣳसतएवंहैवसविध्वꣳसतेयएवंविदिपापंकामयतेयश्चैनमभिदासतिसएषोश्माखणोनैवैतेनसुरभिनदुर्गंधिविजानात्यपहतपाप्माह्येषतेनयदश्नातियत्पिबतितेनेतरान्प्राणानवत्येतमुएवांततोवित्त्वोत्क्रामतिव्याददात्येवांततइतितꣳहांगिराउद्गीथमुपासांचक्रएतमुएवांगिरसंमन्यंतेंगानांयद्रसस्तेनतꣳहबृहस्पतिरुद्गीथमुपासांचक्रएतमुएवबृहस्पतिंमन्यंतेवाग्घिबृहतीतस्याएषपतिस्तेनतꣳहायास्यउद्गीथमुपासांचक्रएतमुएवा

सुराः॥ तस्मादादित्यसंस्थेचशरीरस्थेपिचानिले॥ बलज्ञानात्मकेदिव्याकृतिमत्युज्ज्वलात्मनि॥ सर्वदेवोत्तमेविष्णुमुपासीनततोधिकम्॥ अस्योपासनयादेवास्सर्वेनामानिभेजिरे॥ इंद्रोबृहस्पतिःशंभुरित्याद्याःप्राणगायतः॥ प्राणस्यनामशब्दाश्चमुख्यतोविष्णुसंस्थिताइतिप्रध्याने॥ उद्गीथाख्यंपरंविष्णुमुपा

स्त्याजह्नुरंजसा ॥ तथापिप्राणएवासौप्रीतिमागादुपासितइतिच ॥ प्राणंप्राप्यैवविध्वस्तायथासर्वेसुरास्त
था ॥ तदुपासकस्ययश्चापिप्रतीपंदातुमिच्छतीतिच ॥ एवंविदित्वासंसारान्मुक्तिमेष्यत्यसंशयम्॥ विष्णु
मप्यंततोवेत्तिप्राणवेत्तायतःस्फुटम् ॥ वीतिविष्णुःसमुद्दिष्टोविशिष्टत्वात्तुसर्वतः ॥ आददात्येवतंप्राणवे
त्तांतेतत्प्रसादतः ॥ प्राणात्परंतुयेविष्णुंजीवांश्चैवावरांस्ततः ॥ येविदुस्तेविदुःप्राणंनान्यथातुकथंचनेति

यास्यंमन्यंतआस्याद्यदयतेतेनतंहबकोदाल्भ्योविदांचकारसहनैमिशीयानामुद्गाताबभूवसह
स्मैभ्यःकामानागायत्यागाताहवैकामानांभवतियएतदेवंविद्वानक्षरमुद्गीथमुपास्तइत्यध्यात्म
म् ॥ २॥ अथाधिदैवतंयएवासौतपतितमुद्गीथमुपासीतोद्यन्वाएषप्रजाभ्यउद्गायत्युद्यंस्तमो
भयमपहंताहवैभयस्यतमसोभवतियएवंवेदसमानउएवायंचासौचोष्णोयमुष्णोसौस्वरइतिममा
चक्षतेस्वरइतिप्रत्यास्वरइत्यमुंतस्माद्वाएतमिममुंचोद्गीथमुपासीताथखल्तुव्यानमेवोद्गीथमु

च ॥ प्राणउद्गीथइत्याद्यानामब्रह्मादिकास्तथा ॥ सप्तम्यर्थाःसमुद्दिष्टाःसप्तसुप्रथमायतः ॥ प्राणमुद्गीथ
मित्याद्याद्वितीयासप्तमीमतेतिच ॥ २ ॥ आदित्यसंस्थितोनित्यंप्राणस्तपतिनापरः ॥ प्रकाशनंचतपनं
काष्ठवत्सूर्यगंभवेत्॥ सूर्यमंडलगोवायुरुदयास्तमयोज्झितः॥ अपिप्रजाभ्यउद्यंश्चैवोद्गायतिजनार्दनम् ॥
आदित्यमंडलस्थश्चसर्वप्राणिगतस्तथा ॥ वायुस्समानएवायमुष्णोसावपिचस्फुटम् ॥ तस्मादस्मिन्नमु
ष्मिन्वाप्युद्गीथाख्यंजनार्दनम् ॥ उपासीतविमोक्षायसर्वकामाप्तयेतथेतिच ॥ केशवःस्वःस्वतंत्रत्वात्तद्रते

॥ ४ ॥

मारुतःस्वरः॥शरीरस्थश्चसूर्यस्थःप्रतिप्रत्यासमंततः॥ मांप्रतीत्यतएवासौप्रत्यास्वरउदाहृतः॥प्राणाद्यास्त्रिवि
धाःपंचप्रधानोवायुरेवच ॥ मुख्यपंचकरूपस्सन्गरुडोमध्यपंचकः ॥ अवमःपंचकस्त्वन्येप्राणाद्यास्त
स्यसूनवः ॥ इतित्रेधाविभागोयंविभागोन्यश्चतुर्थकः ॥ प्राणापानौशेषवीन्द्रौतथोदानसमानकौ ॥ रुद्रेंद्रो

पासीतयद्वैप्राणितिसप्राणोयदपानितिसोपानोथयःप्राणापानयोःसंधिःसव्यानोयोव्यानःसावा
क्तस्मादप्राणन्ननपानन्वाचमभिव्याहरतियावाक्सर्क्तस्मादप्राणन्ननपानन्नृचमभिव्याहरति
यर्क्तत्सामतस्मादप्राणन्ननपानन्त्सामगायतियत्सामसउद्गीथस्तस्मादप्राणन्ननपानन्नुद्गायत्यतो
यान्यन्यानिवीर्यवंतिकर्माणियथाग्नेर्मंथनमाजेःसरणंदृढस्यधनुषआयमनमप्राणन्ननपानंस्तानि
करोत्येतस्यहेतोर्व्यानमेवोद्गीथमुपासीताथखलूद्गीथाक्षराण्युपासीतोद्गीथइतिप्राणएवोत्प्राणे
नह्युत्तिष्ठतिवाग्गीर्वाचोहिगिरइत्याचक्षतेऽन्नंथमन्नेहीदंसर्वंस्थितंद्यौरेवोदंतरिक्षंगीःपृथिवी
थमादित्यएवोद्वायुर्गीरग्निस्थंसामवेदएवोद्यजुर्वेदोगीर्ऋग्वेदस्थंदुग्धेस्मैवाग्दोहंयोवाचोदोहो

तत्परःश्रेष्ठोवायुर्व्यानउदाहृतः ॥ तस्मिन्नुद्गीथनामानमुपासीतहरिंपरम् ॥ योसौव्यानगतोविष्णुःसर्वांगुक
सामगःसदा ॥ उद्गीथेचसएवैकस्तस्माद्ध्यानाद्धितत्क्रियाः ॥ उद्गीथनामाभगवान्स्थितोव्यानादिपंच
के ॥ वीर्यवत्कर्मकृत्तस्माद्ध्यानएवह्युदाहृतः ॥ तस्माद्ध्यानगतंविष्णुमुपासीतैवनित्यशः ॥ यद्यप्येकोहि भ
गवान्सर्वदासर्ववस्तुगः ॥ अनूनोद्रिक्तमहिमोनिर्विशेषस्सदैवच ॥ तथापितत्क्रियाभेदान्नामरूपादिकं

पृथक् ॥ उच्यतेऽपृथक्त्वेपिपूर्णैश्वर्यैकहेतुतः ॥ अविशेषोपिभगवान्सर्वशक्तित्वहेतुतः ॥ विशेषहेतु
कंसर्वंकरोत्यविकृतःसदा ॥ उद्गीथाक्षरगंचैवप्राणादिषुचसंस्थितम् ॥ आशीःसमृद्धिहेतुष्वप्यखिलेषुव्य
वस्थितम् ॥ एकमेवहरिंवेदयःससर्वैष्टमाप्नुयादितिच ॥ उच्छब्दवाच्याःप्राणाद्यावागाद्यागीरितीरिताः ॥

न्नवानन्नादोभवतियएतान्येवंविद्वानुद्गीथाक्षराण्युपास्तउद्गीथइत्यथखल्वाशीःसमृद्धिरुपसर
णानीत्युपासीतयेनसाम्नास्तोष्यन्स्यात्तत्सामोपधावेद्यस्यामृचितामृचंयदार्षेयंतमृषिंयांदेवता
मभिष्टोष्यन्स्यात्तांदेवतामुपधावेद्येनच्छंदसास्तोष्यन्स्यात्तच्छंदउपधावेद्येनस्तोमेनस्तोष्य
माणःस्यात्तꣳस्तोममुपधावेद्यांदिशमभिष्टोष्यन्स्यात्तांदिशमुपधावेदात्मानमंततउपसृत्यस्तु
वीतकामंध्यायन्नप्रमत्तोभ्याशोहयदस्मैसकामःसमृध्येतयत्कामस्तुवीतेतियत्कामस्तुवीतेति
॥ ३॥ ओमित्येतदक्षरमुद्गीथमुपासीतोमितिह्युद्गायतितस्योपव्याख्यानंदेवावैमृत्योर्बिभ्यतस्त्र
यींविद्यांप्राविशꣳस्तेच्छंदोभिराच्छादयन्यदेभिराच्छादयꣳस्तच्छंदसांछंदस्त्वंतानुतत्रमृत्युर्य
थामत्स्यमुदकेपरिपश्येदेवंपर्यपश्यदृचिसाम्नियजुषितेनुवित्त्वोर्ध्वाऋचःसाम्नोयजुषःस्वरमेवप्रा

अन्नाद्यास्थमितिप्रोक्तास्तेषूद्गीथोहरिःस्थितइतिच ॥ आत्मानंपरमात्मानमंततःसर्वोत्तमत्वेनसर्वत्रोपसृ
त्या ॥ ३ ॥ स्वरतेस्तुस्वरोविष्णुस्तद्रतेर्वायुरुच्यते ॥ वायुस्वरेस्वरंविष्णुमोमाख्यंसमुपासिरे ॥ देवास्ते ॥ ५ ॥
नाम्रतंप्राप्तामुक्त्याख्यंमृत्युवर्जिताः ॥ मारणान्मृत्युरित्युक्तादुर्गातद्भयतःसुराः ॥ ओमित्युपास्यतंवि

ष्णुंपरमामृतमापिरइतिसंध्याने ॥ ऊर्ध्वाउत्तमाः ॥ ४ ॥ आदित्यसंस्थितोवायुःप्रणवस्तद्गतोहरिः ॥ प्र
कृष्टत्वाच्चनेतृत्वाद्गतित्वादखिलस्यच ॥ उद्गीथउच्चैर्गेयत्वात्सएवपुरुषोत्तमः ॥ सएवप्राणगोदेहेओमित्ये
वसदाजपन् ॥ एत्येषभगवान्विष्णुर्ध्यायन्नेकंतमक्षरम् ॥ एकपुत्रोमुक्तिमेतिध्यायन्प्राणेपुरशिपु ॥ बह्व

विशन्यदावाऋचमाप्नोत्योमित्येवातिस्वरत्येवꣳसामैवंयजुरेषउस्वरोयदेतदक्षरमेतदमृतमभयं
तत्प्रविश्यदेवाअमृताअभयाअभवन्सयएतदेवंविद्वानक्षरंप्रणौत्येतदेवाक्षरꣳस्वरममृतमभयंप्र
विशतितत्प्रविश्ययदमृतादेवास्तदमृतोभवति॥४॥अथखलुयउद्गीथःसप्रणवोयःप्रणवःसउद्गीथइ
त्यसौवादित्यउद्गीथएषप्रणवओमितिह्येषस्वरन्नेत्येतमुएवाहमभ्यगासिपंतस्मान्ममत्वमेको
सीतिहकौषीतकिःपुत्रमुवाचरश्मीꣳस्त्वंपर्यावर्तयताद्बहवोवैतेभविष्यंतीत्यधिदैवतमथाध्या
त्मंयएवायंमुख्यप्राणस्तमुद्गीथमुपासीतोमितिह्येषस्वरन्नेत्येतमुएवाहमभ्यगासिपंतस्मान्मम
त्वमेकोसीतिहकौषीतकिःपुत्रमुवाचप्राणांस्त्वंभूमानमभिगायताद्बहवोमेवैभविष्यंतीत्यथखलु
यउद्गीथःसप्रणवोयःप्रणवःसउद्गीथइतिहोतृषदनाद्धैवापिदुरुद्गीतमनुसमाहरतीत्यनुसमाहरती
ति ॥ ५ ॥ इयमेवर्गग्निःसामतदेतदेतस्यामृच्यध्यूढꣳसामतस्मादृच्यध्यूढꣳसामगीयतेइय

पुत्रोविमुक्तःस्यात्तस्माद्ध्यायेत्तथापरमितिच॥ प्राणस्थंभूमानमभिगायदुरुद्गीतमनुसमाहरति ॥ अनुरूप
मेवकरोति ॥ होतृसदनस्थमग्निस्थंभगवंतंध्यात्वा ॥ अन्यथागानजंदोषमग्नौध्यात्वाहरिंपरम् ॥ अपाक
रोतितस्मात्तंध्यायेदेवाग्निगंसदेतित्रैविधे ॥ ५ ॥ अग्नीरसूर्यनीलेपुवायुस्थःसामदेवता ॥ उर्वीवियद्द्युशु
क्लेपुऋग्देवीस्थासरस्वती ॥ सेतिभार्याहिवाग्देवीप्राणोमःपतिरीरितः ॥ एवंतौसामनामानावुभावेवाप्यु

दाहृतौ ॥ अतोहिसामवेदोयंऋक्सामात्मकईरितः ॥ वागादिष्वेवमेवैतौवाक्प्राणौसर्वदास्थितौ ॥ तयोरंतस्थितोविष्णुर्गायकौतस्यतावुभौ ॥ ऋक्सामभ्यांसउन्नामापापोद्गश्चोच्चएवचेत्यादिसत्तत्त्वे ॥ कप्यासरक्तपद्माक्षःसूर्यगश्चाक्षिगश्चसः ॥ गायकस्तस्यविष्णोर्यःसस्वर्ग्यांश्चनृलोकगान् ॥ कामान्दद्यान्नरश्चेत्स्यात्सुराणांचनृणामपि ॥ मोक्षदोयदिवायुःस्यान्मुख्योद्गाताततोनिलइतिच ॥ तस्मा

मेवसाग्निरमस्तत्सामांतरिक्षमेवर्ग्वायुःसामतदेतदेतस्यामृच्यध्यूढꣳसामतस्मादृच्यध्यूढꣳसामगीयतेंतरिक्षमेवसावायुरमस्तत्सामद्यौरेवर्गादित्यःसामतदेतदेतस्यामृच्यध्यूढꣳसामतस्मादृच्यध्यूढꣳसामगीयतेद्यौरेवसादित्योऽमस्तत्सामनक्षत्राण्येवर्क्चंद्रमाःसामतदेतदेतस्यामृच्यध्यूढꣳसामतस्मादृच्यध्यूढꣳसामगीयतेनक्षत्राण्येवसाचंद्रमाअमस्तत्सामाथयदेतदादित्यस्यशुक्लंभाःसैवर्गथयन्नीलंपरःकृष्णंतत्सामतदेतदेतस्यामृच्यध्यूढꣳसामतस्मादृच्यध्यूढꣳसामगीयतेऽथयदेवैतदादित्यस्यशुक्लंभाःसैवसाथयन्नीलंपरःकृष्णंतदमस्तत्सामाथयएषोंतरादित्येहिरण्मयःपुरुषोदृश्यतेहिरण्यश्मश्रुर्हिरण्यकेशआप्रणखात्सर्वएवसुवर्णस्तस्ययथाकप्यासंपुंडरीकमेवमक्षिणीतस्योदितिनामसएषसर्वेभ्यःपाप्मभ्यउदितउदेतिहवैसर्वेभ्यःपाप्मभ्योय

दुद्गीथउच्चोसौगायतेगीयतेतिचेति ॥ आत्माजीवः ॥ सरस्वतीहिचक्षुःस्याजीवस्थोवायुरीरितः ॥ विदित्वातावुभौदेवौतद्वंध्यायेद्धरिंसदेतिमानसे ॥ दृश्यतेज्ञानदृष्ट्यायःसूर्येचक्षुषिचैकराट् ॥ ऋङ्नामाज्ञानरूपत्वात्सामनित्यसमत्वतः ॥ उक्थमुत्थापकत्वाच्चयजुर्याज्यस्वरूपतः ॥ ब्रह्मासौपूर्णरूपत्वादेवंसर्वाभिधानवानितिच ॥ यथाबदरिकानाथोद्धारकानाथइत्यपि ॥ अर्वाङ्नाथःपराङ्नाथइतितद्वदिहो

च्यते ॥ सर्वनाथोपिभगवान्संनिधानविशेषतइतिच ॥ ६ ॥ ७ ॥ अग्निःसामाभिमानीस्याद्वरुणस्तुस्व

एवंवेदतस्यर्क्सामचगेष्णौतस्मादुद्गीथस्तस्मात्त्वेवोद्गातैतस्यहिगातासएषयेचामुष्मात्पराञ्चो
लोकास्तेषांचेष्टेदेवकामानांचेत्यधिदैवतम् ॥ ६ ॥ अथाध्यात्मंवागेवर्क्प्राणःसामतदेतदेत
स्यामृच्यध्यूढꣳसामतस्मादृच्यध्यूढꣳसामगीयतेवागेवसाप्राणोमस्तत्सामचक्षुरेवर्गात्मासामतदे
तदेतस्यामृच्यध्यूढꣳसामतस्मादृच्यध्यूढꣳसामगीयतेचक्षुरेवसात्मामस्तत्सामश्रोत्रमेवर्ङ्मनः
सामतदेतंतदेतदेतस्यामृच्यध्यूढꣳसामतस्मादृच्यध्यूढꣳसामगीयतेश्रोत्रमेवसामनोमस्तत्सा
माथयदेतदक्ष्णःशुक्लंभाःसैवर्गथयन्नीलंपरःकृष्णंतत्सामतदेतदेतस्यामृच्यध्यूढꣳसामतस्मादृ
च्यध्यूढꣳसामगीयतेऽथयदेवैतदक्ष्णःशुक्लंभाःसैवसाथयन्नीलंपरःकृष्णंतदमस्तत्सामाथयएषों
तरक्षिणिपुरुषोदृश्यतेसैवर्क्तत्सामतदुक्थंतद्यजुस्तद्ब्रह्मतस्यैतस्यतदेवरूपंयदमुष्यरूपंयावमुष्य
गेष्णौतौगेष्णौयन्नामतन्नामसएषचैतस्मादर्वाञ्चोलोकास्तेषांचेष्टेमनुष्यकामानांचेतितद्यइमे
वीणायांगायंत्येतंतेगायंतितस्मात्तेधनसनयोऽथयएतदेवंविद्वान्सामगायत्युभौसामगायति
सोमुनैवसएषचामुष्मात्पराञ्चोलोकास्ताꣳश्चाप्नोतिदेवकामाꣳश्चाथानेनैवयेचैतस्मादर्वाञ्चो
लोकास्ताꣳश्चाप्नोतिमनुष्यकामाꣳश्चतस्मादुहैवंविदुद्गाताब्रूयात्कंतेकाममागायानीत्येषह्ये
षकामगानस्येष्टेयएवंविद्वान्सामगायतिसामगायति ॥७॥ त्रयोहोद्गीथेकुशलाबभूवुःशिलकः
शालावत्यश्चैकितायनोदाल्भ्यःप्रवाहणोजैवलिरितितेहोचुरुद्गीथेवैकुशलाःस्मोहंतोद्गीथेक

रात्मकः ॥ प्राणावराभिमानीतुसूर्यएवप्रकीर्तितः ॥ अन्नाभिमानीदक्षश्चशक्रस्त्वबभिमानवान् ॥ द्यात्म

कश्चशिवःप्रोक्तःक्रमेणैवोत्तरोत्तराः ॥ क्रमेणमोक्षेप्राप्याश्चपूर्वेषामुत्तरोत्तराइतिनिवृत्ते ॥ अग्नेर्वागा
त्मकत्वात्स्वरस्योदकात्मकत्वात् ॥ आदित्यएवप्राणोन्नंवैप्रजापतिरितिश्रुतेः ॥ आपएवेंद्रोद्यौर्वाविरुद्रइ
त्यादेश्च ॥ विशेषज्ञानसंप्राप्त्यैजानंतोपिपरंहरिम् ॥ ब्रूयुर्देवाश्चऋषयस्तदन्यस्यपरात्मतामितिब्रह्मतर्के ॥
स्वर्गाभिमानिनंरुद्रंप्रतिसामाभिसंस्थापयामः ॥ तत्स्तावकंहिसाम ॥ मूर्धातेविपतेदितियःकश्चिद्ब्रूयाच्चेद्धि

थांवदामइतितथेतिसमुपविविशुःसहप्रवाहणोजैबलिरुवाचभगवंतावग्रेवदतांब्राह्मणयोर्वद
तोर्वाचंश्रोष्यामीतिसहशिलकःशालावत्यश्चैकितायनंदाल्भ्यमुवाचहंतत्वापृच्छानीतिपृ
च्छेतिहोवाचकासाम्नोगतिरितिस्वरइतिहोवाचस्वरस्यकागतिरितिप्राणइतिहोवाचप्राणस्य
कागतिरित्यन्नमितिहोवाचान्नस्यकागतिरित्यापइतिहोवाचापांकागतिरित्यसौलोकइतिहोवा
चामुष्यलोकस्यकागतिरितिनस्वर्गंलोकमतिनयेदितिहोवाचस्वर्गंवयंलोकंसामाभिसंस्थाप
यामःस्वर्गसंस्तावंहिसामेतितंहशिलकःशालावत्यउवाचाप्रतिष्ठितंवैकिलतेदाल्भ्यसामयस्त्वे
तर्हिब्रूयान्मूर्धातेविपतिष्यतीतिमूर्धातेविपतेदितिहंताहमेतद्भगवतोवेदानीतिविद्धीतिहोवा
चामुष्यलोकस्यकागतिरित्ययंलोकइतिहोवाचास्यलोकस्यकागतिरितिनप्रतिष्ठांलोकमतिन

यतिष्यति ॥ ब्रह्मैवहिपृथिव्यात्माविष्णुराकाशनामकः ॥ आदीप्तत्वाद्धरीयांश्चपरमोहरिरेवहीतिसत्त
त्वे ॥ शुभाशुभानांदाहादौसाम्यात्सामाग्निरीरितः ॥ स्वोविष्णुःसागरेरंतावरुणोतःस्वरःस्मृतः ॥ उदयाज्ज
गत्प्रणेतृत्वात्सूर्यःप्राणउदाहृतः ॥ अत्तारुद्रस्तद्विरोधाद्दक्षःस्यादन्ननामकः ॥ स्वोविष्णुस्तद्रतिर्वायुस्त
द्वोमुक्तौसदाशिवः ॥ अतःस्वर्गोसुसंस्थत्वादसावितिचकीर्तितः ॥ सर्वैदेवांतरत्वात्तुब्रह्मायंसमुदाहृतः ॥

लोकोज्ञानस्वरूपत्वादेतेषांपरमोहरिरितिब्रह्मतर्के ॥ आपालनादापइंद्रः ॥ अधिकंवरीयान्परोवरीया

येदितिहोवाचप्रतिष्ठांवयंलोकंसामाभिसंस्थापयामःप्रतिष्ठासंस्तावंहिसामेतितंहप्रवाहणोजैबि
लिरुवाचांतवद्वैकिलतेशालावत्यसामयस्त्वेतर्हिब्रूयान्मूर्धातेविपतिष्यतीतिमूर्धातेविपतेदिति
हंताहमेतद्भगवत्तोवेदानीतिविद्धीतिहोवाच॥८॥ अस्यलोकस्यकागतिरित्याकाशइतिहोवा
चसर्वाणिहवाइमानिभूतान्याकाशादेवसमुत्पद्यंतेआकाशंप्रत्यस्तंयंत्याकाशोह्येवैभ्योज्याया
नाकाशःपरायणंसएषपरोवरीयानुद्गीथःसएषोनंतःपरोवरीयोहास्यभवतिपरोवरीयसोहलोका
ञ्जयतियएतमेवंविद्वान्परोवरीयांसमुद्गीथमुपास्तेतंहैतमधिधन्वाशौनकउदरशांडिल्यायोक्त्वो
वाचयावत्तएनंप्रजायामुद्गीथंवेदिष्यंतेपरोवरीयोहैभ्यस्तावदस्मिँल्लोकेजीवनंभविष्यतितथा
मुष्मिँल्लोकइतिसएतमेवंविद्वानुपास्तेपरोवरीयएवहास्यास्मिँल्लोकेजीवनंभवतितथामुष्मिँल्लो
केलोकइतिलोकेलोकइति ॥ ९ ॥ मटचीहतेषुकुरुष्वाढक्यासहजाययोपस्तिर्हचाक्रायणइ
भ्यग्रामेप्रद्राणकउवाससहेभ्यंकुल्माषान्खादंतंबिभिक्षेतंहोवाचनेतोन्येविद्यंतेयच्चयेमइम
उपनिहिताइत्येतेषांमेदेहीतिहोवाचनानस्मैप्रददौहंतानुपानमित्युच्छिष्टंवैमेपीतंस्यादिति
होवाचनस्विदेतेप्युच्छिष्टाइतिनवाअजीविष्यमिमानखादन्नितिहोवाचकामोमउदपानमि
तिसहखादित्वातिशेषाञ्जायायाआजहारसाग्रएवसुभिक्षाबभूवतान्प्रतिगृह्यनिदधौसहप्रातः
संजिहानउवाचयद्बतान्नस्यलभेमहिलभेमहिधनमात्रांराजासौयक्ष्यतेसमासर्वैरार्त्विज्यैर्वृ

नृ तत्परोवरीयोस्यरक्षकंभवति ॥ यावतोह्यापरादिपर्यंतम् ॥ ८ ॥ ९ ॥ उपलाइष्टकाःस्थूलामटचीति

प्रकीर्तिता इतिशब्दनिर्णये ॥ आसन्नयौग्रनायोपिद्राढकील्यभिधीयनइतिच ॥ प्रद्रवन्नन्नपानार्थप्रद्राणं

णीतेतितंजायोवाचहंतपतइमएवकुल्मापाइतितान्खादित्वामुंयज्ञंविततमेयायतत्रोद्गातॄना
स्तावेस्तोष्यमाणानुपोपविवेशसहप्रस्तोतारमुवाचप्रस्तोतर्यादेवताप्रस्तावमन्वायत्तातांचेदवि
द्वान्प्रस्तोष्यसिमूर्धातेविपतिष्यतीत्येवमेवोद्गातारमुवाचोद्गातर्यादेवतोद्गीथमन्वायत्तातांचेद
विद्वानुद्गास्यसिमूर्धातेविपतिष्यतीत्येवमेवप्रतिहर्तारमुवाचप्रतिहर्तर्यादेवताप्रतिहारमन्वायत्ता
तांचेदविद्वान्प्रतिहरिष्यसिमूर्धातेविपतिष्यतीतितेहसमारतास्तूष्णीमासांचक्रिरे ॥१०॥ अ
थहैनंयजमानउवाचभगवंतंवाअहंविविदिषाणीत्युषस्तिरस्मिचाक्रायणइतिहोवाचसहोवा
चभगवंतंवाअहमेभिःसर्वैरार्त्विज्यैःपर्यैषिषंभगवतोवाअहमवित्त्यान्यानवृषिभगवांस्त्वेवमेसर्वै
रार्त्विज्यैरितितथेत्यथतर्ह्येतएवसमतिसृष्टास्तुवतांयावत्त्वेभ्योधनंदद्यास्तावन्ममदद्याइतितथे
तिहयजमानउवाचाथहैनंप्रस्तोतोपससादप्रस्तोतर्या देवताप्रस्तावमन्वायत्तातांचेदविद्वान्प्र
स्तोष्यसिमूर्धातेविपतिष्यतीतिमाभगवानवोचत्कतमासादेवतेतिप्राणइतिहोवाचसर्वाणिह
वाइमानिभूतानिप्राणमेवाभिसंविशंतिप्राणमभ्युज्जिहतेसैषादेवताप्रस्तावमन्वायत्तातांचेद
विद्वान्प्रास्तोष्योमूर्धातेव्यपतिष्यत्तथोक्तस्यमयेत्यथहैनमुद्गातोपससादोद्गातर्यादेवतोद्गीथम
न्वायत्तातांचेदविद्वानुद्गास्यसिमूर्धातेविपतिष्यतीतिमाभगवानवोचत्कतमासादेवतेत्यादित्य
इतिहोवाचसर्वाणिहवाइमानिभूतान्यादित्यमुच्चैःसंतंगायंतिसैषादेवतोद्गीथमन्वायत्तातांचेद

कइतीरितइतिच ॥ १० ॥ प्राणस्थविष्णुनासर्वंप्रसूयंतेयतस्ततः ॥ प्रस्तावदेवतासस्यात्प्रस्तावस्तुजनि

र्यतः ॥ आदित्यसंस्थितोविष्णुर्यस्तदासर्वंगीतभुक् ॥ राजादौगीतमप्यज्ञैर्भुंक्तेगानस्यदेवता ॥ उद्गीथदे
वतातस्मात्सएवपुरुषोत्तमः ॥ अन्नस्थेनैवजीवंतिभूतान्येतानिविष्णुना ॥ प्रतिहारदेवतातःसप्रतिहारोहि
भोजनमितिच ॥ उच्चैःसंतमुत्तमंसंतम् ॥ ११ ॥ दल्भपुत्रोबकोमित्रयापुत्रार्थैस्वीकृतोग्लाववत्तूर्ष्णो

विद्वानुदगास्योमूर्धातेव्यपतिष्यत्तथोक्तस्यमयेत्यथहैनंप्रतिहर्तोपससादप्रहर्तर्यादेवताप्रतिहार
मन्वायत्तातांचेदविद्वान्प्रतिहरिष्यसिमूर्धातेविपतिष्यतीतिमाभगवानवोचत्कतमासादेवतेत्य
न्नमितिहोवाचसर्वाणिहवाइमानिभूतान्यन्नमेवप्रतिहरमाणानिजीवंतिसैषादेवताप्रतिहारम
न्वायत्तातांचेदविद्वान्प्रत्यहरिष्योमूर्धातेव्यपतिष्यत्तथोक्तस्यमयेतितथोक्तस्यमयेति॥ ११॥
अथातःशौवउद्गीथस्तद्धबकोदाल्भ्योग्लावोवामैत्रेयःस्वाध्यायमुद्वव्राजतस्मैश्वाश्वेतःप्रादुर्ब
भूवतमन्येश्वानउपसमेत्योचुरन्नंनोभगवानागायत्वशनायामवाइतितान्होवाचेहैवमाप्रातरुप
समीयातेतितद्धबकोदाल्भ्योग्लावोवामैत्रेयःप्रतिपालयांचकारतेहयथैवेदंबहिष्पवमानेनस्तो
ष्यमाणाःसंरब्धाःसर्पंतीत्येवमाससृपुस्तेहसमुपविश्यहिंचक्रुरो३मदा३मों३पिबा३मोंदेवोवरु
णःप्रजापतिःसविता३न्नमिहा३हरदन्नपते३न्नमिहा३हराहरोमिति॥ १२॥अयंवावल्कोहावु

स्थितत्वात्तयाग्लावेर्युक्तोग्लावनामकोजातः ॥ अतउत्तरथास्यनिर्देशोगवतीत्यर्थः ॥ प्रसादार्थंबक
स्यापिवायुनोक्तःश्वरूपिणा ॥ शौवोद्गीथइतिप्रोक्तोरुद्रादीनांश्वरूपिणाम् ॥ उपासितःपौर्णमास्यांशौ
वोद्गीथेनकेशवः ॥ सर्वाभीष्टंददातीतिप्राहरित्याहमारुतः ॥ ओमद्दामादिकंमंत्रंवायुनोक्तंतुदेवताः ॥
वायुस्थविष्णुमुद्दिश्यहिंकृत्यप्रापुरीप्सितम् ॥ देवौविष्णुश्चवायुश्चसर्वज्ञत्वात्कोणात् ॥ अर्णावरणीय

त्वात्सवितारौप्रभृतितः ॥ प्रजानांचपतीतद्वत्क्रमादेवप्रकीर्तितावितिच ॥ १२ ॥ हूयतेत्राग्निहोत्रादिर्हा
वुकारस्त्वियंततः ॥ हेत्याश्चर्यवदायातिहेतिवासुखकृत्त्वतः ॥ हायिकारस्ततोवागुर्थेत्युक्तमनंतरम् ॥
आनंतर्यात्प्रकाशस्यसूर्याच्चंद्रस्तथेरितः ॥ सर्वसामीप्यतोविष्णुरिहेतिकथितःसदा ॥ इंधनादग्निरीकार
ऊकारस्सूर्यउच्यतः ॥ नितरामाह्वयंत्येनमितीद्रोनिहवःस्मृतः ॥ एतीत्येकारएवासोऔहोयीत्यखिलाः
सुराः ॥ उच्चत्वाद्विष्णुरुःप्रोक्तोहूयंतेस्मिन्यतोखिलाः ॥ मुक्तावौहोयिनस्तस्मात्सर्वेदेवाःप्रकीर्तिताः ॥ ही

**कारोवायुर्हायिकारश्चंद्रमाअथकारआत्मेहकारोग्निरीकारआदित्यऊकारोनिहवएकारोविश्वेदे**
**वाऔहोयिकारःप्रजापतिर्हिंकारःप्राणःस्वरोन्नंयायावाग्विराडनिरुक्तस्त्रयोदशस्तोभःसंचरोहु**
**ङ्कारोग्दुग्धेस्मैवाग्दोहंयोवाचोदोहोन्नवानन्नादोभवतियएतामेवंसाम्नामुपनिषदंवेदोपनिषदं**
**वेद ॥ १३ ॥ श्रीमच्छांदोग्योपनिषदिप्रथमोऽध्यायः ॥ १ ॥**

तिनिश्चयउद्दिष्टोनिश्चयज्ञानतःसदा ॥ ब्रह्माहिंकारइत्युक्तोवायुःप्राणःशरीरगः ॥ स्वेविष्णौरमयत्येनं
जीवंतस्मात्स्वरःस्मृतः ॥ ययिर्नित्यगतेर्वायुस्तद्भार्यायासरस्वती ॥ सैवान्नदेवताप्रोक्तायात्राप्राणेननीय
ते ॥ सर्ववागात्मिकायातुश्रीर्विशेषेणराजनात् ॥ विराडुक्तानिरुक्तस्तुव्याप्तोनारायणस्तुयः ॥ आहूत
एवपातीतिहुङ्कारइतिकीर्तितः ॥ हुबित्याक्रियतेयस्माद्धुङ्कारस्तुजनार्दनः ॥ अनिरुक्तस्त्ववाच्यत्वा
त्परमःपुरुषोहरिरितिमाहात्म्ये ॥ सम्यक्चरतीतिसएवसंचरः ॥ १३ ॥ इतिश्रीमदानंदतीर्थभगवत्पादा
चार्यविरचितेश्रीमच्छांदोग्योपनिषद्भाष्येप्रथमोऽध्यायः ॥ १ ॥ ॥ ॥ ॥

हरिः ॐ समस्तस्यपूर्णस्यसाधुत्वात्सामनाम्नोविष्णोरुपासनंसाधु ॥ सारत्वेनमेयंसाम ॥ सारत्वेनधार्यंसा
ध्वित्वेकएवार्थः ॥ साधुत्वात्सामनामानंसमस्तगुणपूर्तितः ॥ समस्तंयउपासीतनारायणमनामयम् ॥ सर्व
साम्नांदैवतेतिसमुक्तःसाधुधर्मभागितिसामसंहितायाम् ॥ १ ॥ नारायणाख्यउद्गीथउद्गेयःप्रणवेनयत् ॥
उद्गच्छंतियतोस्माद्वावासुदेवादिमूर्तयः ॥ प्रथमावनाररूपत्वाद्वासुदेवःपरःपुमान् ॥ प्रस्तावोनिधनंचापि
संकर्षणउदाहृतः ॥ संकर्षणोहिसंहर्ताप्रद्युम्नःपरमेश्वरः ॥ हिंकारइतिसंप्रोक्तोहीतिसृष्टिरुदीर्यते ॥ प्रसि

समस्तस्यखलुसाम्नउपासनꣳसाधुयत्खलुसाधुतत्सामेत्याचक्षतेयदसाधुतदसामेतितदुता
प्याहुःसाम्नैनमुपागादितिसाधुनैनमुपागादित्यैवतदाहुरसाम्नैनमुपागादित्यसाधुनैनमुपागादि
त्येवतदाहुरथोताप्याहुःसामनोबतेतियत्साधुभवतिसाधुबतेत्येवतदाहुरसामनोबतेतियदसाधु
भवत्यसाधुबतेत्येवतदाहुःसयएतदेवंविद्वान्त्साधुसामेत्युपास्तेभ्याशोहयदेनꣳसाधवोधर्माआ
चगच्छेयुरुपचनमेयुः ॥ १ ॥ लोकेषुपंचविधꣳसामोपासीतपृथिवीहिंकारोग्निःप्रस्तावोंतरिक्ष
मुद्गीथआदित्यःप्रतिहारोद्यौर्निधनमित्यूर्ध्वेष्वथावृत्तेषुद्यौर्हिंकारआदित्यःप्रस्तावोंतरिक्षमुद्गी
थोग्निःप्रतिहारःपृथिवीनिधनंकल्पंतेहास्मैलोकाऊर्ध्वाश्चावृत्ताश्चयएतदेवंविद्वाँल्लोकेषुपंचवि

द्धताहिसृष्टिःस्यादनिरुद्धःपरोविभुः ॥ प्रतिहारइतिप्रोक्तःसहिकार्येष्विदंजगत् ॥ प्रतिप्रतिहरेन्नित्यंमूर्ति
प्रतिहृतेस्तथा ॥ तेपृथिव्यादिषुसदातन्नामानःप्रतिष्ठिताः ॥ पृथिवीत्यादिशब्दार्थास्तेहिमुख्यतर्दरि
ताः ॥ तत्संबंधात्तदर्थत्वंपृथिव्यादेरमुख्यतः ॥ प्रथनादेवसस्यादेःपृथिवीत्वमुदाहृतम् ॥ अग्नित्वम
दनाच्चैवह्यंतरीक्षणयोगतः ॥ अभावाद्व्यवधानस्यत्वंतरिक्षमितीर्यते ॥ आदानादायुषश्चैवसआदि
त्यउदीरितः ॥ द्यौःक्रीडाकारणत्वाच्चतत्सर्वंहिपरेहराविति च ॥ पंचात्मकंयोलोकेषुसदोपास्तेहरिप

रम् ॥ ऊर्ध्वाधःसंस्थितास्तस्यपंचैवदशमूर्तयः ॥ मोक्षादिकमभीष्टंयत्कल्पंतेस्यसदैवहीतिच ॥ २ ॥
पंचरूपंतुयोविष्णुंपुरोवातादिषुस्थितम् ॥ उपास्तेवृष्टिरस्मैस्याद्वर्षयत्यस्यमुक्तिगान् ॥ सर्वभोगांश्चभ
गवान्पंचरूपीजनार्दनइतिच ॥ ३ ॥ अप्सुपंचविधोपासीयोनारायणवान्भवेत् ॥ नचास्यमृतिर
प्सुस्यादप्सुषड्भगवान्हरिरितिच ॥ अप्सुस्थितनारायणवान्मुक्तोभवतीत्यर्थः ॥ अपःसूतइत्यप्सूर्भगवा

धꣳसामोपास्ते ॥ २ ॥ वृष्टौपंचविधꣳसामोपासीतपुरोवातोहिंकारोमेघोजायतेसप्रस्तावोवर्ष
तिसउद्गीथोविद्योततेस्तनयतिसप्रतिहारउद्गृह्णातितन्निधनंवर्षतिहास्मैवर्षयतिहयएतदेवंवि
द्वान्वृष्टौपंचविधꣳसामोपास्ते ॥ ३ ॥ सर्वास्वप्सुपंचविधꣳसामोपासीतमेघोयत्संप्लवतेस
हिंकारोयद्वर्षतिसप्रस्तावोयाःप्राच्यःस्यंदंतेसउद्गीथोयाःप्रतीच्यःसप्रतिहारःसमुद्रोनिधनंनहा
प्सुप्रैत्यप्सुमान्भवतियएतदेवंविद्वान्त्सर्वास्वप्सुपंचविधꣳसामोपास्ते ॥ ४ ॥ ऋतुषुपंच
विधꣳसामोपासीतवसंतोहिंकारोग्रीष्मःप्रस्तावोवर्षाउद्गीथःशरत्प्रतिहारोहेमंतोनिधनंकल्पंतेहा
स्मावृतवऋतुमान्भवतियएतदेवंविद्वानृतुषुपंचविधꣳसामोपास्ते ॥ ५॥ पशुषुपंचविधꣳसामो

न् ॥ दीर्घलोपेनाप्सुमानितिवा ॥ ४ ॥ हेमंतशिशिरयोरैक्येनपंचत्वम् ॥ ऋतुनामानमृतुगमृतुत्वादृतुना
मकः ॥ इत्युपासीतयोविष्णुंपंचात्मानममुष्यहि ॥ मोक्षादीन्कल्पतेचास्यऋतुसंस्थोजनार्दनः ॥ रक्ष्य
त्वात्तेनतद्वांश्चसदैवस्यादुपासकइतिच ॥ वासस्यसुखकारित्वाद्वसंतःपुरुषोत्तमः ॥ नीरादेर्गरणाद्ग्रीष्मोव
र्षणाद्वर्षउच्यते ॥ शंतातीतिशरत्प्रोक्तोहेमंतोहिमकारणादितिच ॥ ५ ॥ पालनात्सुखकारित्वात्पशुनामा
जनार्दनः ॥ मुक्तस्तद्वान्भवत्येवपशुषपासकोहरेरितिच ॥ यज्ञेनांचनहेतुत्वादजस्थोभगवानजः ॥ अवि

स्थस्त्वविरेवोक्तऊर्णयाशीततोवनात् ॥ गौश्वसद्गतिहेतुत्वाद्गोस्थःसपुरुषोत्तमः ॥ अश्वश्चैवाशुगंतृत्वात्पु
रुषःपूर्तिहेतुतइतिच ॥ भवंतिहास्यपशवइतिप्रसिद्धपशवएव ॥ अजाइत्यादिबहुवचनंबहुरूपत्वाद्भगव
तः ॥ ६ ॥ परस्मादुत्तमंप्रोक्तंपरोइतिततःपरम्॥ परोवरंपरंतस्मात्प्रोक्तंपारोवरीयकम्॥परोवरीयांस्येतानि
विष्णोरूपाणिसर्वशः ॥ तेषांविशेषोनैवास्तिसदातानिसमानिहि ॥ अत्युत्तमोत्तमान्येतान्यन्यस्मात्सर्व

पासीताजाहिंकारोवयःप्रस्तावोगावउद्गीथोश्वाःप्रतिहारःपुरुषोनिधनंभवंतिहास्यपशवःपशुमा
न्भवतियएतदेवंविद्वान्पशुषुपंचविधंसामोपास्ते ॥६ ॥ प्राणेषुपंचविधंपरोवरीयःसामोपासी
तप्राणोहिंकारोवाक्प्रस्तावश्चक्षुरुद्गीथःश्रोत्रंप्रतिहारोमनोनिधनंपरोवरीयांसिवैतानिपरोवरी
योहास्यभवतिपरोवरीयसोहलोकाञ्जयतियएतदेवंविद्वान्प्राणेषुपंचविधंपरोवरीयःसामोपा
स्तइतितुपंचविधस्य॥७॥अथसप्तविधस्यवाचिसप्तविधंसामोपासीतयत्किंचवाचोहुमितिस
हिंकारोयत्प्रेतिसप्रस्तावोयदेतिसआदिर्यदुदितिसउद्गीथोयत्प्रतीतिसप्रतिहारोयदुपेतिसउपद्रवो
यन्नीतितन्निधनंदुग्धेस्मैवाग्दोहंयोवाचोदोहोन्नवानन्नादोभवतियएतदेवंविद्वान्वाचिसप्तविध

तोपित्विविति च ॥ प्राणोनेतृत्वतोविष्णुर्वाक्सर्ववचनात्सदा ॥ चक्षुश्वदर्शनान्नित्यंश्रोत्रंश्रवणहेतुतः ॥ मनो
मंतृत्वतश्चास्यह्येकएवतुपंचधेतिच ॥ परोवरीयोब्रह्मास्यभवतिसर्वापेक्षितदातृत्वात् ॥७ ॥ आदिःकल्पा
दिहेतुत्वात्क्रोडात्माकेशवःस्वयम् ॥ दुष्टोपद्रवकर्तृत्वान्नरसिंहउपद्रवइतिच॥ हुंकारसहितेवाक्येप्रद्युम्नस्तु
सदास्थितः ॥ आकारयुक्तेवाराहोवासुदेवःप्रसंयुते ॥ नारायणस्तथोद्युक्तेप्रतियुक्तेनिरुद्धकः ॥ उपयु
क्तेनृसिंहश्चनीतिसंकर्षणस्तथा ॥ अभावेयावदेतेस्युस्तावत्तद्देवतंस्मृतम् ॥ एवंसप्तविधंविष्णुंयउपास्तेस

दाविभुम् ।। वाङ्नामाभगवांस्तस्यभवेत्सर्वार्थदोहकदितिच ॥९॥ आदित्यस्थंपरंविष्णुंध्यायेदादित्यनाम
कम् ॥ समरूपंसामचासौसर्वदासमरूपतः॥सर्वेषांमांप्रतीत्येवदृष्टिसाम्याच्चसामसः ॥ दृष्टिसाम्यंमंडल
स्यविष्णुस्तस्यचकारणम् ॥ तस्मिन्निमानिभूतानिसर्वाण्येवाश्रितानिहि ॥ उदयात्पूर्वमेवासौभवेत्प्रद्युम्न
नामकः ॥ पश्चाधारस्तदात्मासौवासुदेवस्तथोदये॥ आश्रयश्चनृणांतत्रवराहःसंगवेतुसः ॥ तत्रपक्ष्याश्रयो
विष्णुस्तथानारायणाभिधः ॥ मध्यंदिनेसआधारोदेवानांचनतःपरम् ॥ अनिरुद्धःसआधारोगर्भस्थानांसदै

श्सामोपास्ते ॥८॥ अथखल्वमुमादित्यꣳसप्तविधंसामोपासीतसर्वदासमस्तेनसाममांप्रतिमां
प्रतीतिसर्वेणसमस्तेनसामतस्मिन्निमानिसर्वाणिभूतान्यन्वायत्तानीतिविद्यात्तस्ययत्पुरोदया
त्सहिंकारस्तदस्यपशवोऽन्वायत्तास्तस्मात्तेहिंकुर्वन्तिहिंकारभाजिनोह्येतस्यसाम्नोथयत्प्रथमोदि
तेसप्रस्तावस्तदस्यमनुष्याअन्वायत्तास्तस्मात्तेप्रस्तुतिकामाःप्रशꣳसाकामाःप्रस्तावभाजिनो
ह्येतस्यसाम्नोथयत्संगववेलायाꣳसआदिस्तदस्यवयाꣳस्यन्वायत्तानितस्मात्तान्यंतरिक्षेनारंब
णान्यादायात्मानंपरिपतंत्यादिभाजीनिह्येतत्तस्यसाम्नोथयत्संप्रतिमध्यंदिनेसउद्गीथस्तदस्यदे

वहि ॥ ततःपरंनृसिंहाख्यःसआरण्याश्रयोमतः ॥ अथास्तमितवेलायांससंकर्षणईरितः ॥ आश्रयःसपितॄ
णांचसप्तात्मकमुपास्यतम् ॥ प्राप्नोतिपरमंस्थानंमुक्तःसंसारसागरादितिच ॥ हिंकारनामानमाश्रितत्वाद्धिं
कुर्वंति ॥ प्रस्तावाश्रयत्वात्प्रस्तुतिकामाःप्रारंभकामाः ॥ प्रशंसाकामाश्च ॥ प्रारंभावतारत्वात्प्रशंसादेव
तात्वाच्चतस्य ॥ सर्वाधारत्वाद्वराहस्यतदाधारणांपक्षिणामनाधारेणैवगमनम् ॥ नारायणनामार्थत्वेनसर्व
गुणपूर्त्योपासनादेवसर्वोत्तमादेवाः ॥ इतरमूर्तीनामपिसर्वगुणपूर्त्योपासनेनारायणोपासनमेवभवति ॥ स

र्वगुणपूर्त्यर्थत्वान्नारायणशब्दस्य ॥ अनिरुद्धाश्रयत्वाद्गर्भाणांपितुःशरीरादन्यत्रप्रतिहताअपिनविनश्यं
ति ॥ वर्धंतेचतत्रैव ॥ अन्यद्धिभुक्तंजीर्यतएव ॥ धातागर्भंदधातुतइतिचश्रुतिः ॥ धाताहिभगवाननिरु
द्धःविष्णुस्त्वष्टाप्रजापतिर्धाताइतिचतुर्मूर्तयोह्युच्यंते ॥ योनिक्लृप्तिर्वासुदेवाद्रूपंसंकर्षणाद्भवेत् ॥ आसेक
कर्मप्रद्युम्नादनिरुद्धाच्चधारणमितिच ॥ व्याप्तेर्विष्णुर्वासुदेवस्त्वष्टात्वेषोद्वितीयकः ॥ प्रजापतिःप्रजापा
तान्निषेकःपातनंततः ॥ प्रजापतिस्तुप्रद्युम्नोधाताधारणकर्मतः ॥ अनिरुद्धइतिप्रोक्तःकृष्णरामौतथा

वाअन्वायत्तास्तस्मात्तेसत्तमाःप्राजापत्यानामुद्गीथभाजिनोह्येतस्यसाम्नोथयदूर्ध्वंमध्यंदिना
त्प्रागपराह्णात्सप्रतिहारस्तदस्यगर्भाअन्वायत्तास्तस्मात्तेप्रतिह्लतानावपद्यंतेप्रतिहारभाजिनो
ह्येतस्यसाम्नोथयदूर्ध्वमपराह्णात्प्रागस्तमयात्सउपद्रवस्तदस्यारण्याअन्वायत्तास्तस्मात्तेपुरुषं
दृष्ट्वाकक्षंश्वभ्रमित्युपद्रवंत्युपद्रवभाजिनोह्येतस्यसाम्नोथयत्प्रथमास्तमितेतन्निधनंतदस्यपि
तरोन्वायत्तास्तस्मात्तान्निदधतिनिधनभाजिनोह्येतस्यसाम्नएवंखल्वमुमादित्यंसप्तविधंसा
मोपास्ते॥१॥अथखल्वात्मसंमितमतिमृत्युसप्तविधंसामोपासीतहिंकारइतित्र्यक्षरंप्रस्तावइति

श्विनाविति च ॥ कक्षश्वभ्रेनृसिंहस्यसदावस्थितिकारणात् ॥ द्रवंतिकक्षश्वभ्राभ्यांतदज्ञानेपरक्षणा
त् ॥ मृगाभीतायतस्तेषांनृसिंहस्त्वाश्रयःसदा ॥ पितॄणामाश्रयोयस्मात्संकर्षणउदाहृतः ॥ अतस्तान्प्र
तिपिंडादीन्निदधत्यज्ञकाअपि॥ अन्यथातन्मृतानांतुकुतएवोपतिष्ठतीतिच॥नरूपाणांविशेषोस्तिगुणतोना
मतोपिवा ॥ तथापितत्प्रियंनामनारायणइतिस्मह ॥ विशेषतःसमस्तानांनाम्नांतस्यार्थएवतु ॥ विज्ञायतेगु
णैःपूर्तिर्नामसाम्यंतदाथवेतिच ॥ नाम्नोनारायणाख्यस्यगुणैःपूर्तिर्हिदेवताः ॥ विज्ञायार्थगुणास्येवसर्वा

धिकप्रमथाविरइतिच ॥ १ ॥ यस्यान्यःसदृशोनास्तिस्वरूपाणिसमानिच ॥ सआत्मसंमितोविष्णुर्रा
मृत्युरमृत्युतः ॥ प्रद्युम्नादिस्वरूपेणसविष्णुःसप्तधास्थितः ॥ समानितानिसर्वाणिज्ञानानंदबलैस्तथा ॥
ज्ञानादित्रयवाचीनित्र्यक्षराण्यपिसर्वशः ॥ हिंकारादीनिनामानिसर्वेषामपिसर्वशः ॥ आदिनाम्नःप्रकार
स्तुयोज्यःस्यात्प्रतिहारतः ॥ तेनत्र्यक्षरमेवस्यान्नामद्वयमपिप्रभोः ॥ उपद्रवेतुवःकारोप्यपिव्यतिरिच्य
ते ॥ नामनारायणस्यैवसोपिक्षीराब्धिशायिनः ॥ व्यंजनस्वरसर्गैस्तुसोपिज्ञानादिवाचकः ॥ त्रिवर्णत्वा
त्समःसोपिज्ञानाद्यैःपुरुषोत्तमः॥वःकारार्थपरिज्ञानात्प्राप्योब्धिशयनःप्रभुः॥ एकविंशार्णविज्ञानात्प्राप्यो

त्र्यक्षरंतत्सममादिरितिद्व्यक्षरंप्रतिहारइतिचतुरक्षरंततइहैकंतत्सममुद्गीथइतित्र्यक्षरमुपद्रवइतिच
तुरक्षरंत्रिभिस्त्रिभिःसमंभवत्यक्षरमतिशिष्यतेत्र्यक्षरंतत्सममंनिधनमितित्र्यक्षरंतत्सममेवभवतिता
निहवैतानिद्वाविंशतिरक्षराण्येकविंशत्यादित्यमाप्नोत्येकविंशोवाइतोसावादित्योद्वाविंशेनपर
मादित्याज्जयतितन्नाकंतद्विशोकमाप्नोतीहादित्यस्यजयंपरोहास्यादित्यजयाज्जयोभवतिय

सौसूर्यमंडले॥सएवभगवान्विष्णुर्द्वाविंशद्रूपवान्यतः॥तान्येवसप्तरूपाणिविभिद्यंतेत्रिधात्रिधा॥एकःपयो
ब्धिशयनइतिद्वाविंशतिःप्रभोः ॥ प्रद्युम्नाद्यास्तुचत्वारोद्विषण्मासेपुसंस्थिताः ॥ त्रिशस्त्रिशःकेशवाद्यावसं
तादिषुपंचमः॥ रूपद्वयंतुषष्ठस्यस्थितंमत्स्यादिपंचकम्॥तृतीयंपृथिवीसंस्थंजामदग्न्याख्यमेवतत्॥ अंतरि
क्षद्युसूर्येषुसप्तमस्यत्रिधातनुः॥रामःकृष्णःकल्किरितितज्ज्ञानात्तान्यवाप्यच॥द्वाविंशेनपयोब्धिस्थंप्राप्य
तेरूपमक्षरम्॥एतद्वाविंशकंरूपंनाकंचासुखवर्जनात्॥ पूर्णानंदस्वरूपत्वाद्विशोकंशोकनाशनादितिसामसं
हितायाम् ॥ प्राप्नोतीहादित्यस्यजयम् ॥ इहपृथिव्यादिषुस्थितभगवत्प्राप्तावप्यादित्यस्थएवप्राप्यते॥ ऐ

क्यात् ॥ परोहास्यादित्यजयाज्जयोभवति ॥ आदित्यस्थस्यादित्यनाम्नोभगवतःप्राप्त्यापरोजयोरूपां
तरप्राप्तिरपिभवति ॥ स्वरूपमेकंप्राप्तस्तुविष्णोःस्यात्सर्वरूपगः ॥ ऐक्यात्तथापिसंप्राप्तिर्बहूपास्त्यासु
रवाधिकीतिच ॥ जयोनामप्राप्तिरेव ॥ धनजितेस्वर्जितेसत्राजितइत्यादिवत् ॥ केशवादिरूपेणलला
टादिषुस्थितेरितएकविंशइत्युच्यते ॥ चित्रादियोगदातृत्वान्मासनामास्वयंहरिः ॥ लोकःप्रकाशरूप

एतदेवंविद्वानात्मसंमितमतिमृत्युसप्तविधꣳसामोपास्तेसामोपास्ते ॥ १० ॥ मनोहिंकारोवाक्
प्रस्तावश्चक्षुरुद्गीथःश्रोत्रंप्रतिहारःप्राणोनिधनमेतद्गायत्रंप्राणेषुप्रोतꣳसयएवमेतद्गायत्रंप्राणेषु
प्रोतंवेदप्राणीभवतिसर्वमायुरेतिज्योग्जीवतिमहान्प्रजयापशुभिर्भवतिमहान्कीर्त्यामहामनाः
स्यात्तद्व्रतम् ॥ ११ ॥ अभिमंथतिसहिंकारोधूमोजायतेसप्रस्तावोज्वलतिसउद्गीथोंगाराभ
वंतिसप्रतिहारउपशाम्यतितन्निधनꣳसꣳशाम्यतितन्निधनमेतद्रथंतरमग्नौप्रोतꣳसयएवमेतद्र
थंतरमग्नौप्रोतंवेदब्रह्मवर्चस्यन्नादोभवतिसर्वमायुरेतिज्योग्जीवतिमहान्प्रजयापशुभिर्भवति
महान्कीर्त्यानप्रत्यङ्ङग्निमाचामेन्ननिष्ठीवेत्तद्व्रतम् ॥ १२ ॥ उपमंत्रयतेसहिंकारोज्ञपयतेसप्र

त्वादादित्यश्चादनादपामितिच ॥ १० ॥ प्राणसंस्थेहरौप्रोतंगायत्रंसामसर्वदा ॥ तद्वाचकंनियम्यंचेत्य
तःप्रोतमितीर्यते ॥ प्राणस्थविष्णोःसामीप्यात्तत्स्थमेतदितीर्यते ॥ क्वचिन्निर्देशसामीप्याद्विष्णोरेतदिती
र्यतइतिच ॥ प्राणस्थविष्णुलाल्यत्वात्प्राणीत्येवाभिधीयते ॥ मोक्षस्तुसर्वमायुःस्यान्नित्यत्वाज्ज्योक्सम
स्तविदितिच ॥ ११ ॥ मंथनादिस्थितंयस्तुतन्नामानंहरिंपरम् ॥ तत्तत्क्रियैकहेतुत्वाद्योग्नौध्यायेज्जना
र्दनम् ॥ रथंतराश्रयंपंचरूपंसचविमुच्यतइतिच ॥ १२ ॥ मिथुनस्थंपंचरूपंध्यात्वैवपुरुषोत्तमम् ॥ अत्या

गीचस्वभार्याणांमुच्यतेनात्रसंशयइतिच ॥ मिथोनयतीतिमिथुनंभगवान् ॥१२॥ आदित्यनाम्निपंचात्म



स्तावःस्त्रियासहशेतेसउद्गीथःप्रतिस्त्रीसहशेतेसप्रतीहारःकालंगच्छतितन्निधनंपारंगच्छतित
न्निधनमेतद्वामदेव्यंमिथुनेप्रोतं॥सयएवमेतद्वामदेव्यंमिथुनेप्रोतंवेदमिथुनीभवतिमिथुनान्मिथु
नात्प्रजायतेसर्वमायुरेतिज्योग्जीवतिमहान्प्रजयापशुभिर्भवतिमहान्कीर्त्यानकांचनपरिहरेत्त
द्व्रतम् ॥ १३ ॥ उद्यन्हिंकारउदितःप्रस्तावोमध्यंदिनउद्गीथोपराह्णःप्रतिहारोस्तंयन्निधनमेतद्बृ
हदादित्येप्रोतं॥सयएवमेतद्बृहदादित्येप्रोतंवेदतेजस्व्यन्नादोभवतिसर्वमायुरेतिज्योग्जीवति
महान्प्रजयापशुभिर्भवतिमहान्कीर्त्यातपंतंनर्निंदेत्तद्व्रतम् ॥१४॥ अभ्राणिसंप्लवंतेसहिंकारो
मेघोजायतेसप्रस्तावोवर्षतिसउद्गीथोविद्योततेस्तनयतिसप्रतिहारउद्गृह्णातितन्निधनमेतद्वैरूपं
पर्जन्येप्रोतं॥सयएवमेतद्वैरूपंपर्जन्येप्रोतंवेदविरूपां॥श्चसुरूपां॥श्चपशूनवरुंधेसर्वमायुरेतिज्यो
ग्जीवतिमहान्प्रजयापशुभिर्भवतिमहान्कीर्त्यावर्षंतंनर्निंदेत्तद्व्रतम् ॥ १५ ॥ वसंतोहिंकारोग्री
ष्मःप्रस्तावोवर्षाउद्गीथःशरत्प्रतिहारोहेमंतोनिधनमेतद्वैराजमृतुषुप्रोतं॥सयएवमेतद्वैराजमृतुषु
प्रोतंवेदविराजतिप्रजयापशुभिर्ब्रह्मवर्चसेनसर्वमायुरेतिज्योग्जीवतिमहान्प्रजयापशुभिर्भवति
महान्कीर्त्यार्तून्नर्निंदेत्तद्व्रतम् ॥ १६ ॥ पृथिवीहिंकारोंतरिक्षंप्रस्तावोद्यौरुद्गीथोदिशःप्रति
हारःसमुद्रोनिधनमेताःशक्वर्योलोकेषुप्रोताःसयएवमेताःशक्वर्योलोकेषुप्रोतावेदलोकीभवतिस
र्वमायुरेतिज्योग्जीवतिमहान्प्रजयापशुभिर्भवतिमहान्कीर्त्यालोकान्नर्निंदेत्तद्व्रतम् ॥१७॥अ



न्यभिध्यातेजनार्दने ॥ पर्जन्यनाम्निचत्वार्य्येलोकाख्येपशुसंज्ञके ॥ अंगाख्येदेवताख्येचसर्वाख्येचप्र

तिष्ठितम् ॥ बृहदाद्यंचयोवेदमुच्यतेनात्रसंशयः ॥ समुद्रेकात्समुद्रस्तुदेशनाद्दिशउच्यते ॥ लोपकत्वाल्लो
मचस्यात्तवोरूपरत्वगुच्यते ॥ मादनात्साररूपत्वान्मांसोस्थित्वासनात्स्थिरम्॥मदस्यजननान्मज्जासोंगमंति
गतत्वतः ॥ वायुर्ज्ञानात्तथायुष्वान्नक्षत्रंचस्वतंत्रतः॥चंद्रमाःपरमानंदात्रैविद्योज्ञानरूपतः॥ वयांसिव्ययना

जार्हिंकारोवयःप्रस्तावोगावउद्गीथोश्वाःप्रतिहारःपुरुषोनिधनमेतारेवत्यःपशुषुप्रोताःसयएवमे
तारेवत्यःपशुषुप्रोतावेदपशुमान्भवतिसर्वमायुरेतिज्योग्जीवतिमहान्प्रजयापशुभिर्भवतिमहा
न्कीर्त्यापशून्ननिंदेत्तद्व्रतम्॥ १८॥लोमर्हिंकारस्त्वक्प्रस्तावोमा॰ संमुद्गीथोस्थिप्रतिहारोमज्जानि
धनमेतद्यज्ञायज्ञीयमंगेषुप्रोत॰ संयएवमेतद्यज्ञायज्ञीयमंगेषुप्रोत॰ वेदांगीभवतिनांगेनविमूर्च्छ
तिसर्वमायुरेतिज्योग्जीवतिमहान्प्रजयापशुभिर्भवतिमहान्कीर्त्यासंवत्सरंमज्ज्ञोनाश्नीयात्तद्व्रतंम
ज्ज्ञोनाश्नीयादितिवा ॥ १९॥ अग्निर्हिंकारोवायुःप्रस्तावआदित्यउद्गीथोनक्षत्राणिप्रतिहारश्चंद्रमा
निधनमेतद्राजनंदेवतासुप्रोत॰ संयएवमेतद्राजनंदेवतासुप्रोतंवेदैतासामेवदेवतानां सलोकता॰
सार्ष्टिता॰ सायुज्यंगच्छतिसर्वमायुरेतिज्योग्जीवतिमहान्प्रजयापशुभिर्भवतिमहान्कीर्त्याब्रा
ह्मणान्ननिंदेत्तद्व्रतम् ॥ २० ॥ त्रयीविद्याहिंकारस्त्रयइमेलोकाःसप्रस्तावोग्निर्वायुरादित्यःस
उद्गीथोनक्षत्राणिवया॰ सिमरीचयःसप्रतिहारःसर्पागंधर्वाःपितरस्तन्निधनमेतत्सामसर्वस्मिन्प्रो
त॰ संयएवमेतत्सामसर्वस्मिन्प्रोत॰ वेदसर्व॰ हभवतितदेषश्लोकोयानिपंचधात्रीणित्रीणितेभ्यो

चैवब्रीत्याकाशस्तथोच्यते ॥ तत्रायनाद्वयःप्रोक्तोमरीचिर्मितरुक्त्वतः ॥ सर्पस्सर्पणहेतुत्वाद्गंधर्वोगोधर
त्वतः ॥ पितासस्सृष्टिहेतुत्वात्सर्वपूर्णगुणत्वतः ॥ एतैर्नामभिरुद्दिष्टोभगवान्पुरुषोत्तमइतिच ॥ यादृश्ये

वोन्नतिर्योग्यातस्याःसर्वात्मनाऽऽयतिः ॥ सर्वभावस्तुविज्ञेयोनतुसर्वस्वरूपतेतिच ॥ नचसर्वस्वरूपतापुरुषार्थः॥नारकित्वादेरपिप्राप्तेः॥नचार्थांतरकल्पनायुक्ता॥प्रमाणाभावात्॥असनान्मितिरूपत्वादस्मीत्युक्तः परोहरिः॥तंसर्वइत्युपासीतपूर्णतासर्वतास्मृतेतिच॥सर्वमस्मीत्युक्तमपुरुषत्वेतेभ्योनज्यायःपरमन्यदस्तीति ज्यायःपरशब्दौन्यर्थौ॥ अन्यस्यैवाभावात्॥अतस्ततोन्यदस्तीतिसिद्धम्॥अतस्ततोन्यत्परमज्यायएवनास्ति॥ज्यायोलक्ष्मीर्विद्यते॥परमज्यायस्तुभगवानेव॥जीवैक्यांगीकारेयस्तद्वेदेतितच्छब्दोप्ययुक्तः ॥ तदास्वात्मानंवेदेत्येवस्यात्॥नचप्रसिद्धभेदानुवादः॥श्रुतिंविनातत्स्वरूपस्यैवासिद्धेस्तद्भेदस्यातिशयेनासिद्धिः॥ ऐक्यईश्वरस्यस्वज्ञानमस्तीतिनतद्रूपस्यजीवस्याज्ञानादिकंयुज्यते ॥ औपाधिकभेदांगीकारेप्युपाधिरुभयोरैक्यादुभयोरप्यज्ञत्वंकुर्यात् ॥ उपाधिनिमित्तदोषाश्चोभयोरपिस्युः ॥ उपाधिसंबंधस्यसमत्वात् ॥ उपाधिसंबंधस्यास्मिन्नन्यथातस्मिन्नन्यथेतिविशेषार्थमयमसावितिभेदस्योपाधिंविनास्वतएवापेक्षितत्वात् ॥ अतःस्वतोभिन्नस्यैवोपाधिनाविशेषोभवति ॥ यस्तुभिन्नःस्वतःखादिस्तस्यभेदोह्यबुद्धिनाम् ॥ उपाधिभिर्ज्ञाप्यएवनतुभेदंस्वयंसृजेत् ॥ उपाधिरप्यभिन्नस्यभेदंसाधयितुंक्वचित् ॥ नक्षमःसिद्धभेदस्यज्ञापकःस्यादबुद्धिनाम् ॥ आकाशाअप्यतस्त्वेतेअनंताअप्कणादिवदितिब्रह्मतर्के ॥ अतोनजीवेशाभेदः ॥ नतुदेवःस्वयंभूत्वादेवदेवंसमर्चयेत् ॥ समानव्यवहारेह्निनपूज्यःपूजकोभवेदितिपरमसंहितायाम् ॥ अनन्यप्रोक्तेगतिरत्रनास्त्यणीयान्ह्यतर्क्यमणुप्रमाणात्प्रोक्तान्येनैवसुज्ञानायप्रेष्ठ ॥ अन्यदेवतद्विदितादथोअविदितादधि॥अन्यत्रधर्मादन्यत्राधर्मादन्यत्रास्मात्कृताकृतात्॥अन्यत्रभूताच्चभव्याच्चयत्तत्पश्यतितद्वद ॥ नित्योनित्यानांचेतनश्चेतनानामेकोबहूनांयोविदधातिकामान् ॥ यथोदकंशुद्धेशुद्धमासिक्तं

तादृगेवभवति ॥ इदंज्ञानमपाश्रित्यममसाधर्म्यमागताः ॥ सोश्नुतेसर्वान्कामान्सहब्रह्मणाविपश्चिता॥ आ
धिपत्यमृतेचैवभोगेनविषयेणच ॥ आनंदादीनृतेमुक्तास्सर्वैतेब्रह्मणस्समाइत्यादेश्च ॥ प्रद्युम्नादीनिरू
पाणित्रीणित्रीण्येवपंचच ॥ ऋगादिस्थानभेदेननित्याभिन्नानिचेशनादितिसामसंहितायाम् ॥ दृष्ट
वस्तुनोमिथ्यात्वांगीकारेचयुक्त्यपेक्षा ॥ नतुसत्यत्वे ॥ दृष्टस्यसत्यतायांतुयुक्तिर्वाऽयुक्तिरेववा ॥ भू
षणंतस्यमिथ्यात्वेयुक्त्यभावोतिदूषणम् ॥ युक्तिश्चदोषएवस्याद्बलवन्मानवर्जितेतिब्रह्मतर्के ॥ नचशू
न्यत्वमिथ्यात्वयोःकश्चिद्विशेषः ॥ तत्प्रमाणाभावात् ॥ अतःसत्यएवभेदः ॥ नचकदाचित्कस्या
पिनासीदस्तिभविष्यतीतिबुद्ध्यभावेव्यावहारिकसत्यमित्यत्रास्माकंविरोधः ॥ तद्भावेचनशून्याद्विशेषः ॥
सत्यमेनमनुविश्वेमदंतीत्यादिश्रुतेश्चसत्योभेदः ॥ प्रपंचोयदिविद्येतनिवर्तेतनसंशयः ॥ मायामात्रमि
दंद्वैतमद्वैतंपरमार्थतः ॥ विकल्पोविनिवर्तेतकल्पितोयदिकेनचित् ॥ उपदेशादयंवादोज्ञातेद्वैतंनविद्य
तइत्यादिश्रुतेश्च ॥ प्रपंचोभेदोयदिविद्येतभवेतउत्पद्येततर्हिनिवर्तेत ॥ अतोनजीवेश्वरादिभेदउ
त्पद्यते ॥ किंतुनित्यएव ॥ अतोमाययाभगवत्प्रज्ञानेनमातरंतंचमात्रम् ॥ भगवाञ्जानातिरमतेचा
स्मिन्भेदइति ॥ तच्चभगवद्रूपमद्वैतंपरमार्थोभगवांस्तद्रूपेणाद्वैतम् ॥ यदद्वैतंनामोच्यतेतत्परमार्थभगवदपे
क्षयेत्यर्थः ॥ स्वगतभेदोभगवतिनास्तीत्युक्तम् ॥ नचकल्पनामात्रोभेदः ॥ यदिकेनचित्कल्पितोविकल्प
स्तथापिनिवर्तेत ॥ तस्मादुपदेशादयमेववादः ॥ केनापितत्प्रासादेनविनाऽविज्ञातत्वादज्ञातोभगवांस्तद्गतो
भेदोनविद्यतइतिजीवेश्वरगतोजीवेष्वथजीवजडात्मनोः ॥ जडेशयोर्जडेष्वेवंपंचभेदःप्रपंचकः॥प्रकृष्टमो
क्षहेतुत्वात्तज्ज्ञानंप्रेतिकथ्यते ॥ प्रकृष्टपंचकत्वाद्वाप्रपंचोयंप्रकीर्तितः ॥ यद्ययंसादिरेवस्यान्निवर्तेतकदा

चन ॥ ननिवर्ततेयतस्तेननायंसाविर्भवेत्कचित् ॥ मायेतिविष्णुविज्ञानंतन्मितत्वाच्चनकचित्॥भ्रांतत्व
मस्त्ययद्विष्णोर्नैवभ्रांतिःकथंचन ॥ रमतेचात्रयद्विष्णुर्नहिभ्रांतोरमेद्धरिः ॥ परमार्थेहरौनैवभेदोस्तिजडजी
ववत् ॥ यद्ययंकल्पितोभेदःकस्मान्नैवनिवर्तते ॥ तस्माद्भूतभविष्याख्यभवदाख्यपराभिधाः ॥ तदन्येचैक
एवास्मिन्नोंकाराख्येजनार्दने ॥ अज्ञातनामकेतस्मिन्नभेदोस्तिकथंचनेतिब्रह्मतर्के ॥ विदिःकादाचित्क
स्वरूपलाभइतिचधातुः ॥ भिद्येतेतिवद्विद्येतेतिशब्दः ॥ परमार्थतइतिविश्वतश्चक्षुरितिवत्सप्तम्यर्थे ॥ पर
मार्थेद्वैताभावएवेत्यर्थः ॥ परमार्थःपरमात्माऽद्वैतइतिप्रथमार्थोवा ॥ नहिविद्यमानंनिवर्ततइतिनियमः ॥
उत्पद्यमानंहिप्रायोनिवर्तते॥ जीवेश्वरप्रकृत्यादिकंबहुलंहिविद्यमानंननिवर्तते ॥ नचकल्पितोविकल्पइति

नज्यायःपरमन्यदस्तियस्तद्वेदसवेदसर्वं॰सर्वादिशोबलिमस्मैहरंतिसर्वमस्मीत्युपासीततद्व्रतंत
द्व्रतम् ॥ २१ ॥ विनर्दिसाम्नोवृणेपशव्यमित्यग्नेरुद्गीथोऽनिरुक्तःप्रजापतेर्निरुक्तःसोमस्यमृदु
श्लक्ष्णंवायोःश्लक्ष्णंबलवदिंद्रस्यक्रौंचंबृहस्पतेरपध्वांतंवरुणस्यतान्सर्वानेवोपसेवेतवारुणंत्वे

पक्षेकल्पितोयदीतियदिशब्दोयुज्यते ॥ कल्पितत्वंचेच्छ्रुतेरभिप्रायोऽविद्यमानोयंप्रपंचोविनिवर्ततेक
ल्पितोविकल्पोविनिवर्ततइत्येवशब्दःस्यात् ॥ नतुनिवर्तेतेति ॥ अतःसत्यतापरमिदंवाक्यंभेदस्य ॥ असत्य
मप्रतिष्ठंतेजगदाहुरनीश्वरम् ॥ एतांदृष्टिमवष्टभ्यनष्टात्मानोल्पबुद्धयइतिनिंदनाच्च॥ विद्याऽत्मनिभिदाबो
धः ॥ जुष्टंयदापश्यत्यन्यमीशमस्येत्यादिभेदज्ञानस्यप्रशंसनाच्च ॥ अतोसनान्मितत्वाच्चास्मीतिभगव
न्नामैवैतत् ॥ २१ ॥ सर्वदासमत्वात्सामभगवान् ॥ तस्योद्गानप्रकारोविनर्दिवृषभस्वरवन्मेघनर्दनवद्वा ॥ त
देववृणे ॥ सर्वोत्तमत्वात् ॥ विष्णोःस्वरोवृषववन्मेघनातवदेववा ॥ स्त्रीपशुस्वरवद्गह्वरेगंभीरोऽनुपमोवि

भोः ॥ ब्रह्मणस्त्वथसोमस्यसाक्षाद्घंटानिनादवत् ॥ मृदुमेघस्वरोवायोरिंद्रस्यस्तनयित्नुवत् ॥ बृहस्पतेः
क्रौंचवच्चवरुणस्यतुविस्वरः ॥ एकस्यपादवर्षस्यस्वरोविष्णोरुदाहृतः ॥ वायोर्विंशतिवर्षस्यब्रह्मणस्तुतदंत
रेतिच ॥ गायेदेतैःस्वरैस्तस्माद्यथाशक्तिनविस्वरम् ॥ अधिकारीसदोद्गात्रेमुख्यतःप्राणएवयत् ॥ अतोमोक्षा
दिदानेसदेवादीनांक्षमोभवेत् ॥ अन्येषांसददातीहमद्धृदिस्थइतिस्मृतिः ॥ कार्याहिनान्यथाकुर्यादवमंता
न्यथाभवेत् ॥ देवानांमोक्षदानादौनहिमानुषईश्वरः ॥ अतःप्राणोहृदिस्थोमेददातीतिस्मृतिर्भवेत् ॥ संकल्पो
त्त्यादिकर्ताचप्राणएवयतःसदा ॥ आगायानीतियुज्येततस्मात्तस्मिन्हिमुख्यतः ॥ आत्मेतिभगवान्विष्णुः

ववर्जयेदमृतत्वंदेवेभ्यआगायानीत्यागायेत्स्वधांपितृभ्यआशांमनुष्येभ्यस्तृणोदकंपशुभ्यः
स्वर्गंलोकंयजमानायान्नमात्मनआगायानीत्येतानिमनसाध्यायन्नप्रमत्तःस्तुवीतसर्वेस्वराइंद्र
स्यात्मानःसर्वेऊष्माणःप्रजापतेरात्मानःसर्वेस्पर्शामृत्योरात्मानस्तंयदिस्वरेषूपालभेतेंद्रंशरणंप्रप
न्नोभूवंसत्वाप्रतिद्रक्ष्यतीत्येनंब्रूयादथयद्येनमूष्मसूपालभेतप्रजापतिंशरणंप्रपन्नोभूवंसत्वाप्र
तिपेक्ष्यतीत्येनंब्रूयादथयद्येनंस्पर्शेषूपालभेतमृत्युंशरणंप्रपन्नोभूवंसत्वाप्रतिधक्ष्यतीत्येनंब्रू

प्राणस्थःपुरुषोत्तमः ॥ तस्माअन्नंस्वर्थंतस्तुप्राणस्यान्नभुजिर्भवेत् ॥ प्राणस्याप्यमृतत्वंहिमुख्यमेवफलं
यतः ॥ देवांतेभावतोविष्णोर्नाम्नतत्वंकचादिमत् ॥ इंद्रेबलंददानीतिस्वरान्घोषबलात्मकान् ॥ ब्रूयादप्रस्तानिर
स्तानूष्मणःस्पर्शानपि ॥ समस्तान्बलदानार्थमिंद्रेचैवप्रजापतेः ॥ विष्णोःस्वात्मानमेवाहमर्पयेमृत्युवर्जि
तान् ॥ मोक्षयोग्यान्करिष्यामीत्येवंसप्राणएवतु ॥ कुर्यादन्यस्तुमत्स्थस्तुप्राणएवेदृशःक्षमः ॥ करोती
तिस्मरेन्नित्यंनान्यथातुकथंचन ॥ देवावमंताहितमोयात्यसंशयतोयतः ॥ अतइंद्रंप्रजापाख्यंविष्णुंमृत्युं

चसर्वदा ॥ शरणंगतोहमितिचध्यायेत्सर्वत्रसर्वदा ॥ ऐश्वर्यादिंद्रनामातुवायुःस्वरपतिःसदा ॥ ऊष्माधिपस्तुभगवान्विष्णुरेवप्रजापतिः ॥ मृत्युनामातुसंहाराद्रुद्रःस्पर्शाधिपःस्मृतः ॥ मानुषाणांतुशरणमितरेषांतुवायुतः ॥ वायोस्तुबलदानाद्यंमोक्षदानादिकंहरेः ॥ यस्माद्वायुपदेयोग्याबह्वस्त्विंद्रनामकाः ॥ अतइंद्रेददानीतिस्मृतिःप्राणस्ययुज्यतइतिसामसंहितायाम् ॥ सर्वोपद्रवकर्तॄणामसुराणांकुबुद्धिनाम् ॥ उपालंभेकृतेयुक्तंविष्णुस्त्वांप्रतिपेक्ष्यति ॥ रुद्रस्त्वांधक्ष्यतीत्यादिनान्यथातुकथंचनेतिच ॥ मृत्योस्सकाशादात्मानंपरिहराणीति ॥ ब्रह्माप्रजापतिश्चेतिविष्णुरन्यंप्रबोधयन् ॥ तथेंद्रनामावायुश्चपरेषां

यात्सर्वैस्स्वराघोषवंतोबलवंतोवक्तव्याइंद्रेबलंददानीतिसर्वऊष्माणोग्रस्तानिरस्ताविवृतावक्तव्याःप्रजापतेरात्मानंपरिददानीतिसर्वैस्पर्शालेशेनानभिहितावक्तव्यामृत्योरात्मानंपरिहराणीति ॥ २२ ॥ त्रयोधर्मस्कंधायज्ञोध्ययनंदानमितिप्रथमस्तपएवद्वितीयोब्रह्मचार्याचार्यकुलवासीतृतीयोऽत्यंतमात्मानमाचार्यकुलेवसादयन्सर्वएतेपुण्यलोकाभवंतिब्रह्मसंस्थोमृतत्वमेति

बोधकोयदेतिच ॥ बृंहयतिप्रजाःपातिइदंरातीतिव्युत्पत्तिभिः ॥ २२ ॥ सर्वधर्मैःपुण्यलोकोब्रह्मज्ञानाद्विमुच्यते ॥ ॐकारोब्रह्मणोनामसर्ववागात्मकश्चसः॥तद्व्याख्यात्वात्सर्ववाचांसर्ववागात्मताभवेत् ॥ इदंतुप्रस्तुतत्वात्ससर्वंचाप्यर्थपूर्णतः ॥ सर्वशब्दान्वितत्वाच्चनलिंगव्यत्ययोभवेत् ॥ आधिक्यंचैवसर्वत्वंप्रस्तुतंतयथेतितदितिच ॥ अकाराद्याःक्रमेणैवभूरादेःसाररूपिणः ॥ अस्मादयंसारइतिज्ञानमेवाभितापनम् ॥ संप्रस्रावश्चतद्दृष्टिर्ब्रह्मणःपरमस्यहि ॥ नित्यज्ञानोपिभगवान्क्रीडयाचीक्षद्यदा ॥ तदाभितापशब्दोयंवर्ततेपरमात्मनीतिच ॥ तपःशब्देनैवयतिधर्मश्चोक्तः ॥ सर्वेषामाश्रमस्थानामज्ञानांपुण्यलोकता ॥

अपरोक्षदृशांविष्णोरमृतत्वंनचान्यथेतिच ॥ यज्ञाध्ययनदानैस्तुगृहीस्यात्सोमलोकगः ॥ यतयस्त पसासूर्यंचत्वारोपिविशेषतः ॥ गच्छंतितपसैवर्षीन्वनस्थाब्रह्मचारिणः ॥ नैष्ठिकावालखिल्यांश्चगुरु शुश्रूषयैवतु ॥ यदिपश्यंत्येतएवसाक्षाद्देवंजनार्दनम् ॥ अमृतत्वंतदायांतिनान्यथातुकथंचनेतिच ॥ नच संन्यासमात्रेणामृतत्वम् ॥ तमेवंविद्वानमृतइहभवतिनान्यःपंथाअयनायविद्यतइतिश्रुतेः ॥ विद्ययैवतुनिर्धा रणादितिभगवद्वचनम् ॥ नरोधयनिमांधर्मोनसांख्यंयोगउद्धव ॥ नस्वाध्यायस्तपस्त्यागोनेष्टापूर्तंनदक्षिणे तिच ॥ नचसंन्यसनादेवसिद्धिंसमधिगच्छतीतिच ॥ तस्यपुत्रादायमुपयंतीत्यादेर्गृहस्थादीनामपिज्ञा

प्रजापतिर्लोकानभ्यतपत्तेभ्योभितसेभ्यस्त्रयीविद्यासंप्रास्रवत्तामभ्यतपत्तस्या अभितप्ताया एतान्यक्षराणिसंप्रास्रवंतभूर्भुवःस्वरितितान्यभ्यतपत्तेभ्योभितसेभ्य ओंकारःसंप्रास्रवत्तद्यथा शंकुनासर्वाणिपर्णानिसंतृण्णान्येवमेतेनोंकारेणसर्वावाक्संतृण्णोंकारएवेदꣳसर्वमोंकारएवेदꣳ सर्वम् ॥ २३ ॥ ब्रह्मवादिनोवदंतियद्वसूनांप्रातःसवनꣳरुद्राणांमाध्यंदिनꣳसवनमादित्यानां विश्वेषांदेवानांचतृतीयसवनंक्वतर्हियजमानस्यलोकइतिसयस्तंनविद्यात्कथंकुर्यादथविद्वान्कु

निनांमोक्षःप्रतीयते ॥ सर्ववर्णाश्रमाणांचज्ञानान्मोक्षोविनिश्चितः ॥ अंत्यानांस्थावराणांवातथापियति रुत्तमः ॥ ज्ञानद्वारोयतोन्यासोविशेषेणभविष्यतीतिच ॥ वेदांतविज्ञानसुनिश्चितार्थाःसंन्यासयोगाद्य तयश्शुद्धसत्त्वाइतिच ॥ २३ ॥ वसुरुद्रादितेयेषुविश्वेषुस्थितमीश्वरम् ॥ तन्नामानंहरिंमंत्रैर्लोकद्वारादि भिःप्रभुम् ॥ प्रार्थयित्वादिवंत्वज्ञोज्ञोमोक्षंप्राप्नुयात्तथा ॥ यजमानोनान्यथातुलोकोस्यप्राप्यतेवरः ॥ राजनंपृथिवीलोकेराज्यमित्युच्यतेबुधैः ॥ विराज्यमंतरिक्षेतुस्वाराज्यंस्वर्गगंभवेत् ॥ एतेषुमोक्षोपिभ

वेन्मानुषाणांविशेषिणाम् ॥ श्वेतद्वीपंतथागत्वादृष्ट्वाविष्णुंचतेततः ॥ अनुज्ञाताःप्रमोदंतेनिर्दुःखास्सुधरा
दिष्विति च ॥ योदेवानांनामधाएकएवेतिश्रुतेश्चभगवतएववस्वादिनामानि ॥ त्रैविद्यामांसोमपाःपूतपापा
यज्ञैरिष्ट्वास्वर्गतिंप्रार्थयंतइतिवचनाच्चभगवानेवप्रार्थ्यः ॥ भगवत्स्वरूपस्यसम्यगपरिज्ञानाद्रागाच्चतेषा
मंतवत्फलत्वम् ॥ नतुमामभिजानंतितत्त्वेनातश्च्यवंतिते ॥ गतागतंकामकामालभंतइतिवचनात् ॥ स

पुरा प्रातरनुवाकस्योपकरणाज्जघनेनगार्हपत्यस्योदङ्मुखउपविश्यसवासवꣳसामाभिगायति
लो३कद्वारमपावार्णू३पश्येमत्वावयꣳराआआआआहुंआआआज्या३यो३आआआआइ
त्यथजुहोतिनमोऽग्नयेपृथिवीक्षितेलोकक्षितेलोकंमेयजमानायविंदैषवैयजमानस्यलोकएताऽ
स्म्यत्रयजमानःपरस्तादायुषःस्वाहापजहिपरिघमित्युक्त्वोत्तिष्ठतितस्मैवसवःप्रातःसवनꣳसं
प्रयच्छंतिपुरामाध्यंदिनस्यसवनस्योपाकरणाज्जघनेनाग्नीध्रीयस्योदङ्मुखउपविश्यसरौद्रꣳ
सामाभिगायतिलो३कद्वारमपावार्णू३पश्येमत्वावयंविराआआआआहुंआआआज्या३यो३
आआइत्यथजुहोतिनमोवायवेंतरिक्षक्षितेलोकक्षितेलोकंमेयजमानायविंदैषवैयजमानस्य
लोकएतास्म्यत्रयजमानःपरस्तादायुषःस्वाहापजहिपरिघमित्युक्त्वोत्तिष्ठतितस्मैरुद्रामाध्यं

वोत्तमत्वस्याज्ञानाद्विष्णोरंधंतमोभवेत् ॥ तद्द्वेषात्किमुवक्तव्यंब्रह्मादिद्वेषतोपिवा ॥ तारतम्यापरिज्ञाना
दनुत्थानंतमोभवेत् ॥ अपराधकृतस्तेषांनिरयंत्वेवगच्छति ॥ पूजायाअकृतेस्तेषांनवर्णेपुजनिर्भवेत् ॥
सम्यक्कर्माननुष्ठानात्स्वर्गंनैवोपगच्छति ॥ अपरोक्षदृशोरौन्यान्मोक्षंनैवोपगच्छतीतिच ॥ पूर्वपूर्वगुणैर्दोषा
नशक्ताउत्तरोत्तराः ॥ स्थानद्वयोत्तरेशक्तामोक्षोनानपरोक्षिणः ॥ विरुद्धरागिणांनैवस्यपरोक्षदृशिर्भवेत् ॥

यावद्रागविनाशःस्याद्विरक्तोभक्तिसंयुतः ॥ सर्वदैवाप्रमत्तश्चपश्येदेवहरिंपरम् ॥ अविस्मृतिस्सदाविष्णोर न्यथाज्ञानवर्जनम् ॥ शास्त्राभ्यासःसदोद्योगाच्छ्रवणाच्चविचारतः ॥ निषिद्धकर्मणांत्यागःस्वधर्मस्यकृ तिःसदा ॥ अप्रमादइतिप्रोक्तःशास्त्रंवेदास्तुपंचच ॥ भारतंपंचरात्रंचमूलरामायणंतथा ॥ पुराणंभागवतं चैवपंचमोवेदउच्यतइतिच ॥ त्रिलोकप्राप्तिपरिघास्त्रयःसंतिसनातनाः ॥ तेषामग्न्यादिगोविष्णुरपहंता

दिनश्सवनश्संप्रयच्छंतिपुरातृतीयसवनस्योपाकरणाज्जघनेनाहवनीयस्योदङ्मुखउपविश्यस आदित्यश्सवैश्वदेवश्सामाभिगायतिलो३कद्वारमपावार्णू३पश्येमत्वावयश्स्वाराआआआ आहुंआआआज्या३यो३आआइत्यादित्यमथवैश्वदेवंलोकद्वारमपाऽऽवार्णू३पश्येमत्वावय साम्राआआआआहुंआआआज्या३यो३आआइत्यथजुहोतिनमआदित्येभ्यश्चविश्वेभ्य श्चदेवेभ्योदिविक्षिद्भ्योलोकक्षिद्भ्योलोकंमेयजमानायविंदतैषवैयजमानस्यलोकएताऽस्म्यत्र यजमानःपरस्तादायुषःस्वाहापहतपरिघमित्युक्त्वोत्तिष्ठतितस्माआदित्याश्चविश्वेचदेवास्तृ तीयसवनश्संप्रयच्छंत्येषहवैयज्ञस्यमात्रांवेदयएवंवेदयएवंवेद ॥ २४ ॥ ७ ॥ इतिश्रीमच्छां दोग्योपनिषदिद्वितीयोऽध्यायः ॥ २ ॥ ॥ ॥ ॥

स्मृतोभवेत् ॥ मृतःसन्सुखभोगाययत्रगच्छतितत्रह ॥ एकैकःपरिघोप्रस्याद्धनेतास्मिंस्तुविष्णुना ॥ यज मानःपृथिव्यादिलोकान्भोगाययातिहीतिच ॥ यस्त्रातियज्ञमातारंयज्ञमात्राहरिस्तुसः ॥ तमेवंवेत्तियोभ क्तोयातिस्वर्मुक्तिमेवचेतिच ॥ २४ ॥ इतिश्रीमदानंदतीर्थभगवत्पादाचार्यविरचितेश्रीमच्छांदोग्योपनि षद्भाष्येद्वितीयोऽध्यायः ॥ २ ॥

हरिः ॐ ॥ यआदित्यगतोविष्णुःसएवमधुनामकः ॥ मदर्धिर्मध्विति प्रोक्तोमदःसुखमिहोच्यते ॥ अइत्याधिक्यमुद्दिष्टंमज्ज्ञानततिरुच्यते॥तद्वत्तातततिरुद्दिष्टातेनानुभवईरितः ॥ अधिकोनुभवोयस्यसर्वस्मादीप्सितादपि ॥ सोयंमदइतिप्रोक्तःसर्वंहिसुखसाधनम् ॥ तत्पूर्णोमधुनामास्यात्तृतीयोतिशयार्थकः ॥ देवानामुपजीव्यत्वात्सदेवमधुनामकः ॥ आदित्वादाततत्वाच्चज्ञानरूपत्वतस्तथा ॥ आदित्यइतिसंप्रोक्तःप्रसिद्धमधुवच्चसः ॥ तिरोवंशादिसंयुक्तोद्युनाम्नीचद्युसंस्थिता ॥ प्रकाशादिगुणैःश्रीस्तुवायोराश्रयरूपतः ॥

असौवा आदित्योदेवमधुतस्यद्यौरेवतिरश्चीनवंशोंतरिक्षमपूपोमरीचयःपुत्रास्तस्ययेप्राञ्चो रश्मयस्ताएवास्यप्राच्योमधुनाड्यऋचएवमधुकृतऋग्वेदएवपुष्पंताअमृताआपस्तावाएता ऋचएतमृग्वेदमभ्यतप४ंस्तस्याभितप्तस्ययशस्तेजइंद्रियंवीर्यमन्नाद्य४ंरसोजायतत्तद्व्यक्षरत्तदादित्यमभितोश्रयत्तद्वाएतद्यदेतदादित्यस्यरोहित४ंरूपम् ॥ १ ॥ अथयेस्यदक्षिणारश्मयस्ताएवास्यदक्षिणामधुनाड्योयजू४ंष्येवमधुकृतोयजुर्वेदएवपुष्पंताअमृताआपस्तानिवाएतानियजू४ंष्येतंयजुर्वेदमभ्यतप४ंस्तस्याभितप्तस्ययशस्तेजइंद्रियंवीर्यमन्नाद्य४ंरसोजायत

तिरोवंशइतिप्रोक्तोमध्वपूपस्तुमारुतः ॥ तस्मिन्सन्निहितोविष्णुर्विशेषेणयतःसदा ॥ सोंतरिक्षमितिप्रोक्तःस्वांतस्सम्यग्घरीक्षणात् ॥ अंतरिक्षस्थितश्चासौवस्वाद्यामधुकारिणः ॥ तत्पुत्रास्तुमरीच्याद्यास्सूर्यरश्मिषुसंस्थिताः ॥ तिर्यक्स्थित्वावशेकुर्याद्यस्माद्देवीरमाहरिम् ॥ भक्त्यैवातस्तिरोवंशस्तिर्यक्त्वंप्रणतिःस्मृता ॥ तिर्यक्स्थित्वाद्यसंस्थंतुवशीकुर्याद्यतस्ततः ॥ वंशस्तिरश्चीनोन्योपियस्मिन्नाप्यमुपस्थितम् ॥ सोपूपआप्योभगवान्मध्वाज्यादिप्रसिद्धगम् ॥ प्राच्यरश्मिषुसंस्थस्तुरतिशंमानरूपतः ॥ प्राच्यरश्मिरिति

प्रोक्तोवासुदेवाभिधोहरिः ॥ एतद्विनानालमितिनाडीत्यंशउदाहृतः ॥ स्वरूपांशैर्विनाप्राप्तुंनालंहिप्रापिता
शिनम् ॥ ऋग्वेदमानिनश्चैववह्न्याद्यावसवस्तथा ॥ अर्च्यत्वात्प्रथमंचैवविशेषाद्यज्ञदेवताः ॥ इंद्राद्याय
जुरुद्दिष्टारुद्राइंद्रसखायतः॥ इंद्रशब्दोदितोवायुःसयाज्यःसोमभुक्पुरः ॥ सहिशंकरपूर्वाणांरुद्राणांमुख्य
एवच ॥ सामनामानआदित्यामासशःसमभोगतः ॥ इंद्रोवरुणउद्दिष्टोयज्ञेषुव्रियतेयतः ॥ आदित्यानामधि
पतिःसहिविष्णुनियोजितः ॥ विष्णुस्तूपास्यरूपत्वान्नोपासकगणेयुतः ॥ इतिहासपुराणानांसोमाद्याअ
भिमानिनः ॥ अथर्वांगिरसांचैवाप्यथर्वांगिरनामकाः ॥ अधरंवर्तयेयुस्तेदृष्टिमंगरसास्तथा ॥ मनस्त्वा

तद्यक्षरत्तदादित्यमभितोश्रयत्तद्वाएतद्यदेतदादित्यस्यशुक्लंरूपम् ॥२॥ अथयेस्यप्रत्यञ्चो
रश्मयस्ताएवास्यप्रतीच्योमधुनाड्यःसामान्येवमधुकृतःसामवेदएवपुष्पंताअमृताआपस्ता
निवाएतानिसामान्येतंसामवेदमभ्यतपंस्तस्याभितप्तस्ययशस्तेजइंद्रियंवीर्यमन्नाद्यंरसो
जायततद्यक्षरत्तदादित्यमभितोश्रयत्तद्वाएतद्यदेतदादित्यस्यकृष्णंरूपम् ॥ ३ ॥ अथये
स्योदञ्चोरश्मयस्ताएवास्योदीच्योमधुनाड्योथर्वांगिरसएवमधुकृतइतिहासपुराणंपुष्पंताअ

त्प्राणरूपत्वादथर्वांगिरसस्ततः ॥ गुह्यादेशाब्रह्मपदेयेयोग्याब्रह्मणासह ॥ सर्वगुह्योपदेष्टारःसर्वेषांगुर्वोहि
ते ॥ ब्रह्मेतिसर्ववेदानांनामानंतत्त्वतःस्मृतम् ॥ ऋग्वेदादींस्तुतेदेवाअग्न्याद्याःसंव्यचारयन् ॥ मधुब्रह्मव्य
क्तिकृत्त्वात्तेवैमधुकृतःस्मृताः ॥ ज्ञानपोषकरत्वात्तुवेदाःपुष्पाभिधाःस्मृताः ॥ अन्यत्रमधुकृत्पोषान्नित्य
त्वादमृताश्चताः ॥ वेदवाचःसुरैःपेयाभोग्यत्वादापईरिताः ॥ वेदपानंविचारश्चश्रवणंपाठएवच ॥ देवै
र्विचारितेभ्यश्चवेदेभ्योव्यक्ततांगतः ॥ ज्ञानानंदस्वरूपत्वाद्यशस्तेजःस्वरूपकः॥इंद्रियंपरमैश्वर्याद्वीर्यरूप

श्वसर्वदा ॥ सर्वानुपहृशक्तित्वादन्नाद्योबलरूपतः ॥ रसनामाचभगवान्संस्थितःसूर्यमंडले ॥ व्यक्षरद्धर्म
मोक्षादीन्देवानांभगवान्हरिः ॥ ऋक्प्रोक्तोलोहिताकारोवासुदेवःपरःपुमान् ॥ सएवसूर्यलौहित्येप्राच्यर
श्मिषुसंस्थितः ॥ संकर्षणःशुक्लवर्णोयजुर्वेदोदितःप्रभुः ॥ शुक्लवर्णेचसूर्यस्यदक्षरश्मिषुसंस्थितः ॥ प्रद्युम्नः
श्यामवर्णस्तुसामवेदोदितःप्रभुः ॥ प्रत्यग्रश्मिषुसूर्यस्यश्यामवर्णेपिचस्थितः ॥ अनिरुद्धःसुनीलश्चइतिहा
सपुराणयोः ॥ अथर्ववेदेचोक्तस्सन्नुदग्रश्मिषुसंस्थितः ॥ सुकृष्णेसूर्यरूपेचमध्येनारायणःप्रभुः ॥ ऊर्ध्वर

मृताआपस्तेवाएतेवाएतेथर्वांगिरसएतदितिहासपुराणमभ्यतपꣳस्तस्याभितप्तस्ययशस्तेजइं
द्रियंवीर्यमन्नाद्यꣳरसोजायततद्व्यक्षरत्तदादित्यमभितोश्रयत्तद्वाएतद्यदेतदादित्यस्यपरःकृ
ष्णꣳरूपम् ॥ ४ ॥ अथयेस्योर्ध्वारश्मयस्ताएवास्योर्ध्वामधुनाड्योगुह्याएवादेशामधुकृ
तोब्रह्मैवपुष्पंताअमृताआपस्तेवाएतेगुह्याआदेशाएतद्ब्रह्माभ्यतपꣳस्तस्याभितप्तस्ययशस्ते
जइंद्रियंवीर्यमन्नाद्यꣳरसोजायतनद्व्यक्षरत्तदादित्यमभितोश्रयत्तद्वाएतद्यदेतदादित्यस्यम
ध्येक्षोभतइवतेवाएतेरसानाꣳरसावेदाहिरसास्तेषामेतेरसास्तानिवाएतान्यमृतानाममृतानिवे
दाह्यमृतास्तेषामेतान्यमृतानि ॥ ५॥ तद्यत्प्रथमममृतंतद्वसवउपजीवंत्यग्निनामुखेननवैदेवा

श्मिषुसंस्थश्चप्रोद्यदादित्यसप्रभः ॥महामरीचिपुंजेनचलतीवाचलोपिसन् ॥ सवाच्यःसर्ववेदानामेवंपंचा
त्मकोहरिः ॥ वेदानांसारभूतोसौवेदानांनित्यताप्रदः ॥ अतोमृतानामम्तृतोरसानांरसएवचेतिसामसंहिता ॥११॥
याम् ॥ नचाचेतनमात्रमुपासितंपुरुषार्थप्रदानशक्तम् ॥ ज्येष्ठायपुत्रायपिताब्रह्मप्रब्रूयादितिवाक्यशेषा
च्चैतदवगम्यतेयएतामेवंब्रह्मोपनिषदंवेदेतिच ॥ कथंचाचेतनोपासनंब्रह्मादिपदप्रदंभवति ॥ नवैतत्रनवि

म्लोचोनोदियायकदाचन ॥ सकृद्दिवाहैवास्मैभवतीत्यादिचमुक्तस्यैवमुख्यतोयुज्यते ॥ यशस्तेजइंद्रि
यवीर्यान्नाद्यरसत्वंचभगवंतंविनाकस्यमुख्यतोयुज्यते ॥ तस्यनाममहद्यशः ॥ ऐश्वर्यस्यसमग्रस्यवी
र्यस्ययशसःश्रियः ॥ ज्ञान विज्ञानयोश्चैवषण्णांभगइतीरणा ॥ रसोवैसः ॥ सुखात्मकंपड्गुण
विग्रहंपरंहृदिस्थितंब्रह्मनिरंजनंस्वरुक् ॥ ऐश्वर्यवैराग्ययशोविबोधवीर्यश्रियापूर्णमहंप्रपद्ये ॥ अहंत
त्तेजोरश्मीन्नारायणंपुरुषमित्यादेश्च ॥ ध्येयःसदासवितृमंडलमध्यवर्तीनारायणइतिच ॥ नचाचेतन
स्यैश्वर्यादिरूपत्वंयुज्यते ॥ ज्ञानात्मकोभगवानैश्वर्यात्मकोभगवान्शक्त्यात्मकोभगवानितिचश्रुतिः ॥
सर्ववेदांतप्रत्ययंचोदनाद्यविशेषादितिसर्ववेदप्रतिपाद्यत्वंभगवतउक्तंभगवता ॥ ससर्वनामासचविश्वरूपः
प्रसीदतांब्रह्ममहाविभूतिरितिच ॥ सर्ववेदायत्पदमामनंति ॥ तावाएताःसर्वाऋचःसर्वेवेदाःसर्वेघोषाएकै
वव्याहृतिःप्राणएव ॥ वेदेरामायणेचैवपुराणेभारतेतथा॥आदावंत्येचमध्येचविष्णुःसर्वत्रगीयते॥नामानि
सर्वाणियमाविशंतितंवैविष्णुंपरममुदाहरंतीत्यादेश्च ॥ उपनिषत्त्वाच्चविशेषतोनयत्किंचिदुच्यतइतिवक्तुं
युक्तम्॥विष्णुरुक्तःसर्ववेदैर्मंत्रैरपिविशेषतः॥आरण्यकेविशेषेणनैवान्यत्किंचिदुच्यते ॥ कर्मार्थंचब्राह्मणं
स्यादमुख्यार्थविवक्षया॥मुख्यतोविष्णुरेवैकोब्राह्मणेष्वपिकथ्यते॥ आरण्यकेष्वतेविष्णुर्नैवान्यत्किंचिदु
च्यते॥सूत्रात्मातूच्यतेविष्णोस्तद्विशिष्टत्ववित्तये॥ कुत्रचित्तदुपास्तिश्चतस्याप्यर्थतनुत्वतः॥तस्मिन्विष्णो
रुपास्त्यर्थंनान्यथाकिंचिदुच्यतइतिब्रह्मांडे॥यस्यांनमेपावनमंगकर्मस्थित्युद्भवत्राणनिरोधमस्य ॥लीला
वतारैरधितकर्मवास्यांद्वंध्यांगिरंतांबिभृयान्नधीरः ॥वित्तंत्वतीर्थीकृतमंगवाचंहीनांमयारक्षतिदुःखदुःखी ॥
यन्नव्रजंत्यघभिदोरचनानुवादाःशृण्वंतियेन्यविषयाःकुकथामतिघ्नीः ॥यास्तुश्रुताहतभगैर्नृभिरात्तवीर्या

स्तांस्तान्क्षिपंत्यशरणेषुतमस्सुहंतेत्यादिभगवद्वचनाच्च ॥ सर्वासुशाखास्वारणमावर्तयेदारणमावर्तयेदुपनि
षदमावर्तयेदुपनिषदमावर्तयेदित्युपनिषदभ्यासस्यतात्पर्यंविहितत्वादभगवद्विषयस्यनिंदितत्वाच्चनोपनिष
त्स्वन्यदुच्यते ॥ अभ्यसेदधियज्ञंचाप्यधिदैवंविशेषतः ॥ अध्यात्मंतुविशेषेणयस्माद्विष्णुस्त्रिधोदितइति
स्कांदे ॥ मांविधत्तेभिधत्तेमांविकल्प्योपोह्यइत्यहम् ॥ इत्यस्याहृदयंसाक्षान्नान्योमद्वेदकश्चनेत्यादेश्च
भगवदुपासनाएवसर्वत्रोक्ता ॥ ५ ॥ प्रथमामृतस्यद्रष्टारोवसवस्त्वग्निपूर्वकाः ॥ यावत्पश्यंतितंविष्णुंताव

अश्नंतिनपिबंत्येतदेवामृतंदृष्ट्वातृप्यंतितएतदेवरूपमभिसंविशंत्येतस्माद्रूपादुद्यंतिसयएत
देवममृतंवेदवसूनामेवैकोभूत्वाग्निनैवमुखेनैतदेवामृतंदृष्ट्वातृप्यतिसएतदेवरूपमभिसंविशत्ये
तस्माद्रूपादुदेतिसयावदादित्यःपुरस्तादुदेतापश्चादस्तमेतावसूनामेवतावदाधिपत्यंस्वाराज्यंप
र्येता ॥ ६ ॥ अथयद्द्वितीयममृतंतद्रुद्राउपजीवंतींद्रेणमुखेननवैदेवाअश्नंतिनपिबंत्येतदेवा
मृतंदृष्ट्वातृप्यंतितएतदेवरूपमभिसंविशंत्येतस्माद्रूपादुद्यंतिसयएतदेवममृतंवेदरुद्राणामेवैको
भूत्वेंद्रेणैवमुखेनैतदेवामृतंदृष्ट्वातृप्यतिसएतदेवरूपमभिसंविशत्येतस्माद्रूपादुदेतिसयावदादि
त्यःपुरस्तादुदेतापश्चादस्तमेताद्विस्तावद्दक्षिणतउदेतोत्तरतोस्तमेतारुद्राणामेवतावदाधिपत्यं

त्तेनान्यभोगिनः ॥ एतदेवविशंत्यद्धामोक्षेतेततएवच ॥ स्वेच्छयैवसमुद्यंतिमुक्ताःसंतोबहिस्तथा ॥ एवं
द्वितीयरूपंतुशिवाद्यावायुसंस्थिताः ॥ वायोर्हैरण्यगर्भत्वात्पदद्वयमुदाहृतम् ॥ रुद्राणामाश्रयत्वंचसा
ध्यानामपिसर्वशः ॥ अतोयजुर्विचारश्चसर्ववेदात्मनस्तथा ॥ वायोरेवविचारःस्याद्ब्रह्मणोपिविशेषतः ॥
उभयाश्रयःसमोक्षेपिवायुरेवहिसर्वदा ॥ द्रष्टारोथतृतीयस्यशक्रमुख्यादितेःसुताः ॥ चतुर्थस्यतुसोमाद्या

मरुतःपंचमस्यच ॥ ऋजवोब्रह्ममुख्याहिसुपर्णःशेषएवच ॥ सरस्वतीसुपर्णीचवारुणीसाध्यनामकाः ॥
अन्योन्यमुखतामुक्तौब्रह्मणांसमतातथा ॥ वाकूशेषादेर्मुखंब्रह्मामुक्तावपिविशेषतः ॥ द्रष्टोभयस्यापिशि
वोद्वितीयस्यांतगस्यच ॥ मोक्षेत्वन्यत्रचैकस्यपरतःशेषभावतः ॥ येचैतत्पदयोग्यास्स्युर्देवाःपंचमहाग
णाः ॥ तेषामपियदोपासानिच्छिद्रामधुनामके ॥ तदावस्वादितांप्राप्यमुक्तिमेष्यंत्यसंशयम् ॥ उदेत्यास्त

स्वाराज्यंपर्यैता ॥ ७ ॥ अथयत्तृतीयममृतंतदादित्याउपजीवंतिवरुणेनमुखेननवैदेवाअश्नं
तिनपिबंत्येतदेवामृतंदृष्ट्वातृप्यंतितएतदेवरूपमभिसंविशंत्येतस्माद्रूपादुद्यंतिसयएतदेवममृतं
वेदादित्यानामेवैकोभूत्वावरुणेनैवमुखेनैतदेवामृतंदृष्ट्वातृप्यतिसएतदेवरूपमभिसंविशत्येत
स्माद्रूपादुदेतिसयावदादित्योदक्षिणतउदेतोत्तरतोस्तमेताद्विस्तावत्पश्चादुदेतापुरस्तादस्तमे
तादित्यानामेवतावदाधिपत्यंस्वाराज्यंपर्यैता ॥ ८ ॥ अथयच्चतुर्थममृतंतन्मरुतउपजीवंति
सोमेनमुखेननवैदेवाअश्नंतिनपिबंत्येतदेवामृतंदृष्ट्वातृप्यंतितएतदेवरूपमभिसंविशंत्येतस्माद्र
पादुद्यंतिसयएतदेवममृतंवेदमरुतामेवैकोभूत्वासोमेनैवमुखेननदेवामृतंदृष्ट्वातृप्यंतिसएतदेव
रूपमभिसंविशत्येतस्माद्रूपादुदेतिसयावदादित्यःपश्चादुदेतापुरस्तादस्तमेताद्विस्तावदुत्तरतउ

मयंयावद्यातिभानुस्तुपर्वते ॥ उदयास्ताद्रिमध्यस्यवसवःपतयःस्मृताः ॥ ततश्चास्तमयाद्यावदर्धरात्रंदिवा
करः ॥ दक्षिणादुत्तरंयातिकिंचित्पूर्वसमन्वितम् ॥ तद्देशाकालयोरीशारुद्रावायुपुरःसराः ॥ वसुभोज्यादर्ध
कालमर्धदेशस्तथैवच ॥ रुद्रभोज्योर्धरात्रात्तुयामआदित्यदैवतः ॥ पश्चिमात्पूर्वमार्गस्तुरौद्रादर्धःप्रकीर्ति
तः ॥ ततःपरोर्धयामस्तुसौम्याद्दक्षिणमार्गकः ॥ मारुतःकालउद्दिष्टआदित्यार्धश्चदेशतः ॥ पश्चात्पश्चा

दुदेत्येवपूर्वतोस्तमुपैतिच ॥ ततस्तदर्धकालेनचोत्तरादुदितस्तथा ॥ अस्तंदक्षिणतोयातिसकालोमारुतः स्मृतः ॥ उदेत्यैंद्रपुरेचोर्ध्वमर्वागुदयपर्वते ॥ अस्तमेतितदर्धेनब्रह्मातस्यपतिःस्मृतः ॥ एकत्रिंशत्तुघटिकाः साधिकावसुदैवताः ॥ तदर्धामारुताब्राह्मास्तदर्धादेशतस्तथेतिच ॥ रौद्रोद्विगुणीभूतोवसुकालोयावांस्तावान्भवतीतिद्विस्तावत्अर्धइत्यर्थः ॥ ब्राह्मेमुहूर्तइत्युषःकालस्यप्रसिद्धेश्च ॥ रौद्रःकालइतिपूर्वरात्रस्यप्रसिद्धेःसार्धरात्रस्यसौम्यःकालइत्यपररात्रस्य ॥ सौम्यकालत्वात्तस्मिन्कालेशीतमुत्पद्यते ॥ मारुतकालत्वाद्वायुश्चवाति ॥ आग्नेयकालत्वादेवाह्निसैकघटिकंहोमकर्माणिविशेषतःप्रवर्तंते ॥ अहःसर्ववसूनांतुपरेषांरात्रिरेवच ॥ प्रदत्ताविष्णुनापूर्वंनालमित्यब्रुवन्परे ॥ पुनर्विशेषतोदत्तंरुद्राणांमरुतांतथा ॥ माध्यंदिनंतृतीयंचाप्यादित्यानांप्रदत्तवान् ॥ विश्वेषामपिदेवानांसामान्याद्वसुनामहरितिच ॥ सर्वस्याधि

देतादक्षिणतोस्तमेतामरुतामेवतावदाधिपत्यंस्वाराज्यंपर्येता ॥ ९ ॥ अथयत्पंचममृतंतत्सा

पतिर्ब्रह्मारुद्राद्यास्तुद्वयोर्द्वयोः ॥ वसवस्त्वह्नएवेशाःसामान्यान्नविशेषतइतिच ॥ माध्यंदिनेतृतीयेचरुद्रादेराज्यमिष्यते ॥ तद्भृत्यत्वाद्वसूनांतुप्रातःकालेविशेषतः ॥ तत्रापिवाय्वधीनत्वमग्न्यादीनांप्रकीर्तितम् ॥ एवंपृथिव्यांरुद्राणामंतरिक्षंप्रकीर्तितम् ॥ मरुतांचद्विलोकेशाआदित्याःपरिकीर्तिताः ॥ सर्वेषामधिपोब्रह्मायुवाधीशस्तुमारुतः ॥ त्रिलोकाधिपतिश्चेंद्रस्तेषामप्यधिपोहरिरितिच ॥ स्वाराज्यंभोगःस्वरंजनात् ॥ नत्विंद्राद्यमोद्विगुणकालंतिष्ठतितस्माद्वरुणस्तस्मात्सोमइत्यत्रकिंचिन्मानम् ॥ नचसोमाद्विगुणमेवब्रह्मातिष्ठति ॥ द्विपरार्धंहितस्यकालः ॥ इंद्रादयोहिमन्वंतरमात्रंतिष्ठंति ॥ नचवसूनांपूर्वोपदेशोरुद्राणांदक्षिणआदित्यानांपश्चिमोमरुतामुत्तरएव ॥ नान्यत्रेत्यत्रप्रमाणमस्ति ॥ तत्पक्षेरुद्रैःसहइंद्रस्यदक्षिणत्वप्रा

मेश्व ॥ नचेंद्रशब्देनवायुस्तैर्गृहीतः ॥ अतइंद्राद्देवेंद्रस्यद्विगुणकालत्वमितिविरोधः ॥ इंद्रादिपुरीणामुद्रा
सत्वेनैवमंगीकारेतत्पोडशगुणत्वादूर्ध्वोदयस्यैकेंद्रात्परतोनिंद्रत्वमेवस्यात् ॥ अथननऊर्ध्वउदेत्येतिनत्पक्षे
पश्चादप्यादित्यभावात्कल्पांतलयोनस्यादित्याद्यनंतदोपदुष्टत्वेपिपंथाल्पत्वायैवोपरम्यते ॥ वस्वादीनां
तुसर्वेषांसर्वदिक्षुपुराण्यपि ॥ संत्येवमपिधीदृत्यैप्रत्येकंदिक्षुकथ्यतइतिच ॥ ऐंद्र्याउद्यासेरुद्राणामे
वोदयाभावइतिचदोषः ॥ अतोयत्किंचिदेतिपूर्वत.सूर्योनिम्लोचतिचपश्चिमे ॥ एवंनियमउद्दिष्टोब्रह्म
णाविष्णुचोदनात् ॥ द्विगुणंद्विगुणंकालमुदित्वादक्षिणादिषु ॥ मध्येव्यवस्थितिःपश्चाद्ब्रह्माणंयाचितापु
रा ॥ हिरण्यकेनसूर्यस्यहिरण्याक्षेणवैपुनः ॥ तदासुराणांदेवत्वंब्रह्मानत्पदर्शनयोः ॥ तच्छ्रुत्वेंद्रादिभिःप्रो

ध्याउपजीवंतिब्रह्मणामुखेननवैदेवाअश्नंतिनपिबंत्येतदेवामृतंदृष्ट्वातृप्यंतितएतदेवरूपमभि
संविशंत्येतस्माद्रूपादुद्यंतिसयएतदेवममृतंवेदसाध्यानामेवैकोभूत्वाब्रह्मणैवमुखेनैतदेवामृतंदृ
ष्ट्वातृप्यतिसएतदेवरूपमभिसंविशत्येतस्माद्रूपादुदेतिसयावदादित्यउत्तरतउदेतादक्षिणतोस्त

क्तःकथंप्रादावराविमौ॥देवताहिविनश्येयुरेवंदत्तेवरेत्वया॥इत्युक्तोदेवतैःप्राहब्रह्मालोकपितामहः ॥नमया
सवरोदत्तोदैतेयानांसुराःक्वचित् ॥ येनयुष्मद्विनाशःस्यात्ततोव्येतुचवोभयम् ॥ दक्षिणाद्युदयोयस्तुसहि
दैनंदिनोमया ॥ अभिप्रेतोनैवचायंकालांतरगतःक्वचित् ॥ अर्धनाड्युत्तरानाडीःसकाशान्नित्यशोरविः॥
पंचादशोत्तरांगच्छेत्पूर्वरात्रेतुदक्षिणात् ॥ तदर्धंपश्चिमात्पूर्वंतदर्धंचोत्तरादपि ॥ दक्षिणांचतदर्धंसऊर्ध्वा
दर्वाक्गच्छति ॥ दक्षिणाद्युदयस्त्वेपनतुकालांतरेक्वचित् ॥ यदोत्तरस्माद्विगुणःपूर्वोभवतिवैसुराः ॥ त
दापिद्विगुणत्वंस्यात्तन्मयात्रविवक्षितम् ॥ अहःसाम्येपिक्रमशआतपस्याल्पकालतः ॥ गिर्यावृत्तेःक्षिप्र

रिंचये ॥ विरिंचिर्मनवेप्राहप्रजाभ्योमनुरेवच ॥ पूरयित्वातुपृथिवींरत्नैःसप्तसमुद्रिणीम्॥दत्त्वापिगुरवेनैव पूर्यतेगुरुदक्षिणा ॥ देवास्तूपासनायोग्याएकैकस्याम्नस्यहि ॥ सर्वस्योपासनेब्रह्मातदन्येज्ञानमात्रके ॥ उपासनेनैवयोग्यास्तद्योग्याहिसुरायतइतिदेवश्रुतौ ॥ ब्रह्मणापरेणमाविराधिषि ॥ भगवत्प्रसादादष्टद्धिं नप्रामुयामित्यर्थः ॥ ११ ॥ यदिदंकिंचभूतंप्रभूतंपरिपूर्णंतत्सर्वंगायत्रीभगवानेव ॥ भूब्रह्मावितिधातोः ॥ बद्धःपूर्णतायामितिच ॥ यदिदंपरितःपूर्णमत्स्यकूर्मादिरूपकम् ॥ तदिदंभगवान्विष्णुस्सर्वांतःस्थितए वच ॥ तन्निःसृतत्वाद्वेदानांगायकत्रातिचाखिलम् ॥ अतोगायत्रिनामासौवासुदेवःपरःपुमान् ॥ भूमाभू

ज्येष्ठायपुत्रायपिताब्रह्मप्रब्रूयात्प्रणाय्यायवांतेवासिनेनान्यस्मैकस्मैचनयद्यप्यस्माइ माम द्भिःपरिगृहीतांधनस्यपूर्णांदद्यादेतदेवततोभूयइति ॥ ११ ॥ गायत्रीवाइद॑सर्वंभूतंय दिदंकिंचवाग्वैगायत्रीवाग्वाइद॑सर्वंभूतंगायतिचत्रायतेचयावैसागायत्रीयंपृथिव्यसा॑हीद॑ सर्वंभूतंप्रतिष्ठितमेतामेवनातिशीयंतेयावैसापृथिवीयंवावसायदिदमस्मिन्पुरुषेशरीरमस्मि न्हीमेप्राणाःप्रतिष्ठिताएतदेवनातिशीयंतेयद्वैतत्पुरुषेशरीरमिदंवावतद्यदिदमस्मिन्नंतःपुरुषेहृ

तमितिप्रोक्तःपूर्णत्वात्पुरुषोत्तमः ॥ अनन्यापेक्षमुद्रिक्तंसर्वस्यविनियामकम् ॥ यद्यत्तत्तद्विष्णुरेवनान्य देतादृशंक्वचित् ॥ सएवभगवान्विष्णुर्वाङ्नामावाचिसंस्थितः ॥ वचनाद्धयशीर्षाख्योगायन्यांचसआ स्थितः ॥ सएवपृथिवीनामापृथिव्यामपिसंस्थितः ॥ विष्णौहिपृथिवीसंस्थेजगत्सर्वंप्रतिष्ठितम् ॥ नाति शेतेचतंकश्चित्सहिसर्वाधिकोहरिः ॥ पृथुत्वात्पृथिवीनामासएवांतःशरीरगः ॥ शरित्वादीरणाच्चैवशरीरंभ गवानजः ॥ पुरुषोजीवउद्दिष्टस्तस्मिन्नेवस्थितोविभुः ॥ योसौजीवेस्थितोविष्णुःशरीरमितिनामकः ॥

रिंचये ॥ विरिंचिर्मनवेप्राहप्रजाभ्योमनुरेवच ॥ पूरयित्वातुपृथिवींरत्नैःसप्तसमुद्रिणीम्॥दत्त्वापिगुरवेनैव
पूर्यतेगुरुदक्षिणा ॥ देवास्तूपासनायोग्याएकैकस्याम्नस्यहि ॥ सर्वस्योपासनेब्रह्मातदन्येज्ञानमात्रके ॥
उपासनेनैवयोग्यास्तद्योग्याहिसुरायतइतिदेवश्रुतौ ॥ ब्रह्मणापरेणमाविराधिषि ॥ भगवत्प्रसादादृष्टद्धिं
नप्राप्नुयामित्यर्थः ॥ ११ ॥ यदिदंकिंचभूतंप्रभूतंपरिपूर्णंतत्सर्वंगायत्रीभगवानेव ॥ भूबहाविति धातोः ॥
बह्वःपूर्णतायामितिच ॥ यदिदंपरितःपूर्णंमत्स्यकूर्मादिरूपकम् ॥ तदिदंभगवान्विष्णुस्सर्वांतःस्थितए
वच ॥ तन्निःसृतत्वाद्वेदानांगायकत्वातिचाखिलम् ॥ अतोगायत्रिनामासौवासुदेवःपरःपुमान् ॥ भूमाभू

ज्येष्ठायपुत्रायपिताब्रह्मप्रब्रूयात्प्रणाय्यायवांतेवासिनेनान्यस्मैकस्मैचनयद्यप्यस्माइ माम
द्भिःपरिगृहीतांधनस्यपूर्णांदद्यादेतदेवततोभूयइति ॥ ११ ॥ गायत्रीवाइदꣳसर्वंभूतंय
दिदंकिंचवाग्वैगायत्रीवाग्वाइदꣳसर्वंभूतंगायतिचत्रायतेचयावैसागायत्रीयंपृथिव्यसाꣳहीद
ꣳसर्वंभूतंप्रतिष्ठितमेतामेवनातिशीयंतेयावैसापृथिवीयंवावसायदिदमस्मिन्पुरुषेशरीरमस्मि
न्हीमेप्राणाःप्रतिष्ठिताएतदेवनातिशीर्यंतेयद्वैतत्पुरुषेशरीरमिदंवावतद्यदिदमस्मिन्नंतःपुरुषेहृ

तमितिप्रोक्तःपूर्णत्वात्पुरुषोत्तमः ॥ अनन्यापेक्षमुद्रिक्तंसर्वस्यविनियामकम् ॥ यद्यत्तत्तद्विष्णुरेवनान्य
देतादृशंकचित् ॥ सएवभगवान्विष्णुर्वाङ्नामावाचिसंस्थितः ॥ वचनाद्धयशीर्षाख्योगायत्र्यांचसआ
स्थितः ॥ सएवपृथिवीनामापृथिव्यामपिसंस्थितः ॥ विष्णौहिपृथिवीसंस्थेजगत्सर्वंप्रतिष्ठितम् ॥ नाति
शेतेचतंकश्चित्सहिसर्वाधिकोहरिः ॥ पृथुत्वात्पृथिवीनामासएवांतःशरीरगः ॥ शरित्वादीरणाच्चैवशरीरंभ
गवानजः ॥ पुरुषोजीवउद्दिष्टस्तस्मिन्नेवस्थितोविभुः ॥ योसौजीवेस्थितोविष्णुःशरीरमितिनामकः ॥

शंत्वाच्चरतिरूपत्वादीरणाच्चसएवतु ॥ जीवचैतन्यरूपस्यहृदयेपिव्यवस्थितः ॥ अयनाद्धृदिविष्णुःसहृद
यंकीर्तितोबुधैः ॥ गायत्र्यांसंस्थितोविष्णुःस्त्रीरूपःसूर्यसप्रभः ॥ द्वितीयश्चैवमत्यादिर्भूतनामावतारगः ॥
तृतीयोवाचिसंस्थश्चस्त्रीरूपोहयशीर्षकः ॥ चतुर्थःपृथिवीसंस्थःस्त्रीरूपःपीतवर्णकः ॥ जीवस्यांत
र्गतोव्याप्यशरीरमितिनामकः ॥ पंचमस्तद्धृदिस्थश्चषष्ठोहृदयनामकः ॥ गायत्रीनामकोविष्णुरेवं
षड्विधउच्यते ॥ त्रिभिःस्वरूपपादैश्चभिन्नैनैकेनचैवहि ॥ गायत्रीनामकोविष्णुश्चतुष्पात्संप्रकी
र्तितः ॥ भिन्नपादःसर्वजीवास्तस्यसादृश्यमात्रतः ॥ स्वरूपपादाविष्णोस्तुत्रयोहिदिविसंस्थिताः ॥

दयमस्मिन्हीमेप्राणाःप्रतिष्ठिताएतदेवनातिशयंतेसैषाचतुष्पदाषड्विधागायत्रीतदेतदृचाभ्यनू
क्तम् ॥ तावानस्यमहिमाततोज्यायाꣳश्चपुरुषः ॥ पादोऽस्यसर्वाभूतानित्रिपादस्यामृतंदिवी
ति ॥ यद्वैतद्ब्रह्मेतीदंवावतद्योयंवहिर्धापुरुषादाकाशोयोवैसबहिर्धापुरुषादाकाशोयंवावसयो
यमंतःपुरुषआकाशोयोवैसोंतःपुरुषआकाशोयंवावसयोयमंतर्हृदयआकाशोयोवैसोंतर्हृदय

नारायणोवासुदेवोवैकुंठइतितेत्रयः ॥ अनंतशयनंचैवतथानंतासनंहरेः ॥ बहुलक्ष्मोच्छ्रितेनित्येवि
मानेसंस्थितंयतः ॥ चित्प्रकृत्यात्मनिततोदिवीतिकथितंश्रुतौ ॥ लोकत्रयविवक्षायांपरतोलक्ष्ययोज
नात् ॥ सर्वद्यौरितिविज्ञेयंततस्तेदिविसंस्थिताः ॥ दिवःपरश्चभगवान्सप्तलोकविवक्षया ॥ परंब्रह्मे
तिभगवान्सर्वगःसंप्रकीर्तितः ॥ सएवजीवस्यबहिर्हृदयाकाशआस्थितः ॥ योयंहृदयगःसोथजीवांतर्व्या
प्यसंस्थितः ॥ व्याप्तोजीवांतरेयोसौसजीवहृदिसंस्थितः ॥ एवंचापिचतुष्पात्त्वंवासुदेवस्यकीर्तितम् ॥
सएवपूर्णोभगवानप्रवर्त्यस्तथाखिलैः ॥ अन्यैःप्रवर्त्यनेयोसौसप्रवर्तीतिगीयते ॥ अप्रवर्त्योहरिर्नित्यःस्वतं

न्त्वात्सदैवच ॥ अस्यप्रवृत्तिर्नास्तीतिसोप्रवर्तीतिकीर्तितः ॥ पूर्णास्वतंत्राश्रीश्चास्यवेत्तुर्भवतिशाश्वती ॥
साक्षाद्वायव्युपासायांयोग्यएकश्चतुर्मुखः ॥ तस्मादनन्यतंत्रास्यश्रीर्भवेन्नान्यथाक्वचित् ॥ विष्णुतंत्र
त्वमस्यस्यात्परेषांतस्यतंत्रता ॥ यथाक्रमेणतंत्रत्वंयोग्यताक्रमतोभवेदिनिचसत्तत्त्वे ॥ ब्रह्मशब्दाच्चभग
वानित्यवसीयते ॥ पूर्णाप्रवृत्तित्वंचतस्मिन्नेवमुख्यम् ॥ तावानस्यमहिमेतिमंत्राच्च ॥ पादोस्यविश्वाभू
तानीतिजीवानांचतुष्पादांतर्भावात् ॥ भूतंयदिदंकिंचेतिषड्विधांतर्भूतभूतंमत्स्याद्यवतारहृपमेव ॥ द्वाविंशे
ष्ववतारेषुजीवोप्युक्तोयथापृथुः ॥ तथापादेषुचतुर्पुसान्निध्याज्जीवईरितः ॥ यथाकालःपुमान्व्यक्तं
प्रकृतीश्वपरस्यतु ॥ विष्णोरूपाणिगण्यंतेपररूपेणवैसह ॥ एवंभूतानिगण्यंतेभिन्नान्यपिपदैःसह ॥ मू

आकाशस्तदेतत्पूर्णमप्रवर्तिपूर्णामप्रवर्तिनीं श्रियंलभतेयएवंवेद ॥ १२ ॥ तस्यहवाएतस्य
हृदयस्यपंचदेवसुषयःसयोस्यप्राङ्सुषिःसप्राणस्तच्चक्षुःसआदित्यस्तदेतत्तेजोन्नाद्यमित्युपा

र्तामूर्तेयथारूपेब्रह्मणस्तुतथैवच ॥ भिन्नान्यपितुभूतानिपदानिस्वपदैःसहेतिप्राथम्ये ॥ सुदर्शनाख्यंस्वा
स्त्रंतुप्रायुङ्क्तदयितंत्रिपादितिश्रीभागवतेप्रयोगाच्चनजीवोभगवत्स्वरूपम् ॥ सुवर्चलायथासूर्यपत्न्यंशःस
मुदाहृता ॥ एवंजीवाभगवतोवस्तुभेदेपिसर्वदेतिच ॥ १२ ॥ प्राणाभिमानीचक्षुश्चसूर्यएवह्युदाहृतः ॥
तेजोयाद्यभिमानीचप्राग्द्वाराधिपतिर्हरेः ॥ दक्षिणाधिपतिस्सोमोव्यानःश्रोत्राभिमानवान् ॥ यशो
लावण्यरूपश्चपश्चिमद्वारपस्तथा ॥ वागपानात्मकोवह्निर्ब्रह्मतेजोन्नदेवता ॥ उत्तरद्वारपस्त्विद्रःसमा
नमनआत्मकः ॥ कीर्त्यैश्वर्यात्मकोनित्यमूर्ध्वद्वारपएवच ॥ प्रधानवायुराकाशःसर्वज्ञादुन्नतेस्तथा ॥
उदानऊर्जितत्वात्सओजःपूर्णत्वतोमहः ॥ परस्यब्रह्मणस्त्वेतेपुरुषाःपंचकीर्तिताः ॥ द्वारपाहृदयेचैव

विष्णुलोकेचसर्वदा ॥ आंतरद्वारपाश्चतेजयाद्याबाह्यतःस्मृताः ॥ एवमेतानुपास्यैवतद्गुणांशांशभागभ
वेत् ॥ विष्णुलोकंतथागच्छेद्भवेदपिसुसंततिः ॥ योसौवैकुंठगोविष्णुःसप्तलोकोपरिस्थितः ॥ सए
वसर्वलोकेषुविश्वतोब्रह्मणस्तथा ॥ उच्चेपूत्तमलोकेपुतथाप्रत्यवरेपुच ॥ पुरुषेपुचसर्वेपुसएकःसंव्य
वस्थितः ॥ प्राणसंस्थस्सवैविष्णुःप्राणोग्नौसंव्यवस्थितः ॥ स्पर्शेनदृश्यनेचाग्निस्तद्दृष्टिरिवसाततः ॥

सीततेजस्यन्नादोभवतियएवंवेदाथयोस्यदक्षिणःसुषिःसव्यानस्तच्छ्रोत्रंसचंद्रमास्तदेतच्छ्री
श्चयशश्चेत्युपासीतश्रीमान्यशस्वीभवतियएवंवेदाथयोस्यप्रत्यङ्सुषिःसोपानःसावाक्सोग्निस्त
देतद्ब्रह्मवर्चसमन्नाद्यमित्युपासीतब्रह्मवर्चस्यन्नादोभवतियएवंवेदाथयोस्योदङ्सुषिःससमा
नस्तन्मनःसपर्जन्यस्तदेतत्कीर्तिश्चव्युष्टिश्चेत्युपासीतकीर्तिमान्व्युष्टिमान्भवतियएवंवेदाथ
योस्योर्ध्वःसुषिःसउदानःसवायुःसआकाशस्तदेतदोजश्चमहश्चेत्युपासीतोजस्वीमहस्वान्भव
तियएवंवेदतेवाएतेपंचब्रह्मपुरुषाःस्वर्गस्यलोकस्यद्वारपाःसयएतानेवंपंचब्रह्मपुरुषान्स्वर्गस्य
लोकस्यद्वारपान्वेदास्यकुलेवीरोजायतेप्रतिपद्यतेस्वर्गंलोकंयएतानेवंपंचब्रह्मपुरुषान्स्वर्गस्य
लोकस्यद्वारपान्वेदाथयदतःपरोदिवोज्योतिर्दीप्यतेविश्वतःपृष्ठेपुसर्वतःपृष्ठेष्वनुत्तमेपूत्तमेषु

सप्राणःस्तौतितंविष्णुंसास्तुतिःश्रूयतेसदा ॥ कर्णावपिधायतद्विद्वान्दिव्यचक्षुःसुकीर्तिमान् ॥ मुक्तोभू
त्वाभवेद्यस्मादुपासीतैवसंततमितिसत्तत्त्वे॥दिक्षुयानाद्यशोव्याप्तंकीर्तिःप्रत्यक्षतःस्तुतिरितिशब्दनिर्णये॥ स
र्वतःपृष्ठेषुसर्वतउच्चेषुवैकुंठक्षीरसागरानंतासनादिषुविश्वतोब्रह्मणोप्युच्चेषुततउत्तमोनास्तीत्यनुत्तमाःसर्व
तःस्वयमुत्तमाः ॥ पृथिवीस्थेपुसर्वोच्चोलोकोनंतासनात्मकः ॥ अंतरिक्षात्मकेभ्यश्चश्वेतद्वीपेस्थितोहरिः॥

द्यात्मकेभ्यश्चसर्वेभ्योवैकुंठश्चोच्चउच्यते ॥ पृथिव्यांद्यौर्महामेरुराकाशेसूर्यमंडलम् ॥ दिवींद्रसदनंचैवत
त्परेतुदिवःपरे ॥ पृथिव्यांब्रह्मणोमेरौजयंतंत्वंतरिक्षगम् ॥ तृतीयंसत्यलोकंचसदनंत्रिविधंस्मृतम् ॥ तेभ्यो
नंतासनाद्यायत्परतोविश्वतःपरइतिसत्तत्त्वे ॥ निनदःसमुद्रघोषःस्यान्नदथुर्मेघसंभवइतिच ॥ चक्षुष्यश्च
क्षुषिब्रह्मण्येषयातीत्युपासकइतिच ॥१३॥ इदंब्रह्मातिसामीप्यात्सर्वपूर्णगुणत्वतः ॥ तच्चब्रह्मजलान्सा

लोकेष्विदंवावतद्यदिदमस्मिन्नंतःपुरुषेज्योतिस्तस्यैषादृष्टिर्यत्रैतदस्मिञ्छरीरेसंस्पर्शेनोष्णि
मानंविजानातितस्यैषाश्रुतिर्यत्रैतत्कर्णावपिगृह्यनिनदमिवनदथुरिवाग्नेरिवज्वलतउपशृणो
तितदेतद्दृष्टंचश्रुतंचेत्युपासीतचक्षुष्यःश्रुतोभवतियएवंवेदयएवंवेद ॥ १३ ॥ सर्वंख
ल्विदंब्रह्मतज्जलानितिशांतउपासीताथखलुक्रतुमयःपुरुषोयथाक्रतुरस्मिँल्लोकेपुरुषोभवति
तथेतःप्रेत्यभवतिसक्रतुंकुर्वीतमनोमयःप्राणशरीरोभारूपःसत्यसंकल्पआकाशआत्मासर्वकर्मा
सर्वकामःसर्वगंधःसर्वरसःसर्वमिदमभ्यात्तोऽवाक्यनादरएषमआत्मांतर्हृदयेणीयान्व्रीहेर्वा
यवाद्वासर्षपाद्वाश्यामाकाद्वाश्यामाकतंडुलाद्वैषमआत्मांतर्हृदयेज्यायान्पृथिव्याज्यायानंत
रिक्षाज्ज्यायान्दिवोज्यायानेभ्योलोकेभ्यःसर्वकर्मासर्वकामःसर्वगंधःसर्वरसःसर्वमिदमभ्यात्तो

क्षाद्योसौविष्णुर्जलेऽनिति ॥ आनीदवातमितियंवेदवागवदत्स्फुटम् ॥ अप्रकेतेतुसलिलेब्रह्मनारायणोपि
सः ॥ इतिशांतउपासीतयस्माज्ज्ञानमयःपुमान् ॥ क्रतुस्तुनिश्चितंज्ञानंतद्वशःपुरुषोमृतौ ॥ तस्माद्धिनिश्चि
तंज्ञानंकुर्याद्विष्णौमहागुणे ॥ महाज्ञानात्मकत्वात्तुप्रोक्तोविष्णुर्मनोमयः ॥ यस्माद्बलशरीरोसावतःप्राण
शरीरकः ॥ आसमंतात्प्रकाशात्सआकाशात्माप्रकीर्तितः॥सर्वगंधादिरूपश्चभोक्ताचैषांसदैवहि॥इतिनिश्च

यकुर्यादितिमेवपुरुषोत्तममितिसद्गुणे ॥ एकत्रसर्वगंधादिनाचिदानंदात्मकसर्वगंधादिरूपत्वमुच्यते ॥ अन्यत्रतद्गोक्तृत्वम् ॥ १४ ॥ कइत्यानंदउद्दिष्टउशइच्छाप्रकीर्तिता ॥ आनंदेच्छास्वरूपोसौकोशोविष्णुः प्रकीर्तितः ॥ तस्योदरेंतरिक्षंचपृथिवीपादबुघ्नयोः ॥ शिरोविवरगाद्यौश्चदिशोबाहुपुसंस्थिताः ॥ अजगेयं महाविष्णुर्वसवोदेवतागणाः ॥ तेषांनिधानंभगवांस्तस्मिन्सर्वमिदंश्रितम् ॥ प्राचीदिक्संस्थितस्तस्यबाहुर्दक्षिणऊर्ध्वगः ॥ जुहूःसहोमकर्तृत्वाद्धुंक्तेस्रेतेनकेशवः ॥ दक्षिणस्त्वधरोबाहुर्दक्षिणादिक्स्थितोविभोः॥

ऽवाक्यानादरएषमआत्मांतर्हृदयएतद्ब्रह्मैतमितःप्रेत्याभिसंभवितास्मीतियस्यस्यादद्धानविचिकित्सास्तीतिहस्माहशांडिल्यःशांडिल्यः ॥ १४ ॥ अंतरिक्षोदरःकोशोभूमिबुघ्नोनजीर्यतिदिशोह्यस्यस्रक्तयोद्यौरस्योत्तरंबिलं सएषकोशोवसुधानस्तस्मिन्विश्वमिदंश्रितंतस्यप्राचीदिग्जुहूर्नामसहमानानामदक्षिणाराज्ञीनामप्रतीचीसुभूतानामोदीचीतासांवायुर्वत्सःसयएतमेवंवायुंदिशांवत्संवेदनपुत्ररोदंरोदितिसोहमेतमेवंवायुंदिशांवत्संवेदमापुत्ररोदंरुदमरिष्टंकोशंप्रपद्येऽमुनाऽमुनाऽमुनाप्राणंप्रपद्येऽमुनाऽमुनाऽमुनाभूःप्रपद्येऽमुनाऽमुनाऽमुना

सहमानेतिसप्रोक्तोमानंवेदात्मकंयतः ॥ शंखोवेदात्मकःशंखसहितोदक्षिणाधरः ॥ बाहुर्जुहोतिचक्रेण शत्रूनित्यथवाजुहूः ॥ प्रतीचीदिक्स्थितस्तस्यवामबाहुस्तथोत्तरः॥ राजीयुक्तगदायुक्तोराज्ञीनामाप्रकीर्तितः॥अधरोवामबाहुर्यउत्तरादिक्स्थितोविभोः ॥ श्रियआधारपद्मित्वात्सुभूतानामकःस्मृतः॥दिङ्नामानश्चतेप्रोक्ताधर्मज्ञानादिदेशनात्॥तेभ्योजातोमहावायुर्दिशांवत्सस्ततःस्मृतः॥ धर्मज्ञानादिरूपेणविष्णोर्बाहुचतुष्टयात् ॥ जातंवायुंविदित्वैवपुत्रोभूत्वानरोदिति॥नजायतेनम्रियतेमुक्तोभूत्वासुखीभवेत्॥ वायुंहरेःसु

तंज्ञात्वानाहंपुत्रतयाऽरुदम् ॥ हरेःप्रसादसामर्थ्यादजराचामराह्यहम्॥ अनादिकालसंबंधादित्युवाचपुरार
मा॥अविनष्टंपरानंदकामंविष्णुंसदाह्यहम् ॥ प्रपद्येतत्प्रसादेनकेवलंनात्मशक्तितः ॥ प्राणंसर्वप्रणेतारंप्रपद्ये
केशवंसदा ॥ प्रभूतंयदिदंकिंचित्प्रादुर्भावात्मकंहरेः॥ मत्स्याद्यंतत्प्राणएवविष्णुर्नास्त्यत्रसंशयः ॥ तस्मा
न्मत्स्यादिरूपंतंविष्णुमेवप्रपद्यथ ॥ हेजनाइत्यवोचत्सालक्ष्मीःसर्वाःप्रजाःप्रति ॥ प्राणनामावासुदेवोमो
क्षंस्वान्प्राणयेद्यतः ॥ संकर्षणस्तुभूर्नामाभूषयेज्ज्ञानतोयतः॥सपृथ्व्यांपृथिवीनामास्वात्मानंप्रथयेद्धनः ॥
अंतरिक्षेंतरिक्षाख्योयतःसाध्वंतरीक्षते ॥ दिविद्युनामासविभुःसर्वक्रीडाकरत्वनः ॥ प्रद्युम्नश्चभुवोनामास्

भुवःप्रपद्येऽमुनाऽमुनाऽमुनास्वःप्रपद्येऽमुनाऽमुनाऽमुनासयदवोचंप्राणंप्रपद्यइतिप्राणोवाइदं
सर्वंभूतंयदिदंकिंचतमेवतत्प्रापत्स्यथयदवोचंभूःप्रपद्यइनिपृथिवींप्रपद्येंतरिक्षंप्रपद्येदिवंप्रपद्य
इत्येवतदवोचमथयदवोचंभुवःप्रपद्यइत्यग्निंप्रपद्येवायुंप्रपद्यआदित्यंप्रपद्यइत्येवतदवोचमथ
यदवोचंस्वःप्रपद्यइत्यृग्वेदंप्रपद्येयजुर्वेदंप्रपद्येसामवेदंप्रपद्यइत्येवतदवोचंतदवोचम् ॥ १५ ॥

ष्टयायद्भावयेज्जगत् ॥ सोग्निनामापरोवह्नावत्तिसर्वंयतोह्युतम् ॥ वायुनामासवायुस्थोवात्यायुश्चयतोस्य
तत् ॥ आदित्याख्यःसआदित्येआददात्यायुरस्ययत् ॥ स्वर्नामात्वनिरुद्धोसौपरानंदप्रदत्वनः ॥ ऋग्वेदा
ख्यःसऋग्वेदेज्ञानंवेदयतेयतः॥यजुर्वेदोयजुर्वेदेयज्ञंवेदयतेयतः ॥ सामवेदःसामवेदेसाम्यंवेदयतेह्ययम् ॥
एवंचतुर्विधंतत्त्वंतदवोचमहंहरेः ॥ इत्युवाचेंदिरादेवीस्तुवंतीपरमंहरिमितिच ॥ पुंल्लिंगेनोच्यतेस्त्रीचपुंव
च्छक्तिमतीयदीतिच॥१५॥विष्णुपूजार्थयज्ञोहमित्युपासनमादरात् ॥ कुर्वीतपुरुषोनित्यंतस्ययत्षोडशो
त्तरम् ॥ शतमायुस्तत्सवनत्रयमीरितमुत्तमम् ॥ चतुर्विंशत्तुयत्पूर्वंप्रातःसवनमेवतत् ॥ प्रार्थयित्वावसूंस्त

द्रंपुमान्मृत्युमपानुदेत् ॥ मध्येचतुश्चत्वारिंशन्मध्यमंसवनंस्मृतम् ॥ रुद्राणांप्रार्थनेनात्रपुमान्मृत्युमपानुदे
त् ॥ ततोष्टचत्वारिंशत्तुतृतीयंसवनंस्मृतम् ॥ आदित्यानांप्रार्थनेनतद्वन्मृत्युमपानुदेदितिसर्वयज्ञे ॥ महिदा

सोन्यःकृष्णश्चान्यएव॥ महिदासस्त्वैतरेयःकृष्णोन्योदेवकीसुतः॥कपिलश्चद्वितीयोन्यस्त्रयएतेपुरानराः॥

पुरुषोवावयज्ञस्तस्ययानिचतुर्विंशतिवर्षाणितत्प्रातःसवनंचतुर्विंशत्यक्षरागायत्रीगायत्रंप्रातः
सवनंतदस्यवसवोन्वायत्ताःप्राणावाववसवएतेहीदꣳसर्वंवासयंतितंचेदेतस्मिन्वयसिकिंचिदुप
तपेत्सब्रूयात्प्राणावसवइदंमेप्रातःसवनंमाध्यंदिनꣳसवनमनुसंतनुतेतिमाहंप्राणानांवसूनांमध्ये
यज्ञोविलोप्सीयेत्युद्धैवततएत्यगदोहभवत्यथयानिचतुश्चत्वारिंशद्वर्षाणितन्माध्यंदिनꣳसवनं
चतुश्चत्वारिंशदक्षरात्रिष्टुप्त्रैष्टुभंमाध्यंदिनꣳसवनंतदस्यरुद्राअन्वायत्ताःप्राणावावरुद्राएतेही
दꣳसर्वꣳरोदयंतितंचेदेतस्मिन्वयसिकिंचिदुपतपेत्सब्रूयात्प्राणारुद्राइदंमेमाध्यंदिनꣳसवनंतृती
यंसवनमनुसंतनुतेतिमाहंप्राणानांरुद्राणांमध्येयज्ञोविलोप्सीयेत्युद्धैवततएत्यगदोहभवतीत्य
थयान्यष्टाचत्वारिꣳशद्वर्षाणितत्तृतीयसवनमष्टाचत्वारिंशदक्षराजगतीजागतंतृतीयसवनंतद
स्यादित्याअन्वायत्ताःप्राणावावआदित्याएतेहीदꣳसर्वमाददतेतंचेदेतस्मिन्वयसिकिंचिदुप
तपेत्सब्रूयात्प्राणाआदित्याइदंमेतृतीयसवनमायुरनुसंतनुतेतिमाहंप्राणानामादित्यानांमध्ये

संगत्योच्चैस्तपस्तेपुर्ब्रह्मणेपरमेष्ठिने ॥ मातुःस्वस्यचनामैक्यंविष्णुनास्यादितिस्थुभौ ॥ स्वात्मशिष्यप्रशि

ष्याणांनामैक्यंकपिलस्तथा ॥ एवमेवचवेदोक्ताभवेमेतित्वतंद्रिताः ॥ तान्वरान्प्रददौतेषांब्रह्मालोकपिता
महः ॥ तस्मात्तन्नामिनश्चासंस्त्रयस्तेमुनयोपिहि ॥ महिदासस्त्वैतरेयोबह्वृचोपनिषद्व्रतः ॥ साक्षात्सभग

वान्विष्णुस्तन्नामैकोमुनिर्बभूव ॥ कृष्णस्तुवासुदेवाख्यःपरमात्मैवकेवलम् ॥ तन्नामादेवकीपुत्रस्त्व
न्योप्यभवदंजसा ॥ कपिलोवासुदेवाख्यःसाक्षान्नारायणःप्रभुः ॥ तन्नामाकपिलोन्यस्तुशिष्यनाम्नास
हाभवत् ॥ सषोडशशतंजीवीमहिदासोपरस्त्वृषिः ॥ घोरशिष्यस्तथाकृष्णःकपिलश्चकुशास्त्रकृत् ॥ त्रय
एतेवरंप्राप्यब्रह्मणःपरमेष्ठिनः ॥ कृतकृत्याःप्रमुमुदुस्तन्नामानश्चतेभवन्नितिकालकीये ॥१६॥स्वरूपभू
तयज्ञस्यक्षुत्पिपासारतिस्तथा ॥ दीक्षाभोजनपानेचरतिश्चोपसदःस्मृताः ॥ व्यवायहासभक्षास्तुस्तुतश
स्त्रात्मकाःस्मृताः ॥ तपोदानार्जवाहिंसाःसत्यमप्यस्यदक्षिणा ॥ सोष्यत्यसोष्टेतिततोयज्ञवत्पुत्रजन्मनि ॥

यज्ञोविलोप्सीयेत्युद्धैवततएत्यगदोहैवभवत्येतद्धस्मवैतद्विद्वानाहमहिदासऐतरेयःसकिंमए
तदुपतपसियोहमनेननप्रेष्यामीतिसहषोडशंवर्षशतमजीवत्सहषोडशंवर्षशतंजीवतियएवंवेद
॥ १६ ॥ सयदशिशिषतियत्पिपासतियन्नरमतेताअस्यदीक्षाअथयदश्नातियत्पिबतियद्रमते
तदुपसदैरेत्यथयद्धसतियज्जक्षतियन्मैथुनंचरतिस्तुतशस्त्रैरेवतदेत्यथयत्तपोदानमार्जवमहिं

आहुर्हिपुनरुत्पत्तिःप्रसवःप्रथमापितुः ॥ यज्ञस्नानंतुमरणंतदाध्यायेत्त्रयंपुमान् ॥ भगवन्नक्षयोसित्वम
च्युतोसिगुणैःसदा ॥ प्राणाच्चसुखितोनित्यमाधिक्येनेतिचिंतयेदितिसत्तत्त्वे ॥ आदित्करमादेवतत्प्रसादा
देव ॥ प्रत्नस्यपुरातनस्यानादेर्भगवतोरेतसोरतिरूपस्यज्योतिःपश्यंति ॥ वासेनरमयतीतिवासरम् ॥ दिवः
परतोवैकुंठेयदिध्यते ॥ ऋद्धतममेवसर्वदा ॥ अथयदतःपरइत्युक्तत्वाच्च ॥ नचादित्यमंडलंदिवःपरतः ॥
उत्तरंज्योतिःपश्यंतःस्वरानन्दरूपंपरिपश्यंतोवयंतमसउदगन्म ॥ उत्तरंज्योतिःपश्यंतस्तदेवोत्तरंस्वश्चप
श्यंतः ॥ द्विरुक्तिस्तात्पर्यार्था ॥ उदाख्यंज्योतिरुत्तमंतमसःसकाशादगन्मप्राप्ताःस्मेत्यर्थः ॥ तस्योदिति

नामेतिश्रुतेः ॥ देवत्रादेवंदेवविषयेपिदेवंदेवानांदिवमित्यर्थः॥ सूरिभिःप्राप्यत्वात्सूर्यम् ॥ रतिरूपंपरंज्योति
रनादेःकेशवस्ययत् ॥ तत्प्रसादेनपश्यंतिहृदिवासाद्रतिप्रदम् ॥ यत्पूर्णसर्वदाभातिवैकुंठेपरतोदिवः ॥ तद्दु
दाख्यंप्रपश्यंतोनिर्गत्यतमसोवयम् ॥ ज्योतिरानंदसद्रूपमुत्तमोत्तमसत्तमम् ॥ देवानांदैवतंसाक्षात्सूरिप्रा

सासत्यवचनमितिताअस्यदक्षिणास्तस्मादाहुःसोष्यत्यसोष्टेतिपुनरुत्पादनमेवास्यतन्मरणमे
वावभृथस्तद्धैतद्घोरआंगिरसःकृष्णायदेवकीपुत्रायोक्त्वोवाचापिपासएवसबभूवसोंतवेलायां
मेतत्त्रयंप्रतिपद्येताक्षितमस्यच्युतमसिप्राणसंशितमसीतितत्रैतेद्वेऋचौभवतआदित्प्रत्न
स्यरेतसउद्वयंतमसस्परिज्योतिष्पश्यंतउत्तरंस्वःपश्यंतउत्तरंदेवंदेवत्रासूर्यमगन्मज्योतिरुत्तम
मितिज्योतिरुत्तममिति ॥ १७ ॥ मनोब्रह्मेत्युपासीतेत्यध्यात्ममथाधिदैवतमाकाशो
ब्रह्मेत्युभयमादिष्टंभवत्यध्यात्मंचाधिदैवतंचतदेतच्चतुष्पाद्ब्रह्मवाक्पादःप्राणःपादश्चक्षुष्पादः
श्रोत्रंपादइत्यध्यात्ममथाधिदैवतमग्निःपादोवायुःपादआदित्यःपादोदिशःपादइत्युभयमेवा
दिष्टंभवत्यध्यात्मंचाधिदैवतंचवागेवब्रह्मणश्चतुर्थःपादःसोग्निनाज्योतिषाभातिचतपतिचभा
तिचतपतिचकीर्त्यायशसाब्रह्मवर्चसेनयएवंवेदप्राणएवब्रह्मणश्चतुर्थःपादःसवायुनाज्योतिषा
भातिचतपतिचभातिचतपतिचकीर्त्यायशसाब्रह्मवर्चसेनयएवंवेदचक्षुरेवब्रह्मणश्चतुर्थःपादः

ख्यंपरंपदम् ॥ प्रापाःस्मवासुदेवाख्यमितिमंत्रदृगब्रवीदितिनारायणीये ॥ १७ ॥ मनःसंस्थस्तुयोदेवःसा ॥२७॥
क्षान्नारायणःप्रभुः ॥ सएवाकाशसंस्थश्चमनआकाशनामकः ॥ मननान्मनआकाशआसमंतात्प्रकाश
नात् ॥ वासुदेवादिभेदेनसवागादिषुसंस्थितः ॥ अग्न्यादिषुचतन्नामावागादिस्थःसएवतु । अग्न्यादिस्थैः

सहैवेशोभातिदुष्टांस्तपत्यथ ॥ एवंविद्वांस्तमीशेशंयशोज्ञानसुखात्मताम् ॥ कीर्तिंचब्रह्मसंप्राप्यावरतांमु
क्तिगामपि ॥ प्राप्यभातितपत्यद्धास्वाज्ञानादिकमेवचेतिच ॥ १८ ॥ अगम्यत्वादसन्नामब्रह्मनारायणा
भिधम् ॥ प्रलयेवासुदेवाख्यंगम्यंसदभवद्विदाम ॥ तत्प्रकृत्यासमभवत्ततआंडमजायत ॥ तस्मिन्नादित्य
नामासावभवत्सूर्यमंडले ॥ नियंतैवचसूर्यस्यभगवान्पुरुषोत्तमः ॥ तस्मादादित्यनामानमादित्यस्थंजनार्द

सआदित्येनज्योतिषाभातिचतपतिचभातिचतपतिचकीर्त्यायशसाब्रह्मवर्चसेनयएवंवेदश्रो
त्रमेवब्रह्मणश्चतुर्थःपादःसदिग्भिर्ज्योतिषाभातिचतपतिचभातिचतपतिचकीर्त्यायशसाब्रह्म
वर्चसेनयएवंवेदयएवंवेद ॥ १८॥ आदित्योब्रह्मेत्यादेशस्तस्योपव्याख्यानमसदेवेदमग्रआसी
त्तत्सदासीत्तत्समभवत्तदांडंनिरवर्ततत्संवत्सरस्यमात्रामशयततन्निरभिद्यतते आंडकपालेर
जतंचसुवर्णंचाभवतांतद्यद्रजतंसेयंपृथिवीयत्सुवर्णंसाद्यौर्यज्जरायुतेपर्वतायदुल्बंसमेघोनीहा
रोयाधमनयस्तानद्योयद्वास्तेयमुदकंससमुद्रोथयत्तदजायतसोसावादित्यस्तंजायमानंघोषा
उलूलवोनूदतिष्ठन्त्सर्वाणिचभूतानिसर्वेचकामास्तस्मात्तस्योदयंप्रतिप्रत्यायनंप्रतिघोषाउलूल
वोनूत्तिष्ठंतिसर्वाणिचभूतानिसर्वेचकामाःसयएतदेवंविद्वानादित्यंब्रह्मेत्युपास्तेभ्याशोहयदे
नंसाधवोघोषाआचगच्छेयुरुपचनिम्रेडेरन्निम्रेडेरन् ॥ १९ ॥ इतिश्रीमच्छांदोग्योपनिष
दितृतीयोऽध्यायः ॥ ३ ॥

नम् ॥ ब्रह्मोपासीतपरमंसर्ववेदज्ञतानतद्इतिब्रह्मतत्त्वे ॥ उलूलवउत्सवः ॥ अतिमहान्तोगायत्र्यादिघोषाः
उपचनिम्रेडेरन् ॥ मुक्तेतस्मिन्नेववसेयुः ॥ सूर्यबिंबस्थितेविष्णौजायमानेपरात्मनि ॥ गायत्रीपूर्वकेर्वेदैर्ब्र
ह्माद्यास्समुपस्थिताः॥उपतिष्ठंत्यतोनित्यंगायत्र्यादिभिरंजसा॥तद्विद्वान्मुक्तआवासोवेदानांसर्वदाभवेदिति
च॥ १९॥ ॥इतिश्रीमदानंदतीर्थभगवत्पादाचार्यविरचितेश्रीमच्छांदोग्योपनिषद्भाष्येतृतीयोऽध्यायः॥ ३॥

हरिः ॐ ॥ भल्लाक्षमंदाक्ष ॥ यथाकृतेजितेत्रेतादिजयफलंचतस्यैवभवतिएवमन्येषांपुण्यफलंप्राधान्येन

ॐजानश्रुतिर्हपौत्रायणःश्रद्धादेयोबहुदायीबहुपाक्यआससहसर्वतआवसथान्मापयांचक्रे
सर्वतएवमेऽत्स्यंतीत्यथहहंसानिशायामतिपेतुस्तद्धैवंहंसोहंसमभ्युवादहोहोयिभल्ला
क्षभल्लाक्षजानश्रुतेःपौत्रायणस्यसमंदिवाज्योतिराततंतन्मापसांक्षीस्तत्त्वामाप्रधाक्षीरितित
मुहपरःप्रत्युवाचकम्वरएनमेतत्संतंसयुग्वानमिवरैक्कमात्थेतियोनुकथंसयुग्वारैक्कइतियथाकृ
तायविजितायाधरेयाःसंयंत्येवमेनंसर्वंतदभिसमेतियत्किंचप्रजाःसाधुकुर्वंतियस्तद्वेदयत्स
वेदसमयैतदुक्तइतितदुजानश्रुतिःपौत्रायणउपशुश्रावसहसंजिहानएवक्षत्तारमुवाचांगारेहसयु
ग्वानमिवरैक्कमात्थेतियोनुकथंसयुग्वारैक्कइतियथाकृतायविजितायाधरेयाःसंयंत्येवमेनंसर्वं
तदभिसमेतियत्किंचप्रजाःसाधुकुर्वंतियस्तद्वेदयत्सवेदसमयैतदुक्तइतिसहक्षत्तान्विष्यनाविद
मितिप्रत्येयायतंसहोवाचयत्रारेब्राह्मणस्यान्वेषणातदेनमृच्छेतिसोधस्ताच्छकटस्यपामानं
कषमाणमुपोपविवेशतंहाभ्युवादत्वंनुभगवःसयुग्वारैक्कइत्यहंह्यरा३इतिप्रतिहजज्ञेसहक्षत्ता
न्विष्याविदमितिप्रत्येयाय॥१॥तदुहजानश्रुतिःपौत्रायणःषट्शतानिगवांनिष्कमश्वतरीरथंत
दादायप्रतिचक्रमेतंहाभ्युवादरैक्केमानिषट्शतानिगवामयंनिष्कोयमश्वतरीरथोनुमएतांभगवो
देवतांशाधियांदेवतामुपास्सइतितमुहपरःप्रत्युवाचाहहारेत्वाशूद्रतवैवसहगोभिरस्त्वितितदुह

तस्यैवभवति ॥ अरेअंगइष्टसयुग्वारैक्कोज्ञातव्यः ॥ अहंह्यरा३इतिप्लुतिःपामकषणभावेन ॥ १ ॥ शुचा
द्रवणाच्छूद्रः ॥ राजापौत्रायणःशोकाच्छूद्रेतिमुनिनोदितः ॥ प्राणविद्यामवाप्यास्मात्परंधर्ममवाप्तवानि

तिपाद्ये ॥ २ ॥ संवृक्तेसर्वदेवान्यद्वायुःसंवर्गईरितः ॥ महिमास्यमहानेषयदनद्योक्तिदेवताइतिप्रभंजने ॥
दशेतिवैसर्वमितिश्रुतेः ॥ कृतस्यचपूर्णात्मकत्वादध्यात्माधिदैवतभेदेनपंचदेवतादशभूताःकृतम् ॥ तस्मा

पुनरेवजानश्रुतिःपौत्रायणःसहस्रंगवांनिष्कमश्वतरीरथंदुहितरंतदादायप्रतिचक्रमेतंहाभ्यु
वादरैक्वेदंसहस्रंगवामयंनिष्कोयमश्वतरीरथइयंजायायंग्रामोयस्मिन्नास्सेन्वेवमाभगवःशा
धीतितस्याहमुखमुपोद्गृह्णन्नुवाचाजहारेमाःशूद्रानेनैवमुखेनालापयिष्यथाइतितेहैतेरैक्वपर्णा
नाममहावृषेषुयत्रास्माउवासतस्मैहोवाच ॥ २ ॥ वायुर्वावसंवर्गोयदावामहाप्रलयेअग्निरु
द्वायतिवायुमेवाप्येतियदासूर्योस्तमेतिवायुमेवाप्येतियदाचंद्रोस्तमेतिवायुमेवाप्येतियदाऽऽ
पउच्छुष्यंतिवायुमेवापियंतिवायुर्ह्येवैतान्सर्वान्संवृंक्तइत्यधिदैवतमथाध्यात्मंप्राणोवावसंव
र्गःसयदास्वपितिप्राणमेववागप्येतिप्राणंचक्षुःप्राणंश्रोत्रंप्राणंमनःप्राणोह्येवैतान्सर्वान्संवृंक्त
इतितौवाएतौद्वौसंवर्गौवायुरेवदेवेषुप्राणःप्राणेष्वथहशौनकंचकापेयमभिप्रतारिणंचकाक्षसेनिंप
रिविष्यमाणौब्रह्मचारीविभिक्षेतस्माउहनददतुःसहोवाचमहात्मनश्चतुरोदेवएकःकःसोजगारभु
वनस्यगोपास्तंकापेयनाभिपश्यंतिमर्त्याअभिप्रतारिन्बहुधावसंतंयस्मैवाएतदन्नंतस्माएतन्नद
त्तमितितदुहशौनकःकापेयःप्रतिमन्वानःप्रत्येयायात्मादेवानांजनिताप्रजानांहिरण्यदंष्ट्रो
बभसोनसूरिर्महांतमस्यमहिमानमाहुरनद्यमानोयदनन्नमत्तीतिवैवयंब्रह्मचारिन्निदमुपास्महे

द्वायुनासहदशसंख्यापूरणात्सर्वदिक्षुस्थितादेवतावायुनासहान्नमेव ॥ अन्नादीदेवताविराड्विष्णुरेव ॥ अन
द्यमानइत्यन्यैरनद्यमानः ॥ वायुस्तुसर्वदेवात्तावायोरत्ताजनार्दनः ॥ नतस्यकश्चिदत्तास्तिसविराडधिरा

जनादितिच ॥ ३ ॥ आर्जवंब्राह्मणेसाक्षाच्छूद्रोऽनार्जवलक्षणः ॥ गौतमस्त्वितिविज्ञायसत्यकाममुपान



दत्तास्मैभिक्षामितितस्माउहददुस्तेवाएतेपंचान्येदशसंतस्तत्कृतंतस्मात्सर्वासुदिक्ष्वन्नमेवद
शकृत ँ सैषाविराडन्नादीतयेद ँ सर्वंदृष्ट ँ सर्वमस्येदंदृष्टंभवत्यन्नादोभवतियएवंवेदयएवंवेद
॥ ३ ॥ सत्यकामोहजाबालोजाबालांमातरमामंत्रयांचक्रेब्रह्मचर्यंभवतिवत्स्यामिकिंगो
त्रोन्वहमस्मीतिसाहैनमुवाचनाहमेतद्वेदतातयद्गोत्रस्त्वमसिबह्वहंचरंतीपरिचारिणीयौवनेत्वा
मलभेसाहमेतन्नवेदयद्गोत्रस्त्वमसिजाबालातुनामाहमस्मिसत्यकामोनामत्वमसिससत्यकामो
जाबालोब्रवीथाइतिसहहारिद्रुमतंगौतममेत्योवाचब्रह्मचर्यंभगवतिवत्स्याम्युपेयांभगवंतमि
तित ँ होवाचकिंगोत्रोनुसोम्यासीतिसहोवाचनाहमेतद्वेदभोयद्गोत्रोहमस्म्यपृच्छंमातर ँ सामा
प्रत्यब्रवीद्बह्वहंचरंतीपरिचारिणीयौवनेत्वामलभेसाहमेतन्नवेदयद्गोत्रस्त्वमसिजाबालातुनामाह
मस्मिसत्यकामोनामत्वमसीतिसोहंसत्यकामोजाबालोस्मिभोइतित ँ होवाचनैतदब्राह्मणोविव
क्तुमर्हतिसमिध ँ सोम्याऽऽहरोपत्वानेष्येनसत्यादगाइतितमुपनीयकृशानामबलानांचतुःशता
गानिराकृत्योवाचेमाःसोम्यानुसंव्रजेतिताअभिप्रस्थापयन्नुवाचनासहस्रेणावर्तयेतिसहवर्षग
णंप्रोवासतायदासहस्र ँ संपेदुः ॥ ४ ॥ अथहैनमृषभोभ्युवादसत्यकामा३इतिभगवइतिहप्र 
तिशुश्रावप्राप्ताःसोम्यसहस्र ँ स्मःप्रापयनआचार्यकुलंब्रह्मणश्चतेपादंब्रवाणीतिब्रवीतुमेभग
वानितितस्मैहोवाचप्राचीदिक्कलाप्रतीचीदिक्कलादक्षिणादिक्कलोदीचीदिक्कलैषवैसोम्यचतु

ष्कलःपादोब्रह्मणःप्रकाशवान्नामसयएतमेवंविद्वांश्चतुष्कलंपादंब्रह्मणःप्रकाशवानित्युपास्ते
प्रकाशवानस्मिँल्लोकेभवतिप्रकाशवतोहलोकाञ्जयतियएतमेवंविद्वांश्चतुष्कलंपादंब्रह्मणःप्र
काशवानित्युपास्ते ॥ ५ ॥ अग्निष्टेपादंवक्तेतिसहश्वोभूतेगाअभिप्रस्थापयांचकारतायत्रा
भिसायंबभूवुस्तत्राग्निमुपसमाधायगाउपरुध्यसमिधमाधायपश्चादग्नेःप्राङुपोपविवेशतमग्निर
भ्युवादसत्यकामा३इतिभगवइतिहप्रतिशुश्रावब्रह्मणःसोम्यतेपादंब्रवाणीतिब्रवीतुमेभगवा
नितितस्मैहोवाचपृथिवीकलांतरिक्षंकलाद्यौःकलासमुद्रःकलैषवैसोम्यचतुष्कलःपादोब्रह्मणो
नंतवान्नामसयएतमेवंविद्वांश्चतुष्कलंपादंब्रह्मणोनंतवानित्युपास्तेनंतवानस्मिँल्लोकेभवत्यनंत
वतोहलोकाञ्जयतियएतमेवंविद्वांश्चतुष्कलंपादंब्रह्मणोनंतवानित्युपास्ते ॥ ६ ॥ हंसस्ते
पादंवक्तेतिसहश्वोभूतेगाअभिप्रस्थापयांचकारतायत्राभिसायंबभूवुस्तत्राग्निमुपसमाधायगा
उपरुध्यसमिधमाधायपश्चादग्नेःप्राङुपोपविवेशतंहंसउपनिपत्याभ्युवादसत्यकामा३इतिभ
गवइतिहप्रतिशुश्रावब्रह्मणःसोम्यतेपादंब्रवाणीतिब्रवीतुमेभगवानितितस्मैहोवाचाग्निःकला
सूर्यःकलाचंद्रःकलाविद्युत्कलैषवैसोम्यचतुष्कलःपादोब्रह्मणोज्योतिष्मान्नामसयएतमेवंविद्वां
श्चतुष्कलंपादंब्रह्मणोज्योतिष्मानित्युपास्तेज्योतिष्मानस्मिँल्लोकेभवतिज्योतिष्मतोहलो
काञ्जयतियएतमेवंविद्वांश्चतुष्कलंपादंब्रह्मणोज्योतिष्मानित्युपास्ते ॥ ७ ॥ मद्गुष्टेपादंवक्ते
तिसहश्वोभूतेगाअभिप्रस्थापयांचकारतायत्राभिसायंबभूवुस्तत्राग्निमुपसमाधायगाउपरुध्य
समिधमाधायपश्चादग्नेःप्राङुपोपविवेशतंमद्गुरुपनिपत्याभ्युवादसत्यकामा३इतिभगवइतिहप्र

यदितिसामसंहितायाम् ॥ ४ ॥ वायुर्वृषभरूपःसन्अग्निर्हंसश्चतुर्मुखः ॥ मद्गुरूपश्चवरुणःसत्यकामायहो
चिरे ॥ प्रकाशानंततेजोवत्स्थानवत्संज्ञिकाहरेः ॥ वासुदेवादिकामूर्तीःप्रत्येकंचतुरात्मनः ॥ दिगादिषुस्थि
तास्तेषामधिपाश्चतदाख्यकाः ॥ नाचार्यबुद्ध्यातैरुक्तमतोनुज्ञांगुरोरगात् ॥ उत्तमाचार्यसंप्राप्त्यैनावराचा
र्यतःक्वचित् ॥ इच्छेदनुज्ञांश्रुत्वापिनानुज्ञांप्रार्थयेत्ततः ॥ ऋषिभ्यस्तूत्तमादेवादेवेभ्योवायुरुत्तमः ॥ वा

तिशुश्रावब्रह्मणःसोम्यतेपादंब्रवाणीतिब्रवीतुमेभगवानितितस्मैहोवाचप्राणःकलाचक्षुःकला
श्रोत्रंकलामनःकलैषवैसोम्यचतुष्कलःपादोब्रह्मणआयतनवान्नामसयएतमेवंविद्वांश्चतुष्क
लंपादंब्रह्मणआयतनवानित्युपास्तआयतनवानस्मिँल्लोकेभवत्यायतनवतोहलोकाञ्जयतिय
एतमेवंविद्वांश्चतुष्कलंपादंब्रह्मणआयतनवानित्युपास्ते ॥ ८ ॥ प्रापहाचार्यकुलंतमाचार्यो
भ्युवादसत्यकामा३इतिभगवइतिहप्रतिशुश्रावब्रह्मविदिववैसोम्यभासिकोनुत्वानुशशासेत्य
न्येमनुष्येभ्यइतिहप्रतिजज्ञेभगवांस्त्वेवमेकामेब्रूयाच्छ्रुतंह्येवमेभगवद्दृशेभ्यआचार्याद्धैव
विद्याविदितासाधिष्ठंप्रापयतीतितस्मैहैतदेवोवाचात्रहनकिंचनवीयायेतिवीयायेति ॥ ९ ॥
उपकोसलोहवैकामलायनःसत्यकामेजाबालेब्रह्मचर्यमुवासतस्यहद्वादशवर्षाण्यग्नीन्परिचचा
रसहस्माअन्यानंतेवासिनःसमावर्तयंस्तंहस्मैवनसमावर्तयतितंजायोवाचतप्तोब्रह्मचारीकु

योश्चभगवान्विष्णुर्नतस्मादुत्तमोगुरुरित्याचार्यसंहितायाम् ॥ अत्रहनकिंचनवीयायदेवेभ्यःश्रुत्वानच
तेकाचिद्धानिरभवदित्यर्थः ॥ ९ ॥ प्राणोब्रह्मबलरूपंब्रह्मकमानंदरूपंखंज्ञानरूपम् ॥ अपरंब्रह्मसप्राणः
साक्षाद्योबलदेवता ॥ ज्ञानानंदात्मकंपूर्णपरंब्रह्मस्वयंहरिः ॥ नैजानंदबलोद्रेकःकमित्युक्तोमनीषिभिः ॥

बलज्ञानसमाहारःपूर्णःस्वमितिशब्दितः ॥ तदात्मकःपरोविष्णुराकाशइतिकीर्तितः ॥ एवंप्राणस्तथा
काशोब्रह्मणीद्वेप्रकीर्तितेइतिच ॥ प्राणशब्दस्यवायुरर्थःप्रसिद्धः ॥ कखयोर्भिन्नार्थत्वशंकयाकंच

शलमग्नीन्परिचचारीन्मात्वाग्नयःपरिप्रवोचन्प्रब्रूह्यस्माइतितस्मैहाप्रोच्यैवप्रवासांचक्रेसहव्या
धिनानशितुंदध्रेतमाचार्यजायोवाचब्रह्मचारिन्नशानकिंनुनाश्नासीतिसहोवाचबहवइमेस्मिन्पु
रुषेकामानानात्ययाव्याधिभिःप्रतिपूर्णोस्मिनाशिष्यामीत्यथहाग्नयःसमूदिरेतप्तोब्रह्मचारीकु
शलंनःपरिचचारीहंतास्मैप्रब्रवामेतितस्मैहोचुःप्राणोब्रह्मकंब्रह्मखंब्रह्मेतिसहोवाचविजाना
म्यहंयत्प्राणोब्रह्मकंचतुखंचनविजानामीतितेहोचुर्यद्वावकंतदेवखंयदेवखंतदेवकमितिप्राणं
चहास्मैतदाकाशंचोचुः ॥ १० ॥ अथहैनंगार्हपत्योनुशशासपृथिव्यग्निरन्नमादित्यइतिय
एषआदित्येपुरुषोदृश्यतेसोहमस्मिसएवाहमस्मीतिसयएतमेवंविद्वानुपास्तेपहतेपापकृत्यांल्लो
कीभवतिसर्वमायुरेतिज्योग्जीवतिनास्यावरपुरुषाःक्षीयंतउपवयंतंभुंजामोस्मिंश्चलोकेमुष्मिं
श्चयएतमेवंविद्वानुपास्ते ॥ ११ ॥ अथहैनमन्वाहार्यपचनोनुशशासापोदिशोनक्षत्राणिचंद्र
माइतियएषचंद्रमसिपुरुषोदृश्यतेसोहमस्मिसएवाहमस्मीतिसयएतमेवंविद्वानुपास्तेपहतेपाप
कृत्यांल्लोक[illegible]तिसर्वमायुरेतिज्योग्जीवतिनास्यावरपुरुषाःक्षीयंतउपवयंतंभुंजामोस्मिंश्चलो
केऽमुष्मिंश्चयएतमेवंविद्वानुपास्ते ॥ १२ ॥ अथहैनमाहवनीयोनुशशासप्राणआकाशो

खंचनविजानामीत्याह ॥ अतएवैक्याभिप्रायेणयद्वावकंतदेवखंतदेवमित्यूचुः ॥ १० ॥ पृथुत्वा
त्पृथिवीविष्णुरग्निश्चाप्यंगनेतृतः ॥ अन्नमत्तृत्वतोनित्यमादित्यश्चादिरूपतः ॥ आपआपालनाच्चैवदेश

नाद्दिशएवच ॥ अनन्यराजोनक्षत्रमानंदत्वाच्चचंद्रमाः ॥ प्राणोसौबलरूपत्वादाकाशःपूर्तिहेतुतः ॥
द्यौःप्रकाशस्वरूपत्वाद्वेदनाद्विद्युदेवच ॥ यःसोमसूर्यविद्युत्सुतत्तन्नामाहरिःपरः ॥ अहेयत्वादहंनामा
गार्हपत्यादिसंस्थितइतितत्त्वसंहितायाम् ॥ जीवैक्यपक्षेआदित्येपुरुषंचंद्रमसिविद्युतीतिभेदव्यपदेशोन
युज्यते ॥ पृथिव्यग्निरन्नमादित्यआदित्येपुरुषइत्यादिनाआदित्यादिशब्दवाच्यौप्रथमार्थःसप्तम्यर्थश्च
द्वौप्रतीयेते ॥ [illegible]नैक्यमुच्यते ॥ सहेवाहमस्मीत्यंतर्यामिणोःसर्वविशेषाभावज्ञापनार्थम् ॥ पूर्वसो

द्यौर्विद्युदितियएषविद्युतिपुरुषोदृश्यतेसोहमस्मिसएवाहमस्मीतिसयएतमेवंविद्वानुपास्ते
पहतेपापकृत्यांल्लोकीभवतिसर्वमायुरेतिज्योग्जीवतिनास्यावरपुरुषाःक्षीयंतउपवयंतंभुंजामो
स्मिंश्चलोकेमुष्मिंश्चयएतमेवंविद्वानुपास्ते ॥ १३ ॥ तेहोचुरुपकोसलैषासोम्यतेस्मद्विद्यात्म
विद्याचाचार्यस्तुतेगतिंवक्तेत्याजगामहास्याचार्यस्तमाचार्योभ्युवादोपकोसला२इतिभगवइ
तिहप्रतिशुश्रावब्रह्मविदइवसोम्यतेमुखंभातिकोनुत्वानुशशासेतिकोनुमानुशिष्याद्भोइतीहावे
वनिह्नुतइमेनूनमीदृशाअन्यादृशाइतीहाग्नीनभ्यूदेकिंनुसोम्यकिलतेऽवोचन्नितीदमितिहप्र
तिजज्ञेलोकान्वावकिलसोम्यतेऽवोचन्नहंतुतेतद्वक्ष्यामियथापुष्करपलाशआपोनश्लिष्यंत

हमस्मीत्यभेदेतात्पर्याधिक्यज्ञापनाय ॥ अहमस्म्यादिकाःशब्दाअंतर्यामिणिमुख्यतः ॥ तत्संबंधाज्जी
वगाश्चतस्माद्भेदगताहरौ ॥ अस्मच्छब्दोदितोंतःस्थआत्माव्याप्तोजनार्दनः ॥ अग्नयोद्विविधंविष्णुम
वोचन्नुपकोसलइतिसामसंहितायाम् ॥ नास्यापरपुरुषाःक्षीयंतेभृत्यवानेवभवतिलोकीभगवल्लोकीभव
ति ॥ इहचअवचइहावे ॥ इहेतिमनुष्यलोकस्थाउच्यंतेअवेतिपातालस्थाः ॥ मानुषासुरौभगवंतंनिह्नु

तएवनवक्तुंसमर्थौ ॥ अतोदेवाएवमामनुशासुरित्यर्थः ॥ ईदृशाइतिवर्णतोज्वालावर्णादिति ॥ अन्यादृशा
श्वकरशिरश्चरणादिमंतः ॥ चंद्रादिसर्वनामवत्त्वात् ॥ योदेवानांनामधाएकएवेतिश्रुतेर्विष्णोरेवसर्वनामा
नि ॥ १४ ॥ असंगभगवत्स्थानत्वाच्चक्षुषोसंगत्वमुच्यते ॥ यत्स्थानत्वादिदंचक्षुरसंगंसर्ववस्तुषु ॥ तस्मै
नमोभगवतेवामनायपरात्मनइतिमहाकौर्मे ॥ इमंमानवमावर्तंनावर्तंते ॥ मानवायत्रावर्तंतेसमानवावर्तः॥

एवमेवंविदिपापंकर्मनश्लिष्यतइतिब्रवीतुमेभगवानितितस्मैहोवाच॥ १४॥ यएषोंतरक्षिणिपु
रुषोदृश्यतेएषआत्मेतिहोवाचैतदमृतमभयमेतद्ब्रह्मेतस्मिन्नकिंचनश्लिष्यतितद्यद्यप्यस्मिन्त्स
र्पिर्वोदकंवासिंचतिवर्त्मनीएवगच्छत्येतःसंयद्वामइत्याचक्षतएतःहिसर्वाणिवामान्यभिसंयं
तिसर्वाण्येनंवामान्यभिसंयंतियएवंवेदैषएववामनीरेषहिसर्वाणिवामानिनयतिसर्वाणिवामा
निनयतियएवंवेदैषउएवभामनीरेषहिसर्वेषुलोकेषुभातिसर्वेषुलोकेषुभातियएवंवेदाथयदुचै
वास्मिञ्छव्यंकुर्वंतियदुचनार्चिषमेवाभिसंभवंत्यर्चिषोहरह्नआपूर्यमाणपक्षमापूर्यमाणपक्षा
द्यान्षडुदङ्केतिमासाःस्तान्मासेभ्यःसंवत्सरःसंवत्सरादादित्यमादित्याच्चंद्रमसंचंद्रमसोविद्युतं
तत्पुरुषोमानवःसएनान्ब्रह्मगमयत्येषदेवपथोब्रह्मपथएतेनगखलुप्रतिपद्यमानाइमंमानवमावर्तं
नावर्तंतेनावर्तंते ॥ १५ ॥ एषहवैयज्ञोयोयंपवतएषयन्निदःसर्वंपुनातियदेषयन्निदःसर्वंपु

तंमानवावर्तंप्रतिनावर्तंते ॥ चक्षुस्थंवामनंवेदसपुनर्नैवजायते ॥ मुक्तोदुस्तरसंसाराद्वामनंप्राप्नुतेचिरादिति
च ॥ १५ ॥ यज्ञाभिमानीयज्ञाख्योवायुर्यज्ञेप्रतिष्ठितः ॥ ज्ञशुद्धभावइत्यस्माद्यन्नयंपावयेद्यतः ॥ अतो
वायुर्यज्ञनामातत्पादौवाङ्मनःस्थितौ ॥ दक्षिणोस्यमनःसंस्थोब्रह्मार्त्विक्तस्यपूजकः ॥ होत्राद्यावाचिसं

स्थस्यवामपादस्यपूजकाः ॥ तस्मात्प्रातरनूवाकपरिधान्योर्यदंतरा ॥ ब्रह्माचेदुत्सृजेद्वाचंयज्ञपाल्लोपक
द्भवेत् ॥ वाङ्मनःपादयज्ञाख्यप्रतिमोवायुरीरितः ॥ ध्यायन्वायुंहरिंचैवततोब्रह्मामुनिर्भवेत् ॥ १६ ॥

नाितितस्मादेषएवयज्ञस्तस्यमनश्चवाक्चवर्तनीतयोरन्यतरांमनसासंस्करोतिब्रह्मावाचाहोता
ध्वर्युरुद्गातान्यतरांसयत्रोपाकृतेप्रातरनुवाकेपुरापरिधानीयायाब्रह्माव्यवदत्यन्यतरामेववर्त
नींसंस्कुर्वंतिहीयतेन्यतरासयथैकपाद्व्रजन्रथोवैकेनचक्रेणवर्तमानोरिष्यत्येवमस्ययज्ञोरिष्य
तियज्ञंरिष्यंतंयजमानोनुरिष्यतिसइष्ट्वापापीयान्भवत्यथयत्रोपाकृतेप्रातरनुवाकेनपुरापरि
धानीयायाब्रह्माव्यवदत्युभेएववर्तनीसंस्कुर्वंतिनहीयतेन्यतरासयथोभयपाद्व्रजन्रथोवोभा
भ्यांचक्राभ्यांवर्तमानःप्रतितिष्ठत्येवमस्ययज्ञःप्रतितिष्ठतियज्ञंप्रतितिष्ठंतंयजमानोनुप्रतिति
ष्ठतिसइष्ट्वाश्रेयान्भवति ॥ १६ ॥ प्रजापतिर्लोकानभ्यतपत्तेषांतप्यमानानांरसान्प्राबृहद
ग्निंपृथिव्यावायुमंतरिक्षादादित्यंदिवःसएतास्तिस्रोदेवताअभ्यतपत्तासांतप्यमानानांरसा
न्प्राबृहदग्नेर्ऋचोवायोर्यजूंषिसामान्यादित्यात्सएतांत्रयींविद्यामभ्यतपत्तस्यास्तप्यमाना
यारसान्प्राबृहद्भूरित्यृग्भ्योभुवइतियजुर्भ्यःस्वरितिसामभ्यस्तद्यदृक्तोरिष्येद्भूःस्वाहेतिगार्हप
त्येजुहुयादृचामेनतद्रसेनर्चांवीर्येणर्चांयज्ञस्यविरिष्टंसंदधात्यथयदियजुष्टोरिष्येद्भुवःस्वाहेति
दक्षिणाग्नौजुहुयाद्यजुषामेवतद्रसेनयजुषांवीर्येणयजुषांयज्ञस्यविरिष्टंसंदधात्यथयदिसाम

अग्निर्नासिक्यवायुश्चसूर्योलोकरसास्त्रयः ॥ अग्नेरसस्तुऋग्वेदमानीब्रह्माप्रकीर्तितः ॥ नासिक्यवायोस्तु
रसोयजुर्वेदात्मकोहरः ॥ सामवेदाभिमानीतुवायुःसूर्यरसःस्मृतः ॥ वराहसिंहकपिलास्तेषांभूरादिनाम

काः ॥ व्याहृतीभिस्ततोजुह्वन्ब्रह्मैवंविद्धुरिष्टितः ॥ सर्वान्सऋत्विजोरक्षेद्ब्रह्मैवंवित्ततोभवेदितिच ॥ उद
क्प्रवणः ऊर्ध्वप्रवणऊर्ध्वलोकानुसारी ॥ यज्ञस्यदुरिष्ट्यायतोयतःस्थानादावर्ततेतत्तत्स्थानमेवंविदाब्रह्म
णागच्छति ॥ तद्ब्रह्मैवैकर्त्विक्कुरून्कर्तॄन्यजमानादीनभिरक्षति ॥ अश्वाआशुज्ञानी ॥ वागतिगंधनयोरि

तोरिष्येत्स्वःस्वाहेत्याहवनीयेजुहुयात्साम्नामेवतद्रसेनसाम्नांवीर्येणसाम्नांयज्ञस्यविरिष्टꣳसंद
धातितद्यथालवणेनसुवर्णꣳसंदध्यात्सुवर्णेनरजतꣳरजतेनत्रपुत्रपुणासीसꣳसीसेनलोहंलोहेन
दारुदारुचर्मणैवमेषांलोकानामासांदेवतानामस्यास्त्रय्याविद्यायावीर्येणयज्ञस्यविरिष्टꣳसंदधा
तिभेषजकृतोहवाएषयज्ञोयत्रैवंविद्ब्रह्माभवत्येषहवाउदक्प्रवणोयज्ञोयत्रैवंविदꣳहवाएषाब्र
ह्माणमनुगाथायतोयतआवर्ततेतत्तद्गच्छतिमानवोब्रह्मैवैकर्त्विक्कुरूनश्वाभिरक्षत्येवंविद्धवैब्र
ह्मायज्ञंयजमानꣳसर्वाꣳश्चर्त्विजोभिरक्षतितस्मादेवंविदमेवब्रह्माणंकुर्वीतनानेवंविदंनानेवंविद
म् ॥ १७ ॥ इतिश्रीमच्छांदोग्योपनिषदिचतुर्थोऽध्यायः ॥ ४ ॥

तिधातोः ॥ गतिशब्दश्चावगतोभवति ॥ दीर्घबिंदुविसर्गादीनांलोपोवेतिसूत्रादाशुवेवाश्वा ॥ इतिश्रीमं
दानंदतीर्थभगवत्पादाचार्यविरचितेश्रीमच्छांदोग्योपनिषद्भाष्येचतुर्थोऽध्यायः ॥ ४ ॥

हरिः ॐ ॥ यःश्रेष्ठंज्येष्ठमखिलदेवानांवायुमंजसा ॥ वेदसस्वसमानानांज्येष्ठःश्रेष्ठोविमुक्तिगः ॥ स
मीपेवसतांश्रेष्ठोवसिष्ठस्यैववेदनात् ॥ एकस्थानेस्थितिस्तुस्यात्प्रतिष्ठाज्ञस्यचेच्छतः ॥ संपद्वेत्तुःसंपदःस्यु



हरिःॐ ॥ योहवैज्येष्ठंचश्रेष्ठंचवेदज्येष्ठश्चहवैश्रेष्ठश्चभवतिप्राणोवावज्येष्ठश्चश्रेष्ठश्चयोहवैव
सिष्ठंवेदवसिष्ठोहस्वानांभवतिवाग्वाववसिष्ठोयोहवैप्रतिष्ठांवेदप्रतिहतिष्ठत्यस्मिंश्चलोकेमुष्मिं
श्चचक्षुर्वावप्रतिष्ठायोहवैसंपदंवेदसंहास्मैकामाःसंपद्यंतेदैवाश्चमानुषाश्चश्रोत्रंवावसंपद्योह
वाआयतनंवेदायतनंहस्वानांभवतिमनोहवाआयतनमथहप्राणअहंश्रेयसिव्यूदिरेऽहं
श्रेयानस्म्यहंश्रेयानस्मीतितेहप्राणाःप्रजापतिंपितरमेत्योचुर्भगवन्कोनःश्रेष्ठइतितान्होवा
चयस्मिन्वउत्क्रांतेशरीरंपापिष्ठतरमिवदृश्येतसवःश्रेष्ठइतिसाहवागुच्चक्रामसासंवत्सरंप्रोष्यपर्यै
त्योवाचकथमशकततेमज्जीवितुमितियथाऽकलाअवदंतःप्राणंतःप्राणेनपश्यंतश्चक्षुषाशृण्वंतः
श्रोत्रेणध्यायंतोमनसैवमितिप्रविवेशहवाक्चक्षुर्होच्चक्रामतत्संवत्सरंप्रोष्यपर्यैत्योवाचकथमश
कततेमज्जीवितुमितियथांधाअपश्यंतःप्राणंतःप्राणेनवदंतोवाचाशृण्वंतःश्रोत्रेणध्यायंतोमन
सैवमितिप्रविवेशहचक्षुःश्रोत्रंहोच्चक्रामतत्संवत्सरंप्रोष्यपर्यैत्योवाचकथमशकततेमज्जीवितु
मितियथाबधिराअशृण्वंतःप्राणंतःप्राणेनवदंतोवाचापश्यंतश्चक्षुषाध्यायंतोमनसैवमितिप्रवि
वेशहश्रोत्रंमनोहोच्चक्रामतत्संवत्सरंप्रोष्यपर्यैत्योवाचकथमशकततेमज्जीवितुमितियथाबा



र्हंचायतनंविदः ॥ ज्येष्ठःश्रेष्ठोवसिष्ठश्चसंपदायतनंतथा ॥ वायुरेवमहांस्तस्यप्रसादादग्निरेवतु ॥ उपचा
रतोवसिष्ठःस्यात्प्रतिष्ठेवंरविस्ततः ॥ संपदिंद्रस्तथैवोक्तोरुद्रआयतनंतथेतिप्रभावे ॥ सर्वेंद्रियाणांव्या

पारान्प्राणएवकरोत्ययम् ॥ इंद्रियस्थःपृथक्कासौशक्तोपिस्वयमेवतु ॥ षण्मासात्पूर्वंबालानांकेवलं प्राणतोभवेत् ॥ व्यापार्यंमनसासर्वमतःपश्चादसंस्मृतिः ॥ तुरीयायामवस्थायांप्राणादेवविबोधनम् ॥ तथापिसंस्मृतिस्तत्रप्राणवश्यतयाभवेत् ॥ प्राणस्यवश्यतानामभक्त्यास्यात्तत्प्रसादतः ॥ प्राणेवश्येमनोवश्यमिंद्रियाणिचसर्वशइतिच ॥ अक्षेषुप्रतिप्रतिस्थितत्वादनःप्रत्यक्षम् ॥ प्राणविज्ञानयोग्यस्तुरुद्रोमुख्य

त्वाअमनसःप्राणंतःप्राणेनवदंतोवाचापश्यंतश्चक्षुषाशृण्वंतःश्रोत्रेणैवमितिप्रविवेशहमनोथह प्राणउच्चक्रमिषन्त्सयथासुहयःपड्वीशशंकून्त्संखिदेदेवमितरान्प्राणान्त्समखिदत्तंहाभिसमेत्योचुर्भगवन्नेधित्वन्नःश्रेष्ठोसिमोत्क्रमीरित्यथहैनंवागुवाचयदहंवसिष्ठास्मित्वंतद्वसिष्ठोसीत्यथहैनंचक्षुरुवाचयदहंप्रतिष्ठास्मित्वंतत्प्रतिष्ठोसीत्यथहैनंश्रोत्रमुवाचयदहंसंपदस्मित्वंतत्संपदसीत्यथहैनंमनउवाचयदहमायतनमस्मित्वंतदायतनमसीतिनवैवाचोनचक्षूंषिनश्रोत्राणिनमनांसीत्याचक्षतेप्राणाइत्येवाचक्षतेप्राणोह्येवैतानिसर्वाणिभवति ॥१॥ सहोवाचकिंमेन्नंभविष्यतीतियत्किंचिदिदमाश्वभ्यआशकुनिभ्यइतिहोचुस्तद्वाएतदनस्यान्नमनोहवैनामप्रत्यक्षंनहवाएवंविदिकिंचनानन्नंभवतीतिसहोवाचकिंमेवासोभविष्यतीत्यापइतिहोचुस्तस्माद्वाएत

तयास्मृतः ॥ तस्मात्ससर्वभोक्तास्यात्तदन्येषांस्वयोग्यतइतिच ॥ सिद्धमेवान्नवस्त्राद्यंविष्णोःस्वातंत्र्यतः सदा ॥ स्वार्थंसमर्पयेद्विष्णौयथाप्राणेसुराःपुरेतिकर्मानुपूर्व्याम् ॥ प्राणस्यवस्त्रबुद्ध्यानुभोजनोभयतःपिबन् ॥ स्वर्गेमुक्तौतथादिव्यवस्त्रलाभीभवत्यलमितिप्रभंजने ॥ योग्यस्यप्राणविद्यायांस्थाणोरपिहितच्छ्रुतेः ॥ पलाशाद्यंभवेदत्रपरतोमुक्तिरेवच ॥ विष्णोर्ज्ञानमनुप्राप्यभवेन्नास्यत्रसंशयइतिप्राणसंहिता

याम् ॥ ज्येष्ठश्रेष्ठादिकैर्हुत्वामाणायात्रपरत्रच ॥ ज्येष्ठःश्रेष्ठःसमानेभ्योभवेन्नात्रविचारणेतिच ॥ सवितु
र्जगत्प्रसवितुर्विष्णोःसकाशाद्वयंभोजनरक्षांसर्वभोगांश्ववृणीमहे ॥ भगस्यसमग्रैश्वर्यादिसर्वगुणस्वरूप



दशिष्यंतःपुरस्ताच्चोपरिष्टाच्चाद्भिःपरिदधतिलंभुकोहवासोभवत्यनग्नोहभवतितद्धैतत्सत्यकामो
जाबालोगोश्रुतयेवैयाघ्रपद्यायोक्त्वोवाचयद्यप्येतच्छुष्कायस्थाणवेब्रूयाज्जायेरन्नेवास्मिञ्छा
खाप्ररोहेयुःपलाशानीत्यथयदिमहज्जिगमिषेदमावास्यायांदीक्षित्वापौर्णमास्यांरात्रौसर्वौषध
स्यमंथंदधिमधुनोरुपमथ्यज्येष्ठायश्रेष्ठायस्वाहेत्यग्नावाज्यस्यहुत्वामंथसंपातमवनयेद्वसिष्ठाय
स्वाहेत्यग्नावाज्यस्यहुत्वामंथेसंपातमवनयेत्प्रतिष्ठायैस्वाहेत्यग्नावाज्यस्यहुत्वामंथेसंपातमवनये
त्संपदेस्वाहेत्यग्नावाज्यस्यहुत्वामंथेसंपातमवनयेदायतनायस्वाहेत्यग्नावाज्यस्यहुत्वामंथेसंपा
तमवनयेदथप्रतिसृप्यांजलौमंथमाधायजपत्यमोनामास्यमाहितेसर्वमिदꣳसहिज्येष्ठःश्रेष्ठोरा
जाधिपतिःसमाज्यैष्ठ्यꣳश्रैष्ठ्यꣳराज्यमाधिपत्यंगमयत्वहमेवेदꣳसर्वमसानीत्यथखल्वेतयर्चाप
च्छआचामतितत्सवितुर्वृणीमहइत्याचामतिवयंदेवस्यभोजनमित्याचामतिश्रेष्ठꣳसर्वधातम
मित्याचामतितुरंभगस्यधीमहीतिसर्वंपिबतिनिर्णिज्यकꣳसंचमसंवापश्चादग्नेःसंविशतिचर्मणि
वास्थंडिलेवावाचंयमोप्रसाहःसयदिस्त्रियंपश्येत्समृद्धंकर्मेतिविद्यात्तदेषश्लोकः यदाकर्मसु
काम्येषुस्त्रियꣳस्वप्नेभिपश्यति ॥ समृद्धिंतत्रजानीयात्तस्मिन्स्वप्ननिदर्शनेतस्मिन्स्वप्ननिदर्शो
नइति ॥ २ ॥ श्वेतकेतुर्हारुणेयःपंचालानाꣳसमितिमेयायतꣳहप्रवाहणोजैबलिरुवाचकुमा



स्यविष्णोः ॥ पुरुषंतुरंवायुंश्रेष्ठंसर्वधातॄणामुत्तमंचधीमहि ॥ नारायणीयंतंवायुंचिंतयित्वोत्तमोत्तमम्॥
जगत्प्रसवितुर्विष्णोःसकाशाद्भोगमामुमइतिच ॥ २ ॥ नारायणादयःपंचक्रमात्पंचाग्नयःस्मृताः ॥ अ

रानुत्वाशिषत्पितेत्यनुहिभगवइतिवेत्थयदितोधिप्रजाःप्रयंतीतिनभगवइतिवेत्थयथापुनरावर्तं
ता ॥ २ ॥ इतिनभगवइतिवेत्थपथोर्देवयानस्यपितृयाणस्यचव्यावर्तना ३ इतिनभगवइति
वेत्थयथासौलोकोनसंपूर्यता ३ इतिनभगवइतिवेत्थयथापंचम्यामाहुतावापःपुरुषवचसोभवं
तीतिनैवभगवइत्यथनुकिमनुशिष्टोवोचथायोहीमानिनविद्यात्कथ२सोनुशिष्टोब्रवीतेतिसहाय
स्तःपितुरर्धमेयायत२होवाचाननुशिष्यवावकिलमाभगवानब्रवीदनुत्वाशिषमितिपंचमाराजन्य
बंधुःप्रश्नानप्राक्षीत्तेषांनैकंचनाशकंविवक्तुमितिसहोवाचयथामात्वंतातैतानवदोयथाहमेषांनै
कंचनवेदयद्यहमिमानवेदिष्यंकथंतेनावक्ष्यमितिसहगौतमोराज्ञोर्धमेयायतस्मैहप्राप्तायार्हांच
कारसहप्रातःसभागउदेयायत२होवाचमानुषस्यभगवनूगौतमवित्तस्यवरंवृणीथाइतिसहोवा
चतवैवराजन्मानुषंवित्तंयामेवकुमारस्यांतेवाचमभाषथास्तामेवब्रूहीतिसहकृच्छ्रीबभूवत२ह
चिरंवसेत्याज्ञापयांचकारत२होवाचयथामात्वंगौतमावदोयथेयंनप्राक्त्वत्तःपुराविद्याब्राह्मणा
न्गच्छतितस्मादुसर्वेषुलोकेषुक्षत्रस्यैवप्रशासनमभूदितितस्मैहोवाच ॥७॥ असौवावलोको
गौतमाग्निस्तस्यादित्यएवसमिद्रश्मयोधूमोहरर्चिश्चंद्रमाअंगारानक्षत्राणिविष्फुलिंगास्तस्मि
न्नेतस्मिन्नग्नौदेवाःश्रद्धांजुह्वतितस्याआहुतेःसोमोराजासंभवति ॥ ४ ॥ पर्जन्योवावगौतमा
ग्निस्तस्यवायुरेवसमिदभ्रंधूमोविद्युदर्चिरशनिरंगाराह्रादुनयोविष्फुलिंगास्तस्मिन्नेतस्मिन्नग्नौ
देवास्सोम२राजानंजुह्वतितस्याआहुतेर्वर्षःसंभवति ॥ ५ ॥ पृथिवीवावगौतमाग्निस्तस्याःसं
वत्सरएवसमिदाकाशोधूमोरात्रिरर्चिर्दिशोंगाराअवांतरदिशोविष्फुलिंगास्तस्मिन्नेतस्मिन्नग्नौ

दनादंगनेतृत्वान्नितरामचलत्वतः ॥ समेधनात्समिद्विष्णुर्धूत्काराद्धूमउच्यते ॥ अरंचितत्वादर्चिश्चसोंगा रोंगरतेरपि॥ विविधंस्फुरणाच्चैवविष्फुलिंगइतीरितः॥पुनर्नारायणाद्यात्माप्रत्येकंपंचरूपवान्॥आदित्यरस तथादानाद्रश्मीरतिशरूपतः ॥ तमसाहननीयत्वादहश्चंद्रःपरस्सुखम् ॥ अनन्यराजोनक्षत्रंवायुर्ज्ञानायुरू

देवावर्षंजुह्वतितस्याआहुतेरन्नꣳसंभवति ॥६॥ पुरुषोवावगौतमाग्निस्तस्यवागेवसमित्प्राणो धूमोजिह्वार्चिश्चक्षुरंगाराःश्रोत्रंविष्फुलिंगास्तस्मिन्नेतस्मिन्नग्नौदेवाअन्नंजुह्वतितस्याआहुते रेतःसंभवति॥७॥ योषावावगौतमाग्निस्तस्याउपस्थएवसमिद्यदुपमंत्रयतेसधूमोयोनिरर्चिर्यदं तःकरोतितेंगाराअभिनंदाविष्फुलिंगास्तस्मिन्नेतस्मिन्नग्नौदेवारेतोजुह्वतितस्याआहुतेर्गर्भः संभवति ॥ ८ ॥ इतितुपंचम्यामाहुतावापःपुरुषवचसोभवंतीतिसउल्बाऽऽवृतोगर्भोदशवा मासानंतःशयित्वायावद्वाथजायतेसजातोयावदायुषंजीवतितंप्रेतंदिष्टमितोग्नयएवहरंतियएवे तोयतःसंभूतोभवति ॥ ९ ॥ तद्यइत्थंविदुर्येचेमेऽरण्येश्रद्धातपइत्युपासतेतेऽर्चिषमभिसंभवं त्यर्चिषोऽहरह्नआपूर्यमाणपक्षमापूर्यमाणपक्षाद्यान्षडुदङेतिमासाꣳस्तान्मासेभ्यःसंवत्सरꣳसं वत्सरादादित्यमादित्याच्चंद्रमसंचंद्रमसोविद्युतंतत्पुरुषोमानवःसएनान्ब्रह्मगमयत्येषदेवयानः पंथाइत्यथयइमेग्रामइष्टापूर्तेदत्तमित्युपासतेतेधूममभिसंभवंतिधूमाद्रात्रिꣳरात्रेरपरपक्षमपर

पतः ॥ अभ्रमभरणाद्विष्णुर्विद्युद्विद्योतनादपि ॥ अशनादशनिश्चैवनिर्हादाद्ध्रादुनिस्तथा ॥ संवत्सरोवा सनाच्चसआकाशःप्रकाशनात् ॥ रात्रिश्चरतिदानात्सदिशतीतिदिशःस्मृतः ॥ अवांतरंदिशेद्यस्मादवांतर दिगुच्यते ॥ वचनाद्वाकृतथाप्राणस्त्वननाच्चक्षुरुच्यते ॥ दर्शनाच्छ्रवणाच्छ्रोत्रंजिह्वावैहोमतःस्मृतः ॥

उपस्थितेरुपस्थःसउपमंत्रकृद्देवसः ॥ योनिर्युनक्तियस्मात्ससर्वांतःकृच्चनंदनः ॥ असौलोकःप्रकाशत्वा
त्प्राणस्थत्वाच्चकेशवः॥पर्जन्योजनकोयस्मात्पृथिवीप्रथितत्वतः॥पुरुषःपुरुयस्मात्सयोषाजोष्योयतोखि
लैरितिसामसंहितायाम् ॥ अभ्रधूमादिभावस्तुजीवस्याभ्रादिसंस्थितिः ॥ अभ्रादिमानिरूपंतुज्ञानिप्राप्यं

पक्षाद्यान्षड्दक्षिणैतिमासां७स्तान्नैतेसंवत्सरमभिप्राप्नुवंतिमासेभ्यःपितृलोकंपितृलोकादाश
माकाशाच्चंद्रमसमेषसोमोराजातद्देवानामन्नंतंदेवाभक्षयंतितस्मिन्यावत्संपातमुषित्वाथैतमेवा
ध्वानंपुनर्निवर्तंतेयथेतमाकाशमाकाशाद्वायुंवायुर्भूत्वाधूमोभवतिधूमोभूत्वाभ्रंभवत्यभ्रंभूत्वा
मेघोभवतिमेघोभूत्वाप्रवर्षतितइहव्रीहियवाओषधिवनस्पतयस्तिलमाषाइतिजायंतेततोवैखलु
दुर्निष्प्रपतनंयोयोह्यन्नमत्तियोरेतःसिंचतितद्भूयएवभवतितद्यइहरमणीयचरणाअभ्याशोहय
त्तेरमणीयांयोनिमापद्येरन्ब्राह्मणयोनिंवाक्षत्रिययोनिंवावैश्ययोनिंवाथयइहकपूयचरणाअभ्या
शोहयत्तेकपूयांयोनिमापद्येरञ्छ्वयोनिंवासूकरयोनिंवाचंडालयोनिंवाथैतयोःपथोर्नकतरेणच
नतानीमानिक्षुद्रमिश्राण्यसकृदावर्तीनिभूतानिभवंतिजायस्वम्रियस्वेत्येतत्तृतीयं७स्थानंतेना
सौलोकोनसंपूर्यतेतस्माज्जुगुप्सेततदेषश्लोकःस्तेनोहिरण्यस्यसुरांपिबं७श्चगुरोस्तल्पमावस
न्ब्रह्महाचैतेपतंतिचत्वारःपंचमश्चाचरं७स्तैरित्यथहयएतानेवंपंचाग्नीन्वेदनसहतैरप्याचरन्पा
प्मनालिप्यतेशुद्धःपूतःपुण्यलोकोभवतियएवंवेदयएवंवेद॥ १०॥प्राचीनशालऔपमन्यवःस

यतोभवेदितिच ॥ परमस्यजन्यमितिपर्जन्यः ॥ पंचपंचस्वरूपेणसूर्यादौसंस्थितोहरिः ॥ स्वर्गादौचापिन
न्नामातद्योगान्नामिनःपरइतिच ॥ १०॥ प्रत्यब्दयज्ञकृत्सम्यङ्महाशालःप्रकीर्तितः॥वेदवेदार्थवित्सम्यङ्म

हाश्रोत्रियउच्यते ॥ क्रीडात्मकत्वाद्ध्याख्यंचसुतेजाश्वातितेजसा ॥ स्वर्गाधारंशिरोविष्णोःसर्वरूपातिदर्शना

त्ययज्ञःपौलुषिरिंद्रद्युम्नोभाल्लवेयोजनःशार्कराक्ष्योबुडिलआश्वतराश्विस्तेहैतेमहाशालामहा
श्रोत्रियाःसमेत्यमीमांसांचक्रुःकोनआत्माकिंब्रह्मेतितेहसंपादयांचक्रुरुद्दालकोवैभगवंतोयमा
रुणिःसंप्रतिममात्मानंवैश्वानरमध्येतितंहंताभ्यागच्छामेतितंहाभ्याजग्मुःसहसंपादयांच
कारप्रक्ष्यंतिमामिमेमहाशालामहाश्रोत्रियास्तेभ्योनसर्वमिवप्रतिपत्स्येहंतामहमन्यमभ्यनु
शासानीतितान्होवाचाश्वपतिर्वैभगवंतोयंकैकेयःसंप्रतीममात्मानंवैश्वानरमध्येतितंहाभ्या
गच्छामेतितंहाभ्याजग्मुस्तेभ्योहप्राप्तेभ्यःपृथगर्हाणिकारयांचकारसहप्रातःसंजिहानउवा
चनमेस्तेनोजनपदेनकदर्योनमद्यपोनानाहिताग्निर्नाविद्वान्नस्वैरीस्वैरिणीकुतोयक्ष्यमाणोवैभगवंतो
हमस्मियावदेकैकस्माऋत्विजेधनंदास्यामितावद्भगवद्भ्योदास्यामिवसंतुभगवंतइतितेहोचुर्ये
नहैवार्थेनपुरुषश्चरेत्तंहैववदेदात्मानमेवेमंवैश्वानरंसंप्रत्यध्येषितमेवनोब्रूहीतितान्होवाचप्रातर्वःप्र
तिवक्तास्मीतितेहसमित्पाणयःपूर्वाह्णेप्रतिचक्रमिरेतान्हानुपनीयैवैतदुवाच ॥ ११ ॥ औपम
न्यवकंत्वमात्मानमुपास्सइतिदिवमेवभगवोराजन्निितिहोवाचैषवैसुतेजाआत्मावैश्वानरोयंत्व
मात्मानमुपास्सेतस्मात्तवसुतंप्रसुतमासुतंकुलेदृश्यतेत्स्यन्नंपश्यसिप्रियमत्यन्नंपश्यतिप्रियंभव
त्यस्यब्रह्मवर्चसंकुलेयएतमेवमात्मानंवैश्वानरमुपास्तेमूर्धात्वेषआत्मनइतिहोवाचमूर्धातेव्यप
तिष्यद्यन्मांनागमिष्यइति॥१२॥ अथहोवाचसत्ययज्ञंपौलुषिंप्राचीनयोग्यकंत्वमात्मानमुपा

त् ॥ चक्षुस्तुविश्वरूपाख्यमादानादायुषामपि ॥ आदित्याख्यंचसूर्यस्याप्याश्रयंसर्वदास्मृतम् ॥ वाय्वादि

प्राणशक्यंनयत्तत्कर्ताहरेर्यतः॥ प्राणस्तेनपृथग्वर्त्मावायुर्ज्ञानादिरूपतः॥ वायोरप्याश्रयोनित्यंबहुत्वाद्बहु
लःस्मृतः ॥ आकाशनामाचादीप्तेर्मध्यदेहोरमापतेः॥व्याप्तत्वादापइयुक्तोरयीरतिकरत्वतः ॥ वस्तिराका

स्सइत्यादित्यमेवभगवोराजन्नितिहोवाचैषवैविश्वरूपआत्मावैश्वानरोयंत्वमात्मानमुपास्सेत
स्मात्तवबहुविश्वरूपंकुलेदृश्यतेप्रवृत्तोश्वतरीरथोदासीनिष्कोत्स्यन्नंपश्यसिप्रियमत्यन्नंपश्य
तिप्रियंभवत्यस्यब्रह्मवर्चसंकुलेयएवमेतमात्मानंवैश्वानरमुपास्तेचक्षुष्ट्वेतदात्मनइतीहोवाचां
धोभविष्यद्यन्मांनागमिष्यतइति ॥ १३ ॥ अथहोवाचेंद्रद्युम्नंभाल्लवेयंवैयाघ्रपद्यकंत्वमा
त्मानमुपास्सइतिवायुमेवभगवोराजन्नितिहोवाचैषवैपृथग्वर्त्मात्मावैश्वानरोयंत्वमात्मानमुपा
स्सेतस्मात्त्वापृथग्बलयआयंतिपृथग्रथश्रेणयोनुयंत्यत्स्यन्नंपश्यसिप्रियमत्यन्नंपश्यतिप्रियंभ
वत्यस्यब्रह्मवर्चसंकुलेयएतमेवमात्मानंवैश्वानरमुपास्तेप्राणस्त्वेषआत्मनइतिहोवाचप्राणस्तउ
दक्रमिष्यद्यन्मांनागमिष्यइति ॥ १४ ॥ अथहोवाचजनंशार्करक्ष्यंशार्कराक्ष्यकंत्वमा
त्मानमुपास्सइत्याकाशमेवभगवोराजन्नितिहोवाचैषवैबहुलआत्मावैश्वानरोयंत्वमात्मानमुपा
स्सेतस्मात्त्वंबहुलोसिप्रजयाचधनेनचात्स्यन्नंपश्यसिप्रियमत्यन्नंपश्यतिप्रियंभवत्यस्यब्रह्मव
र्चसंकुलेयएतमेवमात्मानंवैश्वानरमुपास्तेसंदेहस्त्वेषआत्मानइतिहोवाचसंदेहस्तेव्यशीर्यद्य
न्मांनागमिष्यइति॥१५॥अथहोवाचबुडिलमाश्वतराश्विवैयाघ्रपद्यकंत्वमात्मानमुपास्सइत्या

शवायोश्वतावाधारौप्रकीर्तितौ ॥ प्रथनात्पृथिवीनामाप्रतिष्ठाचप्रतिष्ठितेः ॥ पादौभगवतोविष्णोःपृथि
व्याश्रयएवच ॥ उत्तमानांहिपादेनसर्वरूपंहिकथ्यते ॥ विष्णोःपदमितिह्यस्मात्प्रथितिर्वैदिकीस्मृता ॥ प्रा

णश्चक्षुस्तथादित्यइत्येकादेवतास्मृता ॥ पूर्वद्वारपतिर्विष्णोर्व्यानःश्रोत्रंचचंद्रमाः ॥ दक्षिणद्वारपस्त्वेको
वागपानोग्निरेवच ॥ पश्चिमद्वारपोप्येकःसमानोमनएवच ॥ इंद्रइत्येकएवोक्तउत्तरद्वाररक्षकः ॥ उदानो
वायुरित्येकऊर्ध्वद्वाराधिपश्वसः ॥ सएवाकाशनामाचलक्ष्म्याविष्टोविशेषतः ॥ पृथिवीनामिकाश्रीस्तु
द्यौर्दिशोविद्युदेवच ॥ वायुपत्नीसमुद्दिष्टातत्तद्वाराधिपाश्वते ॥ अधितिष्ठंतितेसर्वेनारायणमनामयम् ॥

पएवभगवोराजन्नितिहोवाचैषवैरयिरात्मावैश्वानरोयंत्वमात्मानमुपास्सेतस्मात्त्वंरयिमान्पुष्टि
मानत्स्यन्नंपश्यसिप्रियमत्यन्नंपश्यतिप्रियंभवत्यस्यब्रह्मवर्चसंकुलेयएतमेवमात्मानंवैश्वानरमु
पास्तेवस्तिस्त्वेषआत्मनइतिहोवाचवस्तिस्तेव्यभेत्स्यद्यन्मांनागमिष्यइति॥१६॥अथहोवा
चोद्दालकमारुणिंगौतमकंत्वमात्मानमुपास्सइतिपृथिवीमेवभगवोराजन्नितिहोवाचैषवैप्रतिष्ठा
त्मावैश्वानरोयंत्वमात्मानमुपास्सेतस्मात्त्वंप्रतिष्ठितोसिप्रजयाचपशुभिश्चात्स्यन्नंपश्यसिप्रियम
त्यन्नंपश्यतिप्रियंभवत्यस्यब्रह्मवर्चसंकुलेयएतमेवमात्मानंवैश्वानरमुपास्तेपादौत्वेतावात्मनइ
तिहोवाचपादौतेव्यम्लास्येतांयन्मांनागमिष्यइति॥१७॥तान्होवाचैतेवैखलुयूयंपृथगिवेममा
त्मानंवैश्वानरंविद्वांसोन्नमत्थयस्त्वेतमेवंप्रादेशमात्रमभिविमानमात्मानंवैश्वानरमुपास्तेससर्वेषु

यद्विष्णुर्ज्ञानरूपत्वात्किमानंदस्वरूपतः ॥ एतेषुतृप्तेषुहरिस्तृप्यत्येषांप्रियोह्यसौ ॥ सूर्यप्रसादात्तुनराः
पूर्वद्वारेणकेशवम् ॥ प्राप्नुवंत्यथसोमस्यप्रसादात्पितरस्तथा ॥ द्वारेणदक्षिणेनैवगंधर्वाःपश्चिमेनतु ॥ ॥३७॥
अग्निप्रसादादृषयउत्तरेणेंद्रसंश्रयात् ॥ शिवाद्यावायुमाश्रित्ययांत्यूर्ध्वेनहरिंसुराः ॥ वैश्वानराख्यवि
ष्णोस्तुसम्यग्ज्ञानेनसर्वशः ॥ वैश्वानरज्ञानयोग्याःसाक्षादेवसुराःस्मृताः ॥ तस्मात्तेषांफलंसर्वमन्ये

षांतुस्त्वयोग्यतइतिवैश्वानरविद्यायाम् ॥ कोनआत्माकिंब्रह्मसोयमात्माचतुष्पात् ॥ स्थूलभुग्वैश्वा

लोकेषुसर्वेषुभूतेषुसर्वेष्वात्मस्वन्नमत्तितस्यहवाएतस्यात्मनोवैश्वानरस्यमूर्धैवसुतेजाश्चक्षुर्वि
श्वरूपःप्राणःपृथग्वर्त्मात्मासंदेहोबहुलोवस्तिरेवरयिःपृथिव्येवपादावुरएववेदिर्लोमानिबर्हिर्हृ
दयंगार्हपत्योमनोन्वाहार्यपचनआस्यमाहवनीयः ॥१८॥ तद्यद्भक्तंप्रथममागच्छेत्तद्धोमीयं
सयांप्रथमामाहुतिंजुहुयात्तांजुहुयात्प्राणायस्वाहेतिप्राणस्तृप्यतिप्राणेतृप्यतिचक्षुस्तृप्यति
चक्षुषितृप्यत्यादित्यस्तृप्यत्यादित्येतृप्यतिद्यौस्तृप्यतिदिवितृप्यंत्यांयत्किंचद्यौश्चादित्यश्चा
धितिष्ठतस्तत्तृप्यतितस्यानुतृप्तिंतृप्यतिप्रजयापशुभिरन्नाद्येनतेजसाब्रह्मवर्चसेनेति॥१९॥
अथयांद्वितीयांजुहुयात्तांजुहुयाद्व्यानायस्वाहेतिव्यानस्तृप्यतिव्यानेतृप्यतिश्रोत्रेतृप्यतिश्रो
त्रेतृप्यतिचंद्रमास्तृप्यतिचंद्रमसितृप्यतिदिशस्तृप्यंतिदिक्षुतृप्यंतीषुयत्किंचदिशश्चंद्रमाश्चा
धितिष्ठंतितत्तृप्यतितस्यानुतृप्तिंतृप्यंतिप्रजयापशुभिरन्नाद्येनतेजसाब्रह्मवर्चसेनेति ॥२०॥
अथयांतृतीयांजुहुयात्तांजुहुयादपानायस्वाहेत्यपानस्तृप्यत्यपानेतृप्यतिवाक्तृप्यतिवाचि
तृप्यंत्यामग्निस्तृप्यत्यग्नौतृप्यतिपृथिवीतृप्यतिपृथिव्यांतृप्यंत्यांयत्किंचपृथिवीचाग्निश्चाधि
तिष्ठतस्तत्तृप्यतितस्यानुतृप्तिंतृप्यतिप्रजयापशुभिरन्नाद्येनतेजसाब्रह्मवर्चसेति ॥ २१ ॥
अथयांचतुर्थींजुहुयात्तांजुहुयात्समानायस्वाहेतिसमानस्तृप्यतिसमानेतृप्यतिमनस्तृप्यति
मनसितृप्यतिपर्जन्यस्तृप्यतिजपन्येतृप्यतिविद्युत्तृप्यतिविद्युतितृप्यंत्यांयत्किंचविद्युच्चपर्ज

नरःसप्रथमःपादः ॥ ॐवैश्वानरःसाधारणशब्दविशेषात्ॐ ॥ अहंवैश्वानरोभूत्वाप्राणिनांदेहमाश्रितइ

त्यादेश्चवैश्वानरोविष्णुरितिसिद्धम् ॥ सवायुःसआकाशः वायुश्चाकाशश्चाधितिष्ठतइतिवचनाद्वायोरू
पमन्याधिष्ठितमाकाशाख्यंवायोःस्वरूपमितिविज्ञायते ॥ आकाशनामाविघ्नेशोवायुश्चाकाशकःस्मृ
तः ॥ आकाशइतिलक्ष्मीश्चतथाकाशोहरिःस्वयमितिशब्दनिर्णये ॥ सुतेजोविश्वरूपादिभेदेनांगानि



न्यश्चाधितिष्ठतस्तत्तृप्यतितस्यानुतृप्तिंतृप्यतिप्रजयापशुभिरन्नाद्येनतेजसाब्रह्मवर्चसेनेति
॥ २२ ॥ अथयांपंचमींजुहुयात्तांजुहुयादुदानायस्वाहेत्युदानस्तृप्यत्युदानेतृप्यतित्वक्तृप्य
तित्वचितृप्यंत्यांवायुस्तृप्यतिवायौतृप्यत्याकाशस्तृप्यत्याकाशेतृप्यतियत्किंचवायुश्चा
काशश्चाधितिष्ठतस्तत्तृप्यतितस्यानुतृप्तिंतृप्यतिप्रजयापशुभिरन्नाद्येनतेजसाब्रह्मवर्चसेने
ति ॥ २३ ॥ सयइदमविद्वानग्निहोत्रंजुहोतियथांगारानपोह्यभस्मनिजुहुयात्तादृक्तत्स्याद
थयएतदेवंविद्वानग्निहोत्रंजुहोतितस्यसर्वेषुलोकेषुसर्वेषुभूतेषुसर्वेष्वात्मसुहुतंभवतितद्यथेषी
कातूलमग्नौप्रोतंप्रदूयेतैवंहास्यसर्वेपाप्मानःप्रदूयंतेयएतदेवंविद्वानग्निहोत्रंजुहोतितस्मादुहै
वंविद्यद्यपिचंडालायोच्छिष्टंप्रयच्छेदात्मनिहैवास्यतद्वैश्वानरेहुतंस्यादितितदेषश्लोकः
यथेहक्षुधिताबालामातरंपर्युपासते ॥ एवंसर्वाणिभूतान्यग्निहोत्रमुपासतइत्यग्निहोत्रमुपासत
इति ॥ २४ ॥ इतिश्रीमच्छांदोग्योपनिषदिपंचमोऽध्यायः ॥ ५ ॥ ७ ॥

मापतेः ॥ अभिन्नान्यपिकथ्यंतेलोकदृष्टिविभेदतइतिच ॥ २४ ॥ इतिश्रीमदानंदतीर्थभगवत्पादा
चार्यविरचितेश्रीमच्छांदोग्योपनिषद्भाष्येपंचमोऽध्यायः ॥ ५ ॥

हरिःॐ ॥ अधीत्यब्दद्वादशत्वाद्वादशाब्दइतीरितः ॥ श्वेतकेतुर्भारतेतुनोत्पत्तिद्वादशत्वतदतिवाक्यनिर्णये ॥ यथामृत्पिंडविज्ञानात्सादृश्यादेवमृन्मयाः ॥ विज्ञायंतेतथाविष्णोःसादृश्याज्जगदेवच ॥ यथास्वर्णस्यविज्ञानात्सर्वेलोहमयास्तथा ॥ प्राधान्याद्विष्णुविज्ञानाद्विज्ञातंस्याज्जगत्सदा ॥ अत्यल्पेपिहिविज्ञातेसदृशेतादृशंबहु ॥ ज्ञायतेनखकृंतन्यायथासर्वमयोमयम् ॥ किमुविष्णोर्बहोर्ज्ञानादत्यल्पंजगदीदृशम्॥अनन्याधीनविज्ञानादन्याधीनंतथैवच॥मृदयोलोहनाम्नांहिज्ञानात्सांकेतिकंयथेत्यादिसामसंहितायाम् ॥ स्वर्णलोहमणिश्चैवपुरटंचाभिधीयतइतिशब्दनिर्णये ॥ विकारत्वविवक्षायामेकपिंडमणिशब्दाव्यर्थाःस्युः ॥

हरिःॐ॥ ॥श्वेतकेतुर्हारुणेयआसतंहपितोवाचश्वेतकेतोवसब्रह्मचर्यंनवैसोम्यास्मत्कुलीनोऽननूच्यब्रह्मबंधुरिवभवतीतिसहद्वादशवर्षउपेत्यचतुर्विंशतिवर्षःसर्वान्वेदानधीत्यमहामना अनूचानमानीस्तब्धएयायतंहपितोवाचश्वेतकेतोयन्नुसोम्येदंमहामनाअनूचानमानीस्तब्धोस्युततमादेशमप्राक्ष्योयेनाश्रुतंश्रुतंभवत्यमतंमतमविज्ञातंविज्ञातमितिकथंनुभगवःस आदेशोभवतीतियथासोम्यैकेनमृत्पिंडेनसर्वंमृन्मयंविज्ञातंस्याद्वाचारंभणंविकारोनामधेयंमृत्तिकेत्येवसत्यंयथासोम्यैकेनलोहमणिनासर्वंलोहमयंविज्ञातंस्याद्वाचारंभणंविकारोनाम

मृत्तिकेतिलोहमणिरितिकार्ष्णायसमित्यत्रेतिशब्दानामधेयशब्दाश्चव्यर्थाःस्युः ॥ विकारमिथ्यात्वविवक्षायांमृत्तिकैवसत्यंलोहएवसत्यंकार्ष्णायसमेवसत्यमित्येवस्यात् ॥ नतुनामधेयादिशब्दाः ॥ नचवाचारंभणमात्रमितिमात्रशब्दोस्ति ॥ नचारभ्यस्यारंभणमितियुज्यतेशब्दः ॥ क्रियाह्यारंभणम् ॥ अतोवाचानाम्नामारंभणंविकारोविक्रियमाणः ॥ सत्यंनामधेयंसर्वदाविद्यमानंनामधेयंमृत्तिकेत्यादयइत्यर्थः ॥ सत्त्वेनकालतस्ततंज्ञायतेविद्वद्भिरितिनित्यत्वेनप्रसिद्धमेवसत्यमित्यत्रविवक्षितम्॥संकेतेनक्रियमाणानिह

न्यानिनामानि ॥ अतोविकाररूपाणि ॥ विकारशब्दस्यनियतपुँल्लिंगत्वादारंभणंविकारइतिवेदाःप्रमाण
मितिवद्युज्यते ॥ नचमृत्तिकादिनामविकारःसांकेतिकंनाम ॥ प्राधान्यमेवात्रमृत्तिकादिनामवद्भगवतो
विवक्षितम् ॥ सृष्टिश्चप्राधान्यार्थमेवात्रोच्यते॥१॥एकमेवस्वगतभेदवर्जितं॥आद्वितीयंसमानवर्जितंच ॥
एकमेवाद्वितीयंतत्समाभ्यधिकवर्जनात् ॥ स्वगतानांचभेदानामभावाद्ब्रह्मशाश्वतमितिप्रवृत्ते ॥ भेदाभे
दनिवृत्त्यर्थमेवशब्दोवधारकः ॥ समाधिकनिवृत्त्यर्थमद्वितीयपदंतथा ॥ भेदाभेदेप्येकशब्दोयतोवयवि

धेयंलोहमणिरित्येवसत्यंयथासोम्यैकेननखनिकृंतनेनसर्वंकार्ष्णायसंविज्ञातꣵस्याद्वाचारंभणं
विकारोनामधेयंकार्ष्णायसमित्येवसत्यमेवꣳसोम्यसआदेशोभवतीतिनवैनूनंभगवंतस्तएतद
वेदिषुर्यद्ध्येतदवेदिष्यन्कथंमेनावक्ष्यन्निितिभगवाꣳस्त्वेवमेतद्ब्रवीत्विितितथासोम्येतिहोवाच
॥ १ ॥ सदेवसोम्येदमग्रआसीदेकमेवाद्वितीयंतद्धैकआहुरसदेवेदमग्रआसीदेकमेवाद्विती
यंतस्मादसतःसज्जायतइतिकुतस्तुखलुसोम्यैवꣳस्यादितिहोवाचकथमसतःसज्जायेतेतिसत्वे
वसोम्येदमग्रआसीदेकमेवाद्वितीयंतदैक्षतबहुस्यांप्रजायेयेतितत्तेजोसृजतत्तेजऐक्षतबहु

निस्थितः ॥ एकमेवेत्यतःप्राहनारायणमियंश्रुतिः ॥ समेद्वितीयशब्दःस्याद्द्वितीयोसमत्वतः ॥ साधि
कःकुतएवस्यादित्याहपरमाश्रुतिरितिसामसंहितायाम् ॥ नचविजातीयभेदवर्जनंनामकुत्रचित्प्रसिद्धम् ॥
तत्प्रमाणाभावाच्च ॥ एकएवाद्वितीयोभगवांस्तत्सदृशःपरोनास्तीतिचश्रुतिः ॥ एकोभगवांस्तत्सदृशपरो
नस्तइतिच ॥ विजातीयाभावेयेनाश्रुतंश्रुतंभवतीत्यादिविशेषणंचव्यर्थम्॥ यस्यकस्यचिज्ज्ञानंतज्ज्ञानमे
वभवतीति ॥ अज्ञानमपिज्ञानमेवभवति ॥ भेदाभावात् ॥ नचमिथ्यासत्यमितिभेदः ॥ तस्यैवविजा

तीयत्वप्राप्तेः ॥ तद्भेदस्य मिथ्यात्वेतदभेदस्यसत्यत्वप्रसंगाच्च ॥ मिथ्यासत्ययोरैक्येइदंसत्यमिदंमिथ्येति
भेदाभावाज्जीवेशभेदादेरपिसत्यत्वप्रसंगः ॥ अतःपरमार्थंब्रह्मान्यन्मिथ्येत्यपिनयुज्यते ॥ अतःस
जातीयःस्वगतभेदोधिकाख्यंविजातीयंचात्रनिषिध्यते ॥ सर्वोत्तमत्वात्सन्नामाहरिर्नारायणःप्रभुः ॥ सो
सृजत्प्रथमंदेवींतेजआख्यांश्रियंसतीम्॥ ततेस्थितेनरूपेणसाऽजैवहियतःसदा॥ तेजइत्युच्यतेतस्माज्जनै
र्वाततएवतु ॥ यदस्याःसृष्टिकृद्रूपंविद्याख्यंजायतेहरेः ॥ मन्वाख्यःप्राणएवास्याअम्भामाजायतेथ

स्यांप्रजायेयेतितदपोसृजततस्माद्यत्रक्वचशोचतिस्वेदतेवापुरुषस्तेजसएवतदध्यापोजायंते
ताआपऐक्षंतबह्व्यःस्यामप्रजायेमहीतिताअन्नमसृजंततस्माद्यत्रक्वचवर्षतितदेवभूयिष्ठम
न्नंभवत्यद्भ्यएवतदध्यन्नाद्यंजायते॥२॥ तेषांखल्वेषांभूतानांत्रीण्येवबीजानिभवंत्यांडजंजी
वजमुद्भिज्जमितिसेयंदेवतैक्षतहंताहमिमास्तिस्रोदेवताअनेनजीवेनात्मनानुप्रविश्यनामरूपे
व्याकरवाणीतितासांत्रिवृतंत्रिवृतमेकैकांकरवाणीतिसेयंदेवतेमास्तिस्रोदेवताअनेनैवजीवेना
त्मनानुप्रविश्यनामरूपेव्याकरोत्तासांत्रिवृतंत्रिवृतमेकैकामकरोद्यथानुखलुसोम्येमास्तिस्रोदेव

च ॥ ब्राह्मणादिचतुर्वर्णस्ततश्चान्नाभिधोहरः ॥ तेजःसंस्थाचसादेवीप्राणोप्सुस्थितएवच ॥ तत
स्तेजसएवापोजायंतेन्नस्थितोहरः ॥ जायतेतोऽद्भ्यएवान्नंपृथिवीत्वन्नरूपिणी ॥ २ ॥ सृष्टेष्वेतेषु
भगवानीक्षांचक्रेसकेशवः ॥ जीवाख्येनैवरूपेणयोऽनिरुद्धइतिस्मृतः ॥ तेनरूपेणलक्ष्म्यादीन्प्रविष्टोरू
पनामनी ॥ करिष्येत्रिवृतश्चैतानेकैकंकरवाणिच ॥ इतिमत्वाप्रविश्याथतेभ्यइंद्रादिनामपि ॥ नामरूपाणि
कृतवांस्तांश्चान्योन्यप्रवेशिनः ॥ कृत्वाग्निसोमसूर्यादिष्वेतांस्त्रीन्विदधेपुनः ॥ ३ ॥ अनोयल्लोहितंरूपं

श्रियस्तद्रूपसंभवम् ॥ यच्छुक्लंवायुजंविद्यात्कृष्णंचैवशिवोद्भवम् ॥ तस्मादग्नेर्यदग्नित्वमग्निनामप्रवर्तकम् ॥
लक्ष्म्यादिदेवतानांतन्नैवाग्नेरग्नितातत: ॥ मुख्यैवमाददानत्वमादित्यस्यतदुद्भवम्॥ अतआदित्यनामैषांनैवा
दित्यस्यमुख्यत: ॥ यच्चंद्राह्लादकत्वंचतत्तेषांचंद्रतातथा ॥ विद्युद्विद्योतनंतेषांततस्तेसर्वनामिन: ॥ तथै
वसर्वरूपंचतद्रूपप्रतिबिंबितम् ॥ सर्वरूपाश्चतेतस्माल्लोहितादिक्रमेणतु ॥ अतोन्यनामधेयंतुवाचारंभण

ताखिवृत्रिवृदेकैकाभवतितन्मेविजानीहीति॥३॥यदग्नेरोहितꣳरूपंतेजसस्तद्रूपंयच्छुक्लंतदपां
यत्कृष्णंतदन्नस्यापागादग्नेरग्नित्वंवाचारंभणंविकारोनामधेयंत्रीणिरूपाणीत्येवसत्यंयदादित्य
स्यरोहितꣳरूपंतेजसस्तद्रूपंयच्छुक्लंतदपांयत्कृष्णंतदन्नस्यापागादादित्यादादित्यत्वंवाचारंभ
णंविकारोनामधेयंत्रीणिरूपाणीत्येवसत्यंयच्चंद्रमसोरोहितꣳरूपंतेजसस्तद्रूपंयच्छुक्लंतदपांय
त्कृष्णंतदन्नस्यापागाच्चंद्राच्चंद्रत्वंवाचारंभणंविकारोनामधेयंत्रीणिरूपाणीत्येवसत्यंयद्विद्युतोरो
हितꣳरूपंतेजसस्तद्रूपंयच्छुक्लंतदपांयत्कृष्णंतदन्नस्यापागाद्विद्युतोविद्युत्त्वंवाचारंभणंविका
रोनामधेयंत्रीणिरूपाणीत्येवसत्यमेतद्धस्मवैतद्विद्वाꣳसआहुःपूर्वेमहाशालामहाश्रोत्रियानानो
द्यकश्चनाश्रुतममतमविज्ञातमुदाहरिष्यतीतिह्येभ्योविदांचक्रुर्यदुरोहितमिवाभूदितितेजसस्त

हेतुत: ॥ सांकेत्येनविकार:स्यात्त्रयाणामेवनित्यता ॥ यथालक्ष्म्यादिकानांचनामसंकेततोन्यगम् ॥
वाचारंभणहेतोस्तद्विकारोनैवमुख्यत: ॥ मुख्यंनामत्रिरूपाणीत्याद्यंवेदोदितंपरम् ॥ अतस्तदेवसत्यो
क्तंमुख्यंसत्यमितीर्यते ॥ इंद्रादिनामरूपाणियथैवत्रिषुमुख्यत: ॥ तदधीनत्वतस्तेषामेषामुच्चबलत्व
त: ॥ शिवनामानिरूपाणितथावायोस्तुमुख्यत: ॥ तदीयानितथालक्ष्म्यास्तदीयानिहरेस्तथा ॥ त

स्मात्सएवसर्वेशः सर्वरूपः सएवच ॥ सर्वनामासएवैकः सर्वशक्तिस्तथैवच ॥ अन्येषांयच्चरूपाद्यंतत्त
स्मात्प्रतिबिंबितम् ॥ एकएवाद्वितीयोसावतः सर्वोत्तमत्वतः ॥ मुख्यत्वादेवसन्नामासत्तत्तिज्ञानरूपतः ॥
सत्यमित्युच्यतेविष्णुस्सत्वंनासिकथंचन ॥ अतोनूचानमानीत्वंस्तब्धोसिकुतएवतु ॥ त्वत्तोधिका
अपीद्राद्यास्तदुच्चाश्चश्रियादयः ॥ सर्वोच्चोभगवान्विष्णुर्नस्तंभोस्याविहिकचित् ॥ अतोनविद्वन्मा
नीस्यामहानस्मीतिवामनः॥ नतेस्यान्नैवचस्तंभोज्ञात्वाविष्णोःपरंबलम् ॥ नहिविष्णोर्बलंज्ञात्वास्तंभहेतुः
कथंचनेत्यादिसामसंहितायाम् ॥ ४ ॥ देवताएवमांसादिशब्दवाच्याः ॥ तत्रप्रवेशात् ॥ अश्यमा

द्रूपमितितद्विदांचकुर्यदुशुक्लमिवाभूदित्यपाᳪरूपमितितद्विदांचकुर्यदुकृष्णमिवाभूदित्यन्नस्य
रूपमितितद्विदांचकर्यदविज्ञातमिवाभूदित्येतासामेवदेवतानाᳪसमासइतितद्विदांचकुर्यथानु
खलुसोम्येमास्तिस्रोदेवताःपुरुषंप्राप्यत्रिवृत्त्रिवृदेकैकाभवतितन्मेविजानीहीति॥४॥अन्नमशि
तंत्रेधाविधीयतेतस्ययःस्थविष्ठोधातुस्तत्पुरीषंभवतियोमध्यमस्तन्मा ᳪसंयोणिष्ठस्तन्मनआपः
पीतास्त्रेधाविधीयंतेतासांयःस्थविष्ठोधातुस्तन्मूत्रंभवतियोमध्यमस्तल्लोहितंयोणिष्ठःसप्राणस्ते
जोशितंत्रेधाविधीयतेतस्ययःस्थविष्ठोधातुस्तदस्थिभवतियोमध्यमःसमज्जायोणिष्ठःसावाग‍न्न

नाश्चोपजीव्यत्वात् ॥ नचदुःखंतासाम् ॥ ऐश्वर्यात् ॥ तिस्रोदेवताःपुरुषंप्राप्यत्रिवृत्त्रिवृदितिप्रस्तु
तत्वात् ॥ जीवइतिभगवतोऽनिरुद्धस्याख्येतिचश्रुतिः ॥ प्राणस्यप्राणश्चक्षुषश्चक्षुर्जीवस्यजीवःप्रधान
स्यप्रधानंभगवांश्चतुर्मूर्तिरितिच ॥ प्राणाधारोहरिर्नान्योजीवशब्दस्ततोहरौ ॥ संसारिणोजीवतानुज
ननाद्वानतस्तथेतिच ॥ जीवशब्देनसंसारिविवक्षायांतत्तेजऐक्षतेत्यादिनातेषामेवचेतनत्वात्रगतेर्नामरूप

व्याकरणेजीवांतरप्रवेशोनापेक्षितः॥प्रसुप्तलोकतंत्राणांनिशाम्यगतिमीश्वरः ॥त्रयोविंशतितत्त्वानांगणंयु
गपदाविशदितिच॥यावद्बलिंतेऽजहरामकालेयथावयंचान्नमदामयत्र॥यथोभयेषांतइमेहलोकाबलिंहरं
तोन्नमदंत्यमूढाः ॥त्वंनःसचक्षुःपरिदेहिशक्तादेवक्रियार्थेयदनुपहेणेतितत्त्वानांप्रार्थनानंतरंभगवतएवतेषुप्र
वेशोक्तेर्भागवते॥यतश्चसएवजीवेनात्मनानुप्रभूतःपेपीयमानोमोदमानस्तिष्ठतीतिभगवत्येवजीवशब्दःप्रयु

मयꣳहिसोम्यमनआपोमयःप्राणस्तेजोमयीवागितिभूयएवमाभगवान्विज्ञापयत्वितितथासो
म्येतिहोवाच॥५॥दध्नःसोम्यमथ्यमानस्ययोणिमासऊर्ध्वःसमुदीषतितत्सर्पिर्भवत्येवमेवखलु
सोम्यान्नस्याश्यमानस्ययोणिमासऊर्ध्वःसमुदीषतितन्मनोभवत्यपाꣳसोम्यपीयमानानांयो
णिमासऊर्ध्वःसमुदीषतिसप्राणोभवतितेजसःसोम्याश्यमानस्ययोणिमासऊर्ध्वःसमुदीषति
सावाग्भवत्यन्नमयꣳहिसोम्यमनआपोमयःप्राणस्तेजोमयीवागितिभूयएवमाभगवान्विज्ञाप
यत्वितियथासोम्येतिहोवाच ॥ ६ ॥ षोडशकलःसोम्यपुरुषःपंचदशाहानिमाशीःकाममपः
पिबापोमयःप्राणोनपिबतोविच्छेत्स्यतइतिसहपंचदशाहानिनाशाथहैनमुपससादकिंब्रवीमि
भोइत्यृचःसोम्ययजूꣳषिसामानीतिसहोवाचनवैमाप्रतिभांतिभोइतितꣳहोवाचयथासोम्यम
हतोभ्याहितस्यैकोंगारःखद्योतमात्रःपरिशिष्टःस्यात्तेनततोपिनबहुदहेदेवꣳसोम्यतेषोडशा

ज्यते ॥ नह्यचेतनस्यमोदमानत्वमस्ति ॥ अतोंतर्यामिरूपएवजीवशब्दः ॥ भोक्तुस्तुसुखदुःखानामंतस्थो
जी ॥ वनामतःबहिस्थितस्तुसन्नामाभगवान्पुरुषोत्तमइतितत्त्वविवेके ॥ अग्नेरग्निरितिनाममुख्यतो
नास्ति ॥ अग्निनामानित्रीणिरूपाणीतिनामधेयंसत्यमित्यादि ॥ ५ ॥ स्वप्नस्यांतःसुषुप्तिः ॥ स्वातं

न्यात्सइतिप्रोक्तोविष्णुःसर्वेश्वरेश्वरः ॥ तंप्राप्नोतिमनोनामासंसारीस्वपितीत्यतइतिच ॥ मननान्मना
नामासंसारी ॥ शुंगमित्यंकुरंप्रोक्तंतन्मूलंभगवान्हरिः ॥ जगतोमूलमप्येषनिमित्तंनविकारवान् ॥
बीजजीवोयथामूलमंकुरस्याविकारतः ॥ यथापितापुत्रतन्वास्तद्देहोहिविकारवान् ॥ एवंहरिर्मूलमपि

नांकलानामेकाकलातिशिष्टास्यात्तयैतर्हिवेदान्नानुभवस्यशानाथमेविज्ञास्यसीतिसहाशाथ
हैनमुपससादतꣳहयत्किंचपप्रच्छसर्वꣳहप्रतिपेदेतꣳहोवाचयथासोम्यमहतोभ्याहितस्यैक
मंगारंखद्योतमात्रंपरिशिष्टंतंतृणैरुपसमाधायप्रज्वलयेत्तेनततोपिबहुदहेदेवꣳसोम्यतेषोड
शानांकलानामेकाकलातिशिष्टाभूत्सान्नेनोपसमाहिताप्राज्वालीत्तयैतर्हिवेदाननुभवस्यन्न
मयꣳहिसोम्यमनआपोमयःप्राणस्तेजोमयीवागितिलद्धास्यविजज्ञाविति विजज्ञाविति (त
देषश्लोकःपंचेंद्रियस्यपुरुषस्ययदेवस्यादनाहृतम् ॥ तदस्यप्रज्ञास्रवतिदृतेःपादादिवो
दकंदृतेःपादादिवोदकम् ) ॥ ७ ॥ उद्दालकोहारुणिःश्वेतकेतुंपुत्रमुवाचस्वप्नांतंमे
सोम्यविजानीहीतियत्रैतत्पुरुषःस्वपितिनामसतासोम्यतदासंपन्नोभवतिस्वमपीतोभवति
तस्मादेनꣳस्वपितीत्याचक्षतेस्वꣳह्यपीतोभवतिसयथाशकुनिःसूत्रेणप्रबद्धोदिशंदिशंपति
त्वान्यत्रायतनमलब्ध्वाबंधनमेवोपाश्रयतएवमेवखलुसोम्यतन्मनोदिशंपतित्वान्यत्रायतन

नविकारःकथंचनेतिच ॥ प्राथम्याच्चतेजआद्यालक्ष्म्यादयइतिसिद्धम् ॥ तेजोभिमानिनीलक्ष्मीःप्राण
स्त्वभिमानवान् ॥ अन्नाभिमानीरुद्रश्चतिस्रस्तादेवताःपुरेतिचब्रह्मांडे ॥ यत्रैतत्पुरुषःस्वपितिनामसता
सोम्यतदासंपन्नोभवतीतिसंसारिणोब्रह्मप्राप्तिमुक्त्वासयथाशकुनिःसूत्रेणप्रबद्धइतितस्योपपादनान्मनो

नामापुरुषः ॥ प्राणनामाभगवान् ॥ सन्मूलाःसोम्येमाःसर्वाःप्रजाःसदायतनाःसत्प्रतिष्ठाइत्युपसंहारात् ॥ प्रजाशब्दश्चेतनेष्वेवप्रसिद्धः ॥ प्रजानांसुखदुःखेनराजाऽऽप्नोतिशुभाशुभमित्यादेश्च ॥ शरीरधातुकत्वे नलक्ष्म्याद्याश्चमुमुक्षुणा ॥ ध्येयास्तदीशितृत्वेनभगवान्पुरुषोत्तमइतिवचनादनुसंधानकर्तव्यताज्ञापना

मलब्ध्वाप्राणमेवोपाश्रयतेप्राणबंधनꣳहिसोम्यमनइत्यशनायापिपासेसोम्यविजानीहीतिय त्रैतत्पुरुषोऽशिशिषतिनामापएवतदशितंनयंतेतद्यथागोनायोश्वनायःपुरुषनायइत्येवंतदप आचक्षतेशायेतितत्रैतच्छुंगमुत्पतितꣳसोम्यविजानीहिनेदममूलंभविष्यतीतितस्यक्कमूलꣳ स्यादन्यत्रान्नादेवमेवखलुसोम्यान्नेनशुंगेनापोमूलमन्विच्छाद्भिःसोम्यशुंगेनतेजोमूलमन्वि च्छतेजसासोम्यशुंगेनसन्मूलमन्विच्छसन्मूलाःसोम्येमाःसर्वाःप्रजाःसदायतनाःसत्प्रतिष्ठाअ थयत्रैतत्पुरुषःपिपासतिनामतेजएवतत्पीतंनयतेतद्यथागोनायोश्वनायःपुरुषनायइत्येवंतत्ते जआचष्टउदन्येतितत्रैतदेवशुंगमुत्पतितꣳसोम्यविजानीहिनेदममूलंभविष्यतीतितस्यक्कमू लꣳस्यादन्यत्राद्भ्योद्भिःसोम्यशुंगेनतेजोमूलमन्विच्छसन्मूलाःसोम्येमाःसर्वाःप्रजाःसदायत नाःसत्प्रतिष्ठायथाखलुसोम्येमास्तिस्रोदेवताःपुरुषंप्राप्यत्रिवृत्त्रिवृदेकैकाभवतितदुक्तंपुर स्तादेवभवत्यस्यसोम्यपुरुषस्यप्रयतोवाङ्मनसिसंपद्यतेमनःप्राणेप्राणस्तेजसितेजःपरस्यांदेव

र्थतदुक्तंपुरस्तादित्युक्तम् ॥ मुक्तावुमातुवागाख्यारुद्रंयातिमनोभिधम् ॥ वायुंयातिशिवश्चापिवायुस्तेजो भिधांश्रियम् ॥ वायुमादायसादेवीयातिविष्णुंपरात्परम् ॥ द्वारमात्रातुसादेवीवायुप्राप्योजनार्दनः ॥ मृति कालेचमुक्तौचपुरुषावाचमाप्नुयुरितिसत्त्वे ॥ योसौनियमनाद्विष्णुसारत्वात्सइतिस्मृतः ॥ अणिमासू

क्ष्मतोगम्यऐतदात्म्यंचतद्वशम्॥परानंदत्वतःसत्यमात्मापूर्णगुणत्वतः॥सत्यतोनासितत्त्वांहमाभूत्तस्तब्धतात तः॥ असुराःस्तब्धतांयाताब्रह्माहमितिमानिनः॥ असत्यंजगदित्याहुःसिद्धोहंबलवानिति ॥ अनीश्वरंज गत्प्राहुरप्रतिष्ठंतथैवच ॥ चेतनैकत्वविषयान्वेदानाहुश्चसर्वशः॥ कुतर्कपरमानित्यंनसहंतेगुणान्हरेः॥ शास्त्र तत्त्वमविज्ञायब्रूयुर्देवेषुचैकताम्॥ यांतिचैवतमोघोरंपरमात्मविनिंदकाः ॥ आलंब्यतन्मतंनत्वमेकत्वंवि

तायाꣳसयएषोणिमैतदात्म्यमिदꣳसर्वंतत्सत्यंसआत्मातत्त्वमसिश्वेतकेतोइतिभूयएवमाभग वान्विज्ञापयत्विततिथासोम्येतिहोवाच ॥ ८ ॥ यथासोम्यमधुमधुकृतोनिस्तिष्ठंतिनानात्य यानांवृक्षाणाꣳरसानाꣳसमवहारमेकतांगमयंतितेयथातत्रनविवेकंलभंतेमुष्याहंवृक्षस्यरसो स्म्यमुष्याहंवृक्षस्यरसोस्मीत्येवमेवखलुसोम्येमाःसर्वाःप्रजाःसतिसंपद्यनविदुःसतिसंपत्स्याम इइतितइहव्याघ्रोवासिꣳहोवावृकोवावराहोवाकीटोवापतंगोवादꣳशोवामशकोवायद्यद्भवंति तत्तदाभवंतिसएषोणिमैतदात्म्यमिदꣳसर्वंतत्सत्यꣳसआत्मातत्त्वमसिश्वेतकेतोइतिभूयएवमा भगवान्विज्ञापयत्विततिथासोम्येतिहोवाच ॥ ९ ॥ इमाःसोम्यनद्यःपुरस्तात्प्राच्यःस्यंदं तेपश्चात्प्रतीच्यस्ताःसमुद्रात्समुद्रमेवापियंतिससमुद्रएवभवतिताघथातत्रनविदुरियमहमस्मी

द्धिविष्णुना॥एकत्वाभावतोनैवभवेथाश्चमहामनाः॥तन्निष्ठाहिप्रजायस्मात्तत्प्रतिष्ठाश्चमोक्षगाः॥तन्मृला श्वयतस्तासांसद्भावःकुतएवतु॥ यदिस्वतोन्यःपरमोदेहेस्मिन्संव्यवस्थितः ॥ नदृश्यतेकुतइतिभूयःपप्रच्छ पुत्रकः॥ अक्षैरदृश्यमानोपिनभेदोनास्तिपुत्रक॥ यथापुष्परसायुक्ताअजानंतोविभेदिनः॥ अजानंतोपि पुरुषास्तथाविष्णोर्हिभेदिनः ॥८॥९॥ इतिपित्रोपदिष्टःसन्पुत्रःपप्रच्छतंपुनः॥ चेतनानामविज्ञानंकथ

मित्येवचिंतयन् ॥ तंप्रत्याहयथानद्यश्वेतनाश्वसमुद्रगाः ॥ स्वंवारिनैवजानंतिप्रजास्तद्वत्प्रजालये ॥१०॥
स्वतोन्योस्तिपरोदेहइतिज्ञायेतमेकथम् ॥ इतिपृष्टःपुनःप्राहवृक्षदृष्टांततःपिता ॥ अभिमानिनोस्वतंत्रत्वा

यमहमस्मीत्येवमेवखलुसोम्येमाःसर्वाःप्रजाःसतआगम्यनविदुःसतआगच्छामहइतितइह
व्याघ्रोवासिꣳहोवावृकोवावराहोवाकीटोवापतंगोवादंशोवामशकोवायद्यद्भवंतितत्तदाभवंति
सयएषोणिमैतदात्म्यमिदꣳसर्वंतत्सत्यꣳसआत्मातत्त्वमसिश्वेतकेतोइतिभूयएवमाभगवान्वि
ज्ञापयत्वितितथासोम्येतिहोवाच ॥ १० ॥ अस्यसोम्यमहतोवृक्षस्ययोमूलेभ्याहन्याज्जीव
न्स्रवेद्योमध्येभ्याहन्याज्जीवन्स्रवेद्योग्रेभ्याहन्याज्जीवन्स्रवेत्सएषजीवेनात्मनानुप्रभूतःपेपीय
मानोमोदमानस्तिष्ठत्यस्ययदेकांशाखांजीवोजहात्यथसाशुष्यतिद्वितीयांजहात्यथसाशुष्यति
तृतीयांजहात्यथसाशुष्यतिसर्वंजहातिसर्वःशुष्यत्येवमेवखलुसोम्यविद्धीतिहोवाचजीवापेतं
वावकिलेदंम्रियतेनजीवोम्रियतइतिसयएषोणिमैतदात्म्यमिदꣳसर्वंतत्सत्यꣳसआत्मातत्त्वम
सिश्वेतकेतोइतिभूयएवमाभगवान्विज्ञापयत्वितियथासोम्येतिहोवाच॥ ११ ॥न्यग्रोधफलमत
आहरेतीदंभगवइतिभिंधीतिभिन्नंभगवइतिकिमत्रपश्यसीत्यण्व्यइवेमाधानभगवइत्यासामं
गैकांभिंधीतिभिन्नाभगवइतिकिमत्रपश्यसीतिनकिंचनभगवइतितꣳहोवाचयंवैसोम्यैतमणि
मानंननिभालयसएतस्यवैसोम्यैषोणिम्नएवंमहान्न्यग्रोधस्तिष्ठतिश्रद्धत्स्वसोम्येतिसयएषोणि

द्भेदेनज्ञायतेतरौ ॥ हरिःकिमुमनुष्येषुशोषोस्यास्वतंत्रतः ॥ ११ ॥ ज्ञायतेनकथंस्वस्मिन्सूक्ष्मे
ज्ञातेपरोहरिः ॥ तत्रस्थइतिपृष्टःसंस्तमाहोद्दालकःसुतम् ॥ वटबीजेयथासूक्ष्मेमहान्न्यग्रोधभावयु

क् ॥ नदृश्यतेभिमानीसएवंजीवगतोहरिः ॥ १२ ॥ कथंदृश्येतत्तच्छक्तिःपृथक्तस्यब्रह्मदर्शने ॥ इतिभाव
युतंप्राहपुत्रमुद्दालकःपुनः ॥ यथाप्सुलवणंव्याप्तंरसदृष्टौनदृश्यते ॥ एवंचेतनगोविष्णुस्तद्भिन्नोपिन

मैतदात्म्यमिदꣳसर्वंतत्सत्यꣳसआत्मातत्त्वमसिश्वेतकेतोइतिभूयएवमाभगवान्विज्ञापयत्विति
तथासोम्येतिहोवाच॥१२॥लवणमेतदुदकेवधायाथमाप्रातरुपसीदथाइतितद्धतथाचकारतꣳ
होवाचयद्दोषाल्लवणमुदकेऽवधाअंगतदाहरेतितद्धावमृश्यनविवेदयथाविलीनमेवांगास्यांतादा
चामेतिकथमितिलवणमितिमध्यादाचामेतिकथमितिलवणमित्यंत्यादाचामेतिकथमितिलव
णमित्यभिप्रास्यैतदथमोपसीदथाइतितद्धतथाचकारतच्छश्वत्संवर्ततेतꣳहोवाचात्रवावकिल
सत्सोम्यननिभाल्यसेत्रैवकिलेतिसयएषोणिमैतदात्म्यमिदꣳसर्वंतत्सत्यꣳसआत्मातत्त्वमसि
श्वेतकेतोइतिभूयएवमाभगवान्विज्ञापयत्वितितथासोम्येतिहोवाच ॥१३॥यथासोम्यपुरुषं
धारेभ्योऽभिनद्धाक्षमानीयतंततोऽतिजनेविसृजेत्सयथातत्रप्राङ्वोदङ्वाधराङ्वाप्राध्मायीताभि
नद्धाऽक्षआनीतोभिनद्धाक्षोविसृष्टस्तस्ययथाभिनहनंप्रमुच्यप्रब्रूयादेतांदिशंगंधाराएतांदि
शंव्रजेतिसग्रामाद्ग्रामंपृच्छन्पंडितोमेधावीगंधारानेवोपसंपद्येतैवमेवेहाचार्यवान्पुरुषोवेदतस्य
तावदेवचिरंयावन्नविमोक्ष्येथसंपत्स्यतइतिसयएषोणिमैतदात्म्यमिदꣳसर्वंतत्सत्यꣳसआत्मा
तत्त्वमसिश्वेतकेतोइतिभूयएवमाभगवान्विज्ञापयत्वितितथासोम्येतिहोवाच ॥ १४ ॥ पुरु

दृश्यते ॥ १३ ॥ कथंसज्ञायतेविष्णुर्भिन्नइत्यत्रचाब्रवीत् ॥ यथैवान्योपदेशेनबद्धाक्षःस्वगृहंव्र
जेत् ॥ तथाचार्योपदेशेनभिन्नमीशंव्रजेत्पुमान् ॥ १४ ॥ यथापुंसोस्वतंत्रत्वंतज्ज्ञापयतुमाभगवान् ॥ इ

त्युक्तआहज्ञानेहिदृष्टैवास्यास्वतंत्रता ॥ १५ ॥ अभेदज्ञानिनांदोषःकीदृशःस्यादितीरिते ॥ प्राहयस्मा
त्परस्वानांहर्ताराज्ञानिहन्यते ॥ किमुराज्ञोपहर्तैवंब्रह्मस्तेनोनिहन्यते ॥ सर्वेषांशास्तृयद्ब्रह्मतत्स्वरूपतया
स्मरन् ॥ ब्रह्मस्तेनोनिहन्येततमस्यंधेसदैवहि ॥ दोषाह्यज्ञानपूर्वास्तुबद्धापुरुषमीशितुः ॥ विष्णोर्हर्तेतिबा
धंतेचाभिमानकृतास्पदम् ॥ ततोविचारयंत्येनंदेवताहरिणासह ॥ नाहंविष्णुर्नस्वतंत्रोनचपूर्णगुणोस्म्य

पꣳसोम्योपतापिनंज्ञातयःपर्युपासतेजानासिमांजानासिमामितितस्ययावन्नवाङ्मनसिसंपद्य
तेमनःप्राणेप्राणस्तेजसितेजःपरस्यांदेवतायांतावज्जानात्यथयदास्यवाङ्मनसिसंपद्यतेमनःप्रा
णेप्राणस्तेजसितेजःपरस्यांदेवतायामथनजानातिसयएषोणिमैतदात्म्यमिदꣳसर्वंतत्सत्यꣳस
आत्मातत्त्वमसिश्वेतकेतोइतिभूयएवमाभगवान्विज्ञापयत्वितितथासोम्येतिहोवाच ॥ १५ ॥ पु
रुषꣳसोम्योतहस्तगृहीतमानयंत्यपहार्षीत्स्तेयमकार्षीत्परशुमस्मैतपतेतिसयदितस्यकर्ताभव
तिततएवानृतमात्मानंकुरुतेसोनृताभिसंधोनृतेनात्मानमंतर्धायपरशुंतप्तंप्रतिगृह्णातिसदह्यतेथ
हन्यतेथसयदितस्याकर्ताभवतिततएवसत्यमात्मानंकुरुतेससत्याभिसंधःसत्येनात्मानमंतर्धाय
परशुंतप्तंप्रतिगृह्णातिसनदह्यतेथमुच्यतेसयथातत्रनादाह्येतैतदात्म्यमिदꣳसर्वंतत्सत्यꣳसआ
त्मातत्त्वमसिश्वेतकेतोइतितद्धास्यविजज्ञाविति विजज्ञाविति ॥१६ ॥ तदेषश्लोकः सर्वेषां

हम् ॥ ममस्वामीहरिर्नित्यंस्वतंत्रःपूर्णषड्गुणः ॥ एवंदार्ढ्यंशपथवद्यदाकुर्यादयंसदा ॥ जानन्नेवनतापी
स्यादंतरानंदभोगतः ॥ तदातेभ्योमोचयित्वाहत्वामिथ्याभिशंसिनः ॥ स्वकीयंकुरुतेविष्णुरन्यथातैस्सहप्र
भुः ॥ तमस्यंधेपातयतिमहाकारागृहोपमे ॥ महांधेवापातयतिहस्तच्छेदादिसंमिते ॥ ततोधरेवात

द्योग्यंदृढाभेदंवधोपमे ॥ तस्मादाचार्यतोज्ञात्वाविष्णोर्भेदेनपूर्णताम् ॥ उपासीततनोमुक्तियातिनास्त्यत्रसं
शयइत्यादिसामसंहितायाम् ॥ स्वयंभूरितिविष्णुजत्वाद्विरिंचउच्यते ॥ नहिविरिंचादेवविरिंचोजातः ॥
योब्रह्माणंविदधातिपूर्वमित्यादिश्रुतेः ॥ आत्माभगवान् ॥ ततोभूतत्वादात्मभूः ॥ दत्तंदुर्वाससंसोम
मात्मेशब्रह्मसंभवानितिवचनात् ॥ अइतिविष्णुस्तज्जातत्वादजः ॥ अइतिब्रह्मेत्यादिश्रुतेः ॥ वासु
देवात्परोनैवब्रह्मशब्दोदितोभवेदित्यादेश्च ॥ अतःस्वशब्दोविष्णावेवप्रसिद्धः ॥ ततःस्वमपीतोभवती

खलुभूतानामात्मासत्येप्रतिष्ठितः ॥ तेनात्मानमंतर्धायनकिंचित्पापमृच्छति ॥ आत्मसत्या
ऽऽत्मसाक्षीसतांधर्मःप्रतापवान् ॥ नसपापानिकुरुतेयस्यात्माभवतिप्रियः ॥ जायत्येकोम्रियत्ये
कोअश्नात्येकःशुभाशुभमितितद्वास्यविजज्ञाविनिविजज्ञातिविलदेपश्लोकः ॥ सर्वभूतात्म
भूतेभ्यःसम्यग्भूतानिपश्यतोदेवाअपिमार्गेमुह्यंतिपदज्ञानात्पदैषिणःपदज्ञानात्पदैषिणः ॥
( अयंश्लोकपाठःसर्वोपिकाचित्कइतिवेदेशीये ) ॥ १७ ॥ ओमितिश्रीमच्छांदोग्योपनिष
दिषष्ठोऽध्यायः ॥ ६ ॥

तियुज्यते ॥ अप्ययोनामाविज्ञेयत्वेनप्रवेशः ॥ अविज्ञातंप्रविष्टंयदपीतमितिकीर्त्यते ॥ यथानद्यः
समुद्रेतुयथाविष्णुंलयेप्रजाइतिशब्दनिर्णये ॥ नचजीवस्यतद्भावोस्ति ॥ उत्थितस्यसुप्तिसंसारयोः
परामर्शदर्शनात् ॥ अहंविश्वंभुवनमभ्यभवम् ॥ आजन्ममरणंस्मृत्वामुक्ताहर्षमवाप्नुयुरिति ॥ तद्भाव
स्यापरामर्शाच्च ॥ प्राज्ञेनात्मनासंपरिष्वक्तोनबाह्यंकिंचनवेदनांतरमित्यादिश्रुतेश्च ॥ सुषुप्त्युत्क्रांत्योर्भेदेने
तिचभगवद्वचनम् ॥ सन्मूलाःसोम्येमाःसर्वाःप्रजाःसदायतनाःसत्प्रतिष्ठाः ॥ सतिसंपद्यनविदुःसतिसंप

त्स्यामहइति ॥ सतआगम्यनविदुःसतआगच्छामहइति ॥ सएषजीवेनात्मनानुप्रभूतः ॥ पेपीयमानोमो
दमानस्तिष्ठति ॥ अण्व्यइवेमाधानाभगवइत्यासन्नमंगैकांभिंधीतिभिन्नाभगवइतिकिमत्रपश्यसीतिनाकिं
चनभगवइतियैवैसोम्यैतमणिमानंननिभालयसे एतस्यवैसोम्यैषोणिम्नएवंमहान्न्यग्रोधस्तिष्ठति॥लवण
मेतदुदकेवधायाऽथमाप्रातरुपसीदथाइतिसहतथाचकारतंहोवाचयद्दोषालवणमेतदुदकेऽवधाअंगतदाह
रेतितद्धावमृश्यनविवेदयथाविलीनमेवांगास्यांतादाचामेतिकथमितिलवणमिति ॥ मध्यादाचामेतिक
थमितिलवणमित्यंत्यादाचामेतिकथमितिलवणमिति ॥ अत्रवावकिलसत्सोम्यननिभालयसेत्रैवकिले
ति॥एतांदिशंगंधाराएतांदिशंव्रजेति ॥तेजःपरस्यांदेवतायांतावन्नजानाति ॥अपहार्षीत्स्तेयमकार्षीदित्या
दि ॥ नवकृत्वोभिन्नस्यवस्तुनोभेदापरिज्ञानादनर्थंसूक्ष्मत्वाद्भेदस्यदुर्ज्ञेयत्वंचसदृष्टांततात्पर्येणाह ॥ न
चाभेदेकश्चिद्दृष्टांतउक्तः ॥ नहिशकुनिसूत्रयोर्नानावृक्षरसानांनदीसमुद्रयोर्वृक्षपरमात्मनोर्धनापरमात्म
नोर्लवणोदकयोःपुरुषगंधारयोर्नियतज्ञानानियतज्ञानयोश्चाभेदोस्ति ॥ महातात्पर्यविरोधश्चाभेदे ॥
विष्णोःपरमोत्कर्षेहिसर्वप्रमाणानांमहातात्पर्यंभगवताभिहितम् ॥ द्वाविमौपुरुषौलोकेक्षरश्चाक्षरएवच ॥
क्षरस्सर्वाणिभूतानिकूटस्थोक्षरउच्यते ॥ उत्तमःपुरुषस्त्वन्यःपरमात्मेत्युदाहृतः ॥ योलोकत्रयमाविश्य
बिभर्त्यव्ययईश्वरः ॥ यस्मात्क्षरमतीतोहमक्षरादपिचोत्तमः ॥ अतोस्मिलोकेवेदेचप्रथितःपुरुषोत्तमः ॥
योमामेवमसंमूढोजानातिपुरुषोत्तमम् ॥ ससर्वविद्भजतिमांसर्वभावेनभारत ॥ इतिगुह्यतमंशास्त्रमिदमुक्तं
मयानघ ॥ एतद्बुद्ध्वाबुद्धिमान्स्यात्कृतकृत्यश्चभारतेति ॥ भोक्तारंयज्ञतपसांसर्वलोकमहेश्वरम् ॥ सुहृदं
सर्वभूतानांज्ञात्वामांशांतिमृच्छति ॥ ज्ञानंतेहंसविज्ञानमिदंवक्ष्याम्यशेषतः ॥ यज्ज्ञात्वानेहभूयोन्यज्ज्ञा

तव्यमवशिष्यते ॥ मत्तःपरतरंनान्यत्किंचिदस्तिधनंजय ॥ मयिसर्वमिदंप्रोतंसूत्रेमणिगणाइव ॥ राज
विद्याराजगुह्यंपवित्रमिदमुत्तमम् ॥ प्रत्यक्षावगमंधर्म्यंसुसुखंकर्तुमव्ययम् ॥ अश्रद्दधानाःपुरुषाधर्मस्या
स्यपरंतप ॥ अप्राप्यमांनिवर्तंतेमृत्युसंसारवर्त्मनि ॥ मयाततमिदंसर्वंजगदव्यक्तमूर्तिना ॥ मत्स्थानिसर्वभू
तानिनचाहंतेष्ववस्थितः ॥ नचमत्स्थानिभूतानिपश्यमेयोगमैश्वरम् ॥ अवजानंतिमांमूढामानुषींतनुमा
श्रितम् ॥ परंभावमजानंतोममभूतमहेश्वरम् ॥ मोघाशामोघकर्माणोमोघज्ञानाविचेतसः ॥ राक्षसीमा
सुरींचैवप्रकृतिंमोहिनींश्रिताः ॥ महात्मानस्तुमांपार्थदैवींप्रकृतिमाश्रिताः ॥ भजंत्यनन्यमनसोज्ञात्वाभू
तादिमव्ययम् ॥ योमामजमनादिंचवेत्तिलोकमहेश्वरम् ॥ असंमूढःसमर्त्येषुसर्वपापैःप्रमुच्यते ॥ परंभूयः
प्रवक्ष्यामिज्ञानानांज्ञानमुत्तमम् ॥ यज्ज्ञात्वामुनयःसर्वेपरांसिद्धिमितोगताः ॥ ममयोनिर्महद्ब्रह्मतस्मिन्ग
र्भंदधाम्यहम् ॥ संभवःसर्वभूतानांततोभवतिभारत ॥ येमांज्ञात्वागुणैःपूर्णंनचलंतितनःक्वचित् ॥ तैरवा
प्योनचैवान्यैरहंसर्वेश्वरेश्वरः ॥ येतुमद्गुणसंपूर्तौज्ञानस्नेहस्थिरात्मकाः ॥ तेषांहस्तगतोमोक्षोमामेव
स्मरतांसदा ॥ येमन्यंतेगुणापूर्तिंतमस्तेषांपरायणम् ॥ नचतेभ्योप्रियोमह्यंयश्चस्याद्गुणपूर्तिवित् ॥ सम
मामोतिनियतंनचतस्मात्प्रियोमम ॥ प्रमाणान्यखिलान्येवतर्काश्चैतत्पराःसदा ॥ एतद्विरुद्धंयन्मानं
तर्कश्चाभासएवत्वित्यादौ ॥ तंभूतिरितिदेवाउपासांचक्रिरेतेबभूवुस्तस्माद्धाप्येतर्हिसुप्तोभूर्भूरित्येवप्रश्व
सित्यभूतिरित्यसुरास्तेहपराबभूवुः ॥ भूमैवदेवःपरमोह्युपास्योनैवाभूमाफलमेषांविधत्ते ॥ तस्माद्भूमागु
णतोवैविशिष्टोयथाक्रतुःकर्ममध्येविशिष्टः ॥ असुन्वंतंसमंजहिदूणाशंयोनतेमयः ॥ अस्मभ्यमस्य
वेदनंदद्धिसूरिश्चिदोहते ॥ सत्यःसोअस्यमहिमागृणेशवोयज्ञेपुविप्रराज्ये ॥ एतावानस्यमहिमाअतो

ज्यायांश्चपूरुषः ॥ तमेवंविद्वानमृतइहभवतिनान्यःपंथाअयनायविद्यते ॥ सृष्टिःस्थितिश्चसंहारो
नियतिर्ज्ञानमावृतिः ॥ बंधमोक्षौचकथ्यंतेयस्योत्कर्षप्रसिद्धये ॥ यस्योत्कर्षप्रसिद्ध्यर्थंसर्वेवेदाश्चयु
क्तयः ॥ ज्ञात्वैवचयदुत्कर्षंमुच्यंतेसहरिःपरः ॥ अथातमस्यमहिमानमायवोनुष्टुवंतिपूर्वथेत्यादिश्रुति
श्चविष्णोरुत्कर्षेमहातात्पर्यंकथयति ॥ महातत्परताविष्णोरुत्कर्षेवांतराततः ॥ अन्यत्रसर्ववाक्यानां
युक्तीनांचविशेषतइतिब्रह्मांडे ॥ ॐभूम्नःक्रतुवज्ज्यायस्त्वंतथाचदर्शयतिॐ ॥ ब्रह्मदृष्टिरुत्कर्षादित्या
दिनिर्णयात्मकंभगवद्वचनम् ॥ नचशारीरपराभेदेतात्पर्यमित्यत्रकिंचिन्मानम् ॥ अतत्त्वमसीतिभेदस्यन
वक्तत्वोभ्यासाच्च ॥ ॐभेदव्यपदेशात्ॐ ॥ ॐभेदव्यपदेशाच्चान्यःॐ ॥ ॐअनुपपत्तेस्तुनशारीरःॐ
॥ॐशारीरश्चोभयेपिहिभेदेनैनमधीयतेॐ ॥ ॐपृथगुपदेशात्ॐ ॥ इत्यादिनासर्वत्रभेदस्यैवभगवतानि
र्णीतत्वाच्च॥पुरुषएवेदंसर्वमितिचपुरुषेणेदंसर्वंव्याप्तंयद्भूतंयच्चभव्यम्॥नचभगवान्गोत्वेनमनुष्यत्वेनवाभव
ति ॥ आतृणादाकरीषात्सर्वंभगवानितिमिथ्यादृष्टिरेषा ॥ दधिसक्तवोघृतौदनमित्यादौव्याप्तशब्दाभावेपि
व्याप्तशब्दोवगम्यते ॥ दधिसिक्ताःसक्तवोघृतसिक्तमोदनमितिश्रुतिः ॥ पुरुषएवेदंसर्वंयद्भूतंयच्चभव्यमि
तिपुरुषेणहीदंनेनीयतइतिच ॥ अतःसर्वप्रमाणानांभगवदुत्कर्षएवमहातात्पर्याच्छारीराभेदंवदतांमहा
तात्पर्यविरोधः ॥ अज्ञानदुःखसंबंधाद्यावज्ज्ञानंशरीरिणः ॥ सर्वदाज्ञानकंविष्णुमहस्मीतियेविदुः ॥ अज्ञा
नदुःखमंतारस्ततस्तेनीचतांविदुः ॥ विष्णोरुत्कर्षहर्तॄणांनैवतेषांसुखंक्वचित् ॥ योन्यथासंतमीशेशंस्वरूपं
प्रतिपद्यते ॥ किंतेननकृतंपापंचोरेणेशापहारिणा ॥ ऐकात्म्यंनामयदिदंकेचिद्ब्रूयुरनैपुणाः ॥ शास्त्रतत्त्वम
विज्ञायतथावादबलाज्जनाः ॥ कर्मक्रोधाभिभूतत्वादहंकारवशंगताः ॥ ब्रह्मस्तेनानिरानंदाअपक्वमनसोऽशि
वाः ॥ याथातथ्यमविज्ञायशास्त्राणांशास्त्रदस्यवः ॥ वैगुण्यमेवपश्यंतिनगुणानिनियुंजते ॥ तेषांतमःश
रीराणांतमएवपरायणम् ॥ यतःस्वरूपतश्चान्योजातितःश्रुतितोर्थतः ॥ कथमस्मिसइत्येवसंबंधस्स्यादसं

हितइति ॥ बहवःपुरुषाब्रह्मन्नुताहोएकएवतु ॥ कोह्यत्रपुरुषश्रेष्ठस्तंभवान्वक्तुमर्हति ॥ वैशंपायनउवा
च ॥ नैतदिच्छंतिपुरुषमेकंकुरुकुलोद्वह ॥ बहूनांपुरुषाणांहियथैकायोनिरुच्यते ॥ तथातंपुरुषंविश्वमा
ख्यास्यामिगुणाधिकमितिमोक्षधर्मवचनाच्च ॥ हंनामहन्यमानत्वाज्जीवस्यसमुदाहृतम् ॥ जीवादन्योय
तोविष्णुरहंनामाततःस्मृतः ॥ स्मीतिजीवःसमुद्दिष्टःस्मीत्यल्पंसुमितत्वतः ॥ पूर्णत्वादस्मिनामासौपूर्णपू
र्णत्वहेतुतः ॥ ब्रह्मास्मीत्युच्यतेविष्णुर्बृहत्पूर्णोयतःसदा ॥ असौसूर्यगतोविष्णुर्दूरस्थत्वात्प्रकीर्तितः ॥ अ
हंनामाजीवगतोनित्याहेयत्वहेतुतइतिब्रह्मांडे ॥ परंज्योतिरुपसंपद्यस्वेनरूपेणाभिनिष्पद्यतेसउत्तमःपुरुषः
सतत्रपर्यैतिजक्षन्क्रीडन्रममाणःस्त्रीभिर्वायानैर्वा ॥ सएकधाभवतित्रिधाभवतिपंचधासप्तधा ॥ योवेद
निहितंगुहायांपरमेव्योमन् ॥ सोश्नुतेसर्वान्कामान्सहब्रह्मणाविपश्चिता ॥ एतमानंदमयमात्मानमुपसंक्र
म्य ॥ इमाँल्लोकान्कामान्नीकामरूप्यनुसंचरन् ॥ एतत्सामगायन्नास्ते ॥ सयआत्मानमेवलोकमुपास्ते
नहास्यकर्मक्षीयतेऽस्माद्ध्येवात्मनोयद्यत्कामयतेतत्तत्सृजते ॥ तेहनाकंमहिमानःसचंतयत्रपूर्वेसाध्याः
संतिदेवाः ॥ तदाविद्वान्पुण्यपापेविधूयनिरंजनःपरमंसाम्यमुपैति ॥ यथोदकंशुद्धेशुद्धमासिक्तंतादृगेवभ
वति ॥ नानात्वेनाभिसंबद्धास्तदातत्कालभाविना ॥ प्रकृतौकरणातीताःस्वात्मन्येवव्यवस्थिताः ॥ संयो
गःप्रकृतेर्नैषांमुक्तानांतत्त्वदर्शनात् ॥ पुरुषान्यबहुत्वेनप्रतीतानप्रवर्तते ॥ प्रवर्ततिपुनःसर्गेतेषांसानप्रवर्त
ते ॥ इदंज्ञानमपाश्रित्यममसाधर्म्यमागताः ॥ सर्गेपिनोपजायंतेप्रलयेनव्यथंतिच ॥ नयत्रमायाकिमु
तापरेहरेरनुव्रतायत्रसुरासुरार्चिताइत्यादिश्रुतिस्मृतिषुसतात्पर्यंमुक्तानांविष्णोर्भेदस्यैवोक्तेः ॥ सन्मूलाः
सोम्येमाःसर्वाःप्रजाःसदायतनाःसत्प्रतिष्ठाःसतिसंपद्यनविदुःसतआगम्यनविदुरित्यादौभेदएवब्रह्मत्रसतात्प
र्येप्रतिपादितः ॥ तानद्यःसमुद्रादागत्यसमुद्रंप्रविशंतिससमुद्रएवभवतिननदीभावंप्राप्नोतिसएवचसमुद्रोभ
वतिसमुद्रएवसमुद्रोभवतिननद्यइतिभेदस्यैवावधारणंक्रियते ॥ नचस्वकीयस्यब्रह्मभावस्याज्ञोपहर्ताभव

ति ॥ किंत्वविद्यमानब्रह्मभावाभिमंतैवापहर्ता ॥ नहिस्वकीयवित्तपरित्याग्यपहर्ताभवति ॥ किंतुपरस्व
हर्तैव ॥ तस्मादविद्यमानब्रह्मभावाभिमंतैवापहार्षीत्स्तेयमकार्षीदितिदृष्टांतपूर्वकमुच्यते ॥ अदुःखित्वपू
र्णज्ञानानंदस्वातंत्र्यादिब्रह्मस्वभावाननुभवन्स्वात्मनोपिज्ञात्वैवतद्भावाभिमतेःस्तैन्यम् ॥ परकीयाभिमते
रपहारः ॥ परस्वभावाभिमतेरपहर्तास्ववंचनात् ॥ स्तेनश्चाभेदवेत्तातुब्रह्मणोहन्यतेसदेतितत्त्वविवेके ॥
नचदार्ढ्यमात्रेदृष्टांतोयम् ॥ सयदितस्यकर्ताभवतिसयदितस्यकर्तानभवतीतिहतिमुक्त्योरपहारानपहारै
कहेतुकत्वश्रुतेः ॥ अन्यथायदिदृढोभवतियद्यदृढोभवतीत्युच्येत ॥ नचसत्यासत्यमात्रम् ॥ तदासत्यानृ
तवाग्दृष्टांतेनपूर्तेरपहारदृष्टांतोनस्यात् ॥ तस्मादभेदज्ञानेनमहांतंविनाशंप्रदर्श्यभेदज्ञानान्मुक्तिपरमेवैतद्वा
क्यम् ॥ भिन्नस्यैवोत्कर्षोभवति ॥ अभिन्नस्यकुतउत्कर्षःस्यात् ॥ अज्ञानदुःखयुक्तत्वाच्च ॥ नहितत्प
क्षेपरमार्थदुःखिनोभ्रांत्यादुःखिनश्चतत्कालेकश्चिद्विशेषः ॥ अस्वातंत्र्यंचभ्रांतस्यनिश्चितमेव ॥ नहिभ्र
मःस्वेच्छयायुज्यते ॥ स्वात्मानंपरमंविष्णुंविदित्वैवसराघवः ॥ दैत्यानांमोहनार्थायदर्शयामासमूढतामि
तिपाद्मे ॥ ॐजगद्व्यापारवर्जम्ॐ ॥ ॐप्रकरणात्ॐ ॥ इत्यैश्वर्यमर्यादयामुक्तानांब्रह्मणश्चभेदस्यैव
निर्णीतत्वाच्चभगवता ॥ ब्रह्मसूत्रानुसारेणवेदाद्यंसर्वमेवच ॥ योज्यंनब्रह्मसूत्राणिदृश्यमानार्थतोन्यथेतिच
ब्रह्मवैवर्ते ॥ चोरदृष्टांततोयस्यह्यभेदज्ञानतस्तमः ॥ भेदेनोत्कर्षवेत्तुस्तुमुक्तिरेवह्यचोरवदितिच ॥ सारत्वा
त्सइतिप्रोक्तोज्ञानत्वाद्यइतीरितः ॥ सर्वस्येष्टइतिश्लेषमानानामणकोणिमा ॥ तत्तंत्रत्वादैतदात्म्यंससत्यः
साधुरूपतः ॥ तत्ततेःपूर्णतश्चात्मासादनात्सइतीरितः ॥ अतत्त्वमसिपुत्रेतियउक्तोगौतमेनतु ॥ नवकृत्वः
सदृष्टांतंसर्वभेदेनकेशवः ॥ तस्मैनमोभगवतेचिदचित्परमायते ॥ पुरुषोत्तमायदेवायपूर्णानंदैकरूपिणेइ
तिसामसंहितायाम् ॥ अतःसर्वचिदचिद्विलक्षणःसर्वोत्तमःसर्वगुणपरिपूर्णोभगवान्पुरुषोत्तमइतिसिद्धम्
॥ ७ ॥ इतिश्रीमदानंदतीर्थभगवत्पादाचार्यविरचितेछांदोग्योपनिषद्भाष्येषष्ठोऽध्यायः ॥ ६ ॥ ॥

हरिॐ ॥ यद्वेत्थतेनतदुक्त्वामामुपसीद ॥ पितृलक्षणंतुपित्र्यंस्याद्राशिःस्यात्पूगलक्षणम् ॥ देवताल
क्षणंदैवंनिधिश्चनिधिलक्षणम् ॥ वाकोवाक्यंमूलवेदोवेदसारोपसंहृतिः ॥ एकायनमितिप्रोक्तंदेवविद्यात्व
मानुषी ॥ देवज्ञेयैवयाविद्याब्रह्मविद्यातथारणम् ॥ भूतविद्याभूतचिह्नंक्षत्रविद्यातुनीतिका ॥ नाक्षत्री

॥ हरिःॐ ॥ अधीहिभगवइतिहोपससादसनत्कुमारंनारदस्तꣳहोवाचयद्वेत्थतेनमोपसीदतत
स्तऊर्ध्वंवक्ष्यामीतिसहोवाचऋग्वेदंभगवोऽध्येमियजुर्वेदंसामवेदमाथर्वणंचतुर्थमितिहासपुरा
णंपंचमंवेदानांवेदंपित्र्यꣳराशिंदैवंनिधिंवाकोवाक्यमेकायनंदेवविद्यांब्रह्मविद्यांभूतविद्यांक्षत्र
विद्यांनक्षत्रविद्याꣳसर्पदेवजनविद्यामेतद्भगवोऽध्येमिसोऽहंभगवोमंत्रविदेवास्मिनात्मविच्छ्रुतꣳ
ह्येवमेभगवद्दृशेभ्यस्तरतिशोकमात्मविदितिसोऽहंभगवःशोचामितन्माभगवाञ्छोकस्यपारंता
रयत्वितितꣳहोवाचयद्वैकिंचैतदध्यगीष्ठानामैवैतन्नामवाऋग्वेदोयजुर्वेदःसामवेदआथर्वणश्च
तुर्थइतिहासपुराणःपंचमोवेदानांवेदःपित्र्योराशिर्दैवोनिधिर्वाकोवाक्यमेकायनंदेवविद्याब्रह्म
विद्याभूतविद्याक्षत्रविद्यानक्षत्रविद्यासर्पदेवजनविद्यानामैवैतन्नामोपास्स्वेतिसयोनामब्रह्मेत्यु
पास्तेयावन्नाम्नोगतंतत्रास्ययथाकामचारोभवतियोनामब्रह्मेत्युपास्तेऽस्तिभगवोनाम्नोभूयइ

ज्यौतिषाख्याचसर्पलक्षणमेवच ॥ सर्पविद्येतिसंप्रोक्तायादेवपरिचारगा ॥ सादेवजनविद्यास्यादेतावेदस
नारदइतिसामसंहितायाम् ॥ विद्यानांनिर्णयाज्ज्ञानादविद्वानुच्यतेपुमान् ॥ सर्वविद्याविदप्यद्धातस्मान्निर्ण
यवित्तये ॥ कुमारमैच्छद्देवर्षिर्नारदोब्रह्मवित्तममितिच ॥ विष्णोर्नामयतोविद्याःसर्वनामेत्यतःस्मृतः ॥
नामाभिमानिनीचोपास्तस्यांब्रह्मपरंस्मरेत् ॥ यद्देषानत्वमेयास्यान्मीयतेह्युषसिध्रुवम् ॥ रात्रिमान

मजानद्भिस्ततोनामेत्युषाःस्मृता ॥ १ ॥ तस्यास्तुभूयसीस्वाहाधर्मज्ञानसुखादिभिः ॥ सर्वैर्गुणैर्विमुक्तौच
तथाबंधेचसर्वदा ॥ वाचोभिमानिनीसैववाङ्नाम्नीचांचनाद्वसोः ॥ २ ॥ एवंतस्याविमुक्तौचपर्जन्यःस



तिनाम्नोवावभूयोस्तीतितन्मेभगवान्ब्रवीत्विति ॥ १ ॥ वाग्वावनाम्नोभूयसीवाग्वाऋग्वेदंवि
ज्ञापयतियजुर्वेदꣳसामवेदमाथर्वणंचतुर्थमितिहासपुराणंपंचमंवेदानांवेदंपित्र्यंराशिंदैवंविधिं
वाकोवाक्यमेकायनंदेवविद्यांब्रह्मविद्यांभूतविद्यांक्षत्रविद्यांनक्षत्रविद्याꣳसर्पदेवजनविद्यांदि
वंचपृथिवींचवायुंचाकाशंचापश्चतेजश्चदेवाꣳश्चमनुष्याꣳश्चपशूꣳश्चवयाꣳसिचतृणवनस्पती
ꣳश्वापदान्याकीटपतंगपिपीलिकंधर्मंचाधर्मंचसत्यंचानृतंचसाधुचासाधुचहृदयज्ञंचाहृदयज्ञं
चयद्वैवाङ्नाभविष्यन्नधर्मोनाधर्मोव्यज्ञापयिष्यन्नसत्यंनानृतंनसाधुनासाधुनहृदयज्ञोनाहृद
यज्ञोवागेवैतत्सर्वंविज्ञापयतिवाचमुपास्स्वेतिसयोवाचंब्रह्मेत्युपास्तेयावद्वाचोगतंतत्रास्ययथा
कामचारोभवतियोवाचंब्रह्मेत्युपास्तेस्तिभगवोवाचोभूयइतिवाचोवावभूयोस्तीतितन्मेभग
वान्ब्रवीत्विति ॥ २ ॥ मनोवाववाचोभूयोयथावैद्वेवाऽऽमलकेद्वेवाकोलेद्वौवाऽक्षौमुष्टि
रनुभवत्येवंवाचंचनामचमनोनुभवतिसयदामानसामनस्यतिमंत्रानधीयेत्यथाधीतेकर्माणि
कुर्वीयेत्यथकुरुतेपुत्राꣳश्चपशूꣳश्चेच्छेयेत्यथेच्छतइमंचलोकममुंचेच्छेयेत्यथेच्छतेमनोह्या
त्मामनोहिलोकोमनोहिब्रह्ममनउपास्स्वेतिसयोमनोब्रह्मेत्युपास्तेसयावन्मनसोगतंतत्रास्यय
थाकामचारोभवतियोमनोब्रह्मेत्युपास्तेस्तिभगवोमनसोभूयइतिमनसोवावभूयोस्तीतितन्मे



र्वतोवरः ॥ मनोभिमानीसंप्रोक्तोव्यष्ट्यानिर्माणतोमनः ॥ ३ ॥ तथातस्माद्वरोमित्रोमुक्तौसंकल्पदेवता ॥

अङ्गिसंकल्पयेद्यस्मात्स्वप्स्यंतिनिशियत्ततः ॥ तथामित्राद्वरस्त्वग्निर्मुन्नौचित्तस्यदेवता ॥ चितत्वाच्चित्त नामाचतस्माद्वरुणएवच ॥ ध्यानस्यदेवताचासौतन्नामाचनिधानतः ॥ सत्यान्नतविवेकार्थंतथात.स्मान्नि शाकरः ॥ विज्ञानदेवताचासौतन्नामाचविवेचनात् ॥ सत्यस्यतस्माच्चतथावायुर्भूतात्मकोवरः ॥ बला त्मकस्तथातस्मादन्नदेवोनिरुद्धकः ॥ अन्ननामानुनादित्वात्तैजसाहंभवस्ततः ॥ तथावरिष्ठःप्रा.णाख्योवा

भगवान्ब्रवीत्विति ॥ २ ॥ संकल्पोवावमनसोभूयान्यदावैसंकल्पयतेथमनस्यत्य थवाचमीरयतितामुनाम्नीरयतिनाम्निमंत्राएकंभवंतिमंत्रेषुकर्माणिनानिहवाएतानिसंक ल्पैकायनानिसंकल्पात्मानिसंकल्पेप्रतिष्ठितानिसमकॢपतांद्यावापृथिवीसमकल्पेतांवायुश्चा काशश्चसमकल्पंतामापश्चतेपांसंकॢप्त्यैवर्षंसंकल्पतेवर्पस्यसंकॢप्त्याअन्नंसंकल्पतेऽन्नस्य(सं

युःसोपांचदेवता ॥ अम्नामादेहसंव्याप्तेस्तथातस्मात्पुरंदरः ॥ तेजोभिमानीतन्नामातेजोम्नोजइतीर्यते ॥ तथातस्मादुमाचैवसाचाकाशाभिमानिनी ॥ आकाशनाम्नीदीप्तत्वात्तस्याश्चैवसदाशिवः ॥ स्थिरस्मृत्य भिमानीससममेवरतेःस्मरः ॥ मुख्यवायुप्रियातस्मात्परमैवसरस्वती ॥ बंधमुक्त्योःसर्वगुणैःसर्वदाऽऽशास्व रूपिणी ॥ शमित्यानंदउद्दिष्टआशापूर्णसुखत्वतः ॥ तस्याःश्रेष्ठोमुख्यवायुःप्रकृष्टानांचनायकः ॥ प्राण

नामाणइत्येवह्यानंदःसमुदीरितः ॥ आणासरस्वतीप्रोक्तातत्प्रकृष्टसुखत्वतः ॥ प्राणइत्युच्यतेवायुःसर्वेत्वेतेद
शोत्तराः ॥ पर्जन्यमित्रशिखिनोभूतवायुस्तथैवच ॥ द्विगुणाएवानिरुद्धोनिलात्पंचगुणाधिकः ॥ पादो
नोवरुणादग्निरध्यर्धोनस्समोमतः ॥ शिवादाशातथैवास्यामुख्यवायुःशतोत्तरौ ॥ संख्यान्यथात्वंयत्रस्या
त्तत्रावेशविशेषतः ॥ अवराणांगुणस्यापिपरमीयत्वतस्तथा ॥ प्राणात्तुभगवान्विष्णुरनंतगुणतोधिकः ॥
नित्यमुक्तोनित्यशक्तिर्नित्योद्रिक्तगुणःप्रभुरितित्त्वविवेके ॥ सैषानंदस्यमीमांसाभवतीत्यादेश्च ॥ अथातः
संभूतिःपरमाद्विद्याविद्यायाःप्राणःप्राणाच्छ्रद्धाश्रद्धायाःशिवश्शिवाद्बुद्धिर्बुद्धेरिंद्रइंद्रात्तैजसःप्राणस्तैजसा

क्लृप्स्यैप्राणाःसंकल्पंतेप्राणानाᳬसंक्लृप्त्यैमंत्राःसंकल्पंतेमंत्राणांसंक्लृप्त्यैकर्माणिसंकल्पंतेकर्मणाᳬ
संक्लृप्त्यैलोकाःसंकल्पंतेलोकानांसंक्लृप्त्यैसर्वंसंकल्पतेसएषसंकल्पःसंकल्पमुपास्वेतिसयःसंक
ल्पंब्रह्मेत्युपास्तेक्लृप्तान्वैसल्लोकान्ध्रुवान्ध्रुवःप्रतिष्ठितान्प्रतिष्ठितोऽव्यथमानान्व्यथमानोभिसि
द्ध्यतियावत्संकल्पस्यगतंतत्रास्ययथाकामचारोभवतियःसंकल्पंब्रह्मेत्युपास्तेस्तिभगवःसंक
ल्पाद्भूयइतिसंकल्पाद्वावभूयोस्तीतितन्मेभगवान्ब्रवीत्विति ॥ ४ ॥ चित्तंवावसंकल्पाद्भू

दनिरुद्धोनिरुद्धात्स्पर्शवातःस्पर्शवातात्सोमस्सोमाद्वरुणोवरुणादग्निरग्नेर्मित्रोमित्रात्पर्जन्यःपर्जन्यात्स्वाहा
स्वाहायाउषाजायतेतेषांपरःपरोज्यायान्गुणैरुत्तरउत्तरःप्रत्यवरःपरस्मात्परस्मादुत्तरउत्तरोमुच्यतेस्वंस्वंभा
वमापद्यते ॥ नैषांपारावर्यमुच्छिद्यतेकदाचननैषांपारावर्यमुच्छिद्यतेकुतश्चनपारावर्येणैवब्रह्मोपर्यंतिपारा
वर्येणैवमुक्ताःसंचरंतीत्यादिश्रुतेश्च ॥ नामादिमारुतांतेषुदेवेष्वेभ्यश्चभेदतः ॥ उपासितोहरिर्मुक्तिंदद्यान्नास्त्य
त्रसंशयइतिसत्तत्त्वे ॥ उषादिमारुतांतेषुसमःसमगुणोपिसन् ॥ ध्यातःप्रीतिंहरिर्यायादधिकामुत्तरोत्तरे ॥ उत्त

मेषूत्तमाप्रीतिस्तस्यतत्रस्मृतस्ततः॥ध्यातुरप्युत्तमांप्रीतिंयायान्नास्त्यत्रसंशयः ॥ तारतम्यपरिज्ञानात्तेषु
ध्यातोविमुक्तिदः ॥ प्रीतिंनचान्यथायायादितिशास्त्रस्यनिर्णयइतितत्त्वविवेके ॥ नामादिप्राणपर्यंताः
सप्तम्यर्थाःप्रकीर्तिताः॥तृतीयापंचमीषष्ठीचतुर्थ्यर्थाश्चसर्वशः॥शब्दास्तेब्रह्मशब्देनसंबध्येयुर्यदातदा ॥
ब्राह्मणोस्यमुखंयद्वदात्मावैपुत्रकोयथा ॥ यथाचयूपआदित्यएवमेषप्रकीर्तितः ॥ सप्तसुप्रथमाय
स्माद्भूयोभूयस्त्वतस्तथा ॥ षट्सुद्वितीयायस्माच्चकारणत्वात्परस्यच ॥ नह्यन्यदन्यदित्येवध्यातंस्यात्पु
रुषार्थदम् ॥ अनर्थश्चभवेत्तस्माद्भृत्येराजेतिबोधवत् ॥ राजपूजांयथाभृत्येकुर्याद्राजाहिनस्तिहि ॥

योयदावैचेतयतेथसंकल्पयतेथमनस्यत्यथवाचमीरयतितामुनाम्नीरयतिनाम्निमंत्राएकंभवं
तिमंत्रेषुकर्माणितानिहवाएतानिचित्तैकायनानिचित्तात्मानिचित्तेप्रतिष्ठितानितस्माद्यद्यपि
बहुविदचित्तोभवतिनायमस्तीत्येवैनमाहुर्यदयंवेदयद्वाअयंविद्वान्नेत्थमचित्तःस्यादित्यथय

तद्वशत्वात्तथाभृत्यएवंनामादिकंचयः ॥ उपास्तेब्रह्मरूपेणतंब्रह्माथेतराणिच ॥ पातयंतितमस्यंधेतस्मान्ने
क्षेततांस्तथेतिसामसंहितायाम् ॥ अचेतनमयोग्यंचतथैवाता[illegible]कंकचित् ॥ नोपासीतपरोनर्थःस्यात्तथो
पासनाकृतः ॥ दर्भचर्मादयश्चातोदेवताअभिमानिन ॥ नह्यचेतनकंकिंचित्फलदंस्यात्कदाचन ॥ औषधा
दिषुचैतस्माद्देवाएववरप्रदाः॥औषधादिस्थितादेवास्तेज्ञेदृष्टफलप्रदाः ॥ ज्ञानिन्यदृष्टदाश्चस्युर्नादैवंकिंचि
दिष्यते ॥ यथान्नस्यापिराज्ञस्तुभोजनंकृप्तमिष्यते ॥नत्वविज्ञायराजानंग्रामप्राप्तिस्ततोभवेत् ॥ एवंदेवाद

ष्टफलंदद्युरज्ञस्यचाल्पतः ॥ किंचिज्ज्ञानकृतादृष्टात्तच्चनैवान्यथाभवेत् ॥ अदृष्टाख्यंफलंयत्तुतज्ज्ञस्यैव
नचान्यगम् ॥ तस्मादचेतनोपासांनकुर्यात्कापिकश्चन ॥ नचासत्यांनचायोग्यांयदीच्छेदुत्तमंफल
म् ॥ यदिनेच्छेत्तमोगंतुंयदिचेच्छेद्धरेःप्रियम् ॥ अथकर्तव्यकारीचमुमुक्षुरथवाभवेत् ॥ सोपीच्छेत
हरेःप्रीतिंनात्रकार्याविचारणेत्युपासनालक्षणे ॥ ॐअभिमानव्यपदेशस्तुविशेषानुगतिभ्याम्ॐ ॥ ॐ
पयोंबुवच्चेत्तत्रापीतिभगवद्वचनम् ॥ देवेषुचमर्दादिनामानिसंवादादेरितिचदेवतामीमांसायाम् ॥ अचेतना

**द्यल्पविच्चित्तवान्भवतितस्माएवैतशुश्रूषंतेचित्तंह्येवैषामेकायनंचित्तमात्माचित्तंप्रतिष्ठा
चित्तमुपास्स्वेतिसयश्चित्तंब्रह्मेत्युपास्तेचित्तान्वैसलोकान्ध्रुवान्ध्रुवःप्रतिष्ठितान्प्रतिष्ठितोऽव्यथ
मानानव्यथमानोभिसिध्यसियावच्चित्तस्यगतंतत्रास्ययथाकामचारोभवतियश्चित्तंब्रह्मेत्युपा
स्तेस्तिभगवश्चित्ताद्भूयइतिचित्ताद्वावभूयोस्तीतितन्मेभगवान्ब्रवीत्विति॥५॥ध्यानंवावचित्ता
द्भूयोध्यायतीवपृथिवीध्यायतीवद्यौर्ध्यायतीवांतरिक्षंध्यायंतीवापोध्यायंतीवपर्वताध्यायंती
वदेवमनुष्यास्तस्माद्यइहमनुष्याणांमहत्तांप्राप्नुवंतिध्यानापादांशाइवैवतेभवंत्यथयेल्पाःकल**

सत्यायोग्यान्यनुपास्यान्यफलत्वविपर्ययाभ्यामितिसंकर्षणसूत्रम् ॥ ओषधयःसंवदंतेसोमेनसहराज्ञा ॥
प्रवोग्रावाणःसवितादेवःसुवतुधर्मणा ॥ नक्तंत्वक्रियतेकिंचनारेमहामर्कंमघवन्चित्रमर्च ॥ नदेवा
नामतिव्रतंशतात्माचनजीवति ॥ अनेहसोवऊतयःसुऊतयोवऊतयः ॥ द्यावापृथिवीजनयन्नभिव्रता
पओषधीर्वनिनानियज्ञिया ॥ अंतरिक्षंस्वा१रापप्रुरूतयेवशंदेवासस्तन्वी३निमामृजुः ॥ अचेतनं
चेतनेभ्योदैवतेभ्यश्चचेतनाः ॥ देवाःप्राणाच्चसप्राणोविष्णोरेवसदैवतु ॥ स्वभावंचप्रवृत्तिंचविकारंचसम

मुयुः॥कश्चिद्भावकृतेतेषांनैतस्याश्चकदाचन॥अचेतनप्रवृत्तौतुनदृष्टांतोस्तिकश्चन ॥ चेतनानांप्रवृत्तेश्चदृ
ष्टत्वादेवसर्वशः ॥ अदृष्टंदृष्टवज्ज्ञेयंयथादृष्टप्रणेतृकम्॥विसर्पत्तंडुलंदृष्ट्वाकल्प्यातत्रपिपीलिका॥नतदृष्टै
वदृष्टानामपिपीलिकसर्पणम्॥एवंदृष्टानुसारेणचिदधीनमचेतनम्॥ दुर्घटाशक्तिरपिहिपिशाचानांहिदृश्य
ते॥देवानांकिमुकिम्वेवपरमस्यहरेःप्रभोरित्यादिब्रह्मतर्के॥हृदयज्ञोभगवत्तत्त्वज्ञः॥हृदयनाद्धृदयम्॥उदरंब्र

ह्मिनःपिशुनाउपवादिनस्तेथयेप्रभवोध्यानापादश्शाइवैवतेभवंतिध्यानमुपास्वेतिसयोध्यानंब्र
ह्मेत्युपास्तेयावद्ध्यानस्यगतंतत्रास्ययथाकामचारोभवतियोध्यानंब्रह्मेत्युपास्तेस्तिभगवोध्या
नाद्भूयइतिध्यानाद्वावभूयोस्तीतितन्मेभगवान्ब्रवीत्विति ॥ ६ ॥ विज्ञानंवावध्याना
द्भूयोविज्ञानेनवाऋग्वेदंविजानातियजुर्वेदंसामवेदमाथर्वणंचतुर्थमितिहासपुराणंपंचमंवेदा
नांवेदंपित्र्यंराशिंदैवंनिधिंवाकोवाक्यमेकायनंदेवविद्यांब्रह्मविद्यांभूतविद्यांक्षत्रविद्यांनक्षत्र
विद्यांसर्पदेवजनविद्यांदिवंचपृथिवींचवायुंचाकाशंचापश्चतेजश्चदेवांश्चमनुष्यांश्चपशूं
श्चवयांसिचतृणवनस्पतीञ्छ्वापदान्याकीटपतंगपिपीलिकंधर्मंचाधर्मंचसत्यंचानृतंचसाधुचासा
धुचहृदयज्ञंचाहृदयज्ञंचान्नंचरसंचेमंलोकममुंचविज्ञानेनैवविजानातिविज्ञानमुपास्वेतिसयो

ह्मेतिशार्कराक्ष्याउपासतेहृदयंब्रह्मेत्यारुणयइतिश्रुतिः ॥ कोलंपूगफलंप्रोक्तंकलंतांबूलपत्रकमित्यभिधा
नम्॥भूतानांभौतिकानांचमंत्राद्युतिगणस्यच॥अचेतनगणस्यास्यकल्पकोमित्रनामकः ॥ प्राणाभूतानिमं
त्राद्याश्चिदचित्त्वविभेदिनः ॥ अचितांकल्पकोमित्रश्चितांवाय्वादयःस्मृताइतिवस्तुतत्त्वे ॥ सर्वमचेतनं
संकल्प्यते ॥ अस्थिरस्मरणंचित्तंस्थिरसंस्मरणंस्मरइतिशब्दनिर्णये ॥ वेदनंज्ञानमात्रंस्याद्विद्वत्त्वंतुविशे

षतइतिच ॥ मोक्षेयस्मिन्प्रवेशःस्यात्साप्रतिष्ठाहिमुख्यतः ॥ उपचारतस्त्ववस्थानमितिशब्दविदोविदुरितिच ॥ देवामनुष्यतांप्राप्ताविज्ञेयादेवमानुषाः ॥ ध्यानंकुर्वंतइवतेनैवस्युर्बहुभाषिणः ॥ ब्रूयुरर्थवर्तावा

विज्ञानंब्रह्मेत्युपास्तेविज्ञानवतोवैसलोकान्ज्ञानवतोभिसिध्यतियावद्विज्ञानस्यगतंतत्रास्ययथाकामचारोभवतियोविज्ञानंब्रह्मेत्युपास्तेस्तिभगवोविज्ञानाद्भूयइतिविज्ञानाद्वावभूयोस्तीतितन्मेभगवान्ब्रवीत्विति ॥ ७ ॥ बलंवावविज्ञानाद्भूयोपीहशतंविज्ञानवतामेकोबलवानाकंपयतेसयदाबलीभवत्यथोत्थाताभवत्युत्तिष्ठन्परिचरिताभवतिपरिचरन्नुपसत्ताभवत्युपसीदन्द्रष्टाभवतिश्रोताभवतिमंताभवतिबोद्धाभवतिकर्ताभवतिविज्ञाताभवतिबलेनवैपृथिवीतिष्ठतिबलेनांतरिक्षंबलेनद्यौर्बलेनापोबलेनपर्वताबलेनदेवमनुष्याबलेनपशवश्चवयांसिचतृणवनस्पतयःश्वापदान्याकीटपतंगपिपीलिकंबलेनवैलोकस्तिष्ठतिबलमुपास्वेतिसयोबलंब्रह्मेत्युपास्तेयावद्बलस्यगतंतत्रास्ययथाकामचारोभवतियोबलंब्रह्मेत्युपास्तेस्तिभगवोबलाद्भूयइतिबलाद्वावभूयोस्तीतितन्मेभगवान्ब्रवीत्विति ॥ ८ ॥ अन्नंवावबलाद्भूयस्तस्माद्यद्यपिदशरात्रीर्नाश्नीयाद्यद्युहजीवेदथवाऽद्रष्टाऽश्रोताऽमंताऽबोद्धाऽकर्ताऽविज्ञाताभवत्यथान्नस्याशीद्रष्टाभवतिश्रोताभवतिमंताभवतिबोद्धाभवतिकर्ताभवतिविज्ञाताभवत्यन्नमुपास्वेतिसयोन्नंब्रह्मेत्युपास्तेन्नवतोवैसलोकान्पानवतोभिसिध्यतियावदन्नस्यगतंतत्रास्ययथाकामचारोभवति

चंनानर्थाप्रायशोहितइतिपाद्मे ॥ बलंज्ञानबलंचैवबाह्यंचेतिद्विधामतम् ॥ युक्तिज्ञताज्ञानबलंसाज्ञानादधिकामतेतितत्त्वसारे ॥ अन्नंज्ञानरसान्नंचबाह्यमन्नमितिद्विधा ॥ ज्ञानान्नंज्ञानबलतःश्रेष्ठंज्ञानरतिर्हि

तत् ॥ यद्वाह्यंतुबलंतस्माद्वाह्यमन्नंविशिष्यते ॥ आपश्चद्विविधाःप्रोक्तास्तृप्तिर्याज्ञानतोरतेः ॥ ताज्ञेया
आंतराआपोबाह्यास्तुद्रवरूपकाः ॥ आंतरान्नादांतरापोबाह्याद्वाह्यास्तथावराः ॥ एवंतेजःप्रातिभाख्यंबा

योन्नंब्रह्मेत्युपास्तेस्तिभगवोन्नाद्भूयइत्यन्नाद्वावभूयोस्तीतितन्मेभगवान्ब्रवीत्विति ॥ ९ ॥
आपोवावान्नाद्भूयस्यस्तस्माद्यदासुवृष्टिर्नभवतिव्याधीयंतेप्राणाअन्नंकनीयोभविष्यतीत्यथ
यदासुवृष्टिर्भवत्यानंदिनःप्राणाभवंत्यन्नंबहुभविष्यतीत्यापएवेमामूर्तायेयंपृथिवीयदंतरिक्षंय
द्द्यौर्यत्पर्वतायद्देवमनुष्यायत्पशवश्चवयांसिचतृणवनस्पतयःश्वापदान्याकीटपतंगपिपीलिक
मापएवेमामूर्ताअपउपास्वेतिसयोपोब्रह्मेत्युपास्तआप्नोतिसर्वान्कामांस्तृप्तिमान्भवतियाव
दपांगतंतत्रास्ययथाकामचारोभवतियोऽपोब्रह्मेत्युपास्तेस्तिभगवोद्भ्योभूयइत्यद्भ्योवावभूयो
स्तीतितन्मेभगवान्ब्रवीत्विति॥ १०॥तेजोवावाऽद्भ्योभूयस्तद्वाएतद्वायुमागृह्याकाशमभितप
तितदाहुर्निशोचतिनितपतिवर्षिष्यतिवाइतितेजएवतत्पूर्वंदर्शयित्वाथाऽपःसृजतेतदेतदूर्ध्वा
भिश्चतिरश्चीभिश्चविद्युद्भिराह्लादाश्चरतितस्मादाहुर्विद्योतयतेस्तनयतिवर्षिष्यतिवाइतितेजए
वतत्पूर्वंदर्शयित्वाथापःसृजतेतेजउपास्वेतिसयस्तेजोब्रह्मेत्युपास्तेतेजस्वीवैसतेजस्वतोल्लोका
न्भास्वतोपहततमस्कानभिसिध्यतियावत्तेजसोगतंतत्रास्ययथाकामचारोभवतियस्तेजोब्रह्मे
त्युपास्तेस्तिभगवस्तेजसोभूयइतितेजसोवावभूयोस्तीतितन्मेभगवान्ब्रवीत्विति ॥ ११ ॥
आकाशोवावतेजसोभूयानाकाशेवैसूर्याचंद्रमसावुभौविद्युन्नक्षत्राण्यग्निराकाशेनाह्वयत्याका

स्वंचेतिद्विधामतम् ॥ प्रातिभंज्ञानतृप्तेश्चपरमाकाशएवच ॥ स्थिरातुप्रतिभांतस्थाछिद्रमेवतुबाह्यगः ॥ स्थि

राहिप्रतिभाश्रेष्ठाचंचलायास्मराभिधा ॥ एकधैवस्मृतिःश्रेष्ठाऽऽशापरोक्षदृगात्मकम् ॥ श्रेष्ठंसुखंततोमो
क्षेप्राणाख्यंपरमंसुखम् ॥ उत्तरोत्तरमेतद्धिवाय्वंताभिमतंसदा ॥ बाह्याद्योबाह्यमन्नंचजायतेन्यत्तद
न्यथा ॥ व्यक्तिरंतर्गतानांतुविपरीतक्रमाद्भवेत् ॥ तथापिमोक्षगंयस्मात्स्वभावोनित्यएवतु ॥ अनस्तस्मा

शेनशृणोत्याकाशेनप्रतिशृणोत्याकाशेरमतआकाशेनरमतआकाशेजायतआकाशमभिजाय
तआकाशमुपास्स्वेतिसयआकाशंब्रह्मेत्युपास्तआकाशवतोवैसल्लोकान्प्रकाशवतोसंबंधानुरुगा
यवतोभिसिध्यतियावदाकाशस्यगतंतत्रास्ययथाकामचारोभवतियआकाशंब्रह्मेत्युपास्तेऽस्ति
भगवआकाशाद्भूयइत्याकाशाद्वावभूयोस्तीतितन्मेभगवान्ब्रवीत्विति॥१२॥स्मरोवाआकाशा
द्भूयांस्तस्माद्यद्यपिबहवआसीरन्नस्मरंतोनैवतेकंचनशृणुयुर्नमन्वीरन्नविजानीरन्यदावाव
तेस्मरेयुरथशृणुयुरथमन्वीरन्नथविजानीरन्स्मरेणवैपुत्रान्विजानातिस्मरेणपशून्स्मरमुपास्स्वे
तिसयःस्मरंब्रह्मेत्युपास्तेयावत्स्मरस्यगतंतत्रास्ययथाकामचारोभवतियःस्मरंब्रह्मेत्युपास्ते
स्तिभगवःस्मराद्भूयइतिस्मराद्वावभूयोस्तीतितन्मेभगवान्ब्रवीत्विति॥१३॥आशावावस्मरा
द्भूयस्याशेद्धोवैस्मरोमंत्रानधीतेकर्माणिकुरुतेपुत्रांश्चपशूंश्चेच्छतइमंचलोकममुंचेच्छतआ
शामुपास्स्वेतिसयआशांब्रह्मेत्युपास्तेआशयास्यसर्वेकामाःसमृध्यंत्यमोघाह्यस्याऽऽशिषोभवं
तियावदाशायागतंतत्रास्ययथाकामचारोभवतियआशांब्रह्मेत्युपास्तेऽस्तिभगवआशायाभूय

दापरोक्ष्यंकादाचित्कंहिजायते ॥ दृष्ट्यधीनास्मृतिश्चेयंप्रतिभास्मृतिसंभवा ॥ स्थैर्यमालंब्यतुचलम
न्यथानैवतिष्ठति ॥ प्रतिभातश्चतृप्तिः स्यादतृप्तस्यतुक्रांतिः ॥ ततएवंक्रमादेववरिष्ठःप्राणजोगुणइतिच

॥ १४ ॥ योसौप्राणःसप्राणेनपरब्रह्मणायाति ॥ सएषभगवान्प्राणंप्रत्यभीष्टंददाति ॥ प्राणस्यप्राणमि
तिश्रुतेः ॥ प्राणोवायुःपरमात्मानंचज्ञानेनदर्शयन्ददाति ॥ सर्वस्मादतीतमुत्तमंवदतीत्यतिवादी ॥ एषतुवा
अतिवदतीतितुशब्दोर्थांतरवाची ॥ अस्तिभगवःप्राणाद्भूयइतिप्रश्नोव्यतिहार्यः ॥ यत्रानवसरोन्यत्रपदं

इत्याशावावभूयोस्तीतितन्मेभगवान्ब्रवीत्विति॥ १४॥प्राणोवाआशायाभूयान्यथावाअराना
भौसमर्पिताएवमस्मिन्प्राणेसर्वंसमर्पितंप्राणःप्राणेनयातिप्राणःप्राणंददातिप्राणायददातिप्रा
णोहपिताप्राणोमाताप्राणोभ्राताप्राणःस्वसाप्राणआचार्यःप्राणोब्राह्मणःसयदिपितरंवामातरं
वाभ्रातरंवास्वसारंवाऽऽचार्यंवाब्राह्मणंवाकिंचिद्भृशमिवप्रत्याहधिक्त्वास्त्वित्येवैनमाहुःपितृहा
वैत्वमसिमातृहावैत्वमसिभ्रातृहावैत्वमसिस्वसृहावैत्वमस्याचार्यहावैत्वमसिब्राह्मणहावैत्वम
स्यथयद्यप्येनानुत्क्रांतप्राणाञ्छूलेनसमासंव्यतिषंदहेन्नैवैनंब्रूयुःपितृहासीतिनमातृहासीतिन
भ्रातृहासीतिनस्वसृहासीतिनाचार्यहासीतिनब्राह्मणहासीतिप्राणोह्येवैतानिसर्वाणिभवतिस
वाएषएवंपश्यन्नेवंमन्वानएवंविजानन्नतिवादीभवतितंचेद्ब्रूयुरतिवाद्यसीत्यतिवाद्यस्मीत्येव
ब्रूयान्नापह्नुवीत॥ १५॥ एषतुवाअतिवदतियःसत्येनातिवदतिसोहंभगवःसत्येनातिवदानीति
सत्यंत्वेवविजिज्ञासितव्यमितिसत्यंभगवोविजिज्ञासइति॥ १६॥यदावैविजानात्यथसत्यंवद
तिनाविजानन्सत्यंवदतिविजानन्नेवसत्यंवदतिविज्ञानंत्वेवविजिज्ञासितव्यमितिविज्ञानंभ

तत्रप्रतिष्ठितम् ॥ यत्रप्रमाणंवाक्यंवाप्रतिहार्यंनसंशयः ॥ ॐव्यतिहारोविशिष्टतिहीतरवदितिचभगवद्वच
नम् ॥ अतिवादीप्राणवादीविष्णुवादीविशेषतः ॥ ससत्योभगवान्विष्णुर्यन्निर्दोषोनियामकः ॥ विशिष्टज्ञा

नरूपश्चसामान्यज्ञानरूपकः॥नित्यश्रद्धास्वरूपश्चतथैवस्थैर्यरूपकः॥सएवसर्वकर्ताचसुपूर्णानंदरूपकः॥
सचसर्वगुणैःपूर्णोभूमेत्युच्चार्यतेततः ॥ यदधीनंविनानान्यत्किंचिदस्तिकुतश्चन॥सभूमोक्तोतिपूर्णत्वादन्य
दल्पमुदीर्यते॥ससर्वगुणसंपूर्णःसर्वदेशेषुसर्वदा ॥ स्वतंत्रःसर्ववस्तूनितदधीनानिसर्वशः॥पूर्णत्वात्सुखरूपोसौ
सर्वकर्तासुखत्वतः ॥ कर्तृत्वात्सुस्थिरश्चासौस्थिरत्वादास्तिकस्तथा॥आस्तिकत्वाच्चमंतासौविज्ञाताचततो

गवोविजिज्ञासइति ॥ १७ ॥ यदावैमनुतेथविजानातिनामत्वाविजानातिमत्वैवविजानातिम
तिस्त्वेवविजिज्ञासितव्येतिमतिंभगवोविजिज्ञासइति ॥ १८ ॥ यदावैश्रद्दधात्यथमनुतेनाश्रद्द
धन्मनुतेश्रद्दधदेवमनुतेश्रद्धात्वेवविजिज्ञासितव्येतिश्रद्धांभगवोविजिज्ञासइति ॥ १९ ॥
यदावैनिस्तिष्ठत्यथश्रद्दधातिनानिस्तिष्ठञ्छ्रद्दधातिनिस्तिष्ठन्नेवश्रद्दधातिनिष्ठात्वेवविजिज्ञा
सितव्येतिनिष्ठांभगवोविजिज्ञासइति ॥ २० ॥ यदावैकरोत्यथनिस्तिष्ठतिनाकृत्वनि
स्तिष्ठतिकृत्वैवनिस्तिष्ठतिकृतिस्त्वेवविजिज्ञासितव्येतिकृतिंभगवोविजिज्ञासइति ॥ २१ ॥
यदावैसुखंलभतेथकरोतिनासुखंलब्ध्वाकरोतिसुखमेवलब्ध्वाकरोतिसुखंत्वेवविजिज्ञासि
तव्यमितिसुखंभगवोविजिज्ञासइति ॥ २२ ॥ योवैभूमातत्सुखंनाल्पेसुखमस्तिभूमै
वसुखंभूमात्वेवविजिज्ञासितव्यइतिभूमानंभगवोविजिज्ञासइति ॥ २३ ॥ यत्रनान्यत्प

हरिः ॥ ज्ञातृत्वाच्चसनिर्दोषःसर्वस्यापिनियामकः ॥ भूमानारायणाख्यःस्यात्सएवाहंकृतिःस्मृतः ॥ आ
कार्योहमितिश्लेषततोहंकारउच्यते॥जीवस्थस्त्वनिरुद्धोयःसोहंकारइतीरितः ॥ सोप्यणुत्वेपिसंव्यापीपर
मैश्वर्ययोगतः॥यथाबालतनौविष्णौमार्कंडेयेनधीमता ॥ प्रविश्यनांतोधिगतएवंव्याप्तोहरिःपरः॥अणुरू

पोपिभगवान्वासुदेवःपरोविभुः॥आत्मेत्युक्तःसचव्यापीनचभेदोहरौक्वचिदितिपरमसारे ॥भूमप्रसादंविना
नाल्पेसुखमस्ति ॥ मर्त्यंचपूर्वम्॥ अल्पापिह्यमृतादेवीश्रीःपूर्णातिप्रियत्वतइतिच॥आत्मरतिर्भगवद्रतिः ॥
सोभगवान् ॥ सोस्यप्रत्यक्षतआज्ञापयिताभवतीतिस्वराट् ॥ आत्मतःप्राणआत्मतआशेत्यादिमुक्तःसन्

श्यतिनान्यच्छृणोतिनान्यद्विजानातिसभूमाथयत्रान्यत्पश्यत्यन्यच्छृणोत्यन्यद्विजानातितद
ल्पंयोवैभूमातदमृतमथयदल्पंतन्मर्त्यंसभगवःकस्मिन्प्रतिष्ठितइतिस्वेमहिम्नियदिवानमहि
म्नीतिगोअश्वमिहमहिमेत्याचक्षतेहस्तिहिरण्यंदासभार्यंक्षेत्राण्यायतनानीतिनाहमेवंब्रवीमी
तिहोवाचान्योह्यन्यस्मिन्प्रतिष्ठितइति ॥२४॥ सएवाधस्तात्सउपरिष्टात्सपश्चात्सपुरस्तात्सद
क्षिणतःसउत्तरतःसएवेदꣳसर्वमित्यथातोहंकारादेशएवाहमेवाधस्तादहमुपरिष्टादहंपश्चादहंपु
रस्तादहंदक्षिणतोहमुत्तरतोहमेवेदꣳसर्वमित्यथातआत्मादेशएवात्मैवाधस्तादात्मोपरिष्टादा
त्मापश्चादात्मापुरस्तादात्मादक्षिणतआत्मोत्तरतआत्मैवेदꣳसर्वमितिसवाएषएवंपश्यन्नेवंम
न्वानएवंविजानन्नात्मरतिरात्मक्रीडआत्ममिथुनआत्मानंदःसस्वराड्भवतितस्यसर्वेषुलोकेषु
कामचारोभवत्यथयेन्यथातोविदुरन्यराजानस्तेक्षय्यलोकाभवंतितेषाꣳसर्वेषुलोकेष्वकामचा
रोभवति ॥ २५ ॥ तस्यहवाएतस्यैवंपश्यतएवंमन्वानस्यैवंविजानतआत्मतःप्राणआत्मत

प्राणादीनांसृष्ट्यादिकंपश्यतीत्यर्थः ॥ सर्वंहिपश्यःपश्यतीतिवाक्यशेषात् ॥ पश्यइतिद्रष्टा ॥ यदापश्यः
पश्यतेरुक्मवर्णमितिश्रुतेः ॥ भूमोपासनयोग्यस्तुसाक्षाद्ब्रह्मैवमुख्यतः ॥ सतद्विद्याबलेनैवविष्णुनारनिमा

मुयात् ॥ तेनैवक्रीडतेनित्यंस्त्रीरूपोमिथुनीभवेत् ॥ तदानंदःसएवास्यराजाभवतिनापरः ॥ पश्येच्चप्राणसृष्ट्याद्यंयेतदन्यउपासकाः ॥ तेयथायोग्यमाप्स्यंतिफलंमुक्तौनसंशयइतिपरमतत्त्वे ॥ नचभूमानंभगवोविजिज्ञासइतिपृष्टःसन्भूम्नोलक्षणंसएवाधस्तात्सउपरिष्टादित्यादिनापूर्णत्वंभगवतोन्यस्याहंकारस्योपदिशतीतियुज्यते ॥ नचाहंकारस्यपूर्णत्वमस्ति ॥ नचमुख्येपूर्णत्वेयुज्यमानेउपचरितंयुज्यते ॥

आशाआत्मतःस्मरआत्मतआकाशआत्मतस्तेजआत्मतआपआत्मतआविर्भावतिरोभावावात्मतोन्नमात्मतोबलमात्मतोविज्ञानमात्मतोध्यानमात्मतश्चित्तमात्मतःसंकल्पआत्मतोमनआत्मतोवागात्मतोनामात्मतोमंत्राआत्मतःकर्माण्यात्मतएवेदꣳसर्वमिति ॥ तदेषश्लोकः ॥ नपश्योमृत्युंपश्यतिनरोगंनोतदुःखताꣳसर्वꣳहपश्यःपश्यतिसर्वमाप्नोतिसर्वशइति ॥ सएकधाभवतित्रिधाभवतिपंचधासप्तधानवधाचैवपुनश्चैकादशस्मृतः ॥ शतंचदशचैकंचसहस्राणिचविꣳशतिः ॥ आहारशुद्धौसत्वशुद्धिःसत्वशुद्धौध्रुवास्मृतिः ॥ स्मृतिलंभेसर्वग्रंथीनांविप्रमोक्ष

नचाहंकारस्यकाचित्प्रस्तुतिः ॥ अथशब्दस्तुरूपांतरापेक्षयायुज्यते ॥ अतःशब्दस्तत्प्रसादादिति ॥ आत्मरतिःस्वराडित्यादि ॥ योब्रह्माणंविदधातिपूर्वमितिब्रह्मणउत्पत्तिप्रसिद्धेःस्वयंभूरात्मभूरित्यादिष्वात्मशब्दःस्वयंशब्दश्चयथाविष्णुवाचीतद्वदेवात्राप्यात्मशब्दोविष्णुवाच्येव ॥ नचमुक्तेभ्यःप्राणादिकमुत्पद्यते ॥ ॐजगद्व्यापारवर्जमितिवर्णितत्वाद्भगवता ॥ आत्मतएवप्राणोजायतइत्यवधारणान्नभगवतोऽ

न्यस्मात्प्राणोजायते ॥ आत्मेतिमुख्यतोविष्णुस्तदन्येतूपचारतः ॥ तथैवस्वइतिप्रोक्तस्तस्माद्ब्रह्मात्मभूः स्वभूरितिस्कांदे ॥ इदंनामातिसामीप्यात्सर्वंपूर्णगुणत्वतः ॥ भूमाहमात्मेतिहरिस्त्रिविधोपिहिसर्वदेतिविश्व निर्णये ॥ स्त्रीगुणाःपुंगुणाश्चैवनपुंसकगुणाअपि ॥ यदधीनाव्यन्ययःस्याल्लिंगानांतत्रसर्वशः ॥ कःकिंकं

स्तस्मैमृदितकषायायतमसःपारंदर्शयतिदेवर्षयेनारदायभगवान्सनत्कुमारस्तꣳस्कंदइत्याच क्षतेतꣳस्कंदइत्याचक्षते ॥ २६ ॥ ओमितिश्रीमच्छांदोग्योपनिषदिसप्तमोऽध्यायः ॥७॥

तत्सर्वमात्मादितिर्देवादयस्ततइतिलिंगनिर्णये ॥ गुरोर्विद्याहृतिर्यातुसआहारइतिस्मृतः ॥ तच्छुद्धौज्ञानशु द्धिःस्याज्ज्ञानशुद्धौस्थिरास्मृतिः ॥ स्मृतिस्थैर्येत्वापरोक्ष्यंहरेर्मोक्षस्ततोभवेदितिसाधननिर्णये ॥ २६॥ ॐइतिश्रीमदानंदतीर्थभगवत्पादाचार्यविरचितेश्रीमच्छांदोग्योपनिषद्भाष्येसप्तमोऽध्यायः ॥ ७ ॥

हरिः ॐ ॥ यदिदमस्मिन्ब्रह्मपुर इति ब्रह्मपुरशब्देन ब्रह्माख्यं पुरं पूर्णत्वात्पुरमिति परं ब्रह्म ब्रह्मणः पुरमिति शरीरं चोभयं विवक्षितम् ॥ प्रासादवच्चं ब्रह्मपुरं राजेव निवसाम्यहम् ॥ अस्मिंश्चेद्यदिदं ब्रह्मपुरे सर्वं समाहितम् ॥ यदैनज्जरावाप्नोति प्रध्वंसते वा किं ततोऽतिशिष्यत इति स ब्रूयान्नास्य जरयैतज्जीर्यति न वधेनास्य हन्यत एतत्सत्यं ब्रह्मपुरमस्मिन्कामाः समाहिता एष आत्मापहतपाप्मा विजरो विमृत्युरिति वाक्यशेषाद्भगवद्वचना

॥ हरिः ॐ ॥ अथ यदिदमस्मिन्ब्रह्मपुरे दहरं पुंडरीकं वेश्म दहरोऽस्मिन्नंतर आकाशस्तस्मिन्यदंतस्तदन्वेष्टव्यं तद्वाव विजिज्ञासितव्यमिति तं चेद्ब्रूयुर्यदिदमस्मिन्ब्रह्मपुरे दहरं पुंडरीकं वेश्म दहरोऽस्मिन्नंतर आकाशः किं तदत्र विद्यते यदन्वेष्टव्यं यद्वाव विजिज्ञासितव्यमिति स ब्रूयाद्यावान्वा अयमाकाशस्तावानेषोंऽतर्हृदय आकाश उभे अस्मिन्द्यावापृथिवी अंतरेव समाहिते उभावग्निश्च वायुश्च सूर्याचंद्रमसावुभौ विद्युन्नक्षत्राणि यच्चास्येहास्ति यच्च नास्ति सर्वं तदस्मिन्समाहितमिति तं चेद्ब्रूयुरस्मिꣳश्चेदिदं ब्रह्मपुरे सर्वꣳ समाहितं सर्वाणि च भूतानि सर्वे च कामा यदैनज्जरावाप्नोति प्रध्वꣳसते वा किं ततोऽतिशिष्यत इति स ब्रूयान्नास्य जरयैतज्जीर्यति न वधेनास्य हन्यत एतत्सत्यं ब्रह्मपुरमस्मिन्कामाः समाहिता एष आत्मापहतपाप्मा विजरो विमृत्युर्विशोकोऽविजिघत्सोऽपिपासः सत्य

च्च ब्रह्मपुरशब्देन परं ब्रह्मोच्यत इत्यवसीयते ॥ यत्पुंडरीकं पुरमध्यसंस्थं यदिदं शरीरं तदेतदाद्यं देवसदनमित्यादेः शरीरं च ॥ यद्वै तद्ब्रह्मेतीदं वाव तद्योऽयं बहिर्धा पुरुषादाकाशः ॥ यस्तु सर्वाणि भूतान्यात्मन्येवानुपश्यतीत्यादिना परब्रह्मण्येव हृदयं स्थितम् ॥ दहरोऽस्मिन्नंतर आकाशस्तस्मिन्यदंतस्तदन्वेष्टव्यम् ॥ दहरोऽस्मिन्नंतर आकाशः किं तदत्र विद्यत इत्याकाशशब्देन भूताकाशो विवक्षितः ॥ किं तदत्र विद्यत इत्यस्यायं परिहारः ॥

अस्मिन्भूताकाशेपरब्रह्माख्यआकाशोविद्यते ॥ आसमंतात्काशनादाकाशः ॥ आसमंतात्कमश्नातीति वाअस्मिन्कामाःसमाहिताइतिवाक्यशेषात् ॥ आसमंतात्कामानश्नातीतिवा ॥ सचयावान्बहिःपरमात्माव्याप्तोस्तितावानेवविद्यतेगुणतः ॥ पूर्णगुणत्वादल्पपरिमाणस्यापिमहत्परिमाणत्वंचयुज्यते ॥ अचिंत्यशक्तित्वात् ॥ यस्मिन्विरुद्धगतयोप्यनिशंपतंतिविद्यादयोविविधशक्तयआनुपूर्व्यैतिवचनात्॥ आनु

कामःसत्यसंकल्पोयथाह्येवेहप्रजाअन्वाविशंतियथानुशासनंयंयमंतमभिकामाभवंतियंजनपदंयंक्षेत्रभागंतंतमेवोपजीवंतितद्यथेहकर्मजितोलोकःक्षीयतएवमेवामुत्रपुण्यजितोलोकःक्षीयतेतद्यइहात्मानमननुविद्यव्रजंत्येतांश्चसत्यान्कामांस्तेषांसर्वेषुलोकेष्वकामचारोभवत्यथयइहात्मानमनुविद्यव्रजंत्येतांश्चसत्यान्कामांस्तेषांसर्वेषुलोकेषुकामचारोभवति
॥ १ ॥ सयदिपितृलोककामोभवतिसंकल्पादेवास्यपितरःसमुत्तिष्ठंतितेनपितृलोकेनसंपन्नोमहीयतेथयदिमातृलोककामोभवतिसंकल्पादेवास्यमातरःसमुत्तिष्ठंतितेनमातृलोकेनसंपन्नोमहीयतेथयदिभ्रातृलोककामोभवतिसंकल्पादेवास्यभ्रातरःसमुत्तिष्ठंतितेनभ्रातृलोकेनसंपन्नोमहीयतेथयदिस्वसृलोककामोभवतिसंकल्पादेवास्यस्वसारःसमुत्तिष्ठंतिते

पूर्व्यैतिश्रुतिप्रमाणादित्यर्थः ॥ आनुपूर्वीश्रुतिर्वेदआम्नायश्चेतिकथ्यतइत्यभिधानात् ॥ अन्यथानिशमित्युक्तिविरोधात् ॥ एषमआत्मांतर्हृदयेणीयान्व्रीहेर्वाएषमआत्मांतर्हृदयेज्यायान्पृथिव्याइतिहृदयस्थस्यैवाणुत्वमहत्त्वोक्तेश्च ॥ गुणाःश्रुताःसुविरुद्धाश्चदेवेसंत्यश्रुताअपिनैवात्रशंका ॥ चिंत्याअचिंत्याश्चतथैवदोषाःश्रुताश्चनाशेहितथाप्रनीताइतिचश्रुतिः ॥ सुविरुद्धाअश्रुताश्चगुणाःसंत्येवसर्वशः ॥ दोषाःकेपिनसं

त्येवश्रुताअपितुसर्वेशइतिगारुडे ॥ किंतदत्रविद्यतइतिपृष्टत्वाद्धृदतआकाशोहृदयशब्देनोच्यते ॥ हृद्यय
नात्॥तस्मिन्हृदयाख्यआकाशेब्रह्माख्यआकाशोविद्यतइत्यर्थः॥अन्यथाकथंभूताकाशस्यदहरस्यबहि
राकाशसमत्वम्॥दहरोस्मिन्नंतराकाशइतिपूर्वोक्ताकाशस्यदहरत्वमुक्तम् ॥उत्तरस्यतुयावान्वाअयमाका
शइत्यनंतपरिमाणत्वम्॥अतोब्रह्माकाशएवोत्तरः॥पूर्वोक्त्याभूताकाशत्वेतस्मिन्यदंतस्तदन्वेष्टव्यंतद्वाववि
जिज्ञासितव्यंतत्रापिदहरंगगनंविशोकस्तस्मिन्यदंतस्तदुपासितव्यंसहस्रशीर्षदेवमित्यादिकथंयुज्यते॥न

नखसृलोकेनसंपन्नोमहीयतेथयदिसखिलोककामोभवतिसंकल्पादेवास्यसखायःसमुत्तिष्ठं
तितेनसखिलोकेनसंपन्नोमहीयतेथयदिगंधमाल्यलोककामोभवतिसंकल्पादेवास्यगंधमा
ल्येसमुत्तिष्ठतस्तेनगंधमाल्यलोकेनसंपन्नोमहीयतेऽथयद्यन्नपानलोककामोभवतिसंकल्पा
देवास्यान्नपानेसमुत्तिष्ठतस्तेनान्नपानलोकेनसंपन्नोमहीयतेऽथयदिगीतवादित्रलोककामो
भवतिसंकल्पादेवास्यगीतवादित्रेसमुत्तिष्ठतस्तेनगीतवादित्रलोकेनसंपन्नोमहीयतेऽथयदि
स्त्रीलोककामोभवतिसंकल्पादेवास्यस्त्रियःसमुत्तिष्ठंतितेनस्त्रीलोकेनसंपन्नोमहीयतेयंयमं

हिभगवद्दंतस्थितमेवान्यत्किंचिद्विजिज्ञासितव्यम्॥तद्वावेत्यवधारणाच्च ॥उत्तरस्यापरब्रह्मत्वेचसर्वाधारत्वं
नास्यजरयैतज्जीर्यतिनवधेनास्यहन्यतएतत्सत्यंब्रह्मपुरमस्मिन्कामाःसमाहिताएषआत्मापहतपाप्मेत्यादि
नयुज्यंताकतदत्रविद्यतेयदन्वेष्टव्यंयद्वावविजिज्ञासितव्यमित्यस्ययएषोंतर्हृदयआकाशइत्येवपरिहारः ॥
नतूभेअस्मिन्द्यावापृथिवीत्यादि ॥ तत्तुविजिज्ञासितव्यत्वेहेतुत्वेनसामर्थ्यकथनमेव॥ नहिद्यावापृथिव्या
देरेवविजिज्ञास्यत्वं ॥ तमेवैकंजानथआत्मानमन्यावाचोविमुंचथेतिहिश्रुतिः ॥ उभेअस्मिन्द्यावापृथि

वीइत्याद्युभशब्दोमुक्तामुक्तराशिव्यपेक्षया॥यच्चास्येहास्तियच्चनास्तीतिवाक्यशेषात्॥ अस्येतिसंसारि
णः॥ नहिसंसारिणोमुक्ताउपकारकाः ॥ यद्यस्यनोपकारकंतत्तस्यनास्तीत्युच्यतेऽन्यस्यसत्वेपि॥ य
थावित्तादि॥ यथायोग्यमेवैनंभगवंतंप्रजामुक्ताअन्वाविशंतितच्छासनानुसारेण ॥ यंयंकामंकामयेतंतं
मस्मादेवोपजीवंति॥ तदविदुषांपुण्यानिक्षयिष्णुफलान्येवभवंति॥ एतांश्चसत्यान्कामान्भगवदीयान्॥

तमभिकामोभवतियंकामंकामयतेसोस्यसंकल्पादेवास्यसमुत्तिष्ठतितेनसंपन्नोमहीयते॥२॥
तइमेसत्याःकामाअनृताऽपिधानास्तेषाꣳसत्यानाꣳसतामनृतमपिधानंयोयोह्यस्येतःप्रैतिनत
मिहदर्शनायलभतेथयेचास्येहजीवायेचप्रेतायच्चान्यदिच्छन्नलभतेसर्वंतदत्रगत्वाविंदतेत्र
ह्यस्यैतेसत्याःकामास्तद्यथाऽपिहिरण्यनिधिंनिहितमक्षेत्रज्ञाउपर्युपरिसंचरंतोनविंदेयुरेवमेवे
माःसर्वाःप्रजाअहरहर्गच्छंत्यएतंब्रह्मलोकंनविंदंत्यनृतेनहिप्रत्यूढाःसवाएषआत्माहृदितस्यै
तदेवनिरुक्तꣳहृद्ययमितितस्माद्धृदयमहरहर्वाएवंवित्स्वर्गंलोकमेत्यथयएषसंप्रसादोस्माच्छ
रीरात्समुत्थायपरंज्योतिरुपसंपद्यस्वेनरूपेणाभिनिष्पद्यतएषआत्मेतिहोवाचैतदमृतमभयमे
तद्ब्रह्मेतितस्यहवाएतस्यब्रह्मणोनामसत्यमितितानिहवाएतानित्रीण्यक्षराणिसतियमितितद्य

बृहत्त्वात्पूर्णकामत्वाद्विष्णुर्ब्रह्मपुराभिधः॥तस्मिंस्तस्यपुरंदेहस्तस्मिन्हृदयमास्थितम्॥ हृदयाकाशगोवि
ष्णुस्तस्मिन्सर्वमिदंस्थितम्॥ ससत्यकामोभगवान्यदिष्टंतस्यतद्भवेत्॥ तस्मिन्समाहिताःकामाःसत्याः
पुंसाममपिध्रुवम्॥ तस्यैवह्यनुसारेणसत्यत्वंनान्यथाक्वचित्॥ यथाबिंबानुसारेणप्रतिबिंबप्रकाशनम्॥
तस्माद्येमुक्तियोग्याःस्युस्तेषांकामाःपुरापितु॥ सत्याःसंतस्तदज्ञानान्नदृश्यंतेतथाखिलाः ॥ अज्ञानम

न्नतंप्रोक्तमृगताविति धातुतः ॥तस्माद्द्रष्टुंयदिष्टंस्यात्तद्दृष्टिनियमोनतु॥अमुक्तस्यहरेर्लोकंमुक्तोगत्वाहिप
श्यति ॥ अज्ञत्वादेवसुप्तौतुनित्यंयांतोपिमाधवम्॥ नैवपश्यंत्यसौविष्णुर्हृदयंनामहृद्गतेः ॥ एवंहृदयनामानं
विष्णुंजानन्हिनित्यशः ॥ विष्णुलोकगतेःपुण्यमाप्त्वाविष्णुंव्रजेत्तथा ॥ यस्यसम्यक्प्रसादोस्तिविष्णोरेव
सउच्यते ॥ संप्रसादःसउत्थायशरीरात्प्राप्यकेशवम् ॥ यथास्वरूपस्तुभवेद्यंप्राप्यासौस्वरूपताम् ॥ आ
प्नोतिसपरोह्यात्माभगवानिंदिरापतिः ॥ इत्याहसारमादेवीपश्यंतीपरमंपदम् ॥ सदित्यमृतधर्माणोमुक्ताः

त्सत्तदमृतमथयत्तितन्मर्त्यमथयद्यंतेनोभेयच्छतियदनेनोभेयच्छतितस्माद्यमहरहर्वाएवंवि
त्स्वर्गंलोकमेति ॥ ३ ॥ अथयआत्माससेतुर्विधृतिरेषांलोकानामसंभेदायनैनꣳसेतुमहो
रात्रेतरतोनजरानमृत्युर्नशोकोनसुकृतंनदुष्कृतꣳसर्वेपाप्मानोतोनिवर्तंतेपहतपाप्माह्येषब्रह्म
लोकस्तस्माद्वाएतꣳसेतुंतीर्त्वांधःसन्ननंधोभवतिविद्धःसन्नविद्धोभवत्युपतापीसन्ननुपतापीभ
वतितस्माद्वाएतंसेतुंतीर्त्वाऽपिनक्तमहरेवाभिनिष्पद्यतेऽसकृद्विभातोह्येवैषब्रह्मलोकस्तद्यएवै
तंब्रह्मलोकंब्रह्मचर्येणानुविंदंतितेषामेवैषब्रह्मलोकस्तेषाꣳसर्वेषुलोकेषुकामचारोभवति॥४॥
अथयद्यज्ञइत्याचक्षतेब्रह्मचर्यमेवतद्ब्रह्मचर्येणह्येवयोज्ञातातंविंदतेथयदिष्टमित्याचक्षतेब्रह्म

श्रीरपिचेरिताः ॥ तीत्युक्तामर्त्यधर्माणस्तेषांनियमनाद्धरिः॥सत्यमित्युच्यतेसद्भिःसेतुश्चापिविधारणात्॥
सितमस्मिन्जगत्सर्वमितिसेतुरितीरितः ॥ एतंसेतुंप्रतिपुमानन्यत्तीर्त्वास्वदोषवान् ॥ सप्राप्योब्रह्मचर्येण ॥५७॥
मनोवाक्कर्मभिस्तुयत् ॥ चरणंब्रह्मणिपरेब्रह्मचर्यंहितत्स्मृतम् ॥ तेनैवब्रह्मचर्येणभवेयुर्ब्रह्मलोकगाः ॥
एतेषांब्रह्मलोकःस्यात्परंब्रह्मैवलोकनात् ॥ ब्रह्मलोकइतिप्रोक्तंतस्यलोकोपिकथ्यते ॥ यज्ञइष्टचसत्रंच

मौनंचानशनंतथा ॥ परस्यब्रह्मणोज्ञानंसर्वमेतदुदीरितम् ॥ परस्यब्रह्मणोलोकेश्वेतद्वीपाभिधेपरे ॥ अरण्यौचार्णवौदिव्यौचिदानंदरसात्मकौ ॥ यावानुच्चःस्वर्गलोकस्तावानुच्चतयासच ॥ श्वेतद्वीपोदिविष्ठोतस्तत्रमध्यंसरोवरम् ॥ सर्वभोज्यात्मकंदिव्यंतत्राश्वत्थाःसुधास्रवाः ॥ तत्रविष्णोःपुरंदिव्यमपराजितनामकम् ॥ विमिताख्यंचपर्यंकंविष्णोर्मानेनसंमितम् ॥ चित्सुवर्णमयंदिव्यंलक्ष्मीस्तत्तत्स्वरू

चर्यमेवतद्ब्रह्मचर्येणह्येवेष्ट्वात्मानमनुविंदतेथयत्सत्रायणमित्याचक्षतेब्रह्मचर्यमेवतद्ब्रह्मचर्येण ह्येवसतआत्मनस्त्राणंविंदतेथयन्मौनमित्याचक्षतेब्रह्मचर्यमेवतद्ब्रह्मचर्येणह्येवात्मानमनुविद्य मनुतेथयदनाशकायनमित्याचक्षतेब्रह्मचर्यमेवतदेपह्यात्माननश्यतियंब्रह्मचर्येणानुविंदतेथय दरण्यायनमित्याचक्षतेब्रह्मचर्यमेवतदरश्वहवैण्यश्चार्णवौब्रह्मलोकेतृतीयस्यामितोदिवितदैरं मदीयंसरस्तदश्वत्थःसोमसवनस्तदपराजितापूर्ब्रह्मणःप्रभुविमितंहिरण्मयंतद्यएवैतावरं चवैण्यंचार्णवौब्रह्मलोकेब्रह्मचर्येणानुविंदंतितेषामेवैषब्रह्मलोकस्तेषांसर्वेषुलोकेषुकामचारो भवति ॥ ५ ॥ अथयाएताहृदयस्यनाड्यस्ताःपिंगलस्याणिम्नस्तिष्ठंतिशुक्लस्यनीलस्य पीतस्यलोहितस्येत्यसौवाआदित्यःपिंगलएषशुक्लएषनीलएषपीतएषलोहितस्तद्यथामहाप

विणी ॥ सश्वेतद्वीपगोविष्णुःपर्यंकब्रह्मनामकः ॥ ५ ॥ सएषहृदिनाडीषुपंचरूपःप्रतिष्ठितः ॥ विष्णोरणिम्नोरूपाणिपंचनाडीस्थितानितु ॥ नारायणाख्यंसौषुम्नंमध्यस्थंरक्तवर्णकम् ॥ शुक्लंतुवासुदेवाख्यंनाडिन्यामपतःस्थितम् ॥ पिंगलायांपिंगलंतुरूपंसंकर्षणाभिधम् ॥ पश्चिमेवज्रिकायांचपीतंप्रद्युम्ननामकम् ॥ इडायामनिरुद्धाख्यंनीलरूपंव्यवस्थितम् ॥ सर्वेप्येवंपंचरूपोभगवान्संव्यव

स्थितः ॥ आदित्यनामाचादित्वात्तद्धामंसूर्यमंडलम् ॥ तद्रश्मिभिस्तथाऽयाम्नाःसमस्ताःसूर्यरश्म
यः ॥ तस्मिन्नाडीषुचप्रोतास्तथानाडीस्थरश्मयः ॥ तन्नाडीसंस्थितंविष्णुंमध्येजीवःप्रपद्यते ॥ त
त्तेजसाहिसंपन्नःसुप्तइत्यभिधीयते ॥ ओमित्येववहन्नित्यंवायुरोंवाडितीरितः ॥ तेनवामत्वमाया
तिमुक्तिकालेह्युपासकः ॥ दिव्यचिद्रूपभावोहिवामभावउदीरितः ॥ यदैनंनेतुमन्विच्छन्मनःक्षिपति

थआततउभौग्रामौगच्छतीमंचामुंचैवमेवैताआदित्यस्यरश्मयउभौलोकौगच्छंतीमंचामुंचा
मुष्मादादित्यात्प्रतायंतेतआसुनाडीषुसृप्ताआभ्योनाडीभ्यःप्रतायंतेमुष्मिन्नादित्येसृप्तास्तद्य
त्रैतत्सुप्तःसमस्तःसंप्रसन्नःस्वप्नंनविजानात्यासुतदानाडीषुसृप्तोभवतितंनकश्चनपाप्मास्पृशति
तेजसाहितदासंपन्नोभवत्यथयत्रैतदबलिमानंनीतोभवतितमभितआसीनाआहुर्जानासिमां
जानासिमामितिसयावदस्माच्छरीरादनुत्क्रांतोभवतितावज्जानात्यथयत्रैतस्माच्छरीरादुत्क्राम
त्यथैतैरेवरश्मिभिरूर्ध्वआक्रमतेसओमितिवाहोद्वामीयतेसयावत्क्षिपेन्मनस्तावदादित्यंगच्छ
त्येतद्वैखलुलोकद्वारंविदुषांप्रपदंनिरोधोऽविदुषाम् ॥ तदेषश्लोकः । शतंचैकाचहृदयस्य
नाड्यस्तासांमूर्धानमभिनिःसृतैका ॥ तयोर्ध्वमायन्नमृतत्वमेतिविष्वङ्ङन्याउत्क्रमणेभवंतिउ
त्क्रमणेभवंति ॥ ६ ॥ यआत्मापहतपाप्माविजरोविमृत्युर्विशोकोऽविजिघत्सोऽपिपासःस

मारुतः ॥ आदित्याख्यंतदाविष्णुंयातिजीवःस्वविद्ययेतिपर्यंकोपासनायाम् ॥ ६ ॥ इंद्रोविरोचन
श्चैवश्रुत्वातुब्रह्मणोक्षिगम् ॥ विष्णुमानंदरूपंतंसम्यग्ज्ञानविपर्ययौ ॥ आपतुस्तत्रदेवेंद्रोजानन्नपिवि
रोचनम् ॥ मोहयन्ननुरूपाणितस्यवाक्यान्युवाचह ॥ यथाविरोचनोनैवजानीयाद्विष्णुमंजसा ॥

स्ववाक्यंचानृतंनस्यात्तथाब्रह्माप्युवाचह ॥ अयोग्यात्वसुराज्ञानेवक्तव्यंचैवनानृतम् ॥ मच्छापादा
सुरोभावःप्रह्लादादेर्नतुस्वतः ॥ अयंत्वासुरएवातोवक्ष्याम्यस्योभयंयथा ॥ इंद्रस्तुशुद्धभावत्वात्पुनराया
स्यतिध्रुवम् ॥ इत्यभिप्रायतःप्रोक्तोब्रह्मणाक्षिगतोहरिः ॥ अयोग्यत्वात्तुतच्छ्रुत्वाप्रतिरूपंविरोचनः ॥

त्यकामःसत्यसंकल्पःसोऽन्वेष्टव्यःसविजिज्ञासितव्यःससर्वांश्चलोकानाप्नोतिससर्वांश्चकामा
न्यस्तमात्मानमनुविद्यविजानातीतिहप्रजापतिरुवाचतद्धोभयेदेवासुराअनुबुबुधिरेतेहोचुर्हं
तत्मात्मानमन्विच्छामोयमात्मानमन्विष्यसर्वांश्चलोकानाप्नोतिसर्वांश्चकामानितींद्रोहवैदेवा
नामभिप्रवव्राजविरोचनोसुराणांतौहासंविदानावेवसमित्पाणीप्रजापतिसकाशमाजग्मतुस्तौ
हद्वात्रिंशतंवर्षाणिब्रह्मचर्यमूषतुस्तौहप्रजापतिरुवाचकिमिच्छंतावास्तमितितौहोचतुर्य
आत्मापहतपाप्माविजरोविमृत्युर्विशोकोऽविजिघत्सोपिपासःसत्यकामःसत्यसंकल्पःसोऽन्वेष्ट
व्यःसविजिज्ञासितव्यःससर्वांश्चलोकानाप्नोतिसर्वांश्चकामान्यस्तमात्मानमनुविद्यविजानाती
तिहभगवतोवाचोवेदयंतेतमिच्छंतावास्तामितितौहप्रजापतिरुवाचयएषोंतरक्षिणिपुरुषोदृ
श्यतेएषआत्मेतिहोवाचैतदमृतमभयमेतद्ब्रह्मेत्यथयोयंभगवोऽप्सुपरिख्यायतेयश्चायमादर्शेक
तमएषइत्येषउएवैषुसर्वेष्वंतेषुपरिख्यायतइतिहोवाच ॥ ७ ॥ उदशरावआत्मानमवेक्ष्ययदा
त्मनोनविजानीथस्तन्मेप्रब्रूतामितितौहोदशरावेवेक्षांचक्रातेतौहप्रजापतिरुवाचकिंपश्यथइति

मत्वाप्स्वादर्शकेचैवपप्रच्छकतमस्त्विति ॥ तत्रापितुहरेर्भावंहृदिकृत्वाचतुर्मुखः ॥ दृश्यतेह्येषएवेतित
त्ववेदिविवक्षया ॥ तथापियोग्यतैवात्रभूयसीतिनिवेदितुम् ॥ दर्शयन्प्रतिरूपस्यदोषानाहप्रजापतिः ॥
अलंकारादिभिर्युक्तःपश्यस्वेतिविवेचयन् ॥ यथादेहगुणेगौण्यंदोषेदोषास्तथैवतु ॥ तथाप्यशुद्धभावत्वाप्र

तिरूपस्यतद्गुणान् ॥ परस्यब्रह्मणोजानन्ययौतुष्टमनाःस्वयम् ॥ असुराणामविश्वासनिवृत्त्यर्थंपितामहः॥ माध्यस्थंज्ञापयानश्चजानन्वैरोचनंमनः ॥ प्राहाज्ञानांपराभावइत्युच्चैश्चपुनःपुनः ॥ तथाप्यशुद्धभावत्वादजानन्नेवनिर्ययौ ॥ गत्वाचैवपरंब्रह्मप्रतिरूपात्मकंसदा ॥ दिदेशसर्वासुराणांशरीरालंकृतेरपि ॥ अलंकृतिं

तौहोचतुःसर्वमेवेदमावांभगवआत्मानंपश्यावआलोमभ्यआनखेभ्यःप्रतिरूपमितितौहप्रजापतिरुवाचसाध्वलंकृतौसुवसनौपरिष्कृतौभूत्वोदशरावेवेक्षेथामितितौहसाध्वलंकृतौसुवसनौपरिष्कृतौभूत्वोदशरावेवेक्षांचक्रातेतौहप्रजापतिरुवाचाकिंपश्यथइतितौहोचतुर्यथैवेदमावांभगवःसाध्वलंकृतौसुवसनौपरिष्कृतौस्वएवमेवेमौभगवःसाध्वलंकृतौसुवसनौपरिष्कृतावितिएषआत्मेतिहोवाचैतदमृतमभयमेतद्ब्रह्मेतितौहशांतहृदयौप्रवव्रजतुस्तौहान्वीक्ष्यप्रजापतिरुवाचानुपलभ्यात्मानमननुविद्यव्रजतोयतरएतदुपनिषदोभविष्यंतिदेवावासुरावातेपराभविष्यंतीतिसहशांतहृदयएवविरोचनोसुरान्जगामतेभ्योहैतामुपनिषदंप्रोवाचात्मैवेहमह्य्यआत्मापरिचर्यआत्मानमेवेहमहय्यन्नात्मानंपरिचरन्नुभौलोकाववाप्नोतीमंचामुंचेतितस्मादप्यद्येहाददानमश्रद्दधानमयजमानमाहुरासुरोवतेत्यसुराणांह्येषोपनिषत्प्रेतस्यशरीरंभिक्षयावसनेनालंकारेणेतिसंस्कुर्वंत्येतेनह्यमुंलोकंजेष्यंतोमन्यंते ॥ ८ ॥ अथहेंद्रोप्राप्यैवदेवानेतद्भयंदद

ब्रह्मणश्चप्रत्यक्षेणोपलंभितान्॥अतोसुरानदास्यंतिनयजंत्यात्मनःपरम्॥ स्वभोगेनैवतृप्तिःस्यादितिसर्वेपिमेनिरे ॥ तत्संस्कारवशेनैवस्वयंब्रह्मेतिवेदिनः ॥ अभवन्नपतंश्चैवतमोंधेनित्यदुःखिताः ॥ इंद्रश्चजानन्न

पितुर्मोहयन्नसुरंतदा ॥ गत्वानिवर्त्तनेपश्चाद्विपश्यन्सदोषताम् ॥ पुनःपुनश्चमोहायगत्वागत्वानिवर्तते ॥

शंयथैवखल्वयमस्मिञ्छरीरेसाध्वलंकृतेसाध्वलंकृतोभवतिसुवसनेसुवसनःपरिष्कृतेपरिष्कृत
एवमेवायमस्मिन्नंधेंधोभवतिस्रामेस्रामःपरिवृक्णेपरिवृक्णोस्यैवशरीरस्यनाशमन्वेषनश्यति
नाहमत्रभोज्यंपश्यामीतिससमित्पाणिःपुनरेयायतꣳहप्रजापतिरुवाचमघवन्यच्छांतहृदयः
प्राव्राजीःसार्धंविरोचनेनकिमिच्छन्पुनरागमइतिसहोवाचयथैवखल्वयंभगवोस्मिञ्छरीरेसा
ध्वलंकृतेसाध्वलंकृतोभवतिसुवसनेसुवसनःपरिष्कृतेपरिष्कृतएवमेवायमस्मिन्नंधेंधोभवतिस्रा
मेस्रामःपरिवृक्णेपरिवृक्णोस्यैवशरीरस्यनाशमन्वेषनश्यतिनाहमत्रभोज्यंपश्यामीत्येवमेवैष
मघवन्नितिहोवाचैतंत्वेवतेभूयोनुव्याख्यास्यामिवसापराणिद्वात्रिꣳशतंवर्षाणीतिसहापराणि
द्वात्रिꣳशतंवर्षाण्युवासतस्मैसहोवाच ॥ १ ॥ यएषस्वप्नेमहीयमानश्चरत्येषआत्मेतिहो
वाचैतदमृतमभयमेतद्ब्रह्मेतिसहशांतहृदयःप्रवव्राजसहाप्राप्यैवदेवानेतद्भयंददर्शतद्यदपीदꣳ
शरीरमंधंभवत्यनंधःसभवतियदिस्राममस्रामोनैवैषोस्यदोषेणदुष्यतिनवधेनास्यहन्यतेनास्य
स्रामेणस्रामोघ्नंतित्वेवैनंविच्छादयंतीवाप्रियवेत्तेवभवत्यपिरोदितीवनाहमत्रभोज्यंपश्यामी
तिससमित्पाणिःपुनरेयायतꣳहप्रजापतिरुवाचमघवन्यच्छांतहृदयःप्राव्राजीःकिमिच्छन्पुन
रागमइतिसहोवाचतद्यदपीदंभगवःशरीरमंधंभवत्यनंधःसभवतियदिस्राममस्रामोनैवैषोस्यदोपे
णदुष्यतिनवधेनास्यहन्यतेनास्यस्रामेणस्रामोघ्नंतित्वेवैनंविच्छादयंतीवाप्रियवेत्तेवभवत्यपि

कथंचिदेवविज्ञातंमयेत्यज्ञान्विमोहितुम् ॥ तद्योग्यान्येववाक्यानिब्रह्मण्याहपुनःपुनः ॥ गरीयसीयो

ग्यतेतिज्ञापयन्पूर्ववत्पुनः ॥ संदिग्धान्येववाक्यानिप्रोवाचेंद्रायचात्मभूः ॥ स्वमंप्रदर्शयन्यस्तुपूज्यतेसर्व
देवतैः ॥ सएवविष्णुरित्याहतत्राप्याहपुरंदरः ॥ दर्शयन्नासुरींबुद्धिंस्वमदृश्यविवक्षया ॥ घ्नंतीवैनमदंतीव
तथानस्यात्परोहरिः ॥ इत्युक्तआहब्रह्मैनंसुप्तिस्थोभगवानिति ॥ यत्रसुप्तोह्ययंजीवइत्युक्तःप्राहवासवः॥
नाहंजानामिमत्तोन्यंसुप्तौनान्योपिदर्शयेत् ॥ अहमस्मीतिभूतानिनचपश्यंतिकानिचित् ॥ यदिजीवः

रोदितीवनाहमत्रभोज्यंपश्यामीत्येवमेवैषमघवन्निति होवाचैतंत्वेवतेभूयोनुव्याख्यास्यामिव
सापराणिद्वात्रिंशतंवर्षाणीतिसहापराणिद्वात्रिंशतंवर्षाण्युवासतस्मैसहोवाच ॥ १० ॥ त
द्यत्रैतत्सुप्तःसमस्तःसंप्रसन्नःस्वप्नंनविजानात्येषआत्मेतिहोवाचैतदमृतमभयमेतद्ब्रह्मेतिसहशां
तहृदयःप्रवव्राजसहाप्राप्यैवदेवानेतद्भयंददर्शनाहंखल्वयमेवंसंप्रत्यात्मानंजानात्ययमहम
स्मीतिनोएवेमानिभूतानिविनाशमेवापीतोभवतिनाहमत्रभोज्यंपश्यामीतिससमित्पाणिःपुन
रेयायतंहप्रजापतिरुवाचमघवन्यच्छांतहृदयःप्राव्राजीःकिमिच्छन्पुनरागमइतिसहोवाचना
हंखल्वयंभगवएवंसंप्रत्यात्मानंजानात्ययमहमस्मीतिनोएवेमानिभूतानिविनाशमेवापीतोभ
वतिनाहमत्रभोज्यंपश्यामीत्येवमेवैषमघवन्नितिहोवाचैतंत्वेवतेभूयोनुव्याख्यास्यामिनोएवा

परात्मावाप्यन्योन्यस्मिन्नपीतताम् ॥ गतौतदाप्यपीतस्तुशंविनैवभवेदिति ॥ उक्तोब्रह्माब्रवीच्छक्रंज्ञाप
यंस्तत्त्वमंजसा ॥ योयंशरीरसंबंधीजीवइत्यवधार्यताम् ॥ भूतेष्यद्वर्तमानेषुयस्यनोदेहसंगतिः ॥ सोशरी
रःपरोविष्णुरमृतोनित्यमूर्तिमान् ॥ अधिष्ठायतथापीमंदेहमास्तेसईश्वरः ॥ जरामृत्युपरीतोयंजीवात्मादे
हसंगतेः ॥ परेणेयंसुखंप्रोक्तंप्रियमित्येवपंडितैः ॥ परेणेयमभद्रंयदप्रियंतदुदीरितम् ॥ नजीवस्यतयोर्हा

निःकदाचिद्ध्रियतेक्वचित् ॥ अशरीरंपरंब्रह्मनैवतेस्पृशतःक्वचित् ॥ अम्रामाभगवान्विष्णुर्व्याप्तत्वात्पर
मेश्वरः तेनैवभ्रियमाणत्वाद्ब्रह्माभ्रमितिकीर्तितः ॥ वायोःपत्नीविद्युदुक्ताविशेषद्युतिहेतुतः ॥ ब्रह्माणी
स्तनयित्नुःस्यात्सर्वशब्दात्मिकायतः ॥ एतेषांज्ञानवैशेष्यान्नातिदेहेनसंगतिः ॥ अतःप्रियाप्रियेतेषामपि
नब्रह्मणःकिमु ॥ विष्णवीर्यंहिमुखंतेषांस्वभर्त्रीयमथापिच ॥ नह्यन्येयंसुखंतेषामतस्तेप्रियवर्जिताः ॥
यथातेपरमाकाशाद्विष्णोरेवसमुत्थिताः ॥ तमेवप्राप्यसंयांतिनिजमानंदमूर्जितम् ॥ एवंसम्यक्प्रसादेनवि
ष्णोर्मुक्तोपियोपरः ॥ यंप्राप्यतेनिजानंदमाप्नुवंतिसकेशवः ॥ तंप्राप्यरमतेमुक्तःस्त्रीभिर्यानैश्चबंधुभिः ॥

न्यत्रैतस्माद्वसापराणिपंचवर्षाणीतिसहापराणिपंचवर्षाण्युवासतान्येकशतंसंपेदुरेतत्तद्यदाहु
रेकशतंहवैवर्षाणिमघवान्प्रजापतौब्रह्मचर्यमुवासतस्मैसहोवाच ॥ ११ ॥ मघवन्मर्त्यंवाइ
दंशरीरमात्तंमृत्युनातदस्यामृतस्याशरीरस्यात्मनोधिष्ठानमात्तोवैशरीरःप्रियाप्रियाभ्यांनहवै
सशरीरस्यसतःप्रियाप्रिययोरपहतिरस्त्यशरीरंवावसंतंनप्रियाप्रियेस्पृशतोऽशरीरोवायुरभ्रंवि

यथैवसारथिर्यानेएवंदेहेचमारुतः ॥ यथारथीतथाविष्णुर्जीवोन्यरथगोयथा ॥ यदाश्रितानींद्रियाणिप्रा
णश्चापियदाश्रयः ॥ यदाश्रयोप्ययंजीवोयोवेदेषांप्रवर्तनम् ॥ दर्शनंश्रवणंघ्राणंजिह्वास्पर्शमनस्तथा ॥
तदीयान्विषयांश्चैवयोवेदाखिलमंजसा ॥ सविष्णुःपरमोज्ञेयोदेवताःकरणानिच ॥ सएतैरिंद्रियैर्विष्णुर्भो
गाननुभवत्यजः ॥ स्वरूपेणैवशक्तोपिजीवदेहस्थितोहरिः ॥ भुंक्तेनदिंद्रियैर्भोगान्कुरितैरिंद्रियैःस्वकैः ॥
जीवंतदिंद्रियाण्येवंप्राणंचव्याप्यकृत्स्नशः ॥ भुंक्तेतत्तद्गुणान्विष्णुर्नैवदोषान्कदाचन ॥ तमेवंदेवताः
सर्वावाय्वाद्याःसमुपासते ॥ तस्माद्देववशालोकाःसर्वकामाःसजीवकाः ॥ तमेतंयोयथाज्ञात्वापश्ये

द्विष्णुंसनातनम् ॥ आप्नोतिसर्वकामांश्चसर्वलोकांश्चकामतइतिसामसंहितायाम् ॥ उभौलोकाववामो
तीतिवचनान्नलोकायतिकमतंविरोचनेनोक्तम् ॥ किंतुबिंबप्रतिबिंबयोरभिमान्यैक्याभिप्रायेणजीवात्मै
वमहय्यइतिमायावादएव ॥ नचात्रजीवआत्मशब्दोक्तः ॥ तदस्याम्तस्याशरीरस्यात्मनोधिष्ठानमतोवैस
शरीरःप्रियाप्रियाभ्यांनहवैसशरीरस्यसतःप्रियाप्रिययोरपहतिरस्त्यशरीरम् ॥ वावसंतंनप्रियाप्रियेस्पृशत
इतीशजीवयोःसतात्पर्यभेदाभिधानात् ॥ नहिजीवादन्यस्यप्रियाप्रियानुभवोस्ति ॥ नचमुक्तस्यापिप्रि
याप्रियापहतिरस्ति ॥ नचविष्णोरत्रविवक्षितंप्रियम् ॥ पराधीनरतिप्राप्तिर्हिप्रियमत्रविवक्षितंनहितद्धग

**द्युत्स्तनयित्नुरशरीराण्येतानितद्यथैतान्यमुष्मादाकाशात्समुत्थायपरंज्योतिरुपसंपद्यस्वेनरूपे
णाभिनिष्पद्यंतएवमेवैषसंप्रसादोस्माच्छरीरात्समुत्थायपरंज्योतिरुपसंपद्यस्वेनरूपेणाभिनिष्प
द्यतेसउत्तमःपुरुषःसतत्रपर्येतिजक्षन्क्रीडन्रममाणःस्त्रीभिर्वायानैर्वाज्ञातिभिर्वाज्ञातिभिर्वानो
पजनꣳस्मरन्निदꣳशरीरꣳसयथाप्रयोग्यआचरणेयुक्तएवमेवायमस्मिन्शरीरेप्राणोयुक्तोथय**

वतः ॥ मुक्तानांतुभगवदधीनरतित्वात्प्रियमस्त्येव ॥ जीवामुक्ताअमुक्ताश्चपराधीनरतित्वतः ॥ नप्रिया
पहतिःक्वापिस्वातंत्र्यान्नहरेःप्रियम् ॥ पराधीनरतिर्यस्मात्प्रियमित्युच्यतेबुधैः ॥ हरेरधीनतातुस्याद्यद्य
पिब्रह्मवायुवोः ॥ तदन्यवशताभावादप्रियाविततिौश्रुतौ ॥ यथाराज्ञःस्वराट्शब्दोरुद्रस्येश्वरतातथा ॥ य
थाशक्रस्यचेंद्रत्वंतद्वदप्रियतातयोः ॥ यथाराज्ञ्याःस्वराज्ञीत्वंयथाचोमेश्वरीस्मृता ॥ विद्युतःस्तनयित्नो
श्चतथैवाप्रियताश्रुतेतिचपरमश्रुतौ ॥ सएवसंप्रसादोस्माच्छरीरात्समुत्थायपरंज्योतिरुपसंपद्यस्वेनरूपेणा
भिनिष्पद्यतइतिमुक्तस्यतत्प्रासादात्तत्प्राप्त्यानिजानंदानुभवश्रुतेश्च ॥ सउत्तमःपुरुषइतितस्यजीवादुत्तम

त्वश्रुतेश्च ॥ अपरपुरुषापेक्षयाह्युत्तमपुरुषशब्दोभवति ॥ अन्यथोत्तमशब्दएवस्यात् ॥ उत्तमः पुरुषस्त्वन्यःपरमात्मेत्युदाहृतइतिच ॥ ब्रह्मेशानादिभिर्देवैर्यत्प्राप्तुंनैवशक्यते ॥ तद्यत्स्वभावःकैवल्यंसभवान्केवलोहरे ॥ परोमात्रयातन्वाव्धानतेमहित्वमन्वश्नुवंति ॥ इदंज्ञानमपाश्रित्यममसाधर्म्यमागताः ॥ सोश्नुतेसर्वान्कामान्सहब्रह्मणाविपश्चितेति ॥ एतमानंदमयमात्मानमुपसंक्रम्येमाँल्लोकान्कामान्नीकामरूप्यनुसंचरन् ॥ नयत्रमायाकिमुतापरेहरेरनुव्रतायत्रसुरासुरार्चिताः ॥ कृष्णोमुक्तैरिज्यतेवीतमोहैरित्यादेश्च ॥ सतत्रपर्येतिजक्षन्क्रीडन्रममाणःस्त्रीभिर्वायानैर्वाज्ञातिभिर्वानोपजनंस्मरन्निदंशरीरमित्यत्रापिभेदेनावस्थानश्रुतेः ॥ उपशब्दादंतशब्दाच्चमुक्तस्यपरंज्योतिःसमीपावस्थानावगतेश्च ॥ नचजीवमात्रंदेवाउपासते ॥

नैतदाकाशमनुविषण्णंचक्षुःसचाक्षुषःपुरुषोदर्शनायचक्षुरथयोवेदेदंजिघ्राणीतिसआत्मागंधायघ्राणमथयोवेदेदमभिव्याहराणीतिसआत्माभिव्याहारायवागथयोवेदेदंशृणवानीतिसआत्माश्रवणायश्रोत्रमथयोवेदेदंमन्वानीतिसआत्मामनोस्यदैवंचक्षुःसवाएषएतेनदैवेनचक्षु

ऊर्जंपृथिव्याभक्त्वायोरुगायमुपासतइतिहिश्रुतिः ॥ भेददृष्ट्याभिमानेननिःसंगेनापिकर्मणेत्यादेश्च ॥ भूतैर्महद्भिर्यइमाःपुरोविभुर्निर्मायशेतेयदमूषुपूरुषः ॥ भुंक्तेगुणान्षोडशषोडशात्मकःसोलंकृषीष्टभगवान्वचांसिमइत्यादौभगवनएवेंद्रियैर्भोगोक्तेश्च ॥ ऋतंपिबंतौसुकृतस्यलोकेगुहांप्रविष्टौपरमेपरार्धेइतिच ॥ ॐगुहांप्रविष्टावात्मानौहितद्दर्शनादितिभगवद्वचनंच ॥ इदंपश्यामिजिघ्राणीत्यपिजीवानवैविदुः ॥ द्रव्याणामपरिज्ञानाद्द्वैतसौपुरुषोत्तमइतिच ॥ सउत्तमःपुरुषइतिभगवतएवात्रपरामर्शः ॥ ॐअन्यथार्थश्चपरामर्शइतिभगवद्वचनात् ॥ उत्तमःपुरुषस्त्वन्यःपरमात्मेत्युदाहृतइतिच ॥ ॐजगद्व्यापारवर्ज

मित्यल्पैश्वर्यत्वंमुक्तस्यभगवताभिहितम् ॥ अतोयंप्राप्यजीवःस्वेनरूपेणाभिनिष्पद्यतेसभगवानुत्तमःपुरु
षइतिपरामर्शः ॥ स्वमेमहीयमानश्चरतियत्रैतत्सुप्तइतिपुरस्तादपिभेदोक्तेः ॥ नहिमहीयमानएवजीवश्च
रति ॥ प्रायोग्यःसारथिः ॥ प्रयोगेनयानस्य ॥ यंतासारथिरानेताप्रायोग्यइतिकीर्तितइत्यभिधानात् ॥
अन्येभ्योदीप्यमानत्वाद्दैवंचक्षुर्मनःस्मृतमितिच॥यएतेब्रह्मलोकेतेपुरमते अनुविद्यशास्त्राचार्यानुसारेणवि
दित्वाविजानात्यापरोक्ष्येण॥वेदनंशास्त्रतोज्ञानंविज्ञानंब्रह्मदर्शनमितिच॥७।८।९।१०।११।१२॥श्यामोह्

पामनसैतान्कामान्पश्यन्रमतेयएतेब्रह्मलोकेतंवाएतंदेवाआत्मानमुपासतेतस्मात्तेषाꣳसर्वेच
लोकाआत्ताःसर्वेचकामाःसर्वाꣳश्चलोकानाप्नोतिसर्वाꣳश्चकामान्यस्तमात्मानमनुविद्यविजाना
तीतिहप्रजापतिरुवाचप्रजापतिरुवाच॥१२॥श्यामाच्छबलंप्रपद्येशबलाच्छ्यामंप्रपद्येश्वइवरो
माणिविधूयापापंचंद्रइवराहोर्मुखात्प्रमुच्यधूत्वाशरीरमकृतंकृतात्माब्रह्मलोकमभिसंभवामीत्य
भिसंभवामीति॥१३॥आकाशोवैनामरूपयोर्निर्वहितातेयदंतरातद्ब्रह्मतदमृतꣳसआत्माप्रजाप
तेःसभांवेश्मप्रपद्येयशोहंभवानिब्राह्मणानांयशोराज्ञांयशोविशांयशोहमनुप्रापत्सिसहाहंयशसां
यशःश्वेतमदत्कमदत्कंश्वेतंलिंदुमाऽभिगांलिंदुमाऽभिगाम्॥१४॥तद्धैतद्ब्रह्माप्रजापतयउ

दिस्थितोविष्णुःशबलोविश्वरूपवान्॥जीववर्णोजीवगतोलोहितश्चक्षुषिस्थितइतिमानसे॥ हयग्रीवमुखो
त्थानियानिवाक्यानितानितु ॥ रमाददर्शतान्येवब्रह्मातान्येवनारदः ॥ यानिविष्णोरयोग्यानिप्रार्थनाद्या
त्मकानितु ॥ तान्युत्तरेषांवाक्यानिभविष्याण्यवदद्धरिः ॥ एवंरमातथाब्रह्माछांदोग्योपनिषद्भिसेतिसाम
संहितायाम् ॥ १३ ॥ आकाशोतिप्रकाशत्वान्नामरूपेकृतेस्थितः ॥ ब्रह्माख्योभगवान्विष्णुस्तद्देश्म

प्रामुयामहम् ॥ यशोहंसर्ववर्णानांमत्तोन्येषांयशोभवेत् ॥ सोहंममयशोदात्रुयशसांयशउत्तमम् ॥ वि
ष्णवाख्यंपरमंब्रह्मश्वेतंश्वसनगंयतः ॥ अदत्कमद्यमानंकंस्वानंदानुभवात्मकम् ॥ लिंदुतद्रतिदंयस्मात्तदहं
प्रामुयांसदा ॥ १४ ॥ उपदिष्टःपरणैवत्वेवमाहचतुर्मुखः ॥ उवाचचमनोर्विद्यांप्रजाभ्योमनुरेवच ॥
तस्मात्सर्वेंद्रियाणीशेनिधायपुरुषोत्तमे ॥ दृष्ट्वातंपरमंविष्णुंतल्लोकंप्रतिपद्यते ॥ नावर्तेतपुनस्तस्मात्कदा
चित्कचिदितिच ॥ १५ ॥ पूर्णानंदमहोदधिःपरतमोनित्यःपरस्मात्सदासर्वज्ञःसकलेशितागुणनिधिर्नित्यो

वाचप्रजापतिर्मनवेमनुःप्रजाभ्यआचार्यकुलाद्वेदमधीत्ययथाविधानंगुरोःकर्मातिशेषेणाभिस
मावृत्यकुटुंबीशुचौदेशेस्वाध्यायमधीयानोधार्मिकान्विदधदात्मनिसर्वेंद्रियाणिसंप्रतिष्ठाप्याहिं
स्सन्सर्वाणिभूतान्यन्यत्रतीर्थेभ्यःसखल्वेवंवर्तयन्यावदायुषंब्रह्मलोकमभिसंपद्यतेनचपुनरा
वर्ततेनचपुनरावर्तते ॥ १५ ॥ इतिश्रीमच्छांदोग्योपनिषदिअष्टमोऽध्यायः ॥ ८ ॥ आप्या
यंतुममांगानिवाक्प्राणश्चक्षुःश्रोत्रमथोबलमिंद्रियाणिचसर्वाणिसर्वंब्रह्मौपनिषदंमाहंब्रह्मनिरा
कुर्यांमामाब्रह्मनिराकरोदनिराकरणमस्त्वनिराकरणंमेस्तुतदात्मनिनिरतेयउपनिषत्सुधर्मास्ते
मयिसंतुतेमयिसंतु ॥ ॐशांतिःशांतिःशांतिः ॥ हरिःॐ ॥ इतिश्रीमच्छांदोग्योपनिषत्संपूर्णा ॥

त्सवस्तद्विदाम् ॥ सर्वस्मादधिकंममप्रियनमस्त्विष्टादपीष्टोत्तमस्सर्वस्माच्चहितात्सदाहिततमःप्रीतोभवेन्मे
हरिः ॥ यस्यत्रीण्युदितानिवेदवचनेरूपाणिदिव्यान्यलंबट्तद्दर्शनमित्थमेवनिहितंदेवस्यभर्गोमहत् ॥
वायोरामवचोनयंप्रथमकंपृक्षोद्वितीयंवपुर्मध्वोयत्तुतृतीयकंकृतमिदंभाष्यंहरौतेनहि ॥ हनुशब्दोज्ञान
वाचीहनुमान्मतिशब्दितः ॥ रामस्यस्वतरूपस्यवाचोनेतागुणोदधिः ॥ भृतमोभीमइत्युक्तोवाचामामात

रःस्मृताः ॥ ऋगाद्याइतिहासश्चपुराणंपंचरात्रकम् ॥ प्रोक्ताःसप्तशिवास्तत्रशयोभीमस्ततःस्मृतः ॥ मध्वित्यानंदउद्दिष्टोवेतितीर्थमुदाहृतम् ॥ मध्वआनंदतीर्थःस्यात्तृतीयामारुतीतनुः ॥ इतिसूक्तगतंरूपत्रयमेतन्महात्मनः ॥ योवेदवेदवित्सस्यात्तत्त्ववित्तत्प्रसादतइतिसद्भावे ॥ आनंदतीर्थइतितुयस्यनामतृतीयकम् ॥ पूर्णप्रज्ञेनतेनेदंकृतंभाष्यंहरेःप्रियम् ॥ नित्यानंदोहरिःपूर्णोनित्यदाप्रीयतांमम ॥ नमस्तस्मैनमस्तस्मैनमस्तस्मैचविष्णवे ॥ ॐइतिश्रीमदानंदतीर्थभगवत्पादाचार्यविरचितेश्रीमच्छांदोग्योपनिषद्भाष्येऽष्टमोऽध्यायः ॥ ८ ॥ श्रीमच्छांदोग्योपनिषद्भाष्यंसंपूर्णम् ॥ श्रीकृष्णार्पणमस्तु ॥ ॥ ॥



॥ सभाष्या आथर्वणोपनिषत् २२ माण्डूक्योपनिषत् २३
षट्प्रश्नोपनिषत् २४ तलवकारोपनिषच्च २५ ॥

श्रीमन्मध्वहृत्सरोजांतर्वर्तिश्रीलक्ष्मीनारायणायनमः ॥ ॥ हरिःॐ ॥ आनंदमजरंनित्यमजमक्षयमच्यु
तम् ॥ अनंतशक्तिंसर्वज्ञंनमस्येपुरुषोत्तमम् ॥ मनोर्वैवस्वतस्यादावथर्वाब्रह्मणोजनि ॥ मित्रश्चव
रुणश्चाथोप्रहेतिर्हेतिरेवच ॥ ब्रह्मणःप्रथमेकल्पेशिवःप्रथमजःस्मृतः ॥ सनकाद्यास्तुवाराहेब्रह्मा
विष्णोःसुतोयजइतिब्रह्मांडे ॥ ऋगाद्याअपराविद्यायदाविष्णोर्नवाचकाः ॥ ताएवपरमाविद्यायदा
विष्णोस्तुवाचकाइतिपरमसंहितायाम् ॥ ऋग्भिर्होत्रेणशंसंतितथौद्गात्रैःस्तुवंतिये ॥ विष्णुमेवनथातस्मैय

श्रीमद्भारतीरमणमुख्यप्राणांतर्गतरमाजानयेनमः ॥ ॥ हरिःॐ ॥ ब्रह्मादेवानांप्रथमःसंबभू
वविश्वस्यकर्ताभुवनस्यगोप्ता ॥ सब्रह्मविद्यांसर्वविद्याप्रतिष्ठामथर्वायज्येष्ठपुत्रायप्राह ॥ अ
थर्वणेयांप्रवदेतब्रह्माअथर्वातांपुरोवाचांगिरेब्रह्मविद्याम् ॥ सभारद्वाजायसत्यवहायप्राहभा
रद्वाजोंगिरसेपरावराम् ॥ शौनकोहवैमहाशालोंगिरसंविधिवदुपसन्नःपप्रच्छ ॥ कस्मिन्नुभग
वोविज्ञातेसर्वमिदंविज्ञातंभवतीति ॥ तस्मैसहोवाच ॥ द्वेविद्येवेदितव्येइतिहस्मयद्ब्रह्मविदो
वदंति ॥ पराचैवापराच ॥ तत्रापरा॥ऋग्वेदोयजुर्वेदःसामवेदोथर्ववेदःशिक्षाकल्पोव्याकरणं

जुर्भिरपिजुह्वति ॥ स्तुवंत्याथर्वणेश्चैनंसेतिहासपुराणकैः ॥ नविष्णोःसदृशंकिंचित्परमंचापिमन्वते ॥
सर्वोत्तमंतंजानंतस्तेहिभागवतोत्तमाः ॥ वेदेरामायणेचैवपुराणेभारतेतथा ॥ आदावंतेचमध्येचविष्णुः
सर्वत्रगीयते ॥ एतदंतेचमध्येचब्रह्मैवोक्त्वाविजानताम् ॥ ऋगादिपंचधासंस्थंशब्दब्रह्मप्रशाम्यति ॥
यंवाकेष्वनुवाकेषुनिषत्सूपनिषत्सुच ॥ स्तुवंतिसत्यकर्माणंसत्यंसत्येषुसामसु ॥ सर्वेवेदायत्पदमामनं
तितपांसिसर्वाणिचयद्वदंति ॥ यदिच्छंतोब्रह्मचर्यंचरंतितत्तेपदंसंग्रहेणप्रवक्ष्ये ॥ वेदैश्चसर्वैरहमे

ववेद्योवेदांतकृद्वेदविदेवचाहमितिचभारते ॥ चतुर्दशमहाविद्यास्थानानिवेदितव्यानिभवंतीतिचमूलश्रु
तिः ॥ पंचरात्रमृगाद्याश्चसर्वमेकंपुराभवत् ॥ मूलवेदइतिह्याख्याकालेकृतयुगेतदा ॥ नैवर्क्सामादिना
मानितदावेदस्यचाभवन् ॥ नैवचेंद्रादिनामानिविष्णोरन्यत्रकुत्रचित् ॥ ब्रह्मरुद्रेंद्रपूर्वैस्तुनामभिःप्रोच्यते
हरिः ॥ देवतात्वेनचेज्यस्सब्रह्माद्यामनुनामकाः ॥ वक्तृत्वेनपितृत्वेनकारित्वेनैवचादरात् ॥ इज्यंतेदेवताः
सर्वानतुदेवतयाकश्चित् ॥ अनन्ययाजिनस्तेतुतस्मात्कार्तयुगाजनाः ॥ प्रामुवंतिहरिंतंचतस्माद्वेदेनकिंचन ॥
पारावर्यंहरेर्यस्मादुत्थितास्तुरगाननात् ॥ ऋगाद्याअनुव्याख्यांतास्तस्मात्सर्वैर्हरिंयजेत् ॥ तस्माद्ब्रह्मा

निरुक्तंछंदोज्यौतिषमिति ॥ अथपरा ॥ यथातदक्षरमधिगम्यते ॥ यत्तदद्रेश्यमग्राह्यमगोत्र
मवर्णमचक्षुःश्रोत्रंतदपाणिपादंनित्यंविभुंसर्वगतंसुसूक्ष्मम् ॥ तदव्ययंयद्भूतयोनिंपरिपश्यंति
धीराः ॥ यथोर्णनाभिःसृजतेगृह्णतेच यथापृथिव्यामोषधयःसंभवंति ॥ यथासतःपुरुषात्केश
लोमानितथाक्षरात्संभवतीहविश्वम् ॥ तपसाचीयतेब्रह्मततोन्नमभिजायते ॥ अन्नात्प्राणो
मनःसत्यंलोकाःकर्मसुचामृतम् ॥ यस्सर्वज्ञःसर्वविद्यस्यज्ञानमयंतपः ॥ तस्मादेतद्ब्रह्मनामरू

दयःसर्वेमनवोमानवास्तथा ॥ यजंतिसर्ववेदैस्तंजानंतिचविनिश्चयात् ॥ अशक्तःपंचरात्रेणऋगाद्यैर्वा
थतंयजेत् ॥ ऋगाद्यैरेवसत्रैस्तैर्भिन्नैरिष्टोजनैर्हरिः ॥ द्वापरीयैर्जनैर्विष्णुःपंचरात्रैस्तुकेवलैः ॥ कलौतु
नाममात्रेणपूज्यतेभगवान्हरिः ॥ एकोवेदःकृतेह्यासीत्त्रेतायांसत्रिधाभवत् ॥ सएवपंचधाजातोद्वाप
रंप्राप्यवैयुगम् ॥ उत्सन्नःसकलिंप्राप्यवेदःप्रायेणसर्वशः ॥ मुख्योधर्मःकार्तयुगोवर्ततेऽन्यःकलावा
पि ॥ त्रेतादौतदशक्त्याहिधर्मोन्यःसंप्रकीर्तितः ॥ कृतेभागवताःसर्वेवेदाश्चपुरुषास्तथा ॥ त्रेतायां

भिन्नविषयास्ततस्तेविद्यतांगताः ॥ तस्मादेकःसर्ववेदैर्ज्ञेयोविष्णुःसनातनः ॥ पूज्योयज्ञैःसोपचारैर्ध्येयो वंद्यश्चसर्वदेत्यादिनारायणसंहितायाम् ॥ वेदवादाश्चानुयुगंह्रसंतीतिचनःश्रुतिरितिभारते ॥ वेदैश्चपंचरात्रैश्चभक्त्यायज्ञैस्तथैवच ॥ दृश्योहंनान्यथादृश्योवर्षकोटिशतैरपीत्यादिवाराहे ॥ अत्रापितदेतत्सत्यंमंत्रेषुकर्माणिकवयोयान्यपश्यन्नित्यादिनाकर्मविषयामपरविद्यामुक्त्वा येनाक्षरंपुरुषंवेदसत्यंप्रोवाचतां तत्त्वतोब्रह्मविद्यामित्यारभ्याथर्वणानेवमंत्रान्परविद्यात्वेनाह ॥ चतुर्वेदसंस्कारवतामेवचविद्यायामधिकारउक्तः ॥ तेषामेवैतांब्रह्मविद्यांवदेतशिरोव्रतंविधिवद्यैस्तुचीर्णमिति ॥ शिरोव्रतमित्युपलक्षणत्वेन ॥

पमन्नंचजायते ॥ १ ॥ तदेतत्सत्यम् ॥ मंत्रेषुकर्माणिकवयोयान्यपश्यंस्तानित्रेतायांबहुधा संततानि॥तान्याचरथनियतंसत्यकामाएषवःपंथाःसुकृतस्यलोके॥यदालेलायतेह्यर्चिःसमिद्धे हव्यवाहने ॥ तदाज्यभागावंतरेणाहुतीःप्रतिपादयेत् ॥ यस्याग्निहोत्रमदर्शपूर्णमासमनाग्रयणमतिथिवर्जितंच ॥ अहुतमवैश्वदेवमविधिनाहुतमासप्तमांस्तस्यलोकान्हिनस्ति ॥ का

स्ववेदव्रतयुक्तस्यसर्ववेदगतास्वपि ॥ अधिकारोस्तिविद्यासुनावेदव्रतिनःक्वचिदितिव्यासस्मृतौ ॥ एतद्ब्रह्मचतुर्मुखः ॥ १ ॥ तदेतत्सत्यंभगवान् ॥ तत्कामाःकर्माण्याचरथ ॥ तदासापिपरविद्या ॥ अन्यथाप्लवाह्येतेअदृढायज्ञरूपाः ॥ भगवद्विषयत्वेनकृतेएषवःपुण्यःसुकृतोब्रह्मलोकः ॥ परब्रह्मलोकः ॥ निष्कामंज्ञानपूर्वंयन्निवृत्तमिहचोच्यते ॥ निवृत्तंसेवमानस्तुब्रह्माभ्येतिसनातनमितिव्यासस्मृतौ ॥ सयआत्मानमेवलोकमुपास्तेनहास्यकर्मक्षीयतइतिचश्रुतिः ॥ सहयज्ञाःप्रजाःसृष्ट्वेत्युक्त्वाएवंप्रवर्तितंचक्रंनानुवर्तयतीहयः ॥ अघायुरिंद्रियारामोमोघंपार्थसजीवतीतिच ॥ यांतिमद्याजिनोपिमामितिच ॥ अहंहिसर्व

यज्ञानांभोक्ताचप्रभुरेवच ॥ नतुमामभिजानंतितत्त्वेनातश्च्यवंतितइतिच ॥ यस्त्वात्मरतिरित्युक्त्वापि
कुर्याद्विद्वांस्तथासक्तइत्येवोक्तत्वाच्च ॥ येत्वेतदभ्यसूयंतोनानुतिष्ठंतिमेमतम् ॥ सर्वज्ञानविमूढांस्तान्वि
द्धिनष्टानचेतसइतिच ॥ लोकेस्मिन्द्विविधानिष्ठापुराप्रोक्तामयानघेत्युक्तत्वाच्चनात्राश्रमांतरविरोधः ॥
त्रेतायांबहुधासंततानि कृतेत्वेकप्रकारेणैवसंततानि ॥ अग्निष्टोमादिभिर्यज्ञैःसर्वदेवस्थितंहरिम् ॥ यजं

लीकरालीचमनोजवाचसुलोहितायाचसुधूम्रवर्णा ॥ स्फुलिंगिनीविश्वरुचीचदेवीलेलायमा
नाइतिसप्तजिह्वाः ॥ एतेषुयश्चरतेभ्राजमानेषुयथाकालंचाहुतयोह्याददायन् ॥ तन्नयंत्येताः
सूर्यस्यरश्मयोयत्रदेवानांपतिरेकोधिवासः ॥ एह्येहीतितमाहुतयःसुवर्चसःसूर्यस्यरश्मिभिर्य
जमानंवहंति ॥ प्रियांवाचमभिवदंत्योर्चयंत्यएषवःपुण्यःसुकृतोब्रह्मलोकः ॥ प्लवाह्येतेअदृढा
यज्ञरूपाअष्टादशोक्तमवरंयेषुकर्म ॥ एतच्छ्रेयोयेभिनंदंतिमूढाजरामृत्युंतेपुनरेवापियंति ॥
अविद्यायामंतरेवेष्टयमानाःस्वयंधीराःपंडितंमन्यमानाः ॥ जंघन्यमानाःपरियंतिमूढाअंधेनैव
नीयमानायथांधाः ॥ अविद्यायांबहुधावर्तमानाःस्वयंकृतार्थाइत्यभिमन्यंतिबालाः ॥ यत्क
र्मिणोनप्रवेदयंतिरागात्तेनातुराःक्षीणलोकाश्च्यवंते ॥ इष्टापूर्तंमन्यमानावरिष्ठंनान्यच्छ्रेयो
वेदयंतेप्रमूढाः ॥ नाकस्यपृष्ठेसुकृतेनेनुभूत्वाइमंलोकंहीनतरंवाविशंति ॥ तपःश्रद्धेयेभ्यु

तितांश्चकारित्वाद्वसुस्तस्मात्तथायजत् ॥ पृथक्पृथक्त्रेतायांयजंतेदेवतागणान् ॥ यथाकृतेनथाप्राआ
त्रेतायांबहुधाततइतिपाद्मे ॥ यमिंद्रमाहुर्वरुणंयमाहुर्यंमित्रमाहुर्यमुसत्यमाहुः ॥ योदेवानांदेवतमोज
नित्रोवायोस्तस्मैसोममेभ्योजुहोमि॥ एवंवायोःपितरंविष्णुमेवयजंतिदेवैःसहयेकृतेजनाः ॥ एवंत्रेतायां

केचिदन्येपृथक्तानिष्ट्वाविष्णावर्पयंतेनचान्यइतिचब्रह्मांडे॥ विष्णोःसर्वेभ्यःकिंचिदुत्तमत्वंजानंतइमंलोकमाविशंति॥साम्यंहीनत्वंवाजानंतोहीनतरंतमएवविशंति॥देवेभ्यउत्तमंविष्णुंराजवद्यस्तुमन्यते॥ याजीसमानुषंयातिसाम्यहीनत्ववित्तमइतिच॥त्रैविद्यामामितितु॥ येप्यन्यदेवताभक्ताःयजंतेश्रद्धयान्विताः॥

पवसंत्यरण्येशांताविद्वांसोभैक्षचर्यांचरंतः॥सूर्यद्वारेणतेविरजाःप्रयांतियत्रामृतःसपुरुषोह्यव्ययात्मा॥परीक्ष्यलोकान्कर्मचितान्ब्राह्मणोनिर्वेदमायान्नास्त्यकृतःकृतेन॥तद्विज्ञानार्थंसगुरुमेवाभिगच्छेत्समित्पाणिःश्रोत्रियंब्रह्मनिष्ठम् ॥ तस्मैसविद्वानुपसन्नायसम्यक्प्रशांतचित्तायशमान्विताय ॥ येनाक्षरंपुरुषंवेदसत्यंप्रोवाचतांतत्त्वतोब्रह्मविद्याम् ॥ २ ॥ तदेतत्सत्यम् ॥ यथासुदीप्तात्पावकाद्विस्फुलिंगाःसहस्रशःप्रभवंतेसरूपाः ॥ तथाक्षराद्विविधाःसोम्यभावाःप्रजायंतेतत्रचैवापियंति ॥ दिव्योह्यमूर्तःपुरुषःसबाह्याभ्यंतरोह्यजः ॥ अप्राणोह्यमनाःशुभ्रोह्यक्षरात्परतःपरः ॥ एतस्माज्जायतेप्राणोमनस्सर्वेंद्रियाणिच ॥ खंवायुर्ज्योतिरापःपृथिवीविश्वस्यधारिणी ॥ अग्निर्मूर्धाचक्षुषीचंद्रसूर्यौदिशःश्रोत्रेवाग्विवृताश्चवेदाः ॥ वायुःप्राणोहृदयंविश्वमस्यपद्भ्यांपृथिवीह्येषसर्वभूतांतरात्मा॥ तस्मादग्निःसमिद्धोयश्चसूर्यःसोमात्पर्जन्यओषधयःपृथिव्याम् ॥ पुमान्रेतःसिंचतियोषितायांबह्वीःप्रजाःपुरुषात्संप्रसूताः ॥ तस्मादृचःसाम

तेपिमामेवकौंतेययजंति॥अहंहिसर्वयज्ञानांभोक्तेत्युक्तत्वादज्ञानपूर्वयाजिनस्त्रैविद्याः॥२॥अपरंत्वक्षरंयासाप्रकृतिर्जडरूपिका॥अक्षरंपरमंश्रीस्तुपरतःपरमक्षरम्॥वासुदेवःपरानंदइतित्रिविधमक्षरमितिच॥विष्णवंगानांहिनामानिद्युभ्वादीनितुसर्वशः॥क्रीडादिशक्तिरूपत्वात्तज्जत्वादन्यवस्तुष्वितिच॥ वासुदेवःपुमान्नाम

पूर्णत्वात्स्त्रयोषिति ॥ रमायांगर्भमदधात्प्रजास्तस्मात्प्रजज्ञिरइतिच ॥ सप्तार्चिषोऽत्तयः ॥ होमाःसंबंधाः ॥ लोकागोलकाः ॥ गुहाशयांबुद्धौ ॥ लोपःसमानइतिसूत्रादेकयकारलोपः ॥ प्रतिपुरुषंसप्तसप्त ॥ भगवतःकर्मचेष्टातपोज्ञानंच ॥ २ ॥ परामृतब्रह्माख्यःपुरुषोभगवानेव ॥ यैषाचेष्टाभगवतोयच्च

यजूंषिदीक्षायज्ञाश्चसर्वेक्रतवोदक्षिणाश्च ॥ संवत्सरश्चयजमानश्चलोकाःसोमोयत्रपवतेयत्रसूर्यः ॥ तस्माच्चदेवाबहुधासंप्रसूताःसाध्यामनुष्याःपशवोवयांसि ॥ प्राणापानौव्रीहियवौतपश्चश्रद्धासत्यंब्रह्मचर्यंविधिश्च ॥ सप्तप्राणाःप्रभवंतितस्मात्सप्तार्चिषःसमिधःसप्तहोमाः ॥ सप्तइमेलोकायेषुचरंतिप्राणागुहाशयांनिहिताःसप्तसप्त ॥ अतःसमुद्रागिरयश्चसर्वेऽस्मात्स्यंदंतेसिंधवःसर्वरूपाः ॥ अतश्चसर्वाओषधयोरसाश्चयेनैषभूतैस्तिष्ठतेह्यंतरात्मा ॥ ३ ॥ पुरुषएवेदंविश्वंकर्मतपोब्रह्मपरामृतम् ॥ एतद्योवेदनिहितंगुहायांसोविद्याग्रंथिंविकिरतीहसोम्य ॥ आविःसंनिहितंगुहाचरंनाममहत्पदम्॥ अत्रैतत्सर्वमर्पितमेजत्प्राणन्निमिषच्चयत्॥एतज्जानथसदसद्वरेण्यंपरंविज्ञानाद्यद्वरिष्ठंप्रजानाम् ॥ यदर्चिमद्यदणुभ्योणुचयस्मिँल्लोकानिहितालोकिनश्च॥ तदेतदक्षरंब्रह्मसप्राणस्तदुवाङ्मनः॥तदेतत्सत्यम्॥तदमृतंतद्वेद्धव्यंसोम्यविद्धि॥धनुर्गृहीत्वौपनिषदंमहास्त्रंशरंह्युपासानिशितंसंदधीत॥आयम्यतद्भावगतेनचेतसालक्ष्यंतदेवाक्षरंसो

ज्ञानंपरात्मनः ॥ तत्सर्वंभगवानेवयेचधर्माबलादयइतिच ॥ स्वाभाविकीज्ञानबलक्रियाचेतिश्रुतिः ॥ विज्ञानाद्ब्रह्मणःपरम् ॥ नाजिह्वादिहसतोंभसियस्यपुंसोविज्ञानशक्तिरहमासमनंतशक्तेरितिभागवते ॥ प्राणःप्रणयनाद्विष्णुर्वक्तृत्वाद्वागुदीरितः ॥ मनोमंतृत्वतोविष्णुःसर्वजीवनियामकइतिशब्दनिर्णये ॥ अ

मृतस्यमुक्तस्यसेतुः ॥ ॐमुक्तोपसृप्यव्यपदेशात्ॐ ॥ मुक्तानांपरमागतिरित्यादेः ॥ हृदयस्थःसदा
विष्णुर्बहुधाचैकधाभवन् ॥ चरतिस्वेच्छयैवांतःसर्वजीवान्नियामयन्निति प्रवृत्ते ॥ पराअप्यवरायस्मा
त्सहिविष्णुःपरावरः ॥ ब्रह्मांडमध्यगोनित्यंतपत्येषरवौस्थितइतिच ॥ सूर्यादयस्तंनभासयंति ॥ इदंब्रह्मैव

म्यविद्धि॥प्रणवोधनुःशरोह्यात्माब्रह्मतल्लक्ष्यमुच्यते॥अप्रमत्तेनवेद्धव्यंशरवत्तन्मयोभवेत् ॥
यस्मिन्द्यौःपृथिवीचांतरिक्षमोतंमनःसहप्राणैश्चसर्वैः॥तमेवैकंजानथआत्मानमन्यावाचोविमुं
चथाऽमृतस्यैषसेतुः॥ अराइवरथनाभौसंहतायत्रनाड्यः॥ सएषोंतश्चरतेबहुधाजायमानः ॥
ओमित्येवध्यायतआत्मानंस्वस्तिवःपारायतमसःपरस्तात् ॥ यःसर्वज्ञःसर्वविद्यस्यैषमहिमा
भुवि ॥ दिव्येब्रह्मपुरेह्येषव्योम्न्यात्मासंप्रतिष्ठितः॥ मनोमयःप्राणशरीरनेताप्रतिष्ठितोन्नेहृदयंसं
निधाय ॥ तद्विज्ञानेनपरिपश्यंतिधीराआनंदरूपममृतंयद्विभाति॥ भिद्यतेहृदयग्रंथिश्छिद्यंते
सर्वसंशयाः॥ क्षीयंतेचास्यकर्माणितस्मिन्दृष्टेपरावरे॥ हिरण्मयेपरेकोशेविरजंब्रह्मनिष्कलम्॥
तच्छुभ्रंज्योतिषांज्योतिस्तद्यदात्मविदोविदुः॥ नतत्रसूर्योभातिनचंद्रतारकंनेमाविद्युतोभां
तिकुतोयमग्निः॥तमेवभांतमनुभातिसर्वंतस्यभासासर्वमिदंविभाति॥ब्रह्मैवेदममृतंपुरस्तात्प
श्चाद्ब्रह्मदक्षिणतश्चोत्तरेण॥अधश्चोर्ध्वंचप्रसृतंब्रह्मैवेदंविश्वमिदंवरिष्ठम्॥४॥द्वासुपर्णासयुजा
सखायासमानंवृक्षंपरिषस्वजाते ॥ तयोरन्यःपिप्पलंस्वाद्वत्त्यनश्नन्न्योअभिचाकशीति॥ स ॥ ५ ॥

विश्वंपूर्णम् ॥ इदमेववरिष्ठंसर्वोत्तमम् ॥ इदंशब्दानांबहुत्वाद्ब्रह्मविषयएवेदंशब्दः॥४॥स्वादुवत्सर्वदात्ति ॥
नतुस्वाद्वेव ॥ तस्येदाहुःपिप्पलंस्वाद्वग्रेतन्नोन्नशद्यःपितरंनवेदेत्यज्ञानांस्वादुनिषेधात् ॥ जीवाद्यमेवना

श्नातिभगवान्नतुनाश्नात्येव ॥ तस्येदाहुःपिप्पलंस्वाद्वित्युक्तत्वात् ॥ स्वातंत्र्येणैवभोक्तृत्वाद्दुःखाभोगाच्च सर्वदा ॥ अभोक्ताचैवभोक्ताच भगवान्विष्णुरव्ययइतिचतत्त्वसारे ॥ नास्तीशोस्यायतोन्योहिनतोनीशा हरेर्मतिः ॥ तयामुह्यतिजीवस्तमन्यंज्ञात्वाविमुच्यते ॥ जीवादन्यःस्वतंत्रोयंयतोतःपुरुषोत्तमइतिब्रह्मसा

मानेवृक्षेपुरुषोनिमग्नोअनीशयाशोचतिमुह्यमानः ॥ जुष्टंयदापश्यत्यन्यमीशमस्यमहिमान मितिवीतशोकः॥ यदापश्यःपश्यतेरुक्मवर्णकर्तारमीशंपुरुषंब्रह्मयोनिम्॥तदाविद्वान्पुण्यपापेवि धूयनिरंजनःपरमंसाम्यमुपैति ॥ प्राणोह्येषसर्वभूतैर्विभातिविजानन्विद्वान्भवतेनातिवादी॥ आत्मक्रीडआत्मरतिःक्रियावानेषब्रह्मविदांवरिष्ठः ॥ सत्येनलभ्यस्तपसाह्येषआत्मासम्यग्ज्ञा नेनब्रह्मचर्येणनित्यम् ॥ अंतःशरीरेज्योतिर्मयोहिशुभ्रोयंपश्यंतियतयःक्षीणदोषाः ॥ सत्यमे वजयतिनानृतंसत्येनपंथावितताेदेवयानः ॥ येनाक्रमंत्यृषयोह्याप्तकामायत्रतत्सत्यस्यपरमंनि धानम् ॥ बृहच्चतद्दिव्यमचिंत्यरूपंसूक्ष्माच्चतत्सूक्ष्मतरंविभाति ॥ दूरात्सुदूरेतदिहांतिकेचप श्यत्स्विहैवनिहितंगुहायाम् ॥ नचक्षुषागृह्यतेनापिवाचानान्यैर्देवैस्तपसाकर्मणावा ॥ ज्ञानप्र सादेनविशुद्धसत्त्वस्ततस्तुतंपश्यतेनिष्कलंध्यायमानः ॥ एषोणुरात्माचेतसावेदितव्योयस्मि न्प्राणःपंचधासंविवेश ॥ प्राणैश्चित्तंसर्वमोतंप्रजानांयस्मिन्विशुद्धेविभवत्येषआत्मा॥यंयंलोकं

रे ॥ पुण्यंचानिष्टंविधूय॥ सत्योहिभगवान्विष्णुःसद्गुणत्वात्प्रकीर्तितः॥असुरास्तद्विरुद्धत्वादनृताःपरिकीर्ति ताः ॥ तस्यविष्णोर्निधानंतुवैकुंठोलोकउत्तमइतिच॥सर्वगत्वात्तद्दूरेंतिकेच॥नान्यैर्देवैर्हरिंपश्येज्ज्ञानरूपेण वायुना ॥ ब्रह्मणापरमज्ञानरूपेणहरिणातथा॥प्रसन्नेनैवतंपश्येदन्येनुज्ञाप्रदायिनइतिच॥षोडशकलाशरी

स्वरूपैक्यंकुतस्तेषांनित्यभिन्नस्वरूपिणाम् ॥ हरेरपिस्वरूपाणामेकीभावोयदोच्यते ॥ संश्लेषएव
सिद्धत्वात्स्वरूपैक्यस्यनोभवइतिच ॥ गतामुक्ताः ॥ प्राणादिपंचदशकलारूपादेवता ॥ अन्येचदेवाःस
र्वेप्रतिदेवतासुदेवताप्रतिबिंबभूतासुप्रजासुप्रतिप्रतिस्थिताःकर्माणिविज्ञानमयोजीवश्चपरमात्मनिप्रविशं
ति ॥ प्रतिबिंबोहरेःप्राणस्तस्यचान्याःकलाःक्रमात् ॥ कलानांदेवताअन्यादेवतानांनराअपि ॥ तस्मात्स
र्वेषुमुक्तेषुनरेष्वपिनियामकाः ॥ तिष्ठंतिनात्रसंदेहःपरमात्मनिचाखिलाइतिमुक्तविवेके ॥ कलाभ्यश्चा
न्यदेवेभ्यःकर्मप्रत्यवरंयतः ॥ कलाभ्यःपृथगुक्तंतत्पुष्करःकर्मचोच्यतइति ॥ अन्यथागताभविष्यंतीत्य

**नायमात्माबलहीनेनलभ्योनचप्रमादात्तपसोवाप्यलिंगात् ॥ एतैरुपायैर्यततेयस्तुविद्वांस्त**
**स्यैषआत्माविशतेब्रह्मधाम ॥ संप्राप्यैनमृषयोज्ञानतृप्ताःकृतात्मानोवीतरागाःप्रशांताः ॥ ते**
**सर्वगंसर्वतःप्राप्यधीरामुक्तात्मानःसर्वमेवापियंति ॥ वेदांतविज्ञानसुनिश्चितार्थाःसंन्यासयोगा**
**द्यतयःशुद्धसत्त्वाः ॥ तेब्रह्मलोकेषुपरांतकालेपरामृतात्परिमुच्यंतिसर्वे ॥ गताःकलाःपंचद**

ध्याहारोदोषः ॥ नचमूलरूपाणिप्रतिदेवताइत्युच्यंतेदेवानाम् ॥ प्रतिरूपशब्दवद्धिप्रतिदेवताशब्दः ॥
विज्ञानात्मासहदेवैश्वसर्वैःप्राणाभूतानिसंप्रतिष्ठंतियत्र ॥ इमाःषोडशकलाःपुरुषायणाःपुरुषंप्राप्यास्तं
गच्छंति॥यथासोम्येमाःसमुद्रायणाइतिनदीदृष्टांतपूर्वकंपुरुषप्राप्तिकथनाच्चमुक्तादेवाएवोच्यंते ॥ सप्रा
णमसृजतेत्यादेश्चपुरुषोभगवान् ॥ अगम्यनामरूपत्वादमुक्तैर्मुक्तिगानराः ॥ विहीननामरूपास्तुनहित
द्रहितत्वतः ॥ अशरीरोयथावायुःसामान्यागम्यदेहतः ॥ एवंनद्यःसमुद्रस्थाःसामान्यागम्यरूपतइतिच ॥
स्वकीयमुदकंनद्यःसमुद्रेनैवजानते ॥ वायुस्तुतत्पृथग्ज्ञात्वामेघेकृत्वाप्रवर्षतीतिच ॥ विमुक्तइत्यमुक्त

रोनभवतीतिनिष्कलः ॥ यदापश्यःपश्यतेरुग्मवर्णम् ॥ आनंदरूपममृतंयद्विभातीत्युक्तत्वात् ॥५॥ सआ
त्मज्ञार्चकोब्रह्मणोधामप्राणंवेद ॥ यत्रविश्वंपूर्णंब्रह्मनिहितम् ॥ प्रधानंधामविष्णोस्तुप्राणएवप्रकीर्ति
तः ॥ उपायैर्यैर्विजानीयात्प्राणस्थंपरमेश्वरम् ॥ तस्यप्राणेहरिर्नित्यमाविष्टोभवतिध्रुवम् ॥ नित्यंप्राणे
स्थितस्यैवविष्णोरावेशएवहि ॥ प्राणद्वारेणयज्ज्ञानदीपनंज्ञानिनःसदा ॥ सन्निधानंयथाग्रामाःपिशा
चाःपुरुषेष्वपि ॥ तत्रस्थित्वापिभुंजंतआविशेयुःपुनश्चते ॥ मंत्रादिभिस्तथाविष्णुःसदाप्राणस्थितोपि
सन् ॥ ज्ञानदीप्त्यादिकंकुर्याज्ज्ञानिनःपुनरेवत्विति च ॥ एतच्छुक्रंप्रत्यन्यदतिवर्तते ॥ सर्वतीर्त्वाहरिंशु

मनसासंविभातिविशुद्धसत्त्वःकामयतेयांश्चकामान् ॥ तंतंलोकंजयतेतांश्चकामांस्तस्मादा
त्मज्ञंह्यर्चयेद्भूतिकामः ॥ ५ ॥ सवेदैतत्परमंब्रह्मधामयत्रविश्वंनिहितंभातिशुभ्रम् ॥ उपास
तेपुरुषंयेह्यकामास्तेशुक्रमेतदतिवर्ततिधीराः ॥ कामान्यःकामयतेमन्यमानःसकामभिर्जाय
तेतत्रतत्र ॥ पर्याप्तकामस्यकृतात्मनश्चइहैवसर्वेप्रविलीयंतिकामाः ॥ नायमात्माप्रवचनेन
लभ्योनमेधयानबहुनाश्रुतेन ॥ यमेवैषवृणुतेतेनलभ्यस्तस्यैषआत्माविवृणुतेतनूंस्वाम् ॥

क्रंप्रतिवर्तीभवेत्पुनः ॥ ज्ञानिनःसाहिमुक्तिःस्यात्तन्नैवात्येतिकश्चनेतिमहावाराहे ॥ सर्वतोदेहादेर्मुक्ताः
सर्वगंभगवंतंप्राप्यतमेवाभियंति ॥ देहादेःसर्वतोमुक्ताःसर्वगंपुरुषोत्तमम् ॥ प्राप्यतस्मिन्प्रविश्याथमोदंतेंत
र्बहिस्तथेतिच ॥ ब्रह्मलोकेषुस्थित्वापरांतकालेपरिमुच्यंति ॥अविरोधश्चसादृश्यमेकदेशस्थितिस्तथा॥
एकीभावस्त्रिधाप्रोक्तोनैकीभावःस्वरूपयोः ॥ कुतोऽभूतस्यभवनंस्वरूपस्यैक्यमेवहि॥अतोनदीनांजीवा
नांविरुद्धानांनृणामपि ॥ अब्धिनाहरिणाचैवतथैवचनरांतरैः ॥एकीभावस्तुसंश्लेषोविरोधस्यचवर्जनम्॥

इत्यर्थः ॥ विप्रियइतिवत् ॥ अविहायेतिच ॥ अनंतंवैनामेतिचश्रुतेः ॥ परंब्रह्मविदित्वातुबृंहितःस्यात्स्व योग्यतः ॥ नायोग्यंकिंचिदाप्नोतिकुतएवहरेर्गुणानितिच ॥ ब्रह्मत्वंबृंहितत्वंस्याज्जीवानांनपरात्मता ॥ अस्वतंत्रस्यजीवस्यकुतोनित्यस्वतंत्रतेतिस्कांदे ॥ यत्रामृतःसपुरुषोह्यव्ययात्मा ॥ यत्रतत्सत्यस्यपरमं निधानम् ॥ अमृतस्यैषसेतुः ॥ शरवत्तन्मयोभवेत् ॥ ब्रह्मतल्लक्ष्यमुच्यते ॥ निरंजनःपरमंसाम्यमुपैति ॥ इत्यादिनामुक्तस्यसर्वत्रभगवत्सकाशाद्भेदस्यैवोक्तत्वाच्च ॥ ॐमुक्तोपसृप्यव्यपदेशात्ॐ ॥ ॐजगद्व्या

शप्रतिष्ठादेवाश्चसर्वेप्रतिदेवतासु ॥ कर्माणिविज्ञानमयश्चआत्मापरेऽव्ययेसर्वएकीभवंति ॥ यथानद्यःस्यंदमानाःसमुद्रायणाःसमुद्रंप्राप्यास्तंगच्छंतिनामरूपेविहाय ॥ तथाविद्वान्नामरूपाद्विमुक्तःपरात्परंपुरुषमुपैतिदिव्यम् ॥ सयोहवैतत्परमंब्रह्मवेदब्रह्मैवभवति ॥ नास्याब्रह्मवित्कुलेभवति ॥ तरतिशोकंतरतिपाप्मानंगुहाग्रंथिभ्योविमुक्तोमृतोभवति ॥ तदेषश्लोकः ॥ क्रियावंतःश्रोत्रियाब्रह्मनिष्ठाःस्वयंजुह्वतएकर्षिंश्रद्धयंतः ॥ तेषामेवैतांब्रह्मविद्यांवदेतशिरोव्रतंविधिवद्यैस्तुचीर्णम् ॥ तदेतत्सत्यमृषिरंगिराःपुरोवाच ॥ नैतदचीर्णव्रतोधीते ॥ ॐनमःपरमऋषिभ्योनमःपरमऋषिभ्यः॥६॥इतिश्रीमदाथर्वणोपनिषत्समाप्ता॥ श्रीकृष्णार्पणमस्तु ॥

पारवर्जम्ॐ ॥ ॐप्रकरणादसन्निहितत्वाच्चेत्यादिनाभगवतापिसर्वत्रभेदस्यैवसूचितत्वात् ॥ नतेमहित्वमन्वश्नुवंति ॥ सोश्नुतेसर्वान्कामान्सहब्रह्मणाविपश्चिता ॥ ब्रह्मेशानादिभिर्देवैर्यत्प्राप्तुंनैवशक्यते ॥ तद्यत्स्वभावःकैवल्यंसभवान्केवलोहरइत्यादेश्च ॥ मुक्तेभ्योपिमनुष्येभ्योदेवाएवगुणाधिकाः ॥ तेभ्योवायुस्ततोविष्णुःपरिपूर्णगुणःसदा ॥ येत्वेतदन्यथाविद्युस्तेहियांत्यधरंतमः ॥ येत्वेतदेवंजानंतितेयांतिपरमंह

रिमितिच ॥ देवानांसंततौजाताःप्रायशोज्ञानिनःकृते ॥ बलवद्धेतुतश्चान्येयस्माद्ब्रह्मविदःसुराः ॥ नसंततोब्रह्मविदोनराणांज्ञानिनामपि ॥ प्रायशःस्युःसुराणांचनियमोयंकृतेयुगे ॥ तस्मात्सभगवान्विष्णुर्ज्ञेयःसर्वोत्तमोत्तमः ॥ सदासर्वगुणैःपूर्णोयोनंतःपुरुषोत्तमइतिच ॥ प्रीयतांभगवान्मह्यंप्रेष्ठप्रेष्ठतमःसदा ॥ ममनित्यंनमाम्येनंपरमोदारसद्गुणम् ॥ ६ ॥ इतिश्रीमदानंदतीर्थभगवत्पादाचार्यविरचितमाथर्वणोपनिषद्भाष्यंसंपूर्णम् ॥



श्रीमन्मध्वहृत्सरोजांतर्वर्तिश्रीलक्ष्मीवेंकटेशायनमः ॥ ॥ ॐ ॥ पूर्णानंदज्ञानशक्तिस्वरूपंनित्यमव्ययम् ॥
चतुर्धासर्वभोक्तारंवंदेविष्णुंपरंपदम् ॥ मंडूकरूपिणावरुणेनचतूरूपोनारायणोत्रस्तूयते ॥ ध्यायन्नाराय
णंदेवंप्रणवेनसमाहितः ॥ मंडूकरूपीवरुणस्तुष्टावहरिमव्ययमितिपाद्मे ॥ ओमित्युक्तंतुयद्ब्रह्मतद
क्षरमुदाहृतम् ॥ ओतमत्रजगद्यस्मादोतस्माद्भगवान्हरिः ॥ तदिदंगुणपूर्त्यैवसर्वमित्येवशब्दितम् ॥
भाविभूतभवत्कालेष्वेकरूपतयाहरिः ॥ सर्वदानित्यइत्येषाव्याख्योंकारस्यकीर्तितेतिबृहत्संहितायाम् ॥

श्रीमद्भारतीरमणमुख्यप्राणांतर्गतरमाजानयेनमः ॥ हरिःॐ ॥ ओमित्येतदक्षरमिदंसर्वम् ॥ त
स्योपव्याख्यानंभूतंभवद्भविष्यदिति ॥ सर्वमोंकारएवयच्चान्यत्त्रिकालातीतंतदप्योंकारएव ॥
सर्वंह्येतद्ब्रह्म ॥ अयमात्माब्रह्म ॥ सोयमात्माचतुष्पात् ॥ जागरितस्थानोबहिःप्रज्ञःसप्तांगए
कोनविंशतिमुखःस्थूलभुग्वैश्वानरःप्रथमःपादः ॥ स्वप्नस्थानोंतःप्रज्ञःसप्तांगएकोनविंशतिमु
खःप्रविविक्तभुक्तैजसोद्वितीयःपादः ॥ यत्रसुप्तोनकंचनकामंकामयतेनकंचनस्वप्नंपश्यतित
त्सुषुप्तंसुषुप्तस्थानएकीभूतःप्रज्ञानघनएवानंदमयोह्यानंदभुक्चेतोमुखःप्राज्ञस्तृतीयःपादः ॥
एषसर्वेश्वरएषसर्वज्ञएषोंतर्यामी ॥ एषयोनिःसर्वस्यप्रभवाप्ययौहिभूतानाम् ॥ अत्रैतेश्लो

ओमित्याक्रियतेयस्मादोंकारोसावतःपरः ॥ सर्वत्वमितिपूर्णत्वंतन्नान्यस्यहरेःक्वचिदितिनैर्गुण्ये ॥ स
र्वमोंकारएवेत्यन्यस्यपूर्णत्वनिवारणम् ॥ त्रिकालातीतत्वंचतस्यैव ॥ प्रकृतेरपित्रिकालातीतत्वंवि
द्यतइत्यन्यदितिविशेषणम् ॥ परमंयोमहद्ब्रह्म ॥ तदेवब्रह्मपरमंकवीनाम् ॥ पूर्णमदःपूर्णमिदमि
त्यादिषुप्रसिद्धंचब्रह्मणःपूर्णत्वमित्याह ॥ सर्वंह्येतद्ब्रह्मेति ॥ श्रीब्रह्मादिसकलदेहेषुस्थित्वाआदानादिक

र्थोयंकश्चित्प्रतीयते ॥ जीवानामस्वातंत्र्यदर्शनात् ॥ सोपिसएवेतिदर्शयति ॥ अयमात्माब्रह्मेति ॥
पूर्णस्तुहरिरेवैकोनान्यत्पूर्णंकदाचन ॥ विनाचप्रकृतिंनान्यत्कालातीतंपरात्मनः ॥ कालश्चैवदिशोदेवाः
प्रकृत्यात्मानईरिताः ॥ अभिमानात्तुजीवानांनकालातीतताभवेत् ॥ मुक्तानामपिपूर्वत्रकालसंबंधईरि
तः ॥ पूर्णत्वंचसदाविष्णोःप्रसिद्धंसर्ववेदतः ॥ सोयंविष्णुरमाब्रह्मरुद्रानंतादिगःसदा ॥ आदानादनकर्तृ
त्वादात्मातेषामगोचरः ॥ इतिमंडूकरूपीसन्ददर्शवरुणःश्रुतिमितिहरिवंशेषु ॥ चतुर्धावस्थितोदेहेपरमा
त्मासनातनः ॥ वैश्वानरोजागरितस्थानगोगजवक्त्रकः ॥ निर्माताबाह्यसंवित्तेर्जीवानांतदगोचरः ॥ अ

काभवंति ॥ बहिःप्रज्ञोविभुर्विश्वोह्यंतःप्रज्ञस्तुतैजसः ॥ घनःप्रज्ञस्तथाप्राज्ञएकएवत्रिधास्मृ
तः ॥ १ ॥ दक्षिणाक्षिमुखेविश्वोमनस्यंतस्तुतैजसः ॥ आकाशेचहृदिप्राज्ञस्त्रिधादेहेव्यव
स्थितः ॥ २ ॥ विश्वोहिस्थूलभुङ्नित्यंतैजसःप्रविविक्तभुक् ॥ आनंदभुक्तथाप्राज्ञस्त्रिधाभो
गंनिबोधत ॥ ३ ॥ स्थूलंतर्पयतेविश्वंप्रविविक्तंतुतैजसम् ॥ आनंदंचतथाप्राज्ञंत्रिधातृप्तिंवि

ष्टादशमुखान्यस्यपुमाकाराणिसर्वशः ॥ मध्यमंतुगजाकारंचतुर्बाहुःपरःपुमान् ॥ पादौहस्तिकरोहस्ता
इतिसप्तांगईरितः ॥ स्थूलान्भोगानिंद्रियैःसशुभान्भुंक्तेनचाशुभान् ॥ विश्वंस्थूलंसमुद्दिष्टंसर्वगम्यत्वहे
तुतः ॥ तत्संबंधीनरोनाशाद्वैश्वानरउदाहृतः ॥ विनायकस्तुविश्वस्यध्यानादैंद्रजवक्त्रताम् ॥ तथैवतैजस
ध्यानात्त्रिध्यानादिंद्रइंद्रताम् ॥ चतुर्ध्यानाच्चरुद्रत्वंरुद्रआपजनार्दनात् ॥ एवंभूतगुणोविष्णुश्चतुरात्माप
रात्परइतिमहायोगे ॥ जाग्रद्दर्शनसंस्काररूपत्वात्स्वमगंतुयत् ॥ प्रविविक्तंतुतज्ज्ञानकारणोंतर्ज्ञउच्यतइ
तिवाराहे ॥ सुषुप्तंतुतमोज्ञेयंहरिंप्राप्यतदावृतः ॥ नकामयेनैवपश्येज्जीवःस्वात्मतमोविना ॥ कालंचतस्य

स्थानस्यपतिःप्राज्ञोहरिःस्वयम् ॥ चित्तस्थोदर्शयेत्तस्मात्तैजसःस्वमकृद्धरिः ॥ नबाह्यंज्ञापयेद्यस्मात्प्राज्ञस्तेनजनार्दनः ॥ एकीभावंव्रजेतांचतेनविश्वश्चतैजसः ॥ एकीभूतस्तदाप्राज्ञोघनोजीवस्तमोवृतः ॥ तन्मात्रस्यसकालस्यघनप्रदःप्रदर्शनादितिप्रकाशिकायाम् ॥ आनंदमयःपूर्णानंदः ॥ चेतोमुखोज्ञानस्वरूपमुखः ॥ प्रज्ञानघनइतिविपरीतसमासः ॥ घनप्रज्ञइतिवक्ष्यमाणत्वात् ॥ विषयभोगंविनानंदमात्रभुक्त्वादानंदभुगितिविशेषः ॥ आनंदमयत्वचेतोमुखत्वसर्वज्ञत्वसर्वैश्वरत्वादिचतुष्टयेपिसमम् ॥ अन्यत्रातिदेशार्थमेकत्रानंदमयत्वंचेतोमुखत्वंचोक्तम्॥एषचतूरूपआत्मासर्वज्ञत्वसर्वैश्वरत्वादिलक्षणः॥परमात्माचतूरूपःसर्वप्राणिशरीरगः॥विश्वश्चतैजसःप्राज्ञस्तुरीयश्चेतिकथ्यते॥तानिरूपाणिसर्वाणिपूर्णानंदमयानितु॥चेतोमुखानिसर्वाणिपूर्णज्ञानस्वरूपतः॥मुखशब्दस्तुसर्वस्यदेहस्याप्युपलक्षणः ॥ तथापिमुखशब्दोयंपूर्णत्वंसूचयेद्विभोः॥ ज्ञानस्यमुख्यवाचित्वान्मुखवाच्यपिसन्स्वतइतिमार्कंडेये ॥ पूर्णानंदस्वरूपस्यक्रीडाभोगोनचान्यथा॥यथादित्यस्यदीपेननविशेषोस्तिकश्चनेतिब्रह्मतर्के॥प्रमाणस्यप्रमाणंचबलवद्विद्यतेमुने॥ब्रह्मदृष्टान्यतोमंत्रान्प्रमाणंसलिलेश्वरः ॥ अत्रश्लोकाभवंतीतिचकारैवपृथक्पृथगितिगारुडे॥स्वंडचतुष्टयेपिपृथक्पृथक्॥प्रभवःसर्वभावानांविष्णुरेवनसंशयः॥इत्थंसतांनिश्चयःस्यादन्यथात्वसतांभवेत्॥सर्वस्यहिप्रणेतृत्वात्प्राणोनारायणःपरः॥तांस्रष्टिंबहुधाप्राहुर्ज्ञानिनोज्ञानिनस्तथा॥विष्णुर्विकृतिमायातिमहदादिस्वरूपिणीम्॥तत्तद्विविधभूतिस्तुसृष्टिःप्रोक्ताह्यपंडितैः॥स्वममायासरूपांचकेचिदज्ञाजनाविदुः॥ अविकारस्यचिन्मात्रस्वेच्छयैवाखिलंजगत्॥ उत्पद्यतइतिप्राज्ञाःप्राहुर्ब्रह्मादयोखिलाः॥पूर्णशक्तेःकुतोमायासार्वज्ञ्यास्वप्नवत्कुतः॥ सर्वदोषव्यतीतस्यविकारःकुतइष्यते ॥ तस्मादेवाविकारस्यविष्णोरिच्छावशादिदम् ॥

यथार्थमेवसंभूतमितिवेदवचोखिलम् ॥ केचित्कालतएवैतांसृष्टिमाहुरकोविदाः॥ केचिद्रुद्राद्ब्रह्मणश्चप्र
धानादितिचापरे ॥ विमूढाःसर्वएवैतेयतोनारायणःपरः ॥ सर्वकर्तासर्वशक्तिरेकएवचनापरः ॥ प्रधान
कालब्रह्मेशमुखाःसर्वेपितद्वशाः ॥ तस्यापिविष्णोःसृष्टिंतुकेचिदाहुरनैपुणाः ॥ अतृप्तस्यैवभोगार्थंक्री
डार्थंतुविपश्चितः॥ साचक्रीडास्वभावोस्यकुतोऽतृप्तस्यास्पृहाविभोरितिहरिवंशेषु ॥ १ ॥ विष्णुस्तुरीयरू
पेणद्वादशांतेव्यवस्थितः ॥ मुक्तानांप्राप्यरूपोसौव्यवहारेनदृश्यते ॥ सम्यक्समाहितानांतुप्राप्तानांषोड

जानथ ॥ ४ ॥ त्रिषुधामसुयद्भोज्यंभोक्तायश्चप्रकीर्तितः ॥ वेदैतदुभयंयस्तुसभुंजानोन
लिप्यते ॥ ५ ॥ प्रभवस्सर्वभावानांसतामितिविनिश्चयः ॥ सर्वंजनयतिप्राणश्चेतोंशून्पुरुषः
पृथक् ॥ ६ ॥ विभूतिंप्रसवंत्वन्येमन्यंतेसृष्टिचिंतकाः ॥ स्वप्नमायासरूपेतिसृष्टिरन्यैर्विक
ल्पिता ॥ ७ ॥ इच्छामात्रंप्रभोस्सृष्टिरितिसृष्टौविनिश्चिताः ॥ कालात्प्रसूतिंभूतानांमन्यं
तेकालचिंतकाः ॥ ८ ॥ भोगार्थंसृष्टिरित्यन्येक्रीडार्थमितिचापरे ॥ देवस्यैषस्वभावोयमाप्त
कामस्यकास्पृहेति ॥ ९॥ प्रथमःखंडः ॥ १ ॥ ॥ नांतःप्रज्ञंनबहिःप्रज्ञंनोभयतःप्रज्ञंनप्रज्ञान
घनंनप्रज्ञंनाप्रज्ञमदृष्टमव्यवहार्यमलक्षणमचिंत्यमव्यपदेश्यमैकात्म्यप्रत्ययसारंप्रपंचोपशमं

शीकलाम् ॥ अपरोक्षदृशांक्वापितुरीयंदृश्यतेपरम् ॥ अंतर्बहिश्चसौप्रंचसमाधिज्ञानमेवच ॥ बहिःशब्दा
दिकंजानन्पश्यन्स्वप्नंतथैवच ॥ यदाभवतिसावस्थाह्युभयज्ञानशब्दिता ॥ एतत्सर्वंतुरीयेणरूपेणनकरो
त्यजः ॥ सर्वज्ञानप्रदश्चापिमुक्तस्यैवतुरीयकइतिब्रह्मांडे ॥ अमुक्तस्यत्वदृश्यत्वात्षोडशींवाकलाम्प्रते ॥
तुरीयोदृष्टइत्युक्तोपहृणादेरगोचरः ॥ विनामुक्तिंततस्तेनाऽव्यवहार्यइतीरितः॥ जाग्रदादिप्रवृत्तिस्तुलक्ष

णंह्यनुमापकम् ॥ अलक्षणस्तद्ग्राह्यित्यादचिंत्यस्ततएवच ॥ ततएवह्यनिर्देश्यश्चिदानंदैकलक्षणः ॥ मुक्त
स्यसर्वव्यापारहेतुरेवतुरीयकः ॥ एकःप्रधानउद्दिष्टआत्मापूर्णत्वतःश्रुतः ॥ तदेवास्यस्वरूपंयदैकात्म्यं
तेनकीर्तितः ॥ प्रत्ययोज्ञानरूपत्वात्सारआनंदरूपतः ॥ प्रपंचोविस्तृतेर्विष्णुःशमआनंदरूपतः ॥ उत्कृष्टा
नंदरूपत्वादुपशब्दःप्रकीर्तितः ॥ प्रपंचंदेहबंधाख्यंतुरीयःशमयेद्यतः ॥ प्रपंचोपशमस्तेनाप्युक्तःसभग
वान्प्रभुः ॥ निर्दुःखसुखरूपत्वाच्छिवशब्दःश्रुतौश्रुतः ॥ अन्यथाप्रत्ययोद्वैतंशमयेत्तंयतोहरिः ॥ अद्वै
तस्तेनचोद्दिष्टस्तुरीयःपुरुषोत्तमइतिमाहात्म्ये ॥ अपेक्ष्यवस्तुयाथार्थ्यंद्वित्वमन्यस्वरूपता ॥ इण्गतावि

शिवमद्वैतंचतुर्थंमन्यंतेसआत्मासविज्ञेयः ॥ अत्रैतेश्लोकाभवंति ॥ निवृत्तेःसर्वदुःखानामी
शानःप्रभुरव्ययः ॥ अद्वैतःसर्वभावानांदेवस्तुर्योविभुःस्मृतः ॥ १ ॥ कार्यकारणबद्धौताबि
ष्येतेविश्वतैजसौ ॥ प्राज्ञःकारणबद्धस्तुद्वौतुतुर्येनसिद्ध्यतः ॥ २ ॥ नात्मानंनपरांश्चैवनसत्यं
नापिचानृतम् ॥ प्राज्ञःकिंचनसंवेत्तितुर्यंतत्सर्वदृक्सदा ॥ ३ ॥ द्वैतस्याग्रहणंतुल्यमुभयोः

तिधातोश्चतज्ज्ञानंद्वैतमुच्यतइतिसंकल्पे ॥ सआत्मासविज्ञेयइतिसोयमात्माचतुष्पादितिचतुर्धाविभक्त
उच्यतेउपसंहारार्थम् ॥ सोयमात्माध्यक्षरमितिपृथगारंभात् ॥ विश्वादिरूपोयस्त्वात्मासविज्ञेयोमुमुक्षु
भिः ॥ निर्विशेषोपिभगवांश्चतुर्धासमुदीरितइतिप्रत्यये ॥ सर्वदुःखानांनिवृत्तेःकारणभूतस्तुरीयोदेवः ॥
हरिस्तुरीयरूपेणमोक्षदःसंप्रकीर्तितः ॥ देवःससर्वजीवानांगम्यत्वात्समुदीरितः ॥ भावाजीवाःसमुद्दिष्टा
भवंत्येतेयतोविभोः ॥ ईशानामपिमुक्तानांईशानःसोननाच्छुतइतिप्रत्याहारे ॥ कार्यकारणबंधस्यतदधी
नत्वतोविभुः ॥ विश्वादिरूपोभगवान्बद्धइत्युच्यतेश्रुतौ ॥ कुतोबंधःपरस्यास्यबंधेशस्यचिदात्मनइति

च ॥ सबद्धःसदुःखीसबंधयतिसदुःखयतीति ॥ सजीवःसप्रकृतिःसजीवयतिसप्रकरोतीति ॥ सोवरःसोऽ
नित्यः सोवरयतिसोऽनित्ययतीतिकौषारवश्रुतिः ॥ विष्णोर्गुणोक्तिपरताममनित्यंसुरेश्वराः ॥ तदर्थ
मन्यद्वचनमतस्तस्यविरोधियत् ॥ तन्ममार्थोनहिक्वापिसाहंतत्सरणात्सदा ॥ सरस्वतीतिसंप्रोक्तातस्मा
ज्ज्ञेयाहरेर्गुणाइतिमहोपनिषदि ॥ नात्मानंनपरांश्चैवनसत्यंचापिनानृतम् ॥ प्राज्ञःसंवेदयेत्किंचिज्जीव
कालतमोविना ॥ सुप्त्यवस्थांसुखंचापिविनानान्यत्प्रदर्शयेत्॥ सर्वंतुदर्शयेन्मुक्तौतुरीयःपरमेश्वरइतिप्रत्य
ये॥ स्वतंत्रेकर्तृशब्दःस्यात्प्राज्ञस्यावेदनंयथा॥सर्वप्रदर्शकेचैवतुरीयेसर्वदर्शनमितिब्रह्मतर्के॥ निद्रायुतास्तु
विश्वाद्यास्तदधीनायतोहिसा ॥ यथाभृत्ययुतःस्वामीनह्यज्ञानंपरात्मनइतिच ॥ अभेदमपितद्ब्रह्मबहुरू

प्राज्ञतुर्ययोः ॥ बीजनिद्रायुतःप्राज्ञःसाचतुर्येनविद्यते ॥ ४ ॥ स्वमनिद्रायुतावाद्यौप्राज्ञस्त्व
स्वमनिद्रया ॥ ननिद्रांनैवचस्वमंतुर्येपश्यंतिनिश्चिताः ॥ ५ ॥ अन्यथागृह्णतःस्वमोनिद्रा
तत्त्वमजानतः ॥ विपर्यासेनयोःक्षीणेतुरीयंपदमश्नुते ॥ ६ ॥ अनादिमाययासुप्तोयदाजी

पंविशेषतः ॥ करोतिनकरोतीतिव्यवहार्यंस्वशक्तितइतिच ॥ नसंवेदयतीत्यस्वीकारेतुर्येतत्सर्वदृक्सदा॥
द्वैतस्याग्रहणंतुल्यमुभयोःप्राज्ञतुर्ययोरितिचविरुद्धम् ॥ द्वैताग्रहणाकारणत्वंतुल्यमित्यर्थः ॥ द्वैतंनग्राहये
त्तुर्योनचप्राज्ञःकथंचन ॥ द्वैताग्रहणबीजंतुनिद्राप्राज्ञंसमाश्रितेतिप्रकटश्रुतिः ॥ विपरीतज्ञानादपिविप
रीतज्ञानांतरंजायते ॥ अनादिमाययाविष्णोरिच्छयास्वापितोयदा ॥ तयाप्रबोधमायातितदाविष्णुंप्रप
श्यतीतिप्रकाशिकायाम् ॥ तन्वात्वस्वामिसंबंधःप्रपंचोस्यशरीरिणः ॥ वस्तुतोसौनचैवास्तिपरमस्यव
शेयतः ॥ तन्वादिकस्तथाप्येषह्यभिमानात्प्रदृश्यते ॥ अतःसविद्यतइतिह्यंगीकारोभवेद्यदि ॥ तथापिभ

गवज्ज्ञानात्सनिवर्तेदसंशयइतिब्रह्मतर्के ॥ अद्वैतमन्यथाज्ञातंपरब्रह्मादिवस्तुतत् ॥ द्वैतंद्विधाज्ञातंअन्यथा ज्ञातमज्ञैः ॥ परमार्थतःपरमेश्वरात् ॥ तस्यैवमायामात्रंतदिच्छयानिर्मितम् ॥ तदन्यथाज्ञानंतस्मात्तदिच्छयैवनिवर्तते ॥ परेणब्रह्मणायत्तुद्विधानज्ञातमंजसा ॥ तदद्वैतंपरंब्रह्मतदेवज्ञातमन्यथा ॥ जीवेनद्वैतमुद्दिष्टंमिथ्याज्ञानंतदेवच ॥ परमार्थात्पराद्विष्णोर्जातमिच्छावशादनु ॥ मायेतीच्छासमुद्दिष्टामायामात्रंतदुद्भवम् ॥ उत्तमत्वात्परार्थोसौभगवान्विष्णुरच्युतइतिच ॥ अनन्यथाइतमवगतमद्वैतंद्वैतंवस्तुस्वरूपापेक्षयाद्विधाप्यन्यथाज्ञातमित्यर्थः ॥ अतोविकल्पः॥ शारीरादिसंबंधः ॥ केनचिदज्ञानादिनाकारणेन

वःप्रबुध्यते ॥ अजमनिद्रमस्वप्नमद्वैतंबुध्यतेतदा ॥ ७ ॥ प्रपंचोयदिविद्येतनिवर्तेतनसंशयः ॥
मायामात्रमिदंद्वैतमद्वैतंपरमार्थतः ॥ ८ ॥ विकल्पोविनिवर्तेतकल्पितोयदिकेनचित् ॥ उप
देशादयंवादोज्ञातेद्वैतंनविद्यतइति ॥९॥ द्वितीयःखंडः॥२॥ ॥ सोयमात्माध्यक्षरमोंकारोऽ
धिमात्रंपादामात्राअकारउकारोमकारइति ॥ जागरितस्थानोवैश्वानरोकारःप्रथमामात्रा ॥
आप्तेरादिमत्त्वाद्वाआप्नोतिहवैसर्वान्कामानादिश्चभवति॥ यएवंवेद ॥ स्वप्नस्थानस्तैजसउका

कल्पितोप्युपदेशान्निवर्तते ॥ अयंसतांवादः ॥ ज्ञातेसतिपरब्रह्मणिद्वैतमन्यथाज्ञानंनिवर्ततइति॥ विकल्पो देहबंधादिःकेनचित्कारणेनतु॥ कल्पितोविनिवर्तेतगुरुवाक्यादसंशयः ॥ एषएवसतांवादोज्ञातेब्रह्मणि तत्त्वतः॥ निवर्तेतन्यथाज्ञानंततआनंदमेत्यसाविति च ॥ २ ॥ अधिकंसर्वतअविनाशिचेत्यध्यक्षरम् ॥ अधिकाएवमात्राअंशायस्यतदधिमात्रम् ॥ अइत्यनेनाभिधानेनाक्रियतइत्यकारः ॥ तत्रपूर्वोक्तोवैश्वानरः ॥ प्रथमामात्रेत्याद्यनुवादः ॥ अकारइत्यादिकंविधेयम् ॥ प्राज्ञस्तैजसश्वादिरस्येत्यादिमान् ॥ सुप्ते

रुत्थानेप्राज्ञाद्विभक्तोभवतिविश्वः ॥ स्वप्नादुत्थानेतैजसात् ॥ आदिश्चास्योपासकस्यभवति ॥ शरीराभि मानादुत्थाप्यकर्षतीत्युत्कर्षः ॥ निद्राविषयानुभवश्चानेनक्रियतइत्युभयत्वंसमानःसर्वेषांमध्यस्थोभव ति ॥ मितेरंतर्गमनात् ॥ अधिकत्वाच्चनित्यत्वादध्यक्षरमुदाहृतः ॥ येंशास्तस्यतुसर्वेपिपूर्णाःप्रत्येकशःप्र भोः ॥ अतोधिमात्रमुद्दिष्टोमात्राअंशाउदाहृताः ॥ श्रुतःसविष्णुरोंकारओमित्याक्रियतेयतः ॥ आद्यस्त दंशोव्याप्तिःस्याद्विषयानापयेद्यतः॥जीवस्यतुयतःप्राज्ञात्तैजसाद्वासमुत्थितः॥अविभागोपिभगवानादिमां स्तेनकीर्तितः ॥ तस्मादुत्पद्यतेमुक्तःसज्ज्ञानानंदलक्षणः ॥ आमोतिविषयान्सर्वान्निद्रायाविषयस्यच ॥

रोद्वितीयामात्रा ॥ उत्कर्षादुभयत्वाद्वा ॥ उत्कर्षतिहवैज्ञानसंततिंसमानश्चभवतिनास्याब्रह्म वित्कुलेभवति॥यएवंवेद॥सुषुप्तस्थानःप्राज्ञोमकारस्तृतीयामात्रा॥मितेरपीतेर्वा॥मिनोतिहवा इदंसर्वमपीतिश्चभवति ॥ यएवंवेद ॥ अत्रैतेश्लोकाभवंति ॥ विश्वस्यात्वविवक्षायामादि सामान्यमुत्कटम् ॥ मात्रासंप्रतिपत्तौस्यादादिसामान्यमेवच ॥ १ ॥ तैजसस्योत्वविज्ञाना उत्कर्षोदृश्यतेस्फुटम् ॥ मात्रासंप्रतिपत्तौस्यादुभयत्वंतथाविधम् ॥ २ ॥ मकारभावेप्राज्ञस्य

उभयोःकारणत्वेनह्युभयस्तैजसःस्मृतः॥देहाभिमानादुद्धृत्यकर्षतिस्वप्नमंडले॥उत्कर्षत्वंततस्तस्यतज्ज्ञानी ज्ञाननित्यताम्॥आमोतिदेहादुत्कृष्यस्वात्मानंसर्वमोक्षिणाम्॥मध्यस्थःसभवेत्स्नेहाद्द्वेषाभावाच्चसर्वशः ॥ स्वात्मन्यंतर्गमयतिमानमंतर्गतिःस्मृता ॥ जीवमंतर्गतंकत्वातज्ज्ञानलयकथ्यतः ॥ प्राज्ञोमानमपीतिश्चत ज्ज्ञोप्येवंविमुक्तिगः ॥ व्याप्यांतर्गमयेत्सर्वंदुःखाद्यंतुविलापयेत् ॥ अणूनामपिजीवानांप्रकाशोव्यापको भवेत् ॥ अंडमात्रेबहिश्चापिदेवतानांयथाक्रमम् ॥ अतोंतर्गमनंमुक्तौजीवेषुजगतोभवेदितिब्रह्मतर्के ॥

मात्रासंप्रतिपत्तौअंशध्याने ॥ आदिमत्त्वंविश्वस्यविद्यते ॥ तदुपासकस्यापिभवतीत्यादिसामान्यम् ॥ अमात्रेप्यगतिर्नविद्यते ॥ प्रतिदिवसंविभागएकीभावश्चविद्यतेविश्वादीनाम् ॥ तुरीयस्यतन्नविद्यतइत्यमात्रः ॥ विश्वादीनांव्यवहारकारणत्वंविद्यते ॥ तुरीयस्यतन्नविद्यतइत्यतोगम्यत्वमपिनास्तीत्याशंकांनिवारयति अगतिर्नविद्यतइति॥ आत्मानंसंविशंतीतिगतिवचनात् ॥ आदिमत्त्वेनसामान्यमुपास्येनभवेदिति॥ उपासकस्यसंजानन्सर्वंबंधोभवेत्पुमान् ॥ सामान्यत्रयमप्येतत्तुल्यंमुक्तिगतत्वतः ॥ अमात्रत्वंतुरीयस्यत्वविभागाद्दिनेदिने ॥ जाग्रदादेरकर्तापिगम्योसौज्ञानिनांभवेदितिच ॥ आदिमत्त्वादिसामान्यंतुल्यं

ध्यानसामान्यमुत्कटम् ॥ मात्रासंप्रतिपत्तौतुल्यसामान्यमेवच ॥ ३ ॥ त्रिषुधामसुयत्तुल्यंसामान्यंवेत्तिनिश्चितम् ॥ सपूज्यस्सर्वभावानांवंद्यश्चैवमहामुनिः ॥ ४॥ अकारोनयतेविश्वमुकारश्चापितैजसम् ॥ मकारश्चपुनःप्राज्ञंनामात्रेविद्यतेगतिरिति ॥ ५ ॥ तृतीयःखंडः ॥३॥ ॥अमात्रश्चतुर्थोऽव्यवहार्यःप्रपंचोपशमःशिवोद्वैतओंकारआत्मैवसंविशत्यात्मनात्मानम्॥ यएवंवेद ॥ अत्रैतेश्लोकाभवंति॥ओंकारंपादशोविद्यात्पादामात्रानसंशयः ॥ ओंकारंपादशोज्ञात्वा

मोक्षोपभोग्यतः ॥ अमात्रत्वंतुरीयस्याप्यविभागाद्दिनेदिनइत्यात्मसंहितायाम् ॥ २ ॥ आत्मैवभूत्वाऽन्याभिमानंत्यक्त्वापरमात्मनैवपरमात्मानंप्रविशत्युपासकः ॥ अव्यवहार्यत्वादिकमत्रसममितिदर्शयितुंपुनरप्युक्तमव्यवहार्यत्वादिकम् ॥ तुरीयंनादनामानंहरिंज्ञात्वापरंपदम् ॥ तमेवप्रविशेच्छुद्धरूपीतत्सदृशात्मवान् ॥ ज्ञानानंदौचशक्तिश्चतथापिनसमाःक्वचित् ॥ विमुक्तस्यापिजीवस्यपारतंत्र्यंचनित्यदा ॥ चतूरूपस्यास्यविष्णोर्नामप्रणवइत्यपि ॥ जाग्रदादिप्रणयनात्सएवब्रह्मबृंहणात् ॥ ओमित्याक्रियमाण

त्वादोंकारःसप्रकीर्तितः ॥ आदिमत्त्वादयोह्यर्थाओमित्यस्यश्रुतौश्रुताः ॥ अपूर्वःकारणाभावान्नाशाभा
वादनंतरः ॥ पराधीनस्थित्यभावादनपरउदाहृतः ॥ सर्वगत्वादबाह्यश्चतंज्ञात्वाप्रविमुच्यतइतिच ॥ परत्व
मपरत्वंचविष्णोरेकस्यवैयदा ॥ श्रूयतेनतुसामर्थ्यभेदस्तत्रकथंचन ॥ ॐवतारस्यपूर्वत्वात्पौर्वापर्यमुदाहृ

नकिंचिदपिचिंतयेत् ॥१॥ युंजीतप्रणवेचेतःप्रणवोब्रह्मनिर्भयम् ॥ प्रणवेनित्ययुक्तस्यन
भयंविद्यतेक्वचित् ॥ २ ॥ प्रणवोह्यपरंब्रह्मप्रणवश्चपरंस्मृतः ॥ अपूर्वोनंतरोबाह्योनपरःप्र
णवोव्ययः ॥ ३ ॥ सर्वस्यप्रणवोह्यादिर्मध्यमंतस्तथैवच ॥ एवंहिप्रणवंज्ञात्वाव्यश्नुतेतदनं
तरम् ॥ ४ ॥ प्रणवंहीश्वरंविद्यात्सर्वस्यहृदयेस्थितम् ॥ सर्वव्यापिनमोंकारंमत्वाधीरोनशोच
ति ॥ ५ ॥ अमात्रोनंतमात्रश्चद्वैतस्योपशमःशिवः ॥ ॐकारोविदितोयेनसमुनिर्नेतरोजनः
समुनिर्नेतरोजनइति ॥ ६ ॥ चतुर्थःखंडः ॥ ४ ॥ इतिश्रीमांडूकोपनिषत्समाप्ता ॥

तमितिब्रह्मतर्के ॥ पूर्वावतारेपश्चिमावतारेपिपूर्णएवेतिप्रणवोह्यपरंब्रह्मेत्यादेरर्थः ॥ ४ ॥ एकोपिनिर्विशे
षोपिचतुर्धाव्यवहारभाक् ॥ यस्तंवेदेचिदात्मानंविष्णुंविश्वादिरूपिणम्॥इतिश्रीमदानंदतीर्थभगवत्पादा
चार्यविरचितंमांडूकोपनिषद्भाष्यंसंपूर्णम् ॥

श्रीमन्मध्वहृत्सरोजांतर्वर्तिश्रीलक्ष्मीवेंकटेशायनमः ॥ ॥ ॐ ॥ नमोभगवतेतस्मैप्राणादिप्रभविष्णवे॥ अमंदानंदसांद्रायवासुदेवायवेधसे ॥ प्रजानांपालनाद्विष्णुःप्रजापतिरितीरितः ॥ सवायुंसूर्यनामानंचंद्रनाम्नींसरस्वतीम् ॥ सूर्याचंद्रगतौदेवःससर्जपुरुषोत्तमः ॥ तावाविश्यस्वयंविष्णुःसर्वसृष्टीःकरोत्यजः ॥

श्रीमद्भारतीरमणमुख्यप्राणांतर्गतरमाजानयेनमः ॥ ॥ हरिःॐ ॥ सुकेशाचभारद्वाजःशैब्यश्चसत्यकामःसौर्यायणीचगार्ग्यःकौसल्यश्चाश्वलायनोभार्गवोवैदर्भिःकबंधीकात्यायनस्तेहैते ब्रह्मपराब्रह्मनिष्ठाःपरंब्रह्मान्वेषमाणाएषहवैतत्सर्वंवक्ष्यतीतितेहसमित्पाणयोभगवंतंपिप्पलादमुपसन्नास्तान्हसऋषिरुवाचभूयएवतपसाब्रह्मचर्येणश्रद्धयासंवत्सरंसंवत्स्यथ॥यथाकामंप्रश्नान्पृच्छत ॥ यदिविज्ञास्यामःसर्वंहवोवक्ष्यामइति ॥ अथकबंधीकात्यायनउपेत्यपप्रच्छ॥ भगवन्कुतोहवाइमाःप्रजाःप्रजायंतइति ॥ तस्मैसहोवाच ॥ प्रजाकामोहवैप्रजापतिः ॥ सतपोतप्यत ॥सुमिथुनमुत्पादयते ॥ रयिंचप्राणंचेत्येतौमेबहुधाप्रजाःकरिष्यतइति ॥ आदित्योहवैप्राणोरयिरेवचंद्रमाः ॥ रयिर्वाएतत्सर्वंयन्मूर्तंचामूर्तंचतस्मान्मूर्तिरेवरयिः ॥ अथादित्यउदयन्यत्प्राचींदिशंप्रविशतितेनप्राच्यान्प्राणान्रश्मिषुसन्निधत्ते ॥ यद्दक्षिणांयत्प्रतीचींयदुदीचींयदधोयदूर्ध्वंयदंतरादिशोयत्सर्वंप्रकाशयतितेनसर्वान्प्राणान्रश्मिषुसन्निधत्ते॥सएषवैश्वानरोविश्वरूपःप्राणोग्निरुदयते ॥ तदेतदृचाभ्युक्तम् ॥ विश्वरूपंहरिणंजातवेदसंपरायणंज्योतिरेकंतपंतम् ॥ सहस्ररश्मिःशतधावर्तमानःप्राणःप्रजानामुदयत्येषसूर्यः ॥ संवत्सरोवैप्रजाप

अमूर्तस्थःसवायुस्तुमूर्तसंस्थासरस्वती ॥ आदित्यस्थःसवायुस्तुप्राणानात्मनिसंनयेत् ॥ प्राच्यप्राणास्तथेंद्राद्यादक्षिणाश्वयमादयः ॥ प्रतीच्यावरुणाद्यास्तुसोमाद्याउत्तराःस्मृताः॥ शेषमित्रावबाचीनौवींद्रका

मावुदक्कनौ ॥ सभार्याःकोणपैःसार्धंचत्वारोदिशिदिश्यपि ॥ संवत्सरस्थोभगवान्वागीरावयनस्थितौ ॥
मासस्थितःसभगवान्पक्षयोर्वाक्किमारुतः ॥ अहोरात्रेतुभगवान्प्राणोह्यहनिवाक्निशि ॥ दंपत्योर्भगवान्वि

तिः॥तस्यायनेदक्षिणंचोत्तरंचतद्येहवैतदिष्टापूर्तेकृतमित्युपासते॥तेचांद्रमसमेवलोकमभिजयं
ते ॥ तएवपुनरावर्तंतेतस्मादेतेऋषयःप्रजाकामादक्षिणंप्रतिपद्यंते॥एषवैरयिर्यःपितृयाणः॥
अथोत्तरेणतपसाब्रह्मचर्येणश्रद्धयाविद्ययात्मानमन्विष्यादित्यमभिजयंते॥एतद्वैप्राणानामा
यतनमेतदमृतमभयमेतत्परायणमेतस्मान्नपुनरावर्तंतइत्येषनिरोधः ॥ तदेषश्लोकः ॥ पंच
पादंपितरंद्वादशाकृतिंदिवआहुःपरेअर्धेपुरीषिणम् ॥ अथेमेअन्यउपरेविचक्षणंसप्तचक्रेषळर
आहुरर्पितमिति ॥ मासोवैप्रजापतिः ॥ तस्यकृष्णपक्षएवरयिः ॥ शुक्लःप्राणस्तस्मादेतेऋष
यःशुक्लइष्टिंकुर्वंति ॥ इतरइतरस्मिन् ॥अहोरात्रेवैप्रजापतिस्तस्याहरेवप्राणोरात्रिरेवरयिः॥
प्राणंवाएतेप्रस्कंदंतियेदिवारत्यासंयुज्यंते ॥ ब्रह्मचर्यमेवतद्यद्रात्रौरत्यासंयुज्यंते ॥ अन्नंवै
प्रजापतिस्ततोहवैतद्रेतः ॥ तस्मादिमाःप्रजायंतइति ॥ तद्येहवैतत्प्रजापतिव्रतंचरंति ॥ ते
मिथुनमुत्पादयंतेतेषामेवैषब्रह्मलोकोयेषांतपोब्रह्मचर्यंयेषुसत्यंप्रतिष्ठितम्॥ तेषामसौविरजो
ब्रह्मलोकोनयेषुजिह्ममनृतंनमायाचेति ॥ इतिप्रथमःप्रश्नः ॥ १ ॥ अथहैनंभार्गवोवै
दर्भिःपप्रच्छ ॥ भगवन्कत्येवदेवाःप्रजाविधारयंते ॥ कतरएतत्प्रकाशयंते ॥ कःपुनरेषांवरि
ष्ठइति॥तस्मैसहोवाच॥ आकाशोहवाएषदेवोवायुरग्निरापःपृथिवीवाङ्मनश्चक्षुःश्रोत्रंचतेप्रा

ष्णुर्भार्यास्थातुसरस्वती ॥ भर्तृस्थःसस्वयंवायुरेवंजानन्विमुच्यतइतिप्रजापतिसंहितायाम् ॥ १ ॥ वायु

काश्याअभिवदंति ॥ वयमेतद्बाणमवष्टभ्यविधारयामइति ॥ तान्वरिष्ठःप्राणउवाच ॥ मा मोहमापद्यथाहमेवैतत्पंचधात्मानंविभज्यैतद्बाणमवष्टभ्यविधारयामीति ॥ तेऽश्रद्दधानाबभूवुः ॥ सोभिमानादूर्ध्वमुत्क्रमतइवतस्मिन्नुत्क्रामत्यथेतरेसर्वएवोत्क्रामंते॥ तस्मिंश्चप्रतिष्ठमाने सर्वएवप्रतिष्ठंते ॥ तद्यथामधुमक्षिकामधुकरराजानमुत्क्रामंतंसर्वाएवोत्क्रमंते॥ तस्मिंश्चप्रतिष्ठमानेसर्वाएवप्रतिष्ठंते ॥ एवंवाङ्मनश्चक्षुःश्रोत्रंचेतितेप्रीताःप्राणंस्तुन्वंत्येषोग्निस्तपत्येषसूर्य एषपर्जन्योमघवानेषवायुरेषपृथिवीरयिर्देवःसदसच्चामृतंचयत् ॥ अराइवरथनाभौप्राणेसर्वंप्रतिष्ठितम् ॥ ऋचोयजूंषिसामानियज्ञःक्षत्रंचब्रह्मच ॥ प्रजापतिश्चरसिगर्भेत्वमेवप्रतिजायसे तुभ्यंप्राणप्रजास्त्विमायत्प्राणैःप्रतितिष्ठसि ॥ देवानामसिवह्नितमःपितृणांप्रथमास्वधा ॥ ऋषीणांचरितंसत्यमथर्वांगिरसामपि ॥ इंद्रस्त्वंप्राणतेजसारुद्रोसिपरिरक्षिता ॥ त्वमंतरिक्षेचरसिसूर्यस्त्वंज्योतिषांपतिः ॥ यदात्वमभिवर्षस्यथेमाःप्राणतेप्रजाः ॥ आनंदरूपास्तिष्ठंतिकामायान्नंभविष्यतीति॥व्रात्यस्त्वंप्राणैकऋषिरत्ताविश्वस्यसत्पतिः॥वयमद्यस्यदातारःपितात्वंमातरिश्वनः ॥ यातेतनूर्वाचिप्रतिष्ठितायाश्रोत्रेयाचचक्षुषि ॥ यामनसिसंतताशिवांतांकुरु मोत्क्रमीः॥प्राणस्यैतद्वशेसर्वंत्रिदिवेयत्प्रतिष्ठितम्॥ मातेवपुत्रान्रक्षस्वश्रीश्चप्रज्ञांचविधेहिनइति॥२॥अथहैनंकौसल्यश्चाश्वलायनःपप्रच्छ॥भगवन्कुतएषप्राणोजायते॥कथमायात्यस्मिन् शरीरे॥ आत्मानंवाप्रविभज्यकथंप्रतिष्ठते ॥ केनोत्क्रमतेकथंबाह्यमभिधत्तेकथमध्यात्ममिति ॥

रग्निरित्यत्रभूतवायुरुच्यते ॥ प्राणशब्देनप्रधानवायुः ॥ २ ॥ आत्मतःपरमात्मतः ॥ बिष्णोर्वायुःसमु

त्पन्नोवायोः सर्वाश्चदेवताः ॥ प्राणाद्यास्तान्नयन्प्राणआज्ञापयतिराजवत् ॥ स्वयंचपंचरूपस्सन्दद्यान्मो

तस्मैसहोवाचातिप्रश्नान्पृच्छसिब्रह्मिष्ठोसीति॥ तस्मात्तेहंब्रवीम्यात्मतएषप्राणोजायते॥यथै
षापुरुषेच्छायाएतस्मिन्नेतदाततम् ॥ मनोकृतेनायात्यस्मिञ्छरीरे॥ यथासम्राडेवाधिकृता
न्विनियुंक्तएतान्ग्रामानधितिष्ठस्वैतान्ग्रामानधितिष्ठस्वेत्येवमेवैषप्राणइतरान्प्राणान्पृथक्पृथगे
वसन्निधत्ते॥पायूपस्थेऽपानंचक्षुःश्रोत्रेमुखनासिकाभ्यांप्राणःस्वयंप्रतिष्ठते॥मध्येतुसमानः ॥
एषह्येतद्धुतमन्नंसमंनयतितस्मादेताःसप्तार्चिषोभवंति ॥ हृदिह्येषआत्मा ॥ अत्रैतदेकशतं
नाडीनाम्॥तासांशतंशतमेकैकस्यांद्वासप्ततिंप्रतिशाखानाडीसहस्राण्यासुव्यानश्चरत्यथैकयो
र्ध्वमुदानपुण्येनपुण्यंलोकंनयतिपापेनपापमुभाभ्यामेवमनुष्यलोकम्॥आदित्योहवैबाह्यःप्राण
उदयत्येषह्येनंचाक्षुषंप्राणमनुगृह्णानःपृथिव्यांयादेवतासैषापुरुषस्यापानमवष्टभ्यांतरायदाका
शःससमानोवायुर्व्यानस्तेजोहवाउदानः तस्मादुपशांततेजाःपुनर्भवमिंद्रियैर्मनसिसंपद्यमानैः॥
यच्चित्तस्तेनैषप्राणमायाति ॥ प्राणस्तेजसायुक्तःसहात्मनायथासंकल्पितंलोकंनयति ॥ यए
वंविद्वान्प्राणंवेदनहास्यप्रजाहीयतेऽमृतोभवति ॥ तदेषश्लोकः॥ उत्पत्तिमायतिंस्थानंविभु
त्वंचैवपंचधा ॥ अध्यात्मंचैवप्राणस्यविज्ञायामृतमश्नुतेविज्ञायामृतमश्नुतइति ॥३॥अथहै
नंसौर्यायणीगार्ग्यःपप्रच्छ॥भगवन्नेतस्मिन्पुरुषेकानिस्वपंतिकान्यस्मिञ्जाग्रति ॥ कतरएषदेवः
स्वप्नान्पश्यति॥कस्यैतत्सुखंभवतिकस्मिन्सर्वेसंप्रतिष्ठिताभवंतीति॥तस्मैसहोवाच॥यथागार्ग्य

क्षादिकंप्रभुरितिप्रभंजने ॥ २ ॥ रश्मीनामविशेषेपिह्यन्यदृष्टिव्यपेक्षया ॥ सूर्यस्यमंडलंयांतीत्युच्यंते

तदर्दर्शनात् ॥ एवंविष्णोस्तुसामीप्याद्देवानांसुनिगस्यतु ॥ व्यवहाराकरत्वाच्चएकीभावइतीर्यतइतिच ॥
भगवतःशरीरवत्सादृश्ययुक्तेजीवेसुखंभवति ॥ कस्यैतत्सुखंभवतीतिपृष्टत्वात् ॥ नह्यचेतनस्यशरीरस्य

मरीचयोर्कस्यास्तंगच्छतःसर्वाएतस्मिंस्तेजोमंडलएकीभवंतिताःपुनरुदयतःप्रचरंत्येवंहवैतत्स
र्वंपरेदेवेमनस्येकीभवति॥ तेनतर्ह्येषपुरुषोनशृणोतिनपश्यतिनजिघ्रतिनरसयतेनस्पृशतेनाभि
वदतेनादत्तेनानंदयतेनविसृजतेनेयायतेस्वपितीत्याचक्षते॥प्राणाग्नयएवैतस्मिन्पुरेजाग्रतिगार्ह
पत्योहवाएषोऽपानोव्यानोन्वाहार्यपचनोयद्गार्हपत्यात्प्रणीयते॥ प्रणयनादाहवनीयःप्राणोय
दुच्छ्वासनिःश्वासावेतावाहुतीसमंनयतिससमानोमनोहवावयजमानइष्टंफलमेवोदानः ॥ स
एनंयजमानमहरहर्ब्रह्मगमयति ॥ अत्रैषदेवःस्वप्नेमहिमानमनुभवतियद्दृष्टंदृष्टमनुपश्यतिश्रु
तंश्रुतमेवार्थमनुशृणोतिदेशदिगंतरेचप्रत्यनुभूतंपुनःपुनःप्रत्यनुभवति ॥ दृष्टंचादृष्टंचश्रुतंचा
श्रुतंचानुभूतंचाननुभूतंचसच्चासच्चसर्वंपश्यतिसर्वःपश्यतिसयदातेजसाभिभूतोभवत्यत्रैषदेवः
स्वप्नान्नपश्यति ॥ अथयदेतस्मिञ्छरीरेसुखंभवति ॥ सयथासोम्यवयांसिवासोवृक्षंसंप्र
तिष्ठंते ॥ एवंहवैतत्सर्वंपरेआत्मनिसंप्रतिष्ठते ॥ पृथिवीचपृथिवीमात्राचापश्चापोमात्राचतेज
श्चतेजोमात्राचवायुश्चवायुमात्राचाकाशश्चाकाशमात्राचचक्षुश्चद्रष्टव्यंचश्रोत्रंचश्रोतव्यंचघ्रा
णंचघ्रातव्यंचरसनंचरसयितव्यंचत्वक्चस्पर्शयितव्यंचवाक्चवक्तव्यंचहस्तौचदातव्यंचपादौच
गंतव्यंचपायुश्चविसर्जयितव्यंचोपस्थश्चानंदयितव्यंचमनश्चमंतव्यंचबुद्धिश्चबोद्धव्यंचाहंका

सुखंभवति ॥ यस्यात्माशरीरमितिचश्रुतिः ॥ सादृश्याद्देहवज्जीवोविष्णोस्तस्यसुखंभवेत् ॥ सुप्तौ

तस्यसुखार्थंहिभगवान्सुनिमानयेदितिच ॥ ४ ॥ प्रणवेनहरिंध्यायन्ब्रह्मलोकंसमेत्यच ॥ ज्ञानंचतु

रश्चाहंकर्तव्यंचचित्तंचचेतयितव्यंचतेजश्चविद्योतयितव्यंचप्राणश्चविधारयितव्यंच ॥ ए
षहिद्रष्टास्प्रष्टाश्रोताघ्रातारसयितामंताबोद्धाकर्ताविज्ञानात्मापुरुषः ॥ सयोहवैतदच्छायम
शरीरमलोहितंशुभ्रमक्षरंवेदयतेयस्तुसोम्यससर्वज्ञःसर्वंभवति ॥ तदेषश्लोकः ॥ विज्ञाना
त्मासहदेवैश्चसर्वैःप्राणाभूतानिसंप्रतिष्ठंतियत्र ॥ तदेतदक्षरंवेदयतेयस्तुसोम्यससर्वज्ञःसर्वमे
वाविवेशेति ॥ ४ ॥ अथहैनंशैब्यःसत्यकामःपप्रच्छ ॥ सहोहवैतद्भगवन्मनुष्येषुप्रायणांत
मोंकारमभिध्यायीतकतमंवावसतेनलोकंजयतीति ॥ तस्मैसहोवाच ॥ एतद्वैसत्यकामपरंचा
परंचब्रह्मयदोंकारः ॥ तस्माद्विद्वानेतेनैवायनेनैकतरमन्वेति ॥ सयद्येकमात्रमभिध्यायीतस
तेनैवसंवेदितस्तूर्णमेवजगत्यामभिसंपद्यते ॥ तमृचोमनुष्यलोकमुपनयंते ॥ सतत्रतपसाब्र
ह्मचर्येणश्रद्धयासंपन्नोमहिमानमनुभवति ॥ अथयदिद्विमात्रेणमनसिसंपद्यतसोंतरिक्षंयजु
र्भिरुन्नीयतेसोमलोकंससोमलोकेविभूतिमनुभूयपुनरावर्तते ॥ यःपुनरेतंत्रिमात्रेणोमित्येतेनै
वाक्षरेणपरंपुरुषमभिध्यायीतसतेजसिसूर्येसंपन्नोयथापादोदरस्त्वचाविनिर्मुच्यतेएवंहवैसपा
प्मनाविनिर्मुक्तःससामभिरुन्नीयतेब्रह्मलोकम् ॥ सएतस्माज्जीवघनात्परात्परंपुरिशयंपुरुष
मीक्षते ॥ तदेतौश्लोकौभवतः ॥ तिस्रोमात्रामृत्युमत्यःप्रयुक्ताअन्योन्यसक्ताअनविप्रयु
क्ताः ॥ क्रियासुबाह्याभ्यंतरमध्यमासुसम्यक्प्रयुक्तासुनकंपतेज्ञः ॥ ऋग्भिरेतंयजुर्भिरंतरिक्षं

मुखात्प्राप्यमुच्यतेनात्रसंशयः ॥ ५ ॥ कर्मेतिपुष्करःप्रोक्तउषानामाभिमानिनी ॥ लोकाभिमानी

पर्जन्यःस्वाहावैमंत्रदेवता ॥ तपोभिमानीवह्निश्चवरुणोवीर्यदेवता ॥ अन्नस्यदेवतासोमोमनोनामानि
रुद्रकः ॥ इंद्रियेशाश्वसूर्याद्याश्चक्षुराद्यभिमानिनः ॥ रुद्रोवींद्रःशेषकामौमनसस्त्वेवदेवताः ॥ श्रद्धे
तिवायोःपत्नीस्यात्सर्वेषांप्रभवाप्यया ॥ तस्याश्चकारणंप्राणःसर्वेषामुत्तमोत्तमः ॥ तस्यापीशःकार
णंचवासुदेवःपरोऽव्ययः ॥ नतस्यसदृशःकश्चित्कुतएवोत्तमोभवेत् ॥ तंज्ञात्वामुच्यतेजंतुर्विदित्वैवंपरा
त्परमितितत्त्वविवेके ॥ एतस्माज्जायतेप्राणोमनःसर्वेंद्रियाणिच ॥ खंवायुर्ज्योतिरापःपृथिवीविश्वस्य

सामभिर्यत्तत्कवयोवेदयंते ॥ तमोंकारेणैवायनेनान्वेतिविद्वान्यत्तच्छांतमजरममृतमभयंपरं
चेति ॥ ५ ॥ अथहैनंसुकेशाभारद्वाजःपप्रच्छ ॥ भगवन्हिरण्यनाभःकौसल्योराजपुत्रोमा
मुपेत्यैनंप्रश्नमपृच्छत ॥ षोडशकलंभारद्वाजपुरुषंवेत्थतंमह्यंब्रवीहीति ॥ तमहंकुमारमब्रुवं
नाहमिमंवेदयद्यहमिममवेदिष्यंकथंतेनावक्ष्यमिति ॥ समूलोवाएषपरिशुष्यतियोनृतमभि
वदतितस्मान्नार्हाम्यनृतंवक्तुम् ॥ सतूष्णींरथमारुह्यप्रवव्राज ॥ तंत्वापृच्छामिक्वासौपुरुषइ
ति ॥ तस्मैसहोवाच ॥ इहैवांतःशरीरेसोम्यसपुरुषोयस्मिन्नेताःषोडशकलाःप्रभवंतीति ॥ स

धारिणीतिमंत्रोक्तएवक्रमः ॥ नहींद्रियेभ्योमनःपश्चात् ॥ तस्मात्कुश्रुतेश्चेनिभगवद्वचनम् ॥ विष्णोःप्राण
स्ततःश्रद्धातस्यारुद्रोमनोभिधः ॥ तस्मादिंद्रस्त्विंद्रियात्मातस्यसोमोन्नदेवता ॥ ततश्चवरुणःसृष्टस्तस्मा
दग्निस्ततोवरः ॥ आकाशदेवताविघ्नस्ततोवायोःसुतोमरुत् ॥ तस्मादग्निःपावकाख्यःप्रथमोग्नेस्सुतस्त
तः ॥ ततःपर्जन्यउद्भूतःस्वाहाऽतोमंत्रदेवता ॥ उदकात्मकोबुधस्तस्याउषानामात्मिकाततः ॥ ततः
शनिःपृथिव्यात्माकर्मात्मापुष्करस्ततः ॥ क्रमात्प्रत्यवराएतेमुक्ताःसर्वगुणैरपि ॥ नित्यमुक्तस्ततोवि

ष्णुः प्राणादप्युत्तमोत्तमइतिच ॥ समुद्रेइत्येवंप्रोच्यते ॥ पुरुषेइत्येवंप्रोच्यते ॥ भिद्येतेतासांनामरूपे ॥ भिद्येतेचासांनामरूपेइत्युक्तत्वात् ॥ अज्ञैरनवगतान्यपिसमुद्रेस्थितानांनदीनांविष्णौस्थितानांमुक्तानांचभिन्नान्येवनामरूपाणिसंत्येवेत्यर्थः ॥ नचभेदशब्दोनाशेप्रयुज्यमानःक्वापिदृष्टः ॥ घटादावपिबहुभावएवभेदशब्दःप्रयुज्यते ॥ नाशस्त्वर्थतएवावगम्यते ॥ नचात्रार्थतोपिनाशोवगम्यते ॥ नहिनामानिरूपाणि

ईक्षांचक्रेकस्मिन्नहमुत्क्रांतउत्क्रांतोभविष्यामिकस्मिन्वाप्रतिष्ठितेप्रतिष्ठास्यामीति ॥ सप्राणमसृजतप्राणाच्छ्रद्धांखंवायुर्ज्योतिरापःपृथिवींद्रियंमनोन्नमन्नाद्वीर्यंतपोमंत्राःकर्मलोकालोकेषुनामच ॥ यथेमानद्यःस्यंदमानाःसमुद्रायणाःसमुद्रंप्राप्यास्तंगच्छंतिभिद्येतेतासांनामरूपेसमुद्रइत्येवंप्रोच्यतेएवमेवास्यपरिद्रष्टुरिमाःषोडशकलाःपुरुषायणाःपुरुषंप्राप्यास्तंगच्छंतिभिद्येतेचासांनामरूपेपुरुषइत्येवंप्रोच्यते ॥ सएषोकलोमृतोभवति ॥ तदेषश्लोकः ॥ अराइवरथनाभौकलायस्मिन्प्रतिष्ठिताः ॥ तंवेद्यंपुरुषंवेदयथामावोमृत्युःपरिव्यथाइति ॥

चकपालवद्बहुधाभूतानितिष्ठंति ॥ अतोभिद्येतेइतिपृथक्त्वमेवोच्यते॥अराइवरथनाभौकलायस्मिन्प्रतिष्ठिताइतिवाक्यशेषाच्च ॥ अतःपुरुषेभिन्नानिनामरूपाणिप्रतिष्ठितानीत्येवार्थः ॥ अस्तगमनंत्वादित्यवदज्ञानामविज्ञेयत्वमेव ॥ प्राणादयःकलायस्मिन्मुक्तानित्यंप्रतिष्ठिताः ॥ पृथक्पृथङ्नामरूपैर्नम

स्तस्मैपरायतइतिसत्त्त्वे ॥ नामरूपाद्विमुक्तइत्यनेनापिनामरूपामुक्तत्वमुच्यते ॥ विप्रियइत्यादिवत् ॥ नामरूपेअविहायेतिचपूर्वत्र ॥ अनंतं वैनामानंताविश्वेदेवाइतिनामरूपयोरनंतत्वंहिश्रुतिर्वक्ति॥ यत्रपूर्वे साध्याःसंतिदेवाः ॥ सतत्रपर्येतिजक्षन्क्रीडन्रममाणः ॥ सोश्नुतेसर्वान्कामान्त्सहब्रह्मणाविपश्चिता ॥ क्ष

तान्होवाच ॥ एतावदेवाहमेतत्परंब्रह्मवेदनातःपरमस्तीति॥ तेर्हितमर्चयंतस्त्वंहिनःपितायोस्माकमविद्यायाःपरंपारंतारयसीति ॥ नमःपरमऋषिभ्योनमःपरमऋषिभ्यः ॥ ६ ॥ इतिषट्प्रश्नोपनिषत्समाप्ता ॥ श्रीवेदव्यासायनमः ॥

चांत्वःपोषमास्तेपुपुष्वान्गायन्त्वोगायतिशक्करीष्वित्यादेश्च ॥ अतःसर्वमुक्तेभ्योप्युत्तमोत्तमःपरिपूर्णोनारायणइतिसिद्धम् ॥ नमोनमोस्तुहरयेप्रेष्ठप्रेष्ठतमायमे ॥ परमानंदसंदोहसांद्रानंदवपुष्मते ॥ ६ ॥ इति श्रीमदानंदतीर्थभगवत्पादाचार्यविरचितंषट्प्रश्नोपनिषद्भाष्यंसंपूर्णम् ॥ ७ ॥ श्रीकृष्णार्पणमस्तु

क्षणंसंकल्पइतिमनसोविशेषणम् ॥ संकल्पकमित्यर्थः ॥ सप्रतिष्ठांसायतनामुपनिषदंब्रूहीत्युक्तेसम्यगेवम
योपनिषत्स्वरूपमुक्तम् ॥ तद्यवक्तव्यंनास्ति ॥ तपोदमःकर्मचविद्यायाःप्रतिष्ठा ॥ तद्वत्सुविद्याप्रतितिष्ठ
तीत्यर्थः ॥ सत्यमितिमीमांसा ॥ निर्णीयतेयतःसम्यगिदंसत्यमितिस्फुटम् ॥ श्रुतिस्मृत्युदितंसर्वंव्यक्तंमी

थाध्यात्मम् ॥ यदेतद्गच्छतीवचमनोनेनैवतदुपस्मरति ॥ अभीक्ष्णंसंकल्पस्तद्धतद्वनंनामत
द्वनमित्युपासितव्यम् ॥ सयएतदेवंवेदाभिहैनंसर्वाणिभूतानिसंवांछंति ॥ उपनिषदंभोब्रूही
ति ॥ उक्तातउपनिषत् ॥ ब्राह्मींवावतउपनिषदमब्रूमेति ॥ तस्यैतपोदमःकर्मेतिप्रतिष्ठा ॥
वेदाःसर्वांगानिसत्यमायतनम् ॥ योहवाएतामुपनिषदमेवंवेदापहत्यपाप्मानमनंतेस्वर्गेलोकेज्ये
येप्रतितिष्ठतिज्येयेप्रतितिष्ठति ॥ ४ ॥ इतितलवकारोपनिषत्समाप्ता ॥

मांसयैतया ॥ सत्यमित्युच्यतेतस्मान्मीमांसाब्रह्मनिश्चयइतिशब्दनिर्णये ॥ ऋग्यजुःसामाथर्वाख्याः(?)
चरात्रंचभारतम् ॥ मूलरामायणंचैवपुराणंभगवत्परम् ॥ वेदाइत्युच्यतेसद्भिःशिक्षाद्यस्मृतयस्तथा ॥ अं
गानिसत्यंमीमांसातद्विद्यायतनंस्वयमितिविद्यानिर्णये ॥ सच्चिदानंदसच्छक्तिसंपूर्णोभगवान्परः ॥ नमो
स्तुविष्णवेतस्मैप्रेष्ठायप्रेयसांचमे ॥ इतिश्रीमदानंदतीर्थभगवत्पादविरचितंतलवकारोपनिषद्भाष्यंसंपूर्णम् ॥

॥ सभाष्या आथर्वणोपनिषत् २२ माण्डूकोपनिषत् २३
षट्प्रश्नोपनिषत् २४ तलवकारोपनिषच्च २५ संपूर्णाः ॥

श्रीमद्भारतीरमणमुख्यप्राणांतर्गतरमाजानयेनमः ॥ हरिःॐ ॥ समस्तगुणसंपूर्णसर्वदोषविवर्जि
तम् ॥ नारायणंनमस्कृत्यगीतातात्पर्यमुच्यते ॥ शास्त्रेषुभारतंसारंतत्रनामसहस्रकम् ॥ वैष्णवं
कृष्णगीताचतज्ज्ञानान्मुच्यतेंजसा ॥ नभारतसमंशास्त्रंकुतएवानयोःसमम् ॥ भारतंसर्ववेदाश्च
तुलामारोपिताःपुरा ॥ देवैर्ब्रह्मादिभिःसर्वैर्ऋषिभिश्चसमन्वितैः ॥ व्यासस्यैवाज्ञयातत्रत्वत्यरि
च्यतभारतम् ॥ महत्त्वाद्भारवत्त्वाच्चमहाभारतमुच्यते ॥ निरुक्तमस्ययोवेदसर्वपापैःप्रमुच्यते ॥
स्वयंनारायणोदेवैर्ब्रह्मरुद्रेंद्रपूर्वकैः ॥ अर्थितोव्यासतांप्राप्यकेवलंतत्त्वनिर्णयम् ॥ चकारपंचमंवे
दंमहाभारतसंज्ञितमितिब्रह्मांडे॥ तत्रसाक्षादिंद्रावतारमुत्तमाधिकारिणमात्मनःप्रियतममर्जुनंक्ष
त्रियाणांविशेषतोपिपरमधर्मंनारायणद्विट्तदनुबंधिनिग्रहंबंधुस्नेहादधर्मत्वेनाशंक्यततोनिवृत्तप्रा
यंस्वविहितवृत्त्याभक्त्याभगवदाराधनमेवपरमोधर्मस्तद्विरुद्धःसर्वोप्यधर्मोभगवदधीनत्वात्सर्वस्ये
तिबोधयतिभगवान्नारायणः॥सर्वंचैतदत्रैवावगम्यते ॥ अथचेत्त्वंधर्म्यमिमंसंग्रामंनकरिष्यसि ॥
ततःस्वधर्मंकीर्तिंचहित्वापापमवाप्स्यसीत्यादिनायुद्धस्यस्वधर्मत्वम् ॥ यतःप्रवृत्तिर्भूतानांये
नसर्वमिदंततम् ॥ स्वकर्मणातमभ्यर्च्यसिद्धिंविंदतिमानवः ॥ श्रेयान्स्वधर्मोविगुणःपरधर्मात्स्व
नुष्ठितात् ॥ स्वधर्मेनिधनंश्रेयःपरधर्मोभयावहः ॥ सर्वगुह्यतमंभूयःशृणुमेपरमंवचः ॥ इष्टोसिमे
दृढमितिततोवक्ष्यामितेहितम् ॥ मन्मनाभवमद्भक्तोमद्याजीमांनमस्कुरु ॥ मामेवैष्यसिसत्यंतेप्र
तिजानेप्रियोसिमे ॥ सर्वधर्मान्परित्यज्यमामेकंशरणंव्रज ॥ अहंत्वासर्वपापेभ्योमोक्षयिष्यामि
माशुचइत्यादिनास्वधर्मेणैवभगवदाराधनस्यैवकर्तव्यत्वंतदन्यस्यत्याज्यत्वंच ॥ नाहंवेदैर्नतप

सानदानेननचेज्यया॥ शक्यएवंविधोद्रष्टुंदृष्टवानसिमांयथा ॥ भक्त्यात्वनन्ययाशक्यअहमेवंवि
धोर्जुन ॥ ज्ञातुंद्रष्टुंचतत्त्वेनप्रवेष्टुंचपरंतपेत्यादिनाविष्णुभक्तेरेवसर्वसाधनोत्तमत्वंपरोक्षापरोक्षज्ञा
नयोर्ज्ञानिनोपिमोक्षस्यतदधीनत्वंच ॥ मत्कर्मकृन्मत्परमोमद्भक्तःसंगवर्जितः ॥ निर्वैरःसर्वभूते
षुयःसमामेतिपांडवेत्यादिनाभक्तस्यापितत्कर्मविकर्मत्यागश्च ॥ कुरुकर्मैवतस्मात्त्वंपूर्वैःपूर्वतरैःकृ
तमित्यादिनाज्ञानिनोपिभगवत्कर्म ॥ सुदुर्दर्शमिदंरूपंदृष्टवानसियन्मम ॥ देवाअप्यस्यरूपस्य
नित्यंदर्शनकांक्षिणः ॥ इष्टोसिमेदृढमितिततोवक्ष्यामितेहितम् ॥ दैवीसंपद्विमोक्षायनिबंधायासु
रीमता ॥ माशुचःसंपदंदैवीमभिजातोसिपांडव ॥ महात्मानस्तुमांपार्थदैवींप्रकृतिमाश्रिताः ॥
भजंत्यनन्यमनसोज्ञात्वाभूतादिमव्ययम्॥दर्शयात्मानमव्ययम्॥दर्शयामासपार्थायपरमंरूपमैश्व
रमित्यादिनार्जुनस्योत्तमाधिकारित्वमपरोक्षज्ञानित्वंच ॥ नमेविदुःसुरगणाःप्रभवंनमहर्षयः ॥ अ
हमादिर्हिदेवानांमहर्षीणांचसर्वशः ॥ योमामजमनादिंचवेत्तिलोकमहेश्वरम् ॥ असंमूढःसमर्त्ये
षुसर्वपापैःप्रमुच्यते ॥ बुद्धिर्ज्ञानमसंमोहःक्षमासत्यंदमःशमः ॥ महर्षयःसप्तपूर्वे ॥ एतांविभूतिं
योगंच ॥ अहंसर्वस्यप्रभवोमत्तःसर्वंप्रवर्तते ॥ इतिमत्वाभजंतेमांबुधाभावसमन्विताः ॥ तेषामे
वानुकंपार्थमहमज्ञानजंतमः ॥नाशयाम्यात्मभावस्थः ॥ तेषामहंसमुद्धर्तामृत्युसंसारसागरात् ॥
भोक्तारंयज्ञतपसांसर्वलोकमहेश्वरम् ॥ सुहृदंसर्वभूतानांज्ञात्वामांशांतिमृच्छति ॥ ज्ञानंतेहंस
विज्ञानमिदंवक्ष्याम्यशेषतः ॥ यज्ज्ञात्वानेहभूयोन्यज्ज्ञातव्यमवशिष्यते ॥ अहंकृत्स्नस्यजग
तःप्रभवःप्रलयस्तथा ॥ मत्तःपरतरंनान्यत्किंचिदस्तिधनंजय ॥ मयिसर्वमिदंप्रोतंसूत्रेमणिगणा

इव ॥ इदंतुतेगुह्यतमंप्रवक्ष्याम्यनसूयवे ॥ ज्ञानंविज्ञानसहितंयज्ज्ञात्वामोक्ष्यसेऽशुभात्॥राज
विद्याराजगुह्यम् ॥ मयाततमिदंसर्वंजगदव्यक्तमूर्तिना ॥ मत्स्थानिसर्वभूतानिनचाहंतेष्ववस्थि
तः ॥ भूतभृन्नचभूतस्थः ॥ नत्वत्समोस्त्यभ्यधिकःकुतोन्यः ॥ परंभूयःप्रवक्ष्यामिज्ञानानांज्ञा
नमुत्तमम् ॥ ममयोनिर्महद्ब्रह्मतस्मिन्गर्भंदधाम्यहम् ॥ संभवःसर्वभूतानांततोभवतिभारत॥ ब्र
ह्मणोहिप्रतिष्ठाहममृतस्याव्ययस्यच ॥ शाश्वतस्यचधर्मस्यसुखस्यैकांतिकस्यच ॥ द्वाविमौपु
रुषौलोकेक्षरश्चाक्षरएवच ॥ क्षरःसर्वाणिभूतानिकूटस्थोक्षरउच्यते ॥ उत्तमःपुरुषस्त्वन्यःपरमात्मे
त्युदाहृतः ॥ योलोकत्रयमाविश्यबिभर्त्यव्ययईश्वरः ॥ यस्मात्क्षरमतीतोहमक्षरादपिचोत्तमः ॥
अतोस्मिलोकेवेदेचप्रथितःपुरुषोत्तमः ॥ योमामेवमसंमूढोजानातिपुरुषोत्तमम् ॥ ससर्वविद्भज
तिमांसर्वभावेनभारत ॥ इतिगुह्यतमंशास्त्रमिदमुक्तंमयानघ ॥ एतद्बुद्ध्वाबुद्धिमान्स्यात्कृतकृत्य
श्चभारत ॥ नमेपार्थास्तिकर्तव्यंत्रिषुलोकेषुकिंचन॥ नानवाप्तमवाप्तव्यमित्यादिनासर्वस्माद्भगव
तोभेदःसर्वस्यतदधीनत्वंतस्यानन्याधीनत्वंसर्वोत्तमत्वंसर्वगुणपूर्णत्वंसर्वशास्त्राणांतत्परत्वंतथात
ज्ज्ञानादेवमोक्षइत्यादि ॥ अथातेविष्णोविदुषाचिदर्ध्यःस्तोमोयज्ञश्चराध्योहविष्मता ॥ पश्यन्न
पिममात्मानंकुर्यात्कर्माविचारयन् ॥ यदात्मनःसुनियतमानंदोत्कर्षमाप्नुयात् ॥ भक्त्याप्रसन्नः
परमोदद्याज्ज्ञानमनाकुलम् ॥ भक्तिंचभूयसींताभ्यांप्रसन्नोदर्शनंव्रजेत् ॥ ततोपिभूयसींभक्तिं
दद्यात्ताभ्यांविमोचयेत् ॥ मुक्तोपितद्वशोनित्यंभूयोभक्तिसमन्वितः ॥ साध्यानंदस्वरूपैवभ
क्तिनैवात्रसाधनम् ॥ ब्रह्मरुद्ररमादिभ्योप्युत्तमत्वंस्वतंत्रताम् ॥ सर्वस्यतदधीनत्वंसर्वसद्गुणपूर्ण

ताम् ॥ निर्दोषत्वंचविज्ञायविष्णोस्तत्राखिलाधिकः ॥ स्नेहोभक्तिरितिप्रोक्तःसर्वोपायोत्तमो
त्तमः ॥ तेनैवमोक्षोनान्येनदृष्ट्यादिस्तस्यसाधनम् ॥ अधमाधिकारिणोमर्त्यामुक्तात्दृष्ट्या
दिकाःसमाः ॥ अधिकार्युत्तमादेवाःप्राणस्तत्रोत्तमोत्तमः ॥ नैवदेवपदंप्राप्ताब्रह्मदर्शनव
र्जिताः ॥ तिरोहितंतथाप्येतेशृण्वंतिक्रीडयाथवा ॥ बहुवारतदभ्यासात्तिरोभावोपिनोभवे
त् ॥ यथाव्यासानुशिष्टानांदेवानांक्षत्रजन्मनाम्॥पार्थानामतिरोधानंज्ञानंसुस्थिरतांगतम् ॥ अ
स्यदेवस्यमीढुषोवयाविष्णोरेषस्यप्रभृथेहविर्भिः ॥ विदेहिरुद्रोरुद्रियंमहित्वंयासिष्टंवर्तिरश्वि
नाविरावत् ॥ एकोनारायणआसीन्नब्रह्मानचशंकरः ॥ समुनिर्भूत्वासमचिंतयत्ततएतेव्यजायंत
विश्वोहिरण्यगर्भोग्निर्यमोवरुणरुद्रेंद्राइति ॥ एकोनारायणआसीन्नब्रह्मानेशानः ॥ वासुदेवोवा
इदमग्रआसीन्नब्रह्मानचशंकरः ॥ यंयंकामयतेविष्णुस्तंब्रह्माणंचशंकरम् ॥ शक्रंसूर्यंयमंस्कंदं
कुर्यात्कर्तास्यनकश्चित् ॥ सर्वोत्कर्षेदेवदेवस्यविष्णोर्महातात्पर्यंनैवचान्यत्रसत्यम् ॥ अवांतरंत
त्परत्वंतदन्यत्सर्वागमानांपुरुषार्थस्ततोतइतिपैंगिश्रुतिः ॥ परोमात्रयातन्वावृधाननतेमहित्वम
न्वश्नुवंति ॥ अनंतगुणमाहात्म्योनिर्दोषोभगवान्हरिः ॥ नसमोवाधिकोवापिविद्यतेतस्यकश्चन॥
नासीन्नचभविष्योवापरतःस्वतएवचेत्यादिश्रुतेश्च ॥ यस्त्वात्मरतिरेवस्यादित्यादितुमुक्तविषय
म् ॥ यस्त्वेवात्मरतोमुक्तःकार्यंतस्यैवनास्तिहि ॥ तस्मात्कुर्वीतकर्माणीत्याहकृष्णोर्जुनंस्मयन्नि
तिचस्कांदे ॥ ज्ञानयोगेनसांख्यानामित्यादितुबाह्यकर्मसंकोचापेक्षया ॥ नहिकश्चित्क्षणमपिजा
तुतिष्ठत्यकर्मकृत् ॥ शरीरयात्रापिचतेनप्रसिध्येदकर्मणः ॥ एतान्यपितुकर्माणिसंगंत्यक्त्वाफला

निच॥कर्तव्यानीतिमेपार्थनिश्चितंमतमुत्तमम्॥ज्ञानीचकर्माणिसदोदितानिकुर्यादकामःसततंभ
वेत ॥ नसर्वकर्मणांत्यागःकस्यचिद्भवतिक्वचित् ॥ त्यागिनोयतयोपिस्युःसंकोचाद्बाह्यकर्मणा
मित्यादि ॥ उपदेक्ष्यंतितेज्ञानंज्ञानिनस्तत्त्वदर्शिनइत्यादिचोत्पन्नज्ञानतिरोभावनिवृत्त्यर्थम्॥ प्र
कर्षेणजानंतीतिप्रज्ञाः तदवादः प्रज्ञावादः ॥ प्राज्ञमतविरुद्धवादंवदसि ॥ कथं॥ गतासून् ॥
बंधुस्नेहाद्धित्वयास्वधर्मनिवृत्तिःक्रियते ॥ तत्रदेहनाशभयात्किंवाचेतननाशभयात् ॥ देहस्यसर्व
थाविनाशित्वान्नतत्रभयेप्रयोजनम् ॥ नचचेतननाशभयात् ॥ तस्याविनाशित्वादेव ॥ नताव
त्परमचेतनस्यममनाशोस्ति ॥ एवमेवतवान्येषांच ॥ नित्योनित्यानांचेतनश्चेतनानामेकोबहू
नांयोविदधातिकामानित्यादिश्रुतेः ॥ स्वदेहयोगविगमौनामजन्ममृतीपुरा ॥ इष्येतेह्येवजीव
वस्यमुक्तेर्नतुहरेःक्वचिदितिस्कांदे ॥ ईश्वरस्यापियुद्धगतत्वान्मोहात्तस्याप्युभयविधानित्यत्व
शंकाप्राप्तौतदपिनिवार्यते ॥ नत्वेवाहमिति ॥ यद्यप्येषाशंकार्जुनस्यनास्तितथापिप्राप्तलोको
पकारार्थंभगवतानिवार्यते ॥ एकांतेकथयन्नपिव्यासरूपेणतदेवलोकेप्रकाशयिष्यतिहि ॥ म
मस्वकीयदेहांतरप्राप्तिरपिनास्तीतिदर्शयितुंदेहिनइतिविशेषणम् ॥ भवदादीनांसाभविष्यती
त्यपिशोकोनकर्तव्यः ॥ देहस्येदानीमप्यन्यथात्वदर्शनात् ॥ तददर्शनादिनिमित्तंसोढव्य
मित्याह ॥ मात्रास्पर्शाइति ॥ विषयसंबंधाः ॥ फलमाह ॥ यंहीति ॥ नकेवलमव्य
थामात्रेणामृतत्वंकिंतुपुरुषम् ॥ पुरुब्रह्मगुणाधिक्यात्तज्ज्ञानात्पुरुषःस्मृतइतिप्रवृत्ते ॥ पुरु
सरणात्पुरुषइत्यर्थः ॥ नचयुद्धात्परलोकदुःखमितिशोकः ॥ असत्कर्मणःसकाशाद्भावोनास्ति

सत्कर्मणः सकाशादभावोनास्तीतिनियतत्वात् ॥ सद्भाववाचिनःशब्दाःसर्वैतेसुखवाचकाः ॥ अ
भाववाचिनःशब्दाःसर्वैतेदुःखवाचकाइतिशब्दनिर्णये ॥ सद्भावेसाधुभावेचसदित्येतत्प्रयुज्यते॥
प्रशस्तेकर्मणितथासच्छब्दःपार्थयुज्यतइतिवक्ष्यमाणत्वात् ॥ असन्नेवसभवतिअसद्ब्रह्मेतिवेद
चेदित्यादेश्च ॥ अंतोनिर्णयः ॥ नचाविद्यमानविद्यमानयोरुत्पत्तिनाशनिषेधकोयंश्लोकः ॥ प्र
त्यक्षविरोधात् ॥ सन्निति व्यवह्नियमाणमेवपदार्थस्वरूपमुत्पत्तेःप्राङ्नाशोत्तरंचनास्तीतिसर्वलो
कोव्यवहरति ॥ नचविपर्ययेकिंचिन्मानम् ॥ इदंतुवाक्यमन्यथासिद्धम् ॥ आद्यंतयोःसर्वकार्यं
मसदेवेतिनिश्चितम् ॥ यद्यसन्नविशेषोत्रजायतेकोत्रजायते ॥ व्यक्तावपिसमंह्येतदनवस्थान्य
थाभवेत् ॥ एवंनाशेपिबोद्धव्यमतोसन्नेवजायते ॥ तथाप्यभेदानुभवात्कार्यकारणयोःसदा ॥
भेदस्यचाविशेषेणदेहोगात्क्षितिलामिति ॥ व्यवहारोभवेद्यस्माद्बल्येवानुभवःसदेतिब्रह्मतर्कें ॥
नचसदसद्विलक्षणंकिंचिदस्तीत्यत्रकिंचिन्मानम् ॥ नचासतःख्यात्ययोगात्सतोबाधायोगादुभ
यविलक्षणंभ्रांतिविषयम् ॥ असतःख्यात्ययोगादितिवदतोसतःख्यातिरभून्नवा ॥ यदिनाभू
न्नतत्ख्यातिनिराकरणम् ॥ यद्यभूत्तथापि ॥ नचासतोसत्त्वेनभ्रांतौसत्त्वेनचख्यातिर्नास्तीत्यत्र
किंचिन्मानम् ॥ असद्व्यवहारलोपप्रसंगाच्च॥यदविद्यमानंरूपंतस्यसत्त्वेनप्रतीतेरेवभ्रांतित्वाच्च॥
अनिर्वचनीयत्वपक्षेपिसदिदंरजतमित्यविद्यमानसत्त्वप्रतीतिंविनानहिभ्रांतित्वम् ॥ भ्रांतिसत्वां
गीकारेप्यभ्रांतंसदिदंरजतमित्यविद्यमानसत्त्वप्रतीतौहिप्रवर्तते॥तस्मादुभयविलक्षणंनकिंचित्॥
विश्वंसत्यम् ॥ यच्चिकेतसत्यमितन्नमोघं ॥ कविर्मनीषीपरिभूःस्वयंभूर्याथातथ्यतोर्थान्व्य

दधाच्छाश्वतीभ्यःसमाभ्यइत्यादिश्रुतेश्च ॥ यद्यपिनित्यत्वंजीवस्याप्यस्ति तथापिसर्वप्रका
रेणाविनाशित्वंविष्णोरेवेतितुशब्दः ॥ अनित्यत्वंदेहहानिर्दुःखप्राप्तिरपूर्णता ॥ नाशश्चतु
र्विधःप्रोक्तस्तदभावोहरेःसदा ॥ तदन्येषांतुसर्वेषांनाशाःकेचिद्भवंतिहीतिमहावाराहे ॥ दे
शतःकालतश्चैवगुणतश्चत्रिधाततिः ॥ सासमस्ताहरेरेवनह्यन्येपूर्णसद्गुणाइतिपरमश्रुतिः ॥ श
रीरिणांतुदेहहान्यादिनाशोविद्यतएव ॥ येनसर्वमिदंततमितितस्यैवलक्षणकथनात् ॥ नजीवा
नांदेशतोगुणतश्चपूर्णता ॥ अनिच्छयादेहहान्यादेरेवदुःखावाप्तिःसिद्धा ॥ तस्मादनाशिनोप्रमे
यस्यविष्णोःपूजार्थंयुद्ध्यस्व ॥ तत्प्रसादाधीनत्वाद्दुःखनिवृत्तेःसुखस्यच ॥ येतुसर्वाणिकर्माणिम
यिसंन्यस्यमत्पराः ॥ तेषामहंसमुद्धर्तेत्यादेः ॥ जीवपक्षेनित्यस्योक्ताःशरीरिणइत्युक्तत्वादनाशि
नइतिपुनरुक्तिः ॥अविनाशियेनसर्वमिदंततमित्युक्तस्यैवानाशिनोप्रमेयस्येतिप्रत्यभिज्ञानाच्च ॥
इमेदेहाइतिविशेषणान्नित्यश्चिदानंदात्मकःस्वरूपभूतोदेहोमुक्तानामपिविद्यतइतिज्ञायते ॥ नव
र्ततेयत्ररजस्तमस्तयोःसत्त्वंचमिश्रंनचकालविक्रमः ॥ नतत्रमायाकिमुतापरेहरेरनुव्रतायत्रसुरा
सुरार्चिताः ॥ श्यामावदाताःशतपत्रलोचनाःपिशंगवस्त्राःसुरुचःसुपेशसः ॥ सर्वेचतुर्बाहवउन्मि
षन्मणिप्रवेकनिष्काभरणाःसुवर्चसः ॥ प्रवालवैदूर्यमृणालवर्चसांपरिस्फुरत्कुंडलमौलिमालिना
म् ॥ भ्राजिष्णुभिर्यःपरितोविराजतेलसद्विमानावलिभिर्महात्मनाम् ॥ विद्योतमानप्रमदोत्तमा
भिःसविद्युदभ्रावलिभिर्यथानभइतिहिभागवते ॥ चिदानंदशरीरेणसर्वेमुक्तायथाहरिः ॥ भुंज
तेकामतोभोगांस्तदंतर्बहिरेवचेतिपरमश्रुतिः ॥ नचजीवेश्वरैक्यंमुक्तावपि ॥ इदंज्ञानमपाश्रित्य

ममसाधर्म्यमागताः ॥ सर्गेपिनोपजायंतेप्रलयेनव्यथंतिच ॥ योवेदनिहितंगुहायांपरमेव्योम
न् ॥ सोश्नुतेसर्वान्कामान्सहब्रह्मणाविपश्चिता ॥ एतमानंदमयमात्मानमुपसंक्रम्येमाँल्लोका
न्कामान्नीकामरूप्यनुसंचरन्नेतत्सामगायन्नास्ते ॥ सर्वेनंदंतियशसागतेनसभासाहेनसख्यास
खायः ॥ किल्बिषस्पृत्पितुषणिर्ह्येषामरंहितोभवतिवाजिनाय ॥ ऋचांत्वःपोषमास्तेपुपुष्वान्गा
यत्रंत्वोगायतिशक्वरीषु ॥ ब्रह्मात्वोवदतिजातविद्यायज्ञस्यमात्रांविमिमीतउत्वः ॥ परंज्योति
रुपसंपद्यस्वेनरूपेणाभिनिष्पद्यतेसतत्रपर्येतिजक्षन्क्रीडन्रममाणः ॥ तदाविद्वान्पुण्यपापेविधूय
निरंजनःपरमंसाम्यमुपैति ॥ मुक्ताःप्राप्यपरंविष्णुंतद्देहंसंश्रिताअपि ॥ तारतम्येनतिष्ठंतिगुणै
रानंदपूर्वकैः ॥ भूपामनुष्यगंधर्वादेवाःपितरएवच ॥ आजानेयाःकर्मदेवास्तत्त्वदेवाःपुरंदरः ॥
शिवोविरिंचइत्येतेक्रमाच्छतगुणोत्तराः॥ मुक्तावपितदन्येयेभूपाच्छतगुणावराः॥नसमोब्रह्मणःक
श्चिन्मुक्तावपिकथंचन॥ततःसहस्रगुणिताश्रीस्ततःपरमोहरिः॥अनंतगुणितत्वेनतत्समःपरमोपिन॥
अक्षण्वंतःकर्णवंतःसखायोमनोजवेष्वसमाबभूवुः॥कामस्ययत्राप्ताःकामास्तत्रमाममृतंकृधीत्या
दिमोक्षानंतरमपिभेदवचनेभ्यः॥नचयत्रत्वस्यसर्वमात्मैवाभूत्तत्केनकंपश्येत्॥यद्वैतन्नपश्यतिपश्य
न्वैतन्नपश्यति ॥ नहिद्रष्टुर्दृष्टेर्विपरिलोपोविद्यते ॥ अविनाशित्वान्नतुतद्द्वितीयमस्ति॥ततोन्यद्वि
भक्तंयत्पश्येत्॥परमंब्रह्मवेदब्रह्मैवभवति॥ तत्त्वमस्यहंब्रह्मास्मीत्यादिश्रुतिविरोधः ॥ संज्ञानाशो
यदिभवेत्किंमुक्त्यानःप्रयोजनम् ॥ मोहंमांप्रापयामासभवानत्रेतिचोदितः॥याज्ञवल्क्यःप्रियामा
हनाहंमोहंब्रवीमिते ॥ भूतजज्ञानलोपःस्यान्निजंज्ञानंनलुप्यते ॥ नचज्ञेयविनाशःस्यादात्मना

शःकुतःपुनः ॥ स्वभावतःपराद्विष्णोर्विश्वंभिन्नमपिस्फुटम् ॥ अस्वातंत्र्याद्भिन्नमिवस्थितमेवय
देदृशम् ॥ तदाघ्राणादिभोगःस्यात्स्वरूपज्ञानशक्तितः ॥ तदात्मानुभवोपिस्यादीश्वरज्ञानमेवच॥
यदान्यंनविजानातिनात्मानंनेश्वरंतथा॥ पुरुषार्थताकुतस्तुस्यात्तदभावायकोयतेत् ॥ तस्मात्स्व
भावज्ञानेनभिन्नाविष्णुसमीपगाः ॥ भुंजतेसर्वभोगांश्चमुक्तिरेषानचान्यथा ॥ यन्नपश्येत्परो
विष्णुर्द्वितीयत्वेनसस्वतः ॥ तद्द्वितीयंनभवतिप्रादुर्भावात्मकंवपुः ॥ प्रधानपुरुषादन्यद्यत्तस्माद्भि
न्नमीश्वरः ॥ विभक्तत्वेननियतंयस्मात्पश्यतिसर्वदा ॥ पश्यन्नेवयतोविष्णुस्तदभेदंनपश्यति ॥
चेतनाचेतनस्यास्यनाभेदोस्तिततोमुना॥ नहिज्ञानविलोपोस्तिसर्वज्ञस्यपरेशितुः ॥ ब्रह्माणिजी
वाःसर्वेपिपरब्रह्माणिमुक्तिगाः ॥ प्रकृतिःपरमंब्रह्मपरमंमहदच्युतः ॥ नैवमुक्तानप्रकृतिःक्वापितद्वि
ष्णुवैभवम् ॥ प्राप्नुवंत्यपितज्ज्ञानान्निजंब्रह्मत्वमाप्यते ॥ यद्यस्यपरमेशत्वंतदास्याद्दुःखिताकु
तः ॥ दुःखीचेत्कुतईशत्वमनीशोह्येवदुःखभाक् ॥ कुतःसर्वविदोज्ञत्वंकश्रमोप्यज्ञतांविना ॥ त
स्मान्नैवेश्वरोजीवस्तत्प्रसादात्तुमुच्यते ॥ अहेयत्वादहंनामाभगवान्हरिरव्ययः ॥ ब्रह्मासौगुण
पूर्णत्वादस्म्यसावसनान्मितेः ॥ असनादसिनामासौतेजस्त्वात्त्वमितीरितः ॥ सर्वैःक्रियापदैश्चै
वसर्वैर्द्रव्यपदैरपि ॥ सर्वैर्गुणपदैश्चैववाच्यएकोहरिःस्वयम् ॥ युष्मत्पदैःप्रातियोग्यात्तद्युतैश्चक्रि
यापदैः ॥ अस्मत्पदैरांतरत्वात्क्रियार्थैश्चतदन्वयैः ॥ परोक्षत्वात्तत्पदैश्चमुख्यवाच्यःसएवतु ॥
सर्वान्वेदानधीत्यैवप्रज्ञाधिक्येनहेतुना॥ श्वेतकेतुरहंकारात्प्रायशोनास्मिमानुषः ॥ देवोवाकेशवां
शोवानैषाप्रज्ञान्यथाभवेत् ॥ एवंमहत्त्वबुद्ध्यैवदर्पपूर्णोभ्यगात्पितुः ॥ सकाशमकृताचारंतंदृष्ट्वास्त

ब्धमज्ञवत् ॥ पितोवाचकुतःपुत्रस्तब्धतात्वामुपागता ॥ प्रायोनारायणंदेवंनैवत्वंपृष्टवानसि ॥
यस्मिँज्ञातेत्वविज्ञातज्ञानादीनांफलंभवेत् ॥ प्राधान्यात्सदृशत्वाच्चतदधीनमितिस्फुटम् ॥ तत्सृ
ष्टंचेतिविज्ञातंफलवद्धिभवेज्जगत् ॥ स्वातंत्र्येणास्यविज्ञानंमिथ्याज्ञानमनर्थकृत् ॥ यथाचैवैक
मृत्पिंडज्ञानादेःसदृशत्वतः ॥ मृन्मयंतदकार्यंचज्ञातंमृदितिवैभवेत् ॥ यथैवमृत्तिकेत्यादिनित्य
नामप्रवेदनात् ॥ वाचारब्धमनित्यंतुज्ञातंतन्मूलमित्यपि॥एवंकारणभूतोसौभगवान्पुरुषोत्तमः॥प्र
धानश्चस्वतंत्रश्चतन्मूलमखिलंजगत्॥तदाधारंविमुक्तौचतदधीनंसदास्थितम् ॥ससूक्ष्मोऽव्यापकः
पूर्णस्तदीयमखिलंजगत् ॥तस्मात्तदीयस्त्वमसिनैवसोसिकथंचन ॥ यथापक्षीचसूत्रंचनानावृक्ष
रसाअपि ॥ यथानद्यःसमुद्रश्चयथावृक्षपरावपि ॥ यथाधानाःपरश्चैवयथैवलवणोदके ॥ यथापुरुष
देशौचयथाज्ञज्ञानदावपि ॥ यथास्तेनापहार्यौचतथात्वंचपरस्तथा ॥ भिन्नोस्वभावतोनित्यंनान
योरेकताक्वचित् ॥ एवंभेदोखिलस्यापिस्वतंत्रात्परमेश्वरात् ॥ परतंत्रंस्वतंत्रेणकथमैक्यमवामुया
त्॥सजीवनामाभगवान्प्राणधारणहेतुतः ॥ उपचारेणजीवाख्यासंसारिणिनिगद्यते॥तदधीनमिदंस
र्वंनान्याधीनःसईश्वरः॥जीवेश्वरभिदाचैवजडेश्वरभिदातथा॥जीवभेदोमिथश्चैवजडजीवभिदात
था॥जडभेदोमिथश्चेतिप्रपंचोभेदपंचकः ॥ सनित्यएवनोत्पाद्यउत्पाद्यश्चेन्नशेदपि ॥ तस्मादना
मानेवप्रपंचोभेदपंचकः॥विष्णोःप्रज्ञामितंयस्माद्वैतंनभ्रांतिकल्पितम् ॥ अद्वैतःपरमार्थोसौभगवा
न्विष्णुरव्ययः ॥ परमत्वंस्वतंत्रत्वंसर्वशक्तित्वमेवच ॥ सर्वज्ञत्वंपरानंदःसर्वस्यतदधीनता ॥ इ
त्यादयोगुणाविष्णोर्नैवान्यस्यकथंचन ॥ अभावःपरमद्वैतेसंत्येवह्यपराणितु ॥ विकल्पोविनि

वर्तेतकल्पितोयदिकेनचित् ॥ अद्वैतंज्ञानिनांपक्षेनतस्माद्विद्यतेकंचिदित्यादिश्रुतिभ्योर्थांतरस्यै
वावगतत्वात् ॥ एकपिंडनामधेयेतिशब्दानांवैयर्थ्यंचान्यथा ॥ नचैकविज्ञानेनसर्वविज्ञानंतत्पक्षे॥
नहिशुक्तिज्ञोरजतज्ञइतिव्यवहारः॥ नवकृत्वोपिभेदएवदृष्टांतोक्तेश्च ॥ तस्मादतत्त्वमसीत्येवोच्य
ते ॥ ऐतदात्म्यमित्येतदात्मसंबंधि ॥ तत्स्वामिकम् ॥ त्वमपितदैतदात्म्यमेवासिनसोसीतिवा ॥ त
दितिलिंगसाम्यंचात्र ॥ अविद्यमानमेवेश्वरंसृष्ट्यादिकंचाप्राप्तमेवात्मनोभिन्नत्वेनप्रापयित्वात
न्निषेधेकथंश्रुतेरुन्मत्तवाक्यत्वंनस्यात्॥ अनुवादोपियदिदंवदंतितन्नयुज्यतइत्यादिवाक्यंपरिहा
रेविशेषयुक्तिंचविनानदृष्टः॥ अतिप्रसंगश्चान्यथा ॥ अभेदानुवादेनभेदोपदेशःकिमितिनस्यात्॥
सर्वशाखांतेभेदोक्तेश्चैतदेवयुक्तम् ॥ नासंवत्सरवासिनेप्रब्रूयान्नाप्रवक्त्रइत्याचार्याआचार्याः॥ अ
हंविश्वंभुवनमभ्यभवाम्॥ अनंतेस्वर्गेलोकेज्येयेप्रतितिष्ठतिप्रतितिष्ठतीतिब्रह्मविदोविदः ॥ नमो
विष्णवेमहतेकरोमि ॥ पश्यंत्यात्मन्यवस्थितमित्यादि ॥ नचेश्वरस्तद्भेदोवाप्रत्यक्षादिसिद्धः ॥ त
त्पक्षेत्वैक्यादेरपिमिथ्यात्वात्स्वरूपस्यचासिद्धत्वाद्व्यर्थैवश्रुतिः ॥ लक्षितस्वरूपस्यापिनस्वरूपाद्वि
शेषः ॥ निर्विशेषत्वोक्तेः ॥ मिथ्याविशेषोक्तौचाप्रामाण्यंश्रुतेः ॥ मिथ्यात्वंचमिथ्यैवतेषाम् ॥ अ
तःसत्यत्वंसत्यंस्यात् ॥ उपाधिकृतभेदेप्युपाधेर्मिथ्यात्वेत्वप्राप्तमेवोपाधिभेदंप्रापयित्वापुनर्निषि
ध्यतइतिसएवदोषः ॥ सत्योपाधिपक्षेपिहस्तपादाद्युपाधिभेदेपिभोक्तुरेकत्वदृष्टेरेकेनैवेश्वरेणसर्वो
पाधिगतंसुखंदुःखंभुज्येतेत्येवमादयोदोषाःसमाएव॥अचेतनानामनुभवाभावान्नतत्साम्यम्॥अ
तोजीवेश्वरयोर्भेदएवेतिसिद्धम्॥ ७॥यएनंजीवंवेत्तिहंतारंस्वातंत्र्येण॥अन्यथामयाहतांस्त्वंजही

त्यादिविरोधः॥चेतनंप्रतियएनमितिपरमात्मनोपिसमम्॥ जीवेश्वरयोर्नित्यत्वेमंत्रवर्णोप्यस्तीत्या
ह॥नजायतेम्रियतइति॥अयंनापरमपुरुषोभूत्वाविद्यमानएवदेहसंबंधरूपेणापिभाविताना॥ मरणं
तुदेहवियोगइतिप्रसिद्धमेव॥नहिघटादीनांमरणव्यवहारः॥स्वरूपनाशःकैमुत्येनैवसिद्धः॥अयंजी
वोप्यजोनित्यश्च ॥ अन्यथापुनरुक्तेः ॥ शाश्वतश्च ॥ नकदाचिदस्वातंत्र्यादिकंजीवस्वरूपंज
हाति ॥ अल्पशक्तिरसार्वज्ञ्यंपारतंत्र्यमपूर्णता ॥ उपजीवकत्वंजीवत्वमीशत्वंतद्विपर्ययः ॥ स्वा
भाविकंतयोरेतन्नान्यथास्यात्कथंचन ॥ वदंतिशाश्वतावेतावतएवमहाजनाइतिमहाविष्णुपुरा
णे ॥ पुराण्यणतिगच्छतीतिपुराणः ॥ अविनाशिनंशरीरापायादिवर्जितम् ॥ नित्यंस्वरूपतः ॥
एनंपरमेश्वरम् ॥ कर्तृत्वंतुस्वतंत्रत्वंतदेकस्यहरेर्भवेत् ॥ तच्चाव्ययंतस्यजानन्कथंकर्तास्वयंभवे
दितिपरमश्रुतिः ॥ अन्यथाअविनाशिनंनित्यमितिपुनरुक्तिः ॥ जीवस्यापिशरीरसंयोगवियोगा
वेवजनिमृतीयतस्ततोनदुःखकारणमित्याह ॥ वासांसीति ॥ कारणतोपिनेश्वरस्यान्यथात्वमि
त्याह ॥ नैनंछिंदंतीति ॥ अच्छेद्यत्वादिकंजीवस्यापितत्सममित्याह ॥ अच्छेद्योयमिति ॥ नि
त्यंसर्वगतेस्थितः ॥ अणुश्चायमितिसर्वगतस्थाणुः ॥ सर्वगतोविष्णुस्तदधीनत्वादिकंतत्स्थत्वम्॥
हेतुतोपितत्स्थत्वान्नचलतीत्यचलः ॥ नादेनशब्देनसहवर्ततइतिसनादनएवसनातनः ॥ नि
त्यंसर्वगतेविष्णावणुर्जीवोव्यवस्थितः ॥ नचास्यतदधीनत्वंहेतुतोपिविचाल्यते ॥ निषेधविधि
पात्रत्वात्सनातनइतिस्मृतइतिमहाविष्णुपुराणे ॥ अच्छेद्योयमित्यादिपुनरुक्तिश्चान्यथा ॥ य
स्मिन्नयंस्थितःसोव्यक्तोचिंत्यादिरूपः ॥ एवंज्ञातःपरमेश्वरःसर्वदुःखनाशंकरोतीतिनानुशोचि

तुमर्हसि ॥ तेषामहंस्तु द्धृतैत्यादेः ॥ नत्वेवाहंजातुनासंनत्वमित्युभयोरपिप्रस्तुतत्वात् ॥ देहिनः शरीरिणः देहीतिविशेषितत्वाच्चजीवस्यतत्रतत्र ॥ अविनाशितु ॥ येनसर्वमिदंततम् ॥ अनाशिनोप्रमेयस्य॥नम्रियतेभूत्वाभविनावान ॥ अविनाशिनमव्ययम् ॥ अव्यक्तोयमचिंत्योयमविकार्योयमित्यादिपरमात्मनश्च ॥ नहिजीवेनततंसर्वम् ॥ नचमुख्यतोप्रमेयोसौ ॥ नचनम्रियते॥ नचाविनाशिनंनित्यमितिनित्यत्वातिरिक्तमविनाशित्वंतस्य ॥ नचाव्यक्तत्वमविकार्यत्वंचमुख्यम् ॥ नचभूत्वाभविनावानेतिदेहस्याप्यनुत्पत्तिः ॥ परमात्मनस्तुदेहवियोगादिकमपिनास्तीत्यविनाशित्वित्यादिविशेषणम् ॥ यस्मादेवंभूतस्तस्मात्सएवस्वतंत्रस्तदधीनमन्यत्सर्वमतःसएवसर्वपुरुषार्थदः ॥ अतस्तत्पूजासत्कर्मैव ॥ अतस्तदर्थंयुध्यस्व ॥ अन्येषांत्वंतवंतइमेदेहाः ॥ प्राकृतदेहिनश्च ॥अतोस्वतंत्रत्वान्नहंतुंतेषांसामर्थ्यम्॥तेषांनित्यत्वान्नहन्यतेच ॥ तस्माद्धंताहतइतिमन्यमानौनविजानीतः ॥ यस्मादयमेवपरमेश्वरःशरीरवियोगरूपेणापिनम्रियतेतत्संयोगरूपेणापिनजायतेजीववत्कदापि ॥ अतःसएवस्वतंत्रत्वात्सर्वस्यहंता ॥ जीवस्तुतेनशरीरेहन्यमानेस्वयंनहन्यतइत्येतावत् ॥ अतएवमविनाशित्वादेःस्वातंत्र्यात् ॥ सर्वकर्तारंपरमात्मानंयोवेदसकथंघातयतिहंतिवा ॥ वाससोजरावत्स्वशरीरजरादावस्वातंत्र्यदर्शनात्सर्वत्रास्वातंत्र्यंज्ञातव्यंजीवस्य ॥ ईश्वरस्यतुदेहस्यापिच्छेदादेरभावात्स्वातंत्र्यम् ॥ नैनंछिंदंतीतिच्छेदनाद्यभावाःसाक्षादेवदर्शयितुंशक्यतेस्वदेहस्येतिवर्तमानापदेशः ॥ छेदनादिकंत्वीश्वरोमोहायमृषैवदर्शयति ॥ सर्वगतश्चेत्परमात्माकिमितिनतथादृश्यतइत्यतोवक्ति ॥ अव्यक्तोयमिति ॥ कथमेतद्युज्यते

च्चिंत्यशक्तित्वात् ॥ नचसाशक्तिःकदाचिदन्यथाभवति ॥ अविकार्यत्वात् ॥ यानियान्यस्यरूपा
णितानिसर्वाण्यप्येवंभूतानीतिदर्शयितुमेनमयमित्यादिपृथग्वचनम् ॥जीवेतुसर्वंजीवेष्वनुगमार्थं
सर्वंचैतच्छ्रुतिसिद्धम् ॥ सद्देहःसुखगंधश्चज्ञानभाःसत्पराक्रमः ॥ ज्ञानज्ञानःसुखसुखःसविष्णुःपर
मोक्षरइतिपैंगिश्रुतिः ॥ अदेहोदेहवांश्चैकःप्रोच्यतेपरमेश्वरः ॥ अप्राकृतशरीरत्वाददेहइतिकथ्य
ते ॥ शिरश्चरणबाह्वादिविग्रहोयंस्वयंहरिः ॥ स्वस्मान्नान्योविग्रहोस्यततश्चादेहउच्यते ॥ स्वयं
स्वरूपवान्यस्माद्देहवांश्चोच्यतेततः ॥ शिरश्चरणबाह्वादिःसुखज्ञानादिरूपकः ॥ सचविष्णोर्नचा
न्योस्तियस्मात्सोचिंत्यशक्तिमान् ॥ देहयोगवियोगादिस्ततोनास्यकथंचन ॥ गुणरूपोपिभगवा
न्गुणभुक्सदाश्रुतः ॥ अहमित्यात्मभोगोयत्सर्वैषामनुभूयते ॥ अभिन्नेपिविशेषोयंसदानुभव
गोचरः ॥ विशेषोपिहिनान्योतःसचस्वस्यापियुज्यते ॥ नानवस्थाततःक्वापिपरमैश्वर्यतोहरेः ॥
युक्तायुक्तत्वमपिहियदधीनंसदेष्यते ॥ प्रमाणावगतेतत्रकुतएवह्ययुक्ततेत्यादिपरमश्रुतिः ॥ गु
णाःश्रुताःसुविरुद्धाश्चदेवेसंत्यश्रुताअपिनैवात्रशंका ॥ चिंत्याअचिंत्याश्चतथैवदोषाःश्रुताश्चना
ज्ञैर्हितथाप्रतीताइत्यादिचर्ग्वेदेसौपर्णशाखायाम् ॥ एकमेवाद्वितीयंनेहनानास्तिकिंचन ॥ मृ
त्योःसमृत्युमाप्नोतियइहनानेवपश्यति ॥ यथोदकंदुर्गेवृष्टंपर्वतेषुविधावति ॥ एवंधर्मान्पृथ
क्पश्यंस्तानेवानुविधावति ॥ मत्स्यकूर्मादिरूपाणांगुणानांकर्मणामपि ॥ तथैवावयवानांच
भेदंपश्यतियःक्वचित् ॥ भेदाभेदौचयःपश्येत्सयातितमएवतु ॥ पश्येदभेदमेवैषांबुभूषुःपुरुष
स्ततः ॥ अभेदेपिविशेषोस्तिव्यवहारस्ततोभवेत् ॥ विशेषिणांविशेषस्यतथाभेदविशेष

योः ॥ विशेषस्तुसएवायंनानवस्थाततःक्वचित् ॥ प्रादुर्भावादिरूपेषुमूलरूपेषुसर्वशः ॥ न
विशेषोस्तिसामर्थ्येगुणेष्वपिकदाचन ॥ मत्स्यकूर्मवराहाश्चनृसिंहबटुभार्गवाः ॥ राघवःकृष्ण
बुद्धौचकल्किव्यासैतरेयकाः ॥ दत्तोधन्वंतरिर्यज्ञःकपिलोहंसतापसौ ॥ शिंशुमारोहयास्य
श्चहरिःकृष्णश्चधर्मजः ॥ नारायणस्तथेत्याद्याःसाक्षान्नारायणःस्वयम् ॥ ब्रह्मरुद्रौशेषविपौ
शक्राद्यानारदस्तथा ॥ सनत्कुमारःकामभवोप्यनिरुद्धोविनायकः ॥ सुदर्शनाद्यायुधानिपृथ्वाद्या
श्चक्रवर्तिनः ॥ इत्याद्याविष्णुनाविष्टाभिन्नाःसंसारिणोहरेः ॥ तेष्वेवलक्ष्मणाद्येपुत्रिष्वेवंचबला
दिषु ॥ नरार्जुनादिषुतथापुनरावेशउच्यते ॥ स्वल्पस्तुपुनरावेशोधर्मपुत्रादिषुप्रभोः ॥ एतज्जाना
तियस्तस्मिन्प्रीतिरभ्यधिकाहरेः ॥ संकरज्ञानिनस्तत्रपातस्तमसिचध्रुवमित्यादिमहावाराहे॥७॥
तिष्ठतुतावदयंविस्तारः ॥ यावन्मोक्षंजीवस्यजन्ममरणेस्वयमेवमन्यसेनतुनियमेन ॥ तथापिताव
न्मात्रेणापिज्ञानेनशोचितुंनार्हसि॥नित्यंसनातनंप्रोक्तंनित्यंनियतमेवचेतिशब्दनिर्णये ॥ अत्रतुनि
यतम् ॥ जातस्यहिध्रुवइतिप्रकाशनात् ॥ तस्मान्नात्राश्चर्यबुद्धिःकर्तव्या॥किंतर्ह्याश्चर्योभगवा
नेवेत्याह ॥ आश्चर्यवदिति॥आश्चर्यमेवसंतमेनमाश्चर्यवत्पश्यतिनपुनरनाश्चर्यम्॥गगनंगगनाकारं
सागरःसागरोपमइत्यादिवत् ॥ आश्चर्योभगवान्विष्णुर्यस्मान्नैतादृशःक्वचित् ॥ तस्मात्तद्गोचरंज्ञा
नंतद्गोचरवदेववित्विति ब्रह्मतर्के ॥ अनाश्चर्यवदप्यसुरादयःपश्यंतीतिकश्चिदितिविशेषणम् ॥ देही
कुतोवध्यः ॥ यस्मादयमीश्वरःसर्वस्यजीवस्यसूक्ष्मेस्थूलेचदेहेरक्षकत्वेनावस्थितोतएवावध्यः ॥
नस्वसामर्थ्यंकस्यापि ॥ द्रव्यंकर्मचकालश्चस्वभावोजीवएवच ॥ यदनुग्रहतःसंतिनसंतियदुपेक्ष

येतिहिभागवते।।तत्रतत्रस्थितोविष्णुर्नित्यंरक्षतिनित्यदा।।अनित्यदेवानित्यंचनित्यानित्येततस्त
तः ।। भावाभावनियंताहितदेकःपुरुषोत्तमइतिपाद्मे।।जित्वास्वर्गंमहींच ।। येयुध्यंतेप्रधनेषुशूरास
इतिश्रुतेः ।। सम्यक्ख्यातिर्ज्ञानंसांख्यम् ।। युज्यतेनेनेतियोगस्तदुपायः।।सम्यक्त्त्वदृशिःसांख्यं
योगस्तत्साधनंस्मृतमितिशब्दनिर्णये ।। ब्रह्मतर्कस्तर्कशास्त्रंविष्णुनायत्समीरितम् ।। अक्षपादक
णादौचसांख्ययोगौचहैतुकाः ।। बौद्धपाशुपताद्यास्तुपाषंडाइतिकीर्तिताः ।। मीमांसात्रिविधाप्रो
क्ताब्राह्मीदैवीचकार्मिकी ।। ब्रह्मतर्कंचमीमांसांसेवेतज्ज्ञानसिद्धये ।। वैदिकज्ञानवैरूप्यान्नान्य
त्सेवेतपंडितइत्यन्यसांख्ययोगयोर्निषिद्धत्वान्नारदीये।। सांख्यस्यनिरीश्वरत्वादुक्तत्वाच्चेश्वरस्य।।
सांख्यैर्योगैश्चविहितहिंसायाअप्यनर्थहेतुत्वांगीकारात् ।। अत्रतुयुद्धविधानाच्चमोक्षार्थत्वेनैव
कर्मबंधंप्रहास्यसीति ।। परमसांख्ययोगयोश्चोक्तार्थत्वेनैवनविरोधः ।। प्रारंभमात्रमिच्छावावि
ष्णुधर्मेननिष्फला ।। नचान्यधर्माकरणाद्दोषवान्विष्णुधर्मकृदित्याग्नेये।।स्वोचितेनैवधर्मेणविष्णुपू
जामृतेक्कचित्।।नाप्रवृत्तिःप्रवृत्तिर्वायत्रधर्मःसवैष्णवः ।। एनंधर्मंचदेवाद्यावर्तंतेसात्त्विकाजनाः ।।
एषकार्तयुगोधर्मःपांचरात्रश्चवैदिकः।।तत्प्रीत्यर्थंविनान्यस्मैनोदबिंदुंनतंडुलम्।।दद्यान्निराशीश्चस
दाभवेद्भक्तश्चकेशवे ।। नैतत्समेधिकेवापिकुर्याच्छंकामपिक्कचित्।।जानीयात्तदधीनंचसर्वंतत्त्त्व
वित्सदा ।। यथाक्रमंतुदेवानांतारतम्यविदेवच ।। एषभागवतोमुख्यस्त्रेतादिषुविशेषतः ।। एषध
र्मोतिफलदोविशेषेणपुनःकलौ ।। एवंभागवतोयस्तुसएवहिविमुच्यते ।। त्रैविद्यस्त्वपरोधर्मोना
नादैवतपूजननम् ।। तत्रापिविष्णुर्ज्ञातव्यःसर्वेभ्योभ्यधिकोगुणैः ।। समर्पयतियज्ञाद्यमंततस्त्वे

ववि़ष्णवे ॥ त्रैविद्यधर्मापुरुषःस्वर्गंभुक्त्वानिवर्तते ॥ पुनःकुर्यात्पुनःस्वर्गंयातियावद्धरेर्वशे, ॥ स
र्वान्देवान्प्रविज्ञायतत्कर्मैवसदाभवेत् ॥ सम्यक्तत्त्वापरिज्ञानादन्यकर्मकृतेरपि ॥ स्वर्गादिप्रार्थना
च्चैवरागादेश्चापरिक्षयात् ॥ सदाविष्णोरस्मरणात्त्रैविद्योनाप्नुयात्परम् ॥ क्रमेणमुच्यतेविष्णौकर्मा
र्पयंतेसमर्पयन् ॥ यदिसर्वाणिनियमाज्जन्मभिर्बहुभिःशुभैः ॥ परंविष्णुंनयोवेत्तिकुर्वाणोपित्रयी
क्रियाः ॥ नासौत्रैविद्यइत्युक्तोवेदवादीसउच्यते ॥ वादोविवादःसंप्रोक्तोवादोवचनमेवच ॥ वेदो
क्तेविष्णुमाहात्म्येविवादात्पठनादपि ॥ अथवानिरर्थकात्पाठाद्वेदवादीसउच्यते ॥ वेदवादरतोन
स्यान्नपाषंडीनहैतुकी ॥ तेभ्योयातितमोघोरमंधंयस्मान्नचोत्थितिः ॥ अनारंभमनंतंचनित्यदुः
खंसुखोज्झितम् ॥ वर्त्मयद्वेदगदितंयत्रयांत्यसुरादयः ॥ बुद्धिर्निर्णीततत्त्वानामेकाविष्णुपराय
णा ॥ बहुशाखाह्यनंताश्चबुद्धयोऽव्यवसायिनामितिब्रह्मवैवर्ते ॥ अव्यवसायबुद्धिःकेषाम् ॥ यां
वाचमविपश्चितःप्रवदंति ॥ तयापहृतचेतसाम् ॥ बुद्धिर्व्यवसायात्मकत्वेनसमाधानेनवर्तते ॥ य
थावस्तुतथाज्ञानंतत्साम्यात्सममीरितम् ॥ विषमंत्वन्यथाज्ञानंसमाधानंसमस्थितिः ॥ नतद्भव
त्यसद्वाक्यैर्विषमीकृतचेतसाम् ॥ स्वर्गादिपुष्पवाद्येववचनंयदचेतसम् ॥ नमन्यंतेफलंमोक्षंविष्णु
सामीप्यरूपकम्॥फलदंचनमन्यंतेतेविष्णुंजगतःपतिम्॥ भोगैश्वर्यानुगत्यर्थंक्रियाबाहुल्यसंतता
म्॥बहुसंसारफलदामंतेनमसिपातिनीम्॥यांवदंतिदुरात्मानोवेदवाक्यविवादिनः ॥ तयासंमोहित
धियांकथंतत्त्वज्ञताभवेदितिच॥इष्टापूर्तंमन्यमानावरिष्ठंनान्यच्छ्रेयोवेदयंतेप्रमूढाः॥नाकस्यपृष्ठेसु
कृतेतेनुभूत्वाइमंलोकंहीनतरंवाविशंतीतिचाथर्वणीयश्रुतिः ॥ वेदवादरतोनस्यान्नपाषंडीनहैतुकी

तिहिभागवते॥येनजानंतितंविष्णुंयाथातथ्येनसंशयात्॥जिज्ञासवश्चनितरांश्रद्धावंतःसुसाधवः॥
निर्णेतॄणामभावेनकेवलंज्ञानवर्जिताः॥तेयाज्ञिकाःस्वर्गभोगक्षयेयांतिमनुष्यताम् ॥ यैर्निश्चितंपर
त्वंतुविष्णोःप्रायोनयातनाम्॥ब्रह्महत्यादिभिरपियांत्याधिक्येचिरंनतु॥विशेषएवतेषांतुतदन्येषां
विपर्ययः॥येतुभागवताचार्यैःसम्यग्यज्ञादिकुर्वते ॥ बहिर्मुखाभगवतोनिवृत्ताश्चविकर्मणः॥दक्षि
णार्पितानांतुह्याचार्याणांतुतेजसा॥यांतिस्वर्गंततःक्षिप्रंतमोंधंयांत्यसंशयम् ॥ तदन्येनैवचस्वर्गं
यांतिविष्णुबहिर्मुखाइतिनारदीये॥त्रैगुण्याख्यंविषंयापयंतिअपगमयंतीतित्रैगुण्यविषयाः॥आ
श्रित्यवेदास्तुपुमांस्त्रैगुण्यविषहारिणः ॥ निस्त्रैगुण्योभवेन्नित्यंवासुदेवैकसंश्रयइतिच॥सत्त्वंसाधु
गुणाद्विष्णुरात्मासंततिहेतुतइतिच॥ संततविष्णुस्मरणंनित्यसत्त्वस्थत्वम्॥परमात्माममस्वामीति
ज्ञानमात्मवत्त्वंतेनैक्यज्ञानंनिवारयति ॥ विरुद्धयोगक्षेमेच्छावर्जितः ॥ अन्यथोत्थानादेरप्ययो
गात् ॥ उद्रेकात्पातृराहित्यादनत्वाच्चाखिलस्यच ॥ प्रलयेप्युदपानोसौभगवान्हरिरीश्वरः ॥ प्र
कृतिर्ह्युदरूपेणसर्वमावृत्यतिष्ठति ॥ प्रलयेऽतोलयंप्राहुःसर्वतःसंप्लुतोदकमितिच ॥ यावत्प्रयोज
नंविष्णोःसकाशात्साधकस्यच ॥ धर्ममोक्षादिकंतावत्सर्ववेदविदोभवेत् ॥ वेदार्थनिर्णयोयस्माद्वि
ष्णोर्ज्ञानंप्रकीर्तितम् ॥ ज्ञानात्प्रसन्नश्चहरिर्यतोखिलफलप्रदइतिच ॥ सर्वतःसंप्लुतोदकेप्युद्रिक्तः
पालकवर्जितः॥ कालाद्यनश्चयोविष्णुस्तस्माद्यावत्फलंतावत्सर्वेवेदेषुविशेषज्ञस्यैवभवतीत्यर्थः॥
सर्वेहिविष्णोरन्येप्रलयकालेनोद्रिक्ताः ॥ येचोद्रिक्तामुक्तारमाचतेपिनपालकवर्जिताः ॥ विष्णुपा
ल्यत्वात् ॥ नचमुक्ताःकालादिचेष्टकाः ॥ नचोद्रिक्तत्वंतेषांतद्वत् ॥ अतउदपानोविष्णुरेव ॥

प्रलयेविशेषतोपि ॥ आनीदवातंस्वधयातदेकंतस्माद्धान्यन्नपरःकिंचनास ॥ तमआसीत्तमसागूल्ह
मग्रेप्रकेतंसलिलंसर्वमाइदम् ॥ अपोवाइदमग्रेसलिलआसीत्सलिलएकोद्रष्टाऽद्वैतोभवतीत्या
दिश्रुतिभ्यः ॥ कर्माधिकारिणएवत्वदादयोजीवाः ॥ फलंतुमदायत्तमितिभावः ॥ माकर्मफलहे
तुर्भूर्नेश्वरोहमितिभावंकुरु ॥ एषउएवशुभाशुभैःकर्मफलैरेनंसंयोजयतिनस्वयंसंयुक्तोभवतियदे
नंकर्मफलैःसंयोजयतिनस्वयंसंयुक्तोभवतितस्मादन्यएवासौभगवान्वेदितव्यइतिपैंगिश्रुतिः ॥ सं
गंफलस्नेहम् ॥ बुद्धौजाताद्यामपिविष्णुमेवशरणमन्विच्छ ॥ अज्ञानांज्ञानिनांचैवमुक्तानांशरणं
हरिः ॥ तंयेस्वैक्येनमन्यंतेसर्वभिन्नंगुणोच्छ्रयात् ॥ कृपणास्तेतमस्यंधेनिपतंतिनसंशयः ॥ नते
षामुत्थितिःक्वापिनित्यातिशयदुःखिनाम् ॥ गुणभेदविदांविष्णोर्भेदाभेदविदामपि ॥ देहकर्मा
दिषुतथाप्रादुर्भावादिकेपिवा ॥ स्वोद्रिक्तानांतदीयानांनिंदांकुर्वंतियेपिच ॥ सर्वेषामपिचैतेषांग
तिरेषानसंशयइतिनारदीये ॥ यथावद्विष्णुंज्ञात्वातदर्थत्वेनकर्मकरणमित्येतत्कर्मकौशलमेवयो
गः ॥ भगवज्ज्ञानमेवबुद्धिः ॥ निर्वेदंनितरांलाभम् ॥ बुद्धिमोहोयदानस्यादन्यथाज्ञानलक्षणः ॥
श्रोतव्यश्रुतसाफल्यंतदाप्राप्नोतिमानवः ॥ श्रुतिमार्गप्रपन्नातुतदर्थज्ञाननिश्चला ॥ समाधानेनतु
पुनरापरोक्ष्याच्चनिश्चला ॥ विष्णौप्राप्स्यतितद्योगंमुक्तोभूत्वातदश्रुतइतिच ॥ श्रुतौविशेषेणप्रति
पन्ना ॥ काभाषा ॥ कथंभाष्यते ॥ कैर्गुणैः ॥ समाधिस्थस्यविषमबुद्धिवर्जितस्य ॥ सर्वकामनिवृत्तिस्तु
जानतोनकथंचन ॥ अनिषिद्धकामितैवातोह्यकामित्वमितीर्यते ॥ अपरोक्षदृशोपिस्याद्यदानास्त्य
परोक्षदृक् ॥ क्वचिद्विरुद्धकामोपियथायुध्यद्धरोहरिम् ॥ अतोनभिभवोयावद्दृशस्तावन्निगद्यते ॥

स्थितप्रस्तथाप्ययंस्यकादाचित्क्यपियादृशिः।।नियमेनैवमोक्षायभवेद्योग्याभवेद्यदि।।अयोग्याभ
क्तिजाताचेत्क्रमान्मुक्त्यैभवेत्तथेतिच।। आत्मनिविष्णौतत्प्रसादादेवतुष्टः ।। रसोरागः ।। संमोहा
न्मिथ्याज्ञानात् ।। ज्ञातमप्यन्यथास्मर्यते ।। वाक्यार्थानामन्यथास्मरणान्निर्णीतंज्ञानमपिनश्य
ति ।। शांतिर्भगवन्निष्ठा ।। शमोमन्निष्ठतेतिहिभागवते ।। देवेभ्योन्येयदाब्रह्मपर्यंतंयन्यन्नदृश्य
ते ।। निशायामिवसुव्यक्तंयथान्यैर्ब्रह्मनेयते ।। आश्चर्यवस्तुदृग्यद्वद्व्यक्तमन्यन्नपश्यति ।। ऐका
द्याद्वासुखोद्रेकाद्देवाःसूर्यवदेवच ।। प्रायशःसर्ववेत्तारस्तत्रापिह्युत्तरोत्तरमितिब्रह्मतर्के ।। भुंजा
नोपिहियःकामान्मर्यादांनतरेत्कचित्।। समुद्रवद्धर्ममर्यांनासौकामीसउच्यते।। केतिकुत्सितवाची
स्यात्कुत्सितंमानमेवतु।। कामोमोक्षविरोधीस्यान्नसर्वेच्छाविरोधिनीतिच ।। नचसर्वेच्छाभावेजी
वनंभवति ।। शांतिर्मोक्षोयतोह्यत्रविष्णुनिष्ठाभवेद्ध्रुवेतिच ।। निषिद्धस्पृहाभावमात्रेणसर्वविषया
न्विहाय ।। अस्वरूपेस्वरूपत्वमतिरेवह्यहंकृतिः ।। त्याज्यासर्वत्रममताज्ञात्वासर्वंहरेर्वशइतिच ।।
ब्राह्मीब्रह्मविषया ।। ज्ञानिनामप्यंतकालेन्यमनसांप्रारब्धकर्मभावाज्जन्मांतरम् ।। प्रारब्धकर्मना
शकालेनियमेनभगवत्स्मृतिर्भवति ।। ततोमोक्षश्च ।। यंयंवापिस्मरन्भावमितिहिवक्ष्यति ।। वा
णंशरीरम् ।। अभावाज्जडदेहस्यविष्णुर्निर्वाणउच्यते ।। भिन्नदेहाभावतोवाससहस्रशिराअपीति
च ।। ।। इतिश्रीमदानंदतीर्थभगवत्पादाचार्यविरचितेश्रीमद्भगवद्गीतातात्पर्यनिर्णयेद्वितीयोऽ
ध्यायः ।। २ ।। ।। ७ ।। ।। ।।

हरिः ॐ ॥ ज्ञानंयोगश्चोक्तौ ॥ तत्रकर्मयोगंविशेषतःप्रपंचयत्यनेनाध्यायेन ॥ दूरेणह्यवरंकर्मेति
प्रश्नबीजम् ॥ ज्ञानप्रचुरोयोगोज्ञानयोगः ॥ कर्मप्रचुरोन्यः ॥ सांख्याज्ञानप्रधानत्वाद्देवाश्चयतय
स्तथा ॥ मुख्यंसांख्यास्तत्रदेवाज्ञानमेषांमहद्यतः ॥ बहुकर्मकृतोप्येतेततोपिबहुवेदनात् ॥ मु
ख्यसांख्याइतिज्ञेयास्तदन्येकर्मयोगिनः ॥ ज्ञानिनोप्यतिबाहुल्यात्कर्मणःकर्मयोगिनः ॥ नोभ
यंतद्विनाकश्चित्पुमान्हिपुरुषार्थभाक् ॥ नहिकश्चित्क्षणमपिजातुतिष्ठत्यकर्मकृत् ॥ नचज्ञानंविना
कर्मपुरुषार्थकरंभवेदितिब्रह्मवैवर्ते ॥ निष्ठापर्यवसितिर्मुक्तिः ॥ ज्ञानिनोमोक्षनियमस्तथापिशुभक
र्मणा॥आनंदवृद्धिरन्येनह्रासोज्ञानंतुकर्मणेतिपरमश्रुतेः॥नकर्मणानप्रजयाधनेनेत्यादिविरोधोन॥
अन्यथाकर्मणामनारंभादित्याद्युभयसमवाक्यशेषविरोधश्च॥समत्वंचनहिकश्चिदित्यादेः॥नान्यः
पंथाइत्यपिज्ञानमृतेनमोक्षइत्येवाह॥कर्तृत्वंद्विविधंप्रोक्तंविकारश्चस्वतंत्रता ॥ विकारःप्रकृतेरेवि
ष्णोरेवस्वतंत्रतेतिपैंगिश्रुतेः॥कार्यतेह्यवशइत्यत्रावशोविष्णुवशः॥अइतिब्रह्मेत्यादिश्रुतेः ॥ कर्म
णाबध्यतेजंतुरित्यादिकमप्यवैष्णवकर्मविषयमित्याह॥ यज्ञार्थादिति॥ ज्ञोनामभगवान्विष्णुस्तं
यात्युद्देशएषयः॥सयज्ञइतिसंप्रोक्तोविहितेकर्मणिस्थितइतिबर्कश्रुतिः॥ जननात्परसस्यादेःपर्ज
न्योमेघसंततिः ॥ सयज्ञात्कर्मणःसोपिसमस्तंकर्मकेशवात्॥ सनित्योप्यक्षरततिरूपाद्वाक्याद्विग
म्यते ॥ वाक्यमुच्चार्यतेभूतैस्तान्यन्नात्तच्चमेघतः ॥ तस्मात्सर्वगतोविष्णुर्नित्यंयज्ञेप्रतिष्ठितः ॥
एवंप्रवर्तितंचक्रंनानुवर्तयतीहयः ॥ सपापोविश्वहंतृत्वान्नरकेमज्जतिध्रुवम् ॥ वाचिकोमानसो
यज्ञोन्यासिनांतुविशेषतः ॥ वनस्थस्याक्रतुर्यज्ञःक्रत्वादिर्गृहिणोखिलः ॥ शुश्रूषाद्यात्मकोयज्ञो

विहितोब्रह्मचारिणः ॥ विद्याभयादिदानंचसर्वेषामपिसंमतम् ॥ गृहिणोवित्तदानंतुवनस्थस्यान्न
पूर्वकम् ॥ सर्वैःकार्यंतपोघोरमितिसर्वैस्त्रिकर्मिणइतिनारदीये ॥ ब्रह्माक्षरशब्दार्थयोर्ऽप्युपासेत
स्मात्सर्वगतंब्रह्मेतिप्रत्यभिज्ञाविरोधश्चक्रकाप्रवेशश्च ॥ तृप्तिसंतोषशब्दयोःपर्यायत्वेपिपरमात्म
नातृप्तःपरमात्मनितृप्तइतिविशेषः ॥ विष्णुप्रसादाद्रतिमांस्तृप्तोविष्णुप्रसादतः ॥ विष्णावेवातितृ
प्तश्चमुक्तोसौविध्यगोचरइत्याग्नेये ॥ रतिरानंदउद्दिष्टस्तृप्तिस्तुकृतकृत्यता ॥ प्रीतिस्तुद्विविधःस्ने
हःकर्मजोनिजएवचेतिशब्दनिर्णये ॥ संतोषस्तृप्तिरापूर्तिःप्रीतिःपर्यायवाचकाइत्यभिधानम् ॥
यस्मादमुक्तस्यकार्यमस्त्येवतस्मादसक्तः ॥ असक्तआचरन्नेवयस्मात्परमाप्नोति॥मुक्तस्यैवकार्यं
नास्तीत्येवकारार्थोपियस्त्वितितुशब्देनावगतः ॥ तस्मात्कर्मसमाचरेत्युपसंहारविरोधश्चान्यथा ॥
ब्रह्मनिष्ठाब्रह्मरताब्रह्मज्ञानसुतर्पिताः ॥ पांडवानांचमुक्तानामंतरंकिंचिदेवहीतिभविष्यत्पर्ववच
नाच्चानार्जुनस्यामुख्याधिकारिता ॥ आत्मरतिरेवस्यादित्येवशब्देनमुक्तानामेभ्योविशेषोदर्शि
तः ॥ एषांकदाचिद्दुःखाभासस्यापिभावात् ॥ सहैवकर्मणासिद्धिमास्थिताजनकादयः ॥ ज्ञा
ननिष्ठाअपिततःकार्यंवर्णाश्रमोचितमितिच ॥ अज्ञानांज्ञानदंकर्मज्ञानिनांलोकसंग्रहात् ॥ अ
द्वैवतुष्टिदंमह्यंसामुक्तानंदपूर्तिदा ॥ ममैवकेवलंनास्तिकेनाप्यर्थस्तथाप्यहम् ॥ कर्मकुर्वेलोक
रक्षार्थैतस्मात्कुर्वीतमत्परइतिकृष्णसंहितायाम् ॥ रक्षयावाथसृष्ट्यावासद्धत्यादेर्नतुक्कचित् ॥
अर्थोविष्णोस्तथाप्येषस्वभावात्सर्वकर्मकृत् ॥ मत्तोनृत्तादिकंयद्वत्कुर्यात्सुखविशेषतः ॥ पर
मानंदरूदत्वात्कुर्याद्विष्णुस्तथैवत्विवितिबर्कश्रुतिः ॥ नाहंकर्ताहरिःकर्तातत्पूजाकर्मचाखिलम्॥

तथापिमत्कृतापूजातत्प्रसादेननान्यथा ॥ तद्भक्तिस्तत्फलंमह्यंतत्प्रसादःपुनःपुनः ॥ कर्मन्या
सोहरावेवंविष्णोस्तृप्तिकरःसदा ॥ यस्मात्स्वतंत्रकर्तृत्वंविष्णोरेवनचान्यगम् ॥ तदधीनंस्वतंत्र
त्वंस्वावरापेक्षयैवतु॥जीवस्याविकृतिर्नामकर्तृत्वंजडसंश्रयम् ॥ पुमान्दोग्धाचगौर्दोग्ध्रीस्तनोदोग्धे
तिवत्क्रमादितिब्रह्मतर्कवचनादीश्वरजीवप्रकृत्यादीनांकर्तृत्वमकर्तृत्वंचविभागेनज्ञातव्यंसर्वत्र ॥
क्वचित्स्वभावःप्रकृतिःक्वचिच्चत्रिगुणात्मिका ॥ क्वचित्प्रकृष्टकर्तृत्वाद्भगवान्प्रकृतिर्हरिरितिशब्दनि
र्णये ॥ स्वभावतस्त्रिधाजीवाउत्तमाधममध्यमाः ॥ उत्तमस्तत्रदेवाद्यामर्त्यमध्यास्तुमध्यमाः ॥
अधमाअसुराद्याश्चनैषामस्त्यन्यथाभवः ॥ शरीरमात्रान्यथात्वेस्वजातिंपुनरेष्यति ॥ उत्तमामु
क्तियोग्यास्तुसृतियोग्यास्तुमध्यमाः ॥ अपरेंधतमोयोग्याप्राप्तिःसाधनपूर्तितः ॥ पूर्त्यभावेनसर्वे
षामनादिःसंसृतिःस्मृता ॥ नैवपूर्तिश्चसर्वेषांनित्यकालहरीच्छया ॥ अतोनुवर्ततेनित्यंसंसारोयम
नादिमान् ॥ अतोधमानांजीवानांमिथ्याज्ञानादयोखिलाः ॥ स्वाभाविकागुणाज्ञेयामध्यमर्त्ये
षुमिश्रिताः ॥ तत्त्वज्ञानंविष्णुभक्तिरित्याद्यादेवतादिषु ॥ कार्यतेह्यवशःकर्मसर्वैस्तैःप्राकृतैर्गुणैः ॥
स्वाभाविकगुणानेतान्हेतुंकृत्वैवविष्णुना ॥ कर्मसुक्रियमाणेषुकर्ताहमितिमूढधीः ॥ मन्यतेतत्त्व
विद्विष्णोर्गुणाइच्छादयस्तुये ॥ स्वाभाविकेषुजीवस्यकामाद्येषुसदैवतु ॥ प्रेरकत्वेनवर्ततेस्वातं
त्र्यंममनक्वचित् ॥ इतिमत्वानसक्तःस्यात्प्रीतोस्यभवतिप्रभुः ॥ स्वभावगुणसंमूढाज्ञानादिगुणव
त्तरम् ॥ स्वातंत्र्येणैवकर्तारंचात्मानंप्रतिजानते ॥ तान्गुणान्कर्मतच्चैवविष्णवधीनंनतेविदुः ॥ ते
ष्वयोग्येषुतत्त्वज्ञस्तत्वंनातिप्रकाशयेत् ॥ वदेद्विवादरूपेणनोपदेशात्मनाक्वचित् ॥ सभ्यरूपेणवा

ब्रूयात्पृष्टेऽव्यक्तिरुदेववा ॥ बुद्ध्वाप्यसौयतोनित्यंस्वभावानुगचेष्टितः ॥ स्वभावंयांतिभूतानिनि
ग्रहः किंकरिष्यतीत्यादिप्रकाशसंहितायाम् ॥ परमेश्वराद्देवेभ्यश्चावोक्तनप्रेरकंपृच्छति ॥ अथके
नेति ॥ अखिलप्रेरकोविष्णुर्ब्रह्माद्यास्तदवांतराः ॥ असुराअशुभेष्वेवकामादेरभिमानिनः ॥ तत्र
कामःकालनेमिःसर्वंधूममलोल्बवत् ॥ शुभमध्याधमजनंक्रमादावृत्यनिष्ठति ॥ महाशनस्यतस्ये
दंनालंतेनानलोऽग्निवत् ॥ भुंजानइंद्रियाविष्टोज्ञानाख्येणैवदह्यतइतिब्रह्मतर्के ॥ ज्ञानावरणरू
पेणेदमावृणोतीत्यावृतंज्ञानमितिपुनराह ॥ नकेवलंदुष्पूरोनालमितिमन्यतेचेत्यनलः ॥ अग्नेर
प्यनलःकामोयत्नालमितिमन्यतइतिच ॥ सर्वेभ्यःप्रवरादेवाइंद्राद्याइंद्रियात्मकाः ॥ तेभ्योम
नोभिमानीतुरुद्रस्तस्मात्सरस्वती ॥ बुध्यात्मिकाततोब्रह्मामहानात्मापरःस्मृतः ॥ अव्यक्तरूपा
लक्ष्मीश्चवरातोतोहरिःस्वयम् ॥ नतत्समोधिकोवेतिह्यानुपूर्वीप्रकीर्तिता ॥ यथाक्रमप्रबोधेनना
श्याःकामादिशत्रवः ॥ प्राप्यतेचपरंस्थानंविष्णोरतुलमंजसेतिच ॥ नचेंद्रियेभ्यःपराह्यर्थारुद्रो
हंकृतिरूपकइत्यादिविरोधः ॥ सर्वाभिमानिनोदेवाःसर्वेपिह्युत्तरोत्तरम् ॥ आधिक्यंवक्तुमेवैषां
पृथक्स्थानमुदीर्यते ॥ आधिक्यक्रमएवात्रशास्त्रतात्पर्यमिष्यते ॥ स्थानेषुत्ववरेषांचपरेसं
तिनचेतरे॥तथापिपितुरर्थोयःपुत्रस्याप्युपचर्यते॥अव्यक्तादिपदार्थानांसर्वेतदभिमानिनइतिच॥
यत्रहकचपुत्रस्यतत्पितुर्यत्रवापितुस्तद्वापुत्रस्येत्येतदुक्तंभवतीत्यादिश्रुतेश्च ॥ बहुवाचिनांशब्दा
नांलिंगप्रकरणादिभिः ॥ प्रवृत्तिहेतोश्चाधिक्यान्निर्णयोर्थेषुगम्यतइतिशब्दनिर्णये ॥ लिंगादि
साम्येयत्रस्यात्प्रयोगाधिक्यमेवतु ॥ निर्णायकंभवेत्तत्रतेनस्यात्सुबहुश्रुतइतिब्रह्मतर्के ॥४५॥ इ
तिश्रीमदानंदतीर्थभगवत्पादाचार्यविरचितेगीतातात्पर्यनिर्णयेतृतीयोऽध्यायः ॥ ३ ॥

हरिःॐ ॥ उक्तयोर्ज्ञानकर्मणोरुभयोर्विशेषविस्तरात्मकोयमध्यायः ॥ ब्रह्मरुद्रेंद्रसूर्याणांयद्दत्तं
विष्णुनापुरा ॥ पंचरात्रात्मकंज्ञानंव्यासोदात्पांडवेषुतत् ॥ तेषामेवावतारेषुसेनामध्येर्जुनायच ॥
प्रादाद्गीतेतिनिर्दिष्टंसंक्षेपेणायुयुत्सवे ॥ यथाकुर्वंतिकर्माणियथाजानंतिदेवताः ॥ सर्वेकार्तयुगा
श्चैवनृपाश्चमनुपूर्वकाः ॥ ज्ञातव्यंचैवकर्तव्यंयथासर्वैर्मुमुक्षुभिः ॥ त्रेतादित्रिषुजातैश्चगीतायांत
दुदाहृतम् ॥ पांडवाद्याःक्षेमकांताःकरिष्यंतिचजानते ॥ तथैवतेनगीतायानास्तिशास्त्रंसमंक्वचि
त् ॥ वेदार्थपूर्वकंज्ञेयंपंचरात्रंयतोखिलम् ॥ तत्संक्षेपश्चगीतेयंतस्मान्नास्याःसमंक्वचिदितिब्रह्म
वैवर्ते ॥ जानंतोपिविशेषार्थंज्ञानायस्थापनायवा ॥ पृच्छंतिसाधवोयस्मात्तेनपृच्छसिपार्थिवेत्या
ग्नेयवचनान्नार्जुनोभगवंतंनजानाति ॥ आत्ममाययाआत्मेच्छया ॥ प्रकृतिंस्वामधिष्ठायस्वभा
वम् ॥ देवस्यैषस्वभावोयमित्यादिश्रुतेश्च ॥ अतएवस्वशब्देनविशेषणंप्रकृतिंस्वामवष्टभ्येत्या
दिषु ॥ मयाध्यक्षेणप्रकृतिरित्यादिषुतुनस्वशब्दः॥प्रकृतिंविद्धिमेपरामित्यादिषुसंबंधित्वेनप्रतीते
रन्या ॥ अत्रतुस्वशब्दःस्वरूपवाची ॥ स्वभावइत्यत्रापिस्वाख्योभावःस्वभावः ॥ भावशब्दस्तु
संबंध्याशंकानिवृत्तये ॥ स्वस्वभावइतितुस्वस्वरूपमितिवदुपचारत्वाशंकांनिवर्तयति ॥ स्र
ष्टृत्वादिस्वभावत्वात्स्वेच्छयाविष्णुरव्ययः ॥ सृष्ट्यादिकंकरोत्यद्धास्वयंचबहुधाभवेदितिनारा
यणश्रुतिः॥येषांगुणानांज्ञानेनमुक्तिरुक्तापृथक्पृथक्॥वेदेषुचेतिहासेषुसातुतेषांसमुच्चयात्॥एवमे
वशमादीनांनान्यथातुकथंचनेतिब्रह्मवैवर्तवचनाज्जन्मकर्मचेत्यादिषुनतावन्मात्रेणमोक्षः॥मयंप्र
धानमुद्दिष्टंप्राधान्यंयैर्हरेर्मतम् ॥ भगवन्मयास्तेविज्ञेयास्तेमुच्यंतेनचापरइतिच ॥ मयिभावोम

द्भावः ॥ तथैवभजामि ॥ तदनुसारिफलदानरूपेण ॥ अन्यदेवतायाजिनामपिमत्समर्पणेनवैष्ण
वमार्गानुवर्तनेनैवसम्यक्फलंभवति ॥ अन्यदैवतपूजापियस्मिन्नंतेसमर्पिता ॥ स्वर्गादिफलहे
तुःस्यान्नान्यथातंभजेद्धरिमित्याग्नेये ॥ सत्त्वसत्त्वाधिकरजोरजोभिस्तमसातथा ॥ वर्णाविभक्ता
श्चत्वारःसात्विकाएववैष्णवाइतिच॥कर्मविभागंशमोदमइत्यादिनावक्ष्यति ॥वैष्णवाःसात्विकाए
वतामसाएवचापरे॥दौर्लभ्यसुलभत्वेनतेषांवर्णादिभिन्नतेतिच॥स्वाभाविकोब्राह्मणादिःशमाद्यैरे
वभिद्यते॥योनिभेदकृतोभेदोज्ञेयऔपाधिकस्त्वयम्॥विष्णुभक्तिश्चानुगतासर्ववर्णेषुविश्पतिम् ॥
आरभ्यहीयतेथापिभेदःस्वाभाविकस्ततइतिनारदीये॥कर्तापिभगवान्विष्णुरकर्तैतिचकथ्यते॥त
स्यकर्तायतोनान्यःस्वतंत्रत्वात्परात्मनइतिच॥अपिशब्दोगुणसमुच्चयार्थः॥ कर्तामेनास्तीत्यपिवि
द्धीति ॥ जीवाभेदनिवृत्त्यर्थंमामितिविशेषणम् ॥ कर्मापिनोमत्तइतिबोद्धव्यमित्यादि ॥ कर्मणि
जीवेअस्वातंत्र्यादकर्म ॥ कर्मविधिफलयोरभावात् ॥ अकर्मणिविष्णौ ॥ स्वातंत्र्यात्सर्वकर्तृ
त्वम् ॥ करोस्मिन्मीयतइतिकर्मजीवउदाहृतः ॥ विधिशब्देनामितत्वादकर्मभगवान्हरिरितिना
रदीये ॥ करइतिसकारांतोऽदृष्टवाची॥ क्रियावाचीवा ॥ तदधीनत्वात्॥ प्रसिद्धश्चजीवेकर्मशब्दः
पंचरात्रे ॥ कृत्स्नफलत्वात्कृत्स्नकर्मकृत् ॥ अनिराश्रयोभगवदाश्रयत्वात् ॥ मुक्तस्यस्वातंत्र्याभि
मानात् ॥ कथमभिमानत्यागः ॥ ब्रह्मार्पणमित्यादि ॥ ब्रह्मण्यर्पणंब्रह्मार्पणम् ॥ ब्रह्मणोहविः ॥
ब्रह्मणोग्नौ ॥ ब्रह्मणःकर्म समाधिनासह ॥ समाधिरपितदधीनइत्यर्थः ॥ एकःस्वतंत्रोभगवांस्त्व
दीयंत्वन्यदुच्यतइतिभारते ॥ दैवंविष्णुमेवयज्ञइत्युपासते ॥ स्वभोग्यत्वात्स्वयमेवयज्ञः ॥ ब्र

ह्माख्याग्नौक्रियायज्ञंतेनैवयज्ञाख्येनविष्णुनासमर्पयंति ॥ तत्पूजात्वेनश्रोत्रादिसंयमंकुर्वंति ॥
तत्पूजात्वेनविषयान्भुंजते ॥ तत्पूजात्वेनेंद्रियादिसंयमंकुर्वंति ॥ यज्ञेनैवेतिसर्वत्राप्यन्वीयते ॥
तेनैवतंपूजयेद्वाविहितैर्वान्यसाधनैः ॥ सएवविष्णोर्यज्ञःस्यान्मानसोवासबाह्यकइतिब्रह्मवैवर्ते ॥
श्रोत्रादीनित्यादिष्विज्यानुक्तेरिज्योन्यइतिशंकांनिवारयति ॥ वितताब्रह्मणोमुखइति ॥ सर्वय
ज्ञैःपरब्रह्मयाज्यंविष्णवाख्यमव्ययमितिच ॥ सर्वंकर्माखिलमासमंतादल्पंज्ञानेपरिसमाप्यतेज्ञा
नेजातेपूर्यते ॥ समाप्तविद्यान्धनुषिश्रेष्ठान्यान्सप्तमन्यसइतिवत्समाप्तिशब्दोत्रपूर्तिवाची ॥ ज्ञा
नासिनाऽत्मनश्छित्त्वैनंसंशयंयोगमातिष्ठोत्तिष्ठेतिपुनर्योगकथनात् ॥ ज्ञानंतेहंसविज्ञानमितिवक्ष्य
माणत्वात्स्वयमेवोपदेक्ष्यति ॥ आत्मनिन्यासेमयि ॥ अथोतस्माद्यासत्वादेव ॥ आत्मवंतंपरमा
त्मभक्तम् ॥ ४ ॥ इतिश्रीमदानंदतीर्थभगवत्पादाचार्यविरचितेश्रीमद्भगवद्गीतातात्पर्यनिर्णये
चतुर्थोऽध्यायः ॥ ४ ॥ ॥ ॥ ॥ ॥

हरिःॐ ॥ योगसंन्यासयोर्लक्षणंस्पष्टयत्यनेनाध्यायेन ॥ योगसंन्यस्तकर्माणमित्यादौन्यासशब्दः
सर्वकर्मत्यागविषयइत्याशंक्ययोगसंन्यासयोर्भिन्नपुन्निष्ठत्वाभिप्रायेणपृच्छति॥संन्यासमिति ॥
एकपुंयोग्यावेतौतयोर्मध्येयोगएवविशिष्टइतिपरिहाराभिप्रायः॥उभौसमुच्चितौ ॥संन्यासस्तुमहा
बाहोदुःखमाप्तुमयोगतइतिवक्ष्यमाणत्वात्॥द्वेषादिवर्जनमेवसंन्यासशब्दार्थोनयत्याश्रमोत्राभिप्रे
तइत्याह॥ज्ञेयइति॥नचकाम्यानांकर्मणांन्यासमित्यनेनविरोधः॥तेनापिसहितस्यन्यासत्वात्॥न
चत्यागस्यपृथग्वचनाद्विरोधः॥कुरुपांडववन्न्यासावांतरभेदत्वात्त्यागस्य ॥बाह्यास्तुन्यासशब्देनय

त्याश्रममेवस्वीकृत्यतत्स्थानामेवसांख्यशब्दोदितज्ञानाधिकारोगृहस्थानामेवयोगशब्दोदितकर्मा
धिकारइतिमन्यंते ॥ तन्नपंडितामन्यंते॥ कुतः यस्माज्ज्ञानमार्गंकर्ममार्गंचसम्यगास्थितउभयोर
पिफलंप्राप्नोतितस्माज्ज्ञानिनांकर्माण्यनुष्ठेयम् ॥ कर्मिणामपिगृहस्थानांज्ञातव्योभगवान् ॥ न
हिज्ञानंविनाकर्मणःसम्यगनुष्ठानंभवति ॥ निष्कामंज्ञानपूर्वंचनिवृत्तमिहचोच्यते ॥ निवृत्तंसेव
मानस्तुब्रह्माभ्येतिसनातनम्॥बुद्ध्याऽविहिंसन्पुष्पैर्वाप्रणवेनसमर्चयेत् ॥ वासुदेवात्मकंब्रह्ममूलमं
त्रेणवायतिः ॥ मुक्तिरस्तीतिनियमोब्रह्मदृग्यस्यविद्यते ॥ तस्याप्यानंदवृद्धिःस्याद्वैष्णवंक
र्मकुर्वतः ॥ कर्मब्रह्मदृशाहीनंनमुख्यमितिकीर्तितम् ॥ तस्मात्कर्मेतितत्प्राहुर्यत्कृतंब्रह्मदर्शिना ॥
एतस्मान्न्यासिनांलोकंसंयांतिगृहिणोपिहि ॥ ज्ञानमार्गःकर्ममार्गइतिभेदस्ततोनहि ॥ तस्मादा
श्रमभेदोयंकर्मसंकोचसंभवइतिन्यासस्मृतेः ॥ मोक्षोपायोयोगइतितद्रूपोन्यासएवतु ॥ विष्णव
र्पिततयाभद्रोनान्योन्यासःकथंचनेत्याग्नेये॥ विष्णवर्पितत्वादियोगरूपत्वंविनाकेवलकर्मत्यागोनर
कफलएव॥यंसंन्यासमितिप्राहुर्योगंतंविद्धिपांडवेतिवक्ष्यमाणत्वात् ॥योगविशेषत्वान्न्यासस्यपृथ
गुक्तिः॥सर्वभूतात्मभूतात्मेतिमुख्ययोगः। । आदानात्सर्वभूतानांविष्णुरात्माप्रकीर्तितः॥सर्वभूता
त्मभूतात्मातत्रभूतमनाःपुमानितिच ॥ यथान्यासस्ययोगरूपत्वंतथाह नैवकिंचिदित्यादिना॥वि
ष्णुनार्थेष्वीरितानिमनआदीनिसर्वशः॥ वर्ततेन्योनस्वतंत्रइतिजानन्हितत्त्वविदितिच॥तत्पूजात्म
कानितत्कृतानिममशुभार्थमितिब्रह्मण्याधानम्॥स्वातंत्र्याभावापेक्षयैवजीवस्याकर्तृत्वम् ॥ स्वयं
दत्तंयथापित्राकारितंशिशुकर्तृकम् ॥एवंपूजाविष्णवधीनाभवेज्जीवकृतेत्यपीतिप्रवृत्ते ॥ अतोमन

सैवकर्मन्यासोस्वातंत्र्यापेक्षया॥ यथापितृदत्तंपालकत्वंराजपुत्राणांएवंपरमात्मदत्तंक्रियास्वातं
त्र्यलक्षणंकर्तृत्वम् ॥ क्रियानिष्पन्नधर्मादिरूपकर्मणिस्वातंत्र्यंचजीवानामप्यस्तीत्याशंकांपरिह
ति।।नकर्तृत्वमित्यादिना॥क्रियायामदृष्टोत्पादनेफलेचस्वातंत्र्यंलोकस्यनसृजतीश्वरइत्यर्थः॥ अ
न्यथालोकस्येतिविशेषणंव्यर्थम्॥जनपदेनिवसतांतद्वित्तभोजिनामप्याधिपत्यादानान्नदत्ताजन
पदाराज्ञास्वपुत्राणामितिवत्कर्मफलादिसंयोगिनामपितत्स्वातंत्र्यादानान्नसृजतीतियुज्यते॥स्व
यमेवभवतिभावयतिचेतिस्वभावोभगवान्॥स्वभावत्वात्स्वयमेवकर्तृत्वादिषुप्रवर्तते॥स्वातंत्र्याद्भ
गवान्विष्णुःस्वभावइतिकीर्तितः॥तत्स्वातंत्र्यंकदाप्येषनान्यस्यसृजतिक्वचित् ॥ स्वातंत्र्यादेवपा
पादिसंबंधःकुर्वतोपिन ॥ अज्ञानावृत्तबुद्धित्वादीदृशंतंनजानतइतिमहावाराहे ॥ अहंसर्वस्यप्र
भवः ॥ तपाम्यहमहंवर्षंनिगृह्णामि ॥ परास्यशक्तिर्विविधैवश्रूयतेस्वाभाविकीज्ञानबलक्रियाच ॥
न ऋतेत्वक्रियतेकिंचनारे ॥ देवस्यैषस्वभावोयम्॥ लोकवत्तुलीलाकैवल्यमित्यादेर्नास्यास्वाभा
विकंकर्तृत्वमकर्तृत्वंचा ॥ विपरीतप्रमाणाभावाच्च ॥ अनिर्वाच्यनिरासादेवचनिरस्तोयंपक्षः ॥
नचसर्वविशेषराहित्यवादिनांशून्यवादात्कश्चिद्विशेषः ॥ नहिसर्वविशेषरहितमित्युक्तेतदस्तीति
सिध्यति ॥ वाच्यत्वलक्ष्यत्वास्तित्वादीनामपिविशेषत्वात् ॥ अन्यथास्तिब्रह्मेत्यादीनांशब्दाना
मपिपर्यायत्वादयोदोषाः ॥ व्यावर्त्यविशेषश्चव्यावृत्तविशेषनिबंधनएव ॥ अन्यथावैयर्थ्यमेवस्या
त् ॥ नचसर्वशब्दावाच्यस्यलक्ष्यत्वम् ॥ नचसर्वप्रमाणागोचरमस्तीत्यत्रकिंचिन्मानम् ॥ नास्ति
त्वंतुससमरसादिवददर्शनात्सिध्यति ॥ स्वप्रकाशत्वंचनाऽमानंसिध्यति ॥ स्वयंप्रकाशत्वंचतता

तिरिक्तंचेद्विशेषांगीकारः ॥ नचेत्तदेवप्रमाणगोचरम् ॥ तत्प्रमाणभावेपरप्रकाशत्वमात्रनिरासे
स्वप्रकाशत्वमात्रनिरासेस्वप्रकाशत्वेप्रमाणाभावादप्रकाशत्वमेवस्यात् ॥ अर्थतःसिद्धिरित्यर्थाप
त्तितःसिद्धिस्तत्प्रमाणतःसिद्धिर्वा ॥ उभयथापिप्रमेयत्वमेवस्यात् ॥ स्वप्रकाशशब्देनस्वमित
त्वानंगीकारात्परमितत्वानंगीकाराच्चासिद्धिरेव ॥ प्रकाशइत्युक्तेपिस्वमन्यंवाकिंचित्प्रकाश्यंविना
नदृष्टएवभोजनादिवत् ॥ कर्तृकर्मविरोधश्चानुभवविरुद्धः ॥ ज्ञानंचज्ञेयंज्ञातारंचविनानदृष्टम् ॥
अतःशून्यवादान्नकश्चिद्विशेषः ॥ अतोनंतदोषदुष्टत्वादुपरम्यते ॥ हरिःस्वभावतःकर्तासर्वमन्य
त्तदीरितम् ॥ अतःसाकर्तृतातस्यनकदाचिद्विनश्यतीतिपैंगिश्रुतिः ॥ विषमेष्वपिजीवेषुसमो
विष्णुःसदैवतु ॥ यत्तृणादिगतस्यापिगुणाःपूर्णाहरेःसदेतिच ॥ इदानीमपिपरमात्मनिस्मृतमा
त्रेसुखंविंदतीतियत्तदासएवसम्यगुक्तः ॥ किमुब्रह्मणिभूतः ॥ अन्यथापुनर्ब्रह्मगच्छतीतिवि
रोधाच्च ॥ अंतस्सुखादिकंचब्रह्मदर्शनात् ॥ अमुक्तोमुक्तसादृश्यान्मुक्तएवहितत्त्वदृक् ॥ किमु
मुक्तिगतस्तस्माज्ज्ञानमेवाधिकंनरइतिनारदीये ॥ ७ ॥ इतिश्रीमदानंदतीर्थभगवत्पादाचार्यवि
रचितेश्रीमद्भगवद्गीतातात्पर्यनिर्णयेपंचमोऽध्यायः ॥ ५ ॥
हरिःॐ ॥ ध्यानमत्रोच्यते॥ सब्रह्मनिष्ठस्तुयतिर्महात्माशारीरमग्निंचमुखेजुहोतीत्यादेर्नयतेरप्य
नग्नित्वम्॥आत्मसमारोपणाच्च ॥ योगविशेषएवसंन्यासइत्यर्थः॥संपूर्णोपायोयोगारूढः॥नानाज
नस्यशुश्रूषाकर्माख्याकरवन्मितेः ॥योगार्थिनातुसाकार्यायोगस्थेनहरौस्थितिः॥तेनापिस्वोत्तमा
नांतुकार्यान्यैरखिलेष्वपि॥शक्तितःकरणीयेतिविशेषोसिद्धासिद्धयोः ॥ प्राप्तोपायस्तुसिद्धःस्यात्प्र

प्सुः साधक उच्यते ॥ तस्य प्राण्युपकारेण संतुष्टो भवतीश्वरः ॥ सिद्धोपायेन विष्णोस्तु ध्यानं व्याख्यार्च
नादिकम् ॥ कार्येनान्यत्तस्य तेन तुष्टो भवति केशव इति प्रवृत्तवचनान्न विरोधः ॥ शमो मन्निष्ठता बु
द्धेर्दम इंद्रियनिग्रह इति भागवते ॥ कथं नानुषज्जते सर्वसंकल्पसंन्यासी ॥ मयि सर्वाणि कर्माणीत्यु
क्तत्वात् ॥ मदधीनमिदं ज्ञात्वा मत्संन्यासीति चोच्यत इति च ॥ उद्धरेत्तैव संसाराज्जीवात्मानं परात्म
ना ॥ विष्णुर्बंधुः सतां नित्यं परात्माह्यसतामरिः ॥ तत्प्रसादजया भक्त्या जितो यस्य वशे त्विव ॥ वर्त
ते लस्य मित्रं स तदन्यस्य च शत्रुवदिति च ॥ परमात्मा समाहित इति वाक्यशेषात् ॥ सर्वत्र विष्णोरु
त्कर्षज्ञानं ज्ञानमितीर्यते ॥ तद्विशेषपरिज्ञानं विज्ञानमिति गीयत इति च ॥ यस्य यत्र यथा वृत्तिर्विहि
ता वर्तेत तथा ॥ ज्ञानं वापि समत्वं तद्विषमत्वमतोन्यथेति महाविष्णुपुराणे ॥ अनिमित्तस्नेहवांस्तु
सुहृज्ज्ञात्वोपकारकृत् ॥ मित्रं वधादिकृदरिर्द्वेष्यस्त्वप्रियमात्रकृत् ॥ उदासीनः स्नेहवतोप्यस्नेही
तत्कृतानुकृत् ॥ मध्यस्थ इति विज्ञेयः सुहृदेषु विशिष्यत इति नारदीये ॥ आत्मानं विष्णुम् ॥ आ
त्मना तत्प्रसादेन ॥ ब्रह्मणि भूतम् ॥ सर्वभूतेषु स्थितं परमात्मानम् ॥ सर्वत्र विष्णुरेक इति स्थितः ॥
अतो विष्णवनुवर्तिषु स्वयत्स्नेहः कर्तव्यः ॥ अयतिरप्रयत्नः ॥ प्रयत्नाद्यतमानस्त्विति वाक्यशेषा
त् ॥ योगशब्दस्योपायार्थत्वेप्यत्रोपायविशेष एव ध्यानयोगादिर्विवक्षित इति न विरोधः ॥ मो
क्षोपायस्य जिज्ञासुरपि केवलपाठकात् ॥ विशिष्टः किमु तद्विद्वान्किंपुनर्यस्तदा स्थित इति परमयोगे ॥
तपसश्चैव यज्ञादेर्ध्यानमेव विशिष्यते ॥ अज्ञानिध्यानतो ज्ञानं ध्यानं सज्ज्ञानमप्यतः ॥ तत्रापि म
द्भक्तस्य नान्यद्ध्यानं प्रयोजकम् ॥ अन्यसामान्यविद्यो मेयश्चान्यं नेति पश्यति ॥ अवरत्वदृ

गुदासीनोविद्वेषीचेत्यभक्तयः ॥ मद्भक्तोपिहिकार्यार्थीयोध्यायेदन्यदेवताम् ॥ परिवारमृतेत
स्मात्केवलंमदुपासकः ॥ वरोन्यान्मदधीनांश्चसर्वान्जानन्विशुद्धधीरितिदत्तात्रेयवचनम् ॥ ७॥
इतिश्रीमदानंदतीर्थभगवत्पादाचार्यविरचितेश्रीमद्भगवद्गीतातात्पर्यनिर्णयेषष्ठोऽध्यायः ॥ ६ ॥
हरिःॐ ॥ भगवन्महिमाविशेषतउच्यते ॥ अनंतानांतुजीवानांयतंतेकेचिदेवतु ॥ मुक्त्यै
तेषुचमुच्यंतेकेचिन्मुक्तेषुचस्फुटम् ॥ केचनैवहरिंसम्यग्ब्रह्मरुद्रादयोविदुः ॥ अन्येपांयाव
तामुक्तिस्तावज्ज्ञानंहरौपरमितिपाद्मे ॥ मुक्तानामपिसिद्धानांनारायणपरायणः ॥ सुदुर्लभः
प्रशांतात्माकोटिष्वपिमहामतइतिभागवते ॥ सर्वेमुक्ताहरौभक्तास्तेषुब्रह्मैवमुख्यतः ॥ विष्णोः
परमभक्तस्तुतस्माज्जीवघनोमतइतिसत्तत्त्वे ॥ अचेतनाचेतनेतिद्विविधाप्रकृतिर्मता ॥ त्रिगुणा
चेतनातत्रचेतनाश्रीर्हरिप्रिया ॥ तेउभेविष्णुवशगेजगतःकारणेमते ॥ पिताविष्णुःसजगतोमाता
श्रीर्यात्वचेतना ॥ उपादानंतुजगतःसैवविष्णुबलेरितेतिच ॥ मत्तोन्यत्परतरंनास्तिपरतस्त्वहमे [illegible]
र्थः ॥ अन्यथान्यदितिव्यर्थम् ॥ अवरादुःखसंबंधाज्जीवाएवप्रकीर्तिताः ॥ नित्यनिर्दुःखरूपत्वा
त्पराश्रीरेकलैवतु ॥ दुःखासंपीडितत्वात्तुमध्यमोवायुरुच्यते ॥ अनन्याधीनरूपत्वादसमाधिक
सौख्यतः ॥ तत्तंत्रत्वाच्चसर्वस्यविष्णुःपरतरोमतः ॥ अभावादंतरान्यस्यत्विहैकार्थौतरसमौ ॥
यस्याःसंबंधयोग्यत्वाज्जीवाअप्यवरामताः ॥ तस्याजडायाःप्रकृतेरवरत्वेकसंशयः ॥ अथावरत
रायेतुविमुखाश्चेतनाहरेः ॥ नित्यदुःखैकयोग्यत्वान्नह्येतत्स्यादचेतने ॥ अतःपरतरंविष्णुंयोवेत्ति
सविमुच्यते ॥ मुक्तस्तुस्यात्पराभासःसुनित्यसुखभोजनात् ॥ तत्रापितारतम्यंस्यात्तेषुब्रह्मा

धिकोमतः ॥ विष्णोराधिक्यसंवित्तिःसर्वस्माज्ज्ञानमुच्यते ॥ एवंविविच्यतज्ज्ञानंविज्ञानमिति
कीर्तितम् ॥ एतच्चतारतम्येनवर्ततेकेशवादिषु ॥ मुख्यविज्ञान्यतोविष्णुःकिंचिद्विज्ञानिनोपरे ॥
 सोप्सुस्थित्वारसयतिरसनामाततःस्मृतः ॥ सूर्यचंद्रादिषुस्थित्वाप्रभानामाप्रभासनात् ॥ वेदस्थः 
प्रणवाख्योसावात्मानंयत्प्रणौत्यतः ॥ खेस्थितःशब्दनामासौयच्छब्दयतिकेशवः ॥ पुण्यापुण्यंगं
धयतिस्वयंपुण्योधरास्थितः ॥ तेजयत्यग्निसंस्थःसन्भूतस्थोजीवनप्रदः ॥ तपस्विस्थस्तपयति
व्यंजनाद्बीजसंज्ञितः ॥ बोधनाद्बुद्धिनामासौबुद्धिमत्सुव्यवस्थितः ॥ नित्यपूर्णबलत्वात्तुबलं
कामविवर्जितम् ॥ अरागजबलश्चैवस्थानेभ्योन्येष्वयोजनात् ॥ एतादृशबलात्मासौबलिनां
बलदःस्वयं ॥ वेतिपूर्णत्ववाचीस्यात्तद्रतेर्बलमुच्यते ॥ प्रायोहिकामिताअर्थाधर्मंहन्युर्हरिःपुनः॥
नधर्महानिकृत्किंतुकामितोधर्मवृद्धिकृत् । धर्माविरुद्धकामोतोविष्णुर्भूतेषुसंस्थितः ॥ एवंससर्व
तश्चान्यःस्वतंत्रश्चैवसर्वगः ॥ व्यवस्थयैवसर्वेषांसर्वदासर्वदःप्रभुः ॥ येचैवसात्विकाभावाराजसा
स्तामसाश्चये ॥ ततएवनचान्यस्मात्तदायत्तामिदंनसः ॥ अन्यायत्तोचेतनयातन्मेयत्वात्तुमा
यया ॥ लक्ष्म्यावशगयालोकोविष्णुनैवविमोहितः ॥ येतुविष्णुंप्रपद्यंतेतेमायांतांतरंतिहि ॥
लक्ष्मीःसाजडमायायादेवतातेउभेअपि ॥ विष्णोर्वशेततोनन्यभक्त्यातंशरणंव्रजेत् ॥ यादृ
शीतत्रभक्तिःस्यात्तादृश्यन्यत्रनैवचेत् ॥ अनन्यभक्तिःसाज्ञेयाविष्णावेवतुसाभवेत् ॥ अ 
न्येषुवैष्णवत्वेनलक्ष्मीब्रह्महरादिषु ॥ कुर्याद्भक्तिंनान्यथानुतद्वशाएवतेयतः ॥ एवंजानंस्त
मामोतिनान्यथातुकथंचन ॥ पूर्णवस्तुयतोह्येकोवासुदेवोनचापरः ॥ एवंविदुर्लभोलोकेय

त्सर्वैमिश्रयाजिनः ॥ विष्णुंतत्परमंज्ञात्वारमाब्रह्महरादिकान् ॥ यजन्नपितमोघोरंनित्यदुः
खंप्रयातिहि ॥ अज्ञानांतुकुलेजातोयावद्विष्णोःसमर्चनम् ॥ विष्णुतत्त्वंनजानीयात्तावत्सेवा
पृथक्कृता ॥ विद्याद्यैहिकभोगाययदिबुद्ध्यापुनर्नतु ॥ परिवारतामृतेकुर्यादन्यदेवार्चनंक्वचित् ॥
अजानताकृतंत्यक्तंनदोषायभविष्यति ॥ जन्मादिप्रदमेवस्यादत्यागेपुनरेवतु ॥ क्षिप्रंचज्ञापय
त्येवभगवान्स्वयमेवतु ॥ यदिजन्मांतरेस्त्रीयोनिमित्तीकृत्यकंचनेत्यादिच ॥ मत्तएवेतितान्वि
द्धीत्युपसंहाराच्च ॥ तत्तत्कारणत्वात्तत्तन्नामेत्यवसीयते ॥ मयिसर्वमिदंप्रोतमितिभेदेनैवोपक्र
माच्च ॥ आप्नोतिविष्णुमित्येवात्मशब्दोज्ञानिनि ॥ यच्चाप्नोतियदादत्तइत्यादेः ॥ आस्थितःसहि
मांप्रपद्यतेइत्यादिवाक्यशेषाच्च ॥ बहूनांजन्मनामंतेज्ञानवान्भवति ॥ ततोमांप्रपद्यते ॥ वासुदे
वःसर्वमितिपूर्णमितिजानन्प्रपद्यंतेन्यदेवताइतिवाक्यशेषेभेददर्शनाच्च॥ देवान्देवयजोयांतिमद्भ
क्तायांतिमामपीतिच॥ज्ञात्वापरत्वंविष्णोस्तुपृथग्देवान्यजन्नरः॥ यातिदेवांस्तदज्ञात्वातमएवप्र
पद्यते ॥ तथापियावदन्यैस्तुसाम्यंहीनत्वमेकताम् ॥ ननिश्चिन्वंतिजायंतेसंसारेतेपुनःपुनरिति
च ॥ अव्यक्तःपरमात्मासौव्यक्तोजीवउदाहृतः ॥ मन्यतेयस्तयोरैक्यंसतुयात्यधरंतमइतिच ॥
यथात्मानंहरिर्वेत्तितथान्येनैवतंविदुः ॥ जानंतिकिंचित्क्रमशोरमाद्यास्तत्प्रसादतइतिच ॥ द्वं
द्वमोहोमिथ्याज्ञानम्॥ तमस्तुशार्वरंविद्यान्मोहश्चैवविपर्ययइतिचभारते ॥जीवेश्वरादिकंद्वंद्वंतद्वि
षयोमोहोद्वंद्वमोहः ॥ संमोहस्तदाग्रहः ॥ तदाग्रहोमहामोहः ॥ क्रोधस्तामिस्रउच्यतइत्युक्त
त्वात् ॥ सर्गेसर्गकालएव ॥ जीवधर्मानीश्वरेतुयोजीवेष्वैश्वरानपि ॥ विद्याज्जीवेश्वरैक्यंवाद्वंद्व

मोहीसउच्यतइत्याग्नेये ॥ तद्ब्रह्मेत्युक्तेन्यत्वशंकांनिवारयति ॥ साधिभूताधिदैवमिति ॥ ॥ इ
तिश्रीमदानंदतीर्थभगवत्पादाचार्यविरचितेश्रीमद्भगवद्गीतातात्पर्यनिर्णयेसप्तमोऽध्यायः ॥७ ॥
हरिःॐ ॥ उक्तव्याख्यानपूर्वकंब्रह्मप्राप्तिरुच्यते॥ तदितिविशेषणाद्ब्रह्मेत्युक्तमन्यदेव ॥ प्रकृत्या
दीनांमध्येयत्किंचित् ॥ उपरिसाधियज्ञंचेतिचशब्दादधिभूतादिसहितत्वेनविष्णुज्ञानमन्यदेवे
तिसंशयः ॥ किंतद्ब्रह्मेतिप्रश्नकारणम् ॥ परमाक्षरोविष्णुरेवमुख्यतइतिप्रसिद्धत्वात् ॥ तथैवप
रिहरति ॥ अज्ञानांतदपिज्ञापयितुंतथैवपरिहारः ॥ पुनरहमितिनोक्तमित्याशंकाऽव्यक्तंव्यक्ति
मापन्नमितिविष्णावेवप्रयुक्तत्वेनाव्यक्तशब्देनाव्यक्तोक्षरइत्युक्तइतिपरिह्रियते ॥ येचाप्यक्षरम
व्यक्तमित्यत्रतुपृथक्प्रश्नादुपासकयोःफलतारतम्यकथनात्कूटस्थोक्षरउच्यतइत्युक्ताक्षरादपि
चोत्तमइतिविष्णोरुत्तमत्वकथनाच्चान्यदेवेत्यवसीयते ॥ अधियज्ञोहमेवेतिसाधियज्ञमित्युक्त्या
प्राप्तभेदनिवृत्त्यर्थंतस्यैवसर्वप्राणिदेहस्थितरूपांतरापेक्षयासहितत्वंयुज्यते॥प्राणिनांदेहगोविष्णु
रधियज्ञइतीरितः ॥ सएवव्याप्तरूपेणब्रह्मेतिपरिकीर्त्यते ॥ तैस्तैरधिकयाज्यत्वाद्धंहितत्वाच्चहेतु
तः॥अध्यात्मंतत्स्वभावोयदधिकःपरमात्मगः॥ पुंसांसजडभावानांसर्गःकर्महरेःस्मृतम् ॥ भूताधि
कत्वतोजीवाअधिभूतमितीरिताः॥अधिकोदैवतंविष्णुरेवयस्यास्तुसारमा॥ पुरुप्राणाधिदैवाख्या
त्विविज्ञेयमिदंनरैरितितत्त्वविवेके ॥ कथंरूपोधियज्ञइतिप्रश्नस्त्वहमेवेत्युक्तत्वात्तल्लक्षणोक्त्यैवप
रिहृतः ॥ मद्भावंमयिभावम्॥सदातद्भावभावितानामेवस्मरंस्त्यजतीतिकेवलंतत्कालस्मरणंभव
ति ॥ नचेत्स्मरतोपिसमाधिस्थस्खलनवत्पूर्वकर्मानुसारिस्मृत्यातत्प्राप्तिरेवभवति ॥ अपरोक्षज्ञा

निनांप्रारब्धकर्मावसानेस्मरंस्त्यजतीतिभवत्येव॥प्रयाणकालेपिचमांतेविदुरित्युक्तत्वात्॥ युक्तचे
तसइतिविशेषणान्नित्यंस्मरतामेवापरोक्षज्ञानंजायते ॥ भक्त्याज्ञानान्निषिद्धानांत्यागान्नित्यंह
रिस्मृतेः ॥ अरागाद्विहितात्यागादित्येतैरेवसंयुतैः ॥ अपरोक्षदर्शनंविष्णोर्जायतेनान्यथाक्वचि
दितिसत्तत्त्वे ॥ तमसःपरस्तादप्राकृतदेहः ॥ मनआदीनांब्रह्मणिचरणब्रह्मचर्यम् ॥ एकाक्षर
वाच्यत्वादेकाक्षरंपरंब्रह्म ॥ नियमाज्जन्मनोभावोमुक्तस्यैवतथापितु ॥ महर्लोकमतीनानांनज
न्मांशलयौविना ॥ तत्राप्यवश्यंतत्स्थानंतैःक्षिप्रंपुनराप्यतइतिपाद्मे ॥ सहस्रमितिबह्वेव ॥ ब्रह्म
णःपरब्रह्मणः ॥ अव्यक्ताद्व्यक्तयःसर्वाःप्रभवंत्यहरागमे ॥ रात्र्यागमेप्रलीयंतेतत्रैवाव्यक्तसंज्ञिक
इतिवाक्यशेषात् ॥ नहिविरिंचाहन्येवसर्वव्यक्तिलयः ॥ नित्यस्यापिहरेःकालोद्विपरार्धात्मक
स्त्वयम् ॥ अहश्चासौनिमेषश्चेत्यप्रवृत्त्योपचर्यतइतिच ॥ यत्रकालाभिमानिदेवतासुमृत्यनंतरंप्र
याताः ॥ अग्निज्योतिर्धूमानामकालाभिमानित्वेपिकालप्राचुर्यात्कालइत्युच्यते ॥ अग्निर्ज्योति
रितिद्वेधावह्नेःपुत्रोव्यवस्थितः ॥ तंप्राप्ययातिब्रह्मिष्ठोदिवसाद्यभिमानिनइतिसत्तत्त्वे ॥ तत्काल
मरणविवक्षायामग्निज्योतिर्धूमानामयोगः ॥ अथयोदक्षिणेप्रमीयतेपितॄणामेवमहिमानंगत्वाचं
द्रमसःसायुज्यंसलोकतामाप्नोत्येतौवैसूर्याचंद्रमसोर्महिमानौब्राह्मणोविद्वानभिजयतितस्माद्ब्रह्म
णोमहिमानमाप्नोतीतिविदुषोदक्षिणायनमरणेप्यपुनरावृत्त्याब्रह्मप्राप्तिश्रुतेः॥ विद्वान्ब्रह्मसमाप्नो
तियत्रतत्रमृतोपिसन्नितिपाद्मे ॥ मार्गौब्रह्मचयःपश्येत्साक्षादेवापरोक्षतः ॥ सर्वपुण्यातिगोऽमु
ष्यान्यात्यसौब्रह्मतत्परमितिच ॥ इतिश्रीमदानंदतीर्थ०गीतातात्पर्येऽष्टमोऽध्यायः ॥ ८ ॥

हरिः ॐ ॥ ससमोक्तंप्रपंचयति ॥ विष्णुगान्यप्यतत्स्थानिभूतान्येषह्यसंगतइतिच ॥ ममात्माम
मदेहएव ॥ तदनन्यत्वात् ॥ देहस्याचेतनत्वशंकानिवृत्तयेममात्मेत्याह ॥ अध्यक्षोधिपतिःप्रो
क्तोयदक्षाण्यस्यचोपरीतिशब्दनिर्णये॥मानुषींमनुष्यसदृशीम्॥तन्वाविष्णुरनन्योपिस्वाधीनत्वा
त्तदाश्रितइतिच ॥ ब्रह्मरुद्ररमादीनांसाम्यदृष्टिरनन्यता ॥ प्रादुर्भावगतस्यापिदोषदृष्टिरपूर्ण
ता ॥ धर्मदेहावतारादेर्भेददृष्टिश्चसंकरः ॥ अवतारेष्वितिज्ञेयमवज्ञानंजनार्दने ॥ सर्वमोघं
शुभंतस्ययोवजानातिकेशवम् ॥ अधरंयातिचतमःप्रादुर्भावगतोप्यतः ॥ ज्ञेयःकेवलचिद्दे
होनिर्दोषःपूर्णसद्गुणइतिभविष्यत्पर्वणि॥एकमूर्तिश्चतुर्मूर्तिरथवापंचमूर्तिकः॥द्वादशादिप्रभेदोवा
पूज्यतेसज्जनैर्हरिरितिच ॥ अर्च्यत्वादृक्समत्वाच्चनिजरूपेषुसामसः ॥ याज्यत्वात्सयजुर्यज्ञःसार्व
ज्ञ्यात्पुरुषोत्तमः ॥ क्रतुःकृतिस्वरूपत्वात्स्वधानन्यधृतोयतः ॥ मानात्त्रातीतिमंत्रोयमुष्टानांनिभि
रौषधम् ॥ आज्यायस्त्वादाज्यनामादर्भोदरधरोयतः ॥ आहूतत्वाद्धुतंचायमग्निर्नेताऽगतेर्यतइ
त्यादिच ॥ तत्तत्पदार्थभिन्नोपितत्तन्नामैवमच्युतः ॥ स्वातंत्र्यात्सर्वकर्तृत्वाद्गुणानंत्याच्चकेवल
मितिच ॥ ओमित्याक्रियतेयस्मादोंकारोभगवान्हरिरितिच ॥ पातीतिसपितामानान्मातायतस
पितुर्महान् ॥ पितामहोनिधातृत्वान्निधानंभीतरक्षणात् ॥ शरणंव्यंजनाच्चैवबीजमित्युच्यतेप्रभु
रितिच ॥ प्रलयकालेसंहर्तृत्वात्प्रलयः ॥ अन्यदापीतिमृत्युः ॥ प्राणगःप्राणधर्तायदमृतंप्रविला
पयन् ॥ विश्वंप्रलयइत्युक्तोमृत्युरन्यत्रमारणादितिच ॥ सत्साधुगुणपूर्णत्वादस्मान्नान्योगुणाधि
कः ॥ यतोतोसदितिप्रोक्तंविष्णवाख्यंपरमंपदमितिशब्दनिर्णये ॥ अनन्यदेवतायागाद्भक्त्युद्रेका

दकामनात् ॥ सदायोगाच्चवैशिष्ट्यंत्रैविद्याद्वैष्णवादपि ॥ स्याद्धिभागवतस्यैवतेनब्रह्मादयोखि
लाः ॥ अश्वमेधादिभिर्यज्ञैरपिकेशवयाजिनः ॥ वैष्णवाइतिबुद्ध्यैवमानयंत्यन्यदेवताइत्याग्ने
ये ॥ सम्यग्गुणगणज्ञानादुपासापर्युपासनेतिच ॥ मामिष्ट्वाप्रार्थयंतइत्युक्त्वाज्ज्ञानंतोपिना
भितोजानंतितत्त्वेन ॥ सर्वदेववरत्वेनयोनजानातिकेशवम् ॥ तस्यपुण्यानिमोघानियातिचांधं
तमोध्रुवमितिच ॥ मोघाशामोघकर्माणइत्युक्त्वाच्चनकेवलाज्ज्ञविषयंमिथ्याज्ञानिविषयंवाच्य
वंतितइत्यादि ॥ अतःसर्वाधिक्यंविष्णोर्ज्ञात्वापिब्रह्मादीनांतत्परिवारत्वादिकमजानतामिदंफ
लम् ॥ नास्यभक्तोपियोद्वेष्योनचाभक्तोपियःप्रियः ॥ किंतुभक्त्यनुसारेणफलदोतःसमोहरिरि
तिपाद्मे ॥ प्रीत्यामयिते ॥ पापादिकारिताश्चैवपुंसांस्वाभाविकाअपि ॥ विप्रत्वाद्यास्तत्रपुण्याः
स्वाभाव्याएवमुक्तिगाः ॥ यांतिस्त्रीत्वंपुमांसोपिपापतःकामतोपिवा ॥ नस्त्रियोयांतिपुंस्त्वंतुस्व
भावादेवयाःस्त्रियः ॥ पुंसासहैवपुंदेहेस्थितिःस्याद्वरदानतः ॥ तज्जन्मनिवशःपापजाताभ्योनिज
सत्स्त्रियः ॥ सर्वेषामपिजीवानामंत्यदेहोयथानिजः ॥ मुक्तौतुनिजभावःस्यात्कर्मभोगास्ततोपि
चेतिभविष्यत्पर्ववचनात्पापयोनयःपुण्याइतिविशेषणम् ॥७॥ इतिश्रीमदानंदतीर्थभगवत्पादा
चार्यविरचितेश्रीमद्भगवद्गीतातात्पर्येनवमोऽध्यायः ॥ ९ ॥

हरिःॐ ॥उपलक्षणार्थंसुरगणाइत्यादि॥अनस्याप्यादिरनादिः ॥ बुद्धिर्बोधनिधित्वात्तदंतःकरण
मुच्यतइतिशब्दनिर्णये॥मरीचिरत्र्यंगिरसौपुलस्त्यःपुलहःक्रतुः ॥ वसिष्ठश्चमहातेजाःपूर्वेससर्पयः
स्मृताइतिब्राह्मे॥मनवोबोधवैशेष्याद्देवाब्रह्मादयःस्मृताः॥विप्रादिवर्णभेदेनचत्वारोबहवोपिते॥दी

नत्वाद्देवनामानस्त्वन्येब्रह्मादिनामकाः ॥अवैष्णवकृतोयज्ञोदीनैर्दैवैस्तुभुज्यते ॥ वैष्णवैस्तुकृतो
यज्ञोदेवैर्हिमनुनामकैः ॥ मरीच्याद्यास्तुतत्पुत्रामानवानामतःस्मृताः ॥ तत्पुत्रपौत्रामुनयस्त
थामानवमानवाः ॥ तेभ्योमनुष्याइत्येषासृष्टिर्विष्णोःसमुत्थितेतिमहाविष्णुपुराणे ॥ युज्यते
येनयोगोसावुपायःशक्तिरेवचेतिच ॥ विशिष्टभवनंविभूतिः ॥ महत्त्वंविविधभवनंवा ॥ योगः
सामर्थ्यम् ॥ भजंतेमामित्यनेनजीवेश्वरैक्यशंकांनिवर्तयति ॥ मद्गतप्राणामद्विषयचेष्टाः ॥ ये
षांविष्णुस्वरूपाणांसन्निधेरन्यवस्तुषु ॥ विशिष्टत्वंस्वजातेःस्याद्विभूत्याख्यानितानितु ॥ ब्रह्म
नामाब्रह्मगतःसर्वदेवतसंचयात् ॥ आधिक्यहेतुर्भगवान्सामस्थःसामनामकः ॥ आधिक्यहेतु
र्वेदेभ्यस्तथाश्वत्थस्थितोहरिः ॥ उत्कर्षहेतुर्वृक्षेभ्योयएवाश्वत्थनामकइत्यादिविभूतितत्त्वे ॥ के
षुकेषुचभावेष्वित्युक्तत्वाच्चब्रह्मादिजीवेभ्योन्यदेवविभूतिरूपम् ॥ द्विविधंवैभवंरूपंप्रत्यक्षंचति
रोहितम् ॥ कपिलव्यासकृष्णाद्यंप्रत्यक्षंवैभवंस्मृतम् ॥ भिन्नंब्रह्मादिजीवेभ्योजडेभ्यश्चापित
द्गतम् ॥ स्वजात्याधिक्यदंतेषांतत्तिरोहितवैभवमित्यादिच ॥ आत्माततगुणत्वेनरवज्ञेयोयतोर
विः ॥ उदवन्मेघचलनान्मरीचिःसामसाम्यतः ॥ सुखात्सुखत्वात्तुशशीवेदोवेदनतोहरिः ॥ वा
सवर्तीवासवोसौचेतोनेतातुचेतना ॥ पालकैर्वननीयत्वात्पवनोबोधनान्मनः ॥ पावकःशोधनान्मे
रुरीरोयन्मास्यसागरः ॥ सारस्यगरणात्स्कंदोजगतःस्कंदनाद्भृगुः ॥ भर्जनाज्जपयज्ञश्चजातपो
याज्यएवच ॥ अश्वाकारस्थितोश्वत्थऐरंश्रीश्चतदाश्रयः ॥ ऐरावतोनराणांयद्द्यात्सर्वंसनारदः ॥
ह्रीश्रीसमाश्रयत्वाच्चहिमालयइतीरितः ॥ वर्ज्यत्वादरिभिर्वज्रोवैनतेयोनतास्पदः ॥ वासुकिर्वा

समुखदः कंदर्पः सुखभेदपः ॥ अर्यमाज्ञेयमातृत्वात्कालआकलनादपि ॥ वरुणोवरणाद्वंद्वोद्विरूपों
तर्बहिर्यतः ॥ मकरोमानकर्तृत्वाद्यमः संयमनाद्विभुः ॥ प्रह्लादः समहानंदोमृगेंद्रोमृगयत्पतिः ॥
जाह्नवीजहतांस्थानमध्यात्मंचात्मनांपतिः ॥ विद्याज्ञप्तिस्वरूपत्वाद्वादोवाच्यत्वतोहरिः ॥ की
र्त्योवक्ताश्रयः कीर्तिर्वाक्श्रीरितिचनामकः ॥ स्मरणीयः स्मृतिर्मेधाक्षमारूपस्तथेर्यते ॥ द्यूतं
क्रीडापरत्वाच्चगायत्रीत्रातिगायकान् ॥ सत्वंसाधुगुणत्वाच्चदंडनाद्दंडउच्यते ॥ बृहत्सारोप्यमे
यश्चबृहत्सामोशनोशतेः ॥ शुभाशुभज्ञानकरः कुसुमाकरईरितः ॥ ज्ञानंज्ञानात्मतोमौनंमुनीड्यो
नीतिरानयन् ॥ मार्गाणामंतगत्वात्तुमार्गशीर्षः प्रकीर्तितः ॥ सुखंपिबल्लील्यैवकपिलोव्यासएव
च ॥ विशिष्टत्वाद्विष्णुनामाविशिष्टप्राणसौख्यलः ॥ एवंनानागुणोविष्णुर्नानानामभिरीरितः ॥
नानाप्राण्यादिसंस्थश्चविभूतिरितिशब्दितः ॥ शश्यादिषुविजातीयस्वाम्यदःसारदः क्वचित् ॥ श
र्वादिषुसजातीयश्रैष्ठ्यदत्वेनसंस्थितः ॥ शक्रोशनार्जुनाद्येषुसजातीयैकदेशतः ॥ देवेष्वप्य
धिकोब्रह्मायतोविष्णोरनंतरः ॥ कवित्वादिगुणेष्वेवयत्समोनास्तिकश्चन ॥ तथाभीमश्चपार्थेषु
ज्ञानंचज्ञेषुचोत्तमम् ॥ सुदर्शनंचायुधेषुवेदेष्वृग्वेदउच्यतइत्यादिविभूतितत्त्वे ॥ क्वचित्साम्य
आधिक्यमभिमान्यपेक्षया ॥ ऋचःश्रीर्गौरुमाद्याश्चसाम्नःप्राणशिवादयइत्याद्यभिमानिभेदा
त् ॥ तत्रापियथायोग्यम् ॥ ममतेजोंशेनसंयुक्तंभवति ॥ किंज्ञानेनेतिवक्ष्यमाणस्याधिकफल
त्वज्ञापकमेव ॥ अन्यथोक्तेरवैयर्थ्यात् ॥ अन्याधिक्यज्ञापनार्थंशुभंचाक्षिप्यतेक्वचित् ॥ नता
वतास्यनिंद्यत्वंज्ञेयैवान्यवरिष्ठता ॥ उभयंमिलितंचैवततोप्यधिकशोभनमिति च ॥ ७ ॥ इति

श्रीमदानंदतीर्थभगवत्पादाचार्यविरचितेश्रीमद्भगवद्गीतातात्पर्यनिर्णयेदशमोऽध्यायः ॥ १० ॥
हरिःॐ ॥आत्मानमव्ययम्॥परमंरूपमैश्वरम्॥सर्वाश्चर्यमयंदेवमनंतंविश्वतोमुखमित्यादिरूप वि
शेषणाच्चरूपस्येश्वरसाक्षात्स्वरूपत्वंनित्यत्वंतत एवचिदानंदाद्यात्मकत्वंचसिद्धम्॥ममदेहइत्युक्त
त्वाच्चादित्यादीनांभेदःसिद्धः ॥ मेरूपाणिसर्वतोनंतरूपंद्रष्टुमिच्छामितेरूपमित्यादेश्चैकस्यैवाभि
न्नानंतरूपत्वंच ॥ एकंरूपंहरेर्नित्यमचिंत्यैश्वर्ययोगतः ॥ बहुसंख्यागोचरंचविशेषादेवकेवलम् ॥
अभावोयत्रभेदस्यप्रमाणावसितोभवेत् ॥ विशेषोनामतत्रैवविशेषव्यवहारवान् ॥ विशेषोपिस्व
रूपंसस्वनिर्वाहकएवच ॥ द्रव्यात्मनासनित्योपिविशेषात्मैवजायते ॥नित्यएवविशेषश्चकश्चिदेवं
द्विधैवसः ॥ वस्तुस्वरूपमस्त्येवेत्येवमादिष्वभेदिनः ॥ विशेषोनुभवादेवज्ञायतेसर्ववस्तुषु ॥ नचा
विशेषितंकिंचिद्वाच्यंलक्ष्यंतथामितम् ॥ विशिष्टस्यस्वतोन्यत्वेस्वस्यामेयत्वहेतुतः ॥ नैवज्ञेयं
विशिष्टंचमानाभावाच्चनोभवेत्॥ स्वयमित्यपिहिस्वत्वविशेषेणविवर्जितम् ॥ नज्ञेयंतद्विशेष्यंचत
थैवेत्यनवस्थितिः ॥ अभेदेनतिरोधोस्तिज्ञाताज्ञातंयतोखिलम् ॥ तदेवज्ञातरूपेणज्ञातमज्ञात
मन्यथा ॥ अभिन्नस्यविशिष्टत्वान्नदोषद्वयमप्युत ॥ एकत्वानुभवाच्चैवविशेषानुभवादपि ॥ त
ज्ज्ञानानुभवाच्चैवनदोषद्वयसंभवः ॥ भेदाभेदौचतौनैवकर्तृभोक्तृविशेषणे ॥ मदन्यइत्यनुभवो
यतोनैवास्तिकस्यचित् ॥ भेदोविशेषणस्यापिनांतरस्यक्कचिद्भवेत् ॥ शुद्धस्वरूपइत्यादावभेद
स्यैवदर्शनात् ॥ अपृथग्दृष्टिनियमाद्बलज्ञानादिकस्यच ॥ ऐक्यंबाह्यविशेषाणांपृथग्दृष्टेश्चै
वतन्नतु ॥ विशेषहेत्वभावेपिद्वैविध्यंकल्प्यतेयदि ॥ कल्पनागौरवाद्यास्तुदोषास्तत्रातिसंग

दाः ॥ नैकत्वंनापिनानात्वंनियमादस्त्यचेतने ॥ भेदाभेदावनुभवादतस्तत्रान्यथागतेः ॥
एकोहमन्यतोन्यश्चेत्येवमेवव्यवस्थितौ ॥ भेदाभेदौचेतनेषुतस्मान्नैकप्रकारता ॥ एकमित्येवय
ज्ज्ञातंबहुत्वेनैवतत्पुनः ॥ पटाद्यंज्ञायतेयस्माद्भेदाभेदौकुतोननतत् ॥ तंतुभ्योन्यःपटःसाक्षा
त्कस्यदृष्टिपथंगतः ॥ अनन्यश्चेत्तंतुभावेपटाभावःकुतोभवेत् ॥ नचात्मनिविशेषोत्रदृष्टांत
त्वंगमिष्यति ॥ शुद्धोहंप्रत्ययोयस्मात्तत्राभेदप्रदर्शकः ॥ अत्रावयवभेदेनस्यादेवह्यवनस्थि
तिः ॥ नचानवयवंवस्तुक्वचित्स्यान्मानगोचरम् ॥ पूर्वापरादिभेदेनयतोंशोस्यावगम्यते ॥
उपाधिरप्येकदेशसंबद्धःसंतमेवहि ॥ ज्ञापयेद्भेदमखिलंग्रसन्सविभजेत्कथम् ॥ तस्माद्गुणादिक
मपिनास्त्यनंशतयाक्वचित् ॥ भावाभावव्यवहृतेर्विद्यमानेपिवस्तुनि ॥ भेदाभेदौगुणादेश्चजडेव
स्तुनिसंस्थितौ ॥ चेतनेशक्तिरूपेणगुणादेर्भावइष्यते ॥ सुप्तोयंबलवान्विद्वानित्यादिव्यवहार
तः ॥ नचैवंशक्तिरूपेणजडेव्यवहृतिःक्वचित् ॥ एकमेवाद्वितीयंनेहनानास्तिकिंचन ॥ मृत्योः
समृत्युमाप्नोतियइहनानेवपश्यति ॥ यथोदकंदुर्गेवृष्टंपर्वतेषुविधावति ॥ एवंधर्मान्पृथक्पश्यंस्ता
नेवानुविधावति ॥ इत्यादिश्रुतिमानाच्चपरमैश्वर्यतस्तथा ॥ सर्वंतुघटतेविष्णौयत्कल्याणगुणा
त्मकमित्यादिब्रह्मतर्के ॥ कमलासनेब्रह्मणिस्थितंरुद्रम् ॥ विष्णुंसमाश्रितोब्रह्माब्रह्मणोंकगतो
हरः ॥ हरस्यांगविशेषेषुदेवाःसर्वेपिसंस्थिताइतिपाद्मे ॥ द्यावापृथिव्योरंतरमेकेनैवरूपेणव्याप्त
म् ॥ नांतंनमध्यमित्युक्तत्वात् ॥ पुनरनादिमध्यांतमितिगुणानंत्यापेक्षया ॥ त्वयाततंविश्वमनं
तरूपेतिकालापेक्षया ॥ स्वयमंतंविद्यमानमपिनपश्यतीत्याशंक्यत्वयाततंविश्वमनंतमित्याह ॥

अन्यत्तात्पर्यज्ञापनायाभ्यामरूपम् ॥ सर्वंसमामोषिततोसिसर्वइतिसर्वंखल्विदंब्रह्मेत्यादिषुसर्वं
शब्दव्याख्यानरूपम् ॥ त्रिलोकेषुस्थितैर्भक्तैरर्जुनायप्रदर्शितम् ॥ दृष्टंविष्णोर्विश्वरूपंस्वयो
ग्यत्वानुरूपतः ॥ प्रायःसहैवपार्थेनप्रायोभीताश्चतेखिलाः ॥ दर्शनाभ्यासतोदृष्टिरानंदोद्रेकदा
भवेत् ॥ तस्मिन्कालेतुभूमेश्चभारहारार्थमुद्यमात् ॥ उग्रत्वमिवसर्वत्रनभीतिर्ब्रह्मदर्शिनाम् ॥ अ
र्जुनादधिकायेतुतेषांभीतिर्नचाभवत् ॥ श्रीब्रह्मरुद्रपूर्वाणांकृष्णाथाभीमरामयोरित्याग्नेयवचना
द्दृष्ट्वाद्भुतंरूपमित्यादियुज्यते ॥ मुक्ताःसुरसंघाविशंति ॥ प्रवेशोनिर्गमश्चैवमुक्तानांस्वेच्छयाभवे
दितिब्रह्मांडे ॥ अन्यचेष्टांकुर्वतामपिभगवच्चेष्टयैवप्रलयोदकेप्रजानांप्रवेशवत्प्रवेशोयुज्यते ॥
सेनामध्यतोभगवन्मुखानामुभयाभिमुखत्वाच्चोभेसेनेतत्रप्रविशतः ॥ येतुतस्मिन्मुहूर्तेमरिष्यंति
तेषांदशनांतरेचूर्णितमपिशिरःसूक्ष्मदृष्टिगोचरत्वान्मानुषदृष्ट्यातथानदृश्यते ॥ यथाभिन्नमपि
घटादिकंयावत्पृथङ्नपततितावन्मंददृष्टीनांनज्ञायते ॥ यथापुरूरवसोजराऽश्विभ्यामेवदृष्टा ॥
विशेषगुणकर्मविषयएवप्रश्नः ॥ विष्णवितिसंबोधनात् ॥ कालःकलितसंपूर्णसद्गुणत्वाज्जनार्द
नः ॥ संहारात्सर्वंवित्त्वाद्वासर्वंविद्रावणेनवेतिमहावाराहे ॥ अपिशब्देनभ्रात्रादीनप्यूते ॥
जयद्रथस्यपितुर्वरादेवविशेषः ॥ निहतानिहतप्रायाः ॥ पश्चादर्जुनेपिस्थित्वासएवहनिष्यति ॥
वायुर्बलज्ञानयोगाच्छशांकोतिसुखांकितः ॥ इंद्रःसपरमैश्वर्यादितिनानाभिधोहरिरितिच ॥
एकःसर्वोत्तमोप्यसत्कृतः ॥ एकःसर्वाधिकोज्ञेयएकएवकरोतियदितिच ॥ तेनैवरूपेणभवेत्य
नंतरूपगोपनेनतदेवप्रकाशयेत्यर्थः ॥ पंचाननंचिंत्यमचिंत्यरूपंपद्मासनंगोपितविश्वरूपमितिवै

हायससंहितायाम् ॥ विश्वनामासभगवान्यतःपूर्णगुणःप्रभुरितिपाद्मे ॥ त्वदन्येननदृष्टपूर्वं
मित्यनेनतेनैवेंद्रशरीरेणदृष्टमितिज्ञायते ॥ त्वदन्येनेतित्वदवरापेक्षया ॥ तैरपितद्वन्नदृष्टमित्येव॥
विश्वरूपंप्रथमतोब्रह्मापश्यच्चतुर्मुखः ॥ तच्छतांशेनरुद्रस्तुतच्छतांशेनवासवः ॥ यथेंद्रेणपुरादृ
ष्टमपश्यत्सोर्जुनोपिसन् ॥ तदन्येक्रमयोगेनतच्छतांशादिदर्शिनइतिब्रह्मांडे ॥ वेदादिभिरपित्व
दवरेणैवंद्रष्टुमशक्यम् ॥ अन्यथादृष्टाद्भुतंरूपमित्यादिविरोधः ॥ स्वव्यक्तियतइतिस्वकंरूपम् ॥
विश्वरूपमज्ञानांस्वरूपवन्नदर्शयति ॥ एतदज्ञानामपितथैवदर्शयतीतिविशेषः ॥ अन्यथाद्रष्टु
मिच्छामितेरूपमितिविरुद्धंस्यात् ॥ परावरविभेदस्तुमुग्धदृष्टिमपेक्ष्यतु ॥ प्रादुर्भावस्वरूपाणां
विश्वरूपस्यचप्रभोः ॥ अन्यथानविशेषोस्तिव्यक्तिर्ज्ञव्यपेक्षयेतिच ॥ किंचिन्मनुष्यवद्दृश्यमा
नत्वान्मानुषम् ॥ येदर्शनकांक्षिणस्तैरपीदानींदृष्टंप्रायः ॥ ७ ॥ इतिश्रीमदानंदतीर्थभगवत्पादा
चार्यविरचितेश्रीमद्भगवद्गीतातात्पर्यनिर्णयेएकादशोऽध्यायः ॥ ११ ॥

हरिःॐ ॥ साधननिर्णयोत्र ॥ श्रियेजातःश्रियआनिरियायश्रियंवयोजरितृभ्योदधाति ॥ श्रि
यंवसानाअमृतत्वमायन्भवंतिसत्यासमिथामितद्रौ ॥ उपासितामुक्तिदासद्यएवह्यस्येशानाजग
तोविष्णुपत्नी ॥ याश्रीर्लक्ष्मीरौपलाचांबिकेतिह्रीश्चेत्युक्तासंविदग्घासुविद्येत्यादिश्रुतिभ्यः ॥
श्रीःसुतुष्टाहरेस्तोषंजनयेत्क्षिप्रमेवतु ॥ अतुष्टातदतुष्टिंचतस्माद्ध्येयैवसासदा ॥ अव्यक्तंप्रकृतिं
प्राहुःकूटस्थंचाक्षरंचताम् ॥ प्रधानमितिचप्राहुर्महापुरुषइत्यपि ॥ तांब्रह्ममहदित्याहुःपरंजीवं
परांचितिम् ॥ तस्यास्तुपरमोविष्णुर्यौब्रह्मपरमंमहदितिब्रह्मांडवचनाच्चाव्यक्तोपासनान्मोक्षाशंक

घापृच्छति॥ कूटस्थाक्षेरउच्यतइत्युत्तरवचनात्कूटस्थमचलमित्यत्राप्युक्तेरव्यक्तशब्दश्चितप्रकृति
वाची ॥ अन्यथायेत्वांपर्युपासतेयेचाप्यक्षरंतेषांकेयोगवित्तमाइतिभेदेनप्रश्नानुपपत्तिः ॥ परं
ब्रह्मपरंधामपवित्रंपरमंभवानितितेनैवोक्तत्वात् ॥ येतुतेमेयुक्ततमामताः मय्येवमनआधत्स्वेत्या
दौभगवतोक्तेप्यव्यक्तोपासकानामाधिक्यंवदंतितेत्वपलापकत्वादतीवसाहसिकाइतिसुशोच्या
एव ॥ नचलेत्त्वात्पदाद्यस्मादचलाश्रीस्ततोमतेत्याग्नेये ॥ सूक्ष्मत्वादप्रसिद्धत्वाणद्बाहुल्यत
स्तथा ॥ अनिर्देश्यौतथाव्यक्तावचिंत्यौश्रीश्चमाधवइतिनारदीये ॥ अविष्णुभैरतद्भक्तैस्तदु
पासाविवर्जितैः ॥ शपेदुपासिताप्येषाश्रीस्तांस्तद्धरितत्त्ववित् ॥ तद्भक्तस्तमुपास्यैवश्रियंध्या
यीतनित्यदा ॥ तेनतुष्टातुसाऽच्छिद्रंदद्याद्विष्णोरुपासनम् ॥ ततस्तद्दर्शनान्मुक्तिंयात्यसौ
नात्रसंशयः ॥ तथापिसर्वपरमांसर्वदोषविवर्जिताम् ॥ ज्ञात्वाश्रियंतत्परमंतत्पतिंपुरुषोत्तमम् ॥
विज्ञायोपासतेनित्यंतेनियुक्ततमामताः ॥ यतःक्लेशोधिकस्तेषांपृथक्श्रियमुपासताम् ॥ विष्णु
नासहिताध्यातासाहितुष्टिंपरांव्रजेत् ॥ अन्यथातुपुनर्विष्णोःश्रीपतित्वेनाचिंतनम् ॥ अच्छि
द्रमेवकर्तव्यमितिमुक्तिश्चिराद्भवेत् ॥तस्मादक्लेशतोमुक्तिःक्षिप्रंविष्णुमुपासतामितिपरमश्रुतिः ॥
युक्ततमाःसाधकतमाः ॥ विष्णोरन्यंनस्मरेद्योविनातत्परिवारताम् ॥ तदधीनतांवानन्ययो
गीसपरिकीर्तितइतिच ॥ अंतवत्तुफलंतेषामित्यादिनान्यदेवतोपासनायाःपूर्वंनिंदितत्वात् ॥
लक्ष्म्यास्त्वतिसामीप्याद्विशेषमाशंक्यतदुपासनाविषयएवप्रश्नःकृतः ॥ वैष्णवान्येवकर्माणि
यःकरोतिसदानरः ॥ जपार्चामार्जनादीनिस्वाश्रमोक्तानियानिच ॥ सतत्कर्मेतिविज्ञेयो

योन्यदेवादिपूजनम् ॥ कृत्वाहरावर्पयतिसतुतद्योगमात्रवान् ॥ तत्रपूर्वोविशिष्टःस्यादादिमध्यां
ततःस्मृतेः ॥ अवांतरेचनियमाद्विष्णोस्तद्दासतास्यथत् ॥ मनसावर्ततेन्योपियथाशक्तिहरिस्मृ
तेः ॥ पूर्वोक्तयोग्योभवतियदिनित्यंतदिच्छति ॥ असम्यग्ज्ञानिनोध्यानाज्ज्ञानमेवविशिष्यते॥
ज्ञात्वाध्यानंततस्तस्मात्तत्फलेच्छाविवर्जितम् ॥ तस्माज्ज्ञानाद्भवेन्मुक्तिस्त्यागाद्ध्यानयुतास्फु
टमितिच ॥ शांतिर्मुक्तिः ॥ अवैष्णवसर्वारंभपरित्यागी॥ सर्वारंभाभिमानत्यागेनफलत्यागेनभग
वत्समर्पणरूपेणचत्यागी ॥ सर्वकर्मफलत्यागंप्राहुस्त्यागंविचक्षणाः ॥ मयिसर्वाणिकर्माणिसंन्य
स्याध्यात्मचेतसेत्यादेः ॥ भक्तिंज्ञानंचवैराग्यमृतेयोनेच्छतिकचित् ॥ शुभाशुभपरित्यागीविद्व
द्भिःकीर्तितोहिसइतिच ॥ प्रायःसुखादिषुसमःप्रायोहर्षादिवर्जितः ॥ तथोच्यतेयथाल्पस्वोनिः
स्वइत्युच्यतेजनैः ॥ नहिमुख्यतयासाम्यंकस्यचित्सुखदुःखयोः ॥ नचहर्षादिसंत्यागोयावन्मु
क्तिःकुतश्चनेतिच ॥ हृतिर्मदादधर्मायहर्षोनामप्रकीर्तितइतिशब्दनिर्णये ॥ ऽयस्तेनप्रियाःसमस्ते
नातीवप्रियाः ॥ भक्तिस्तुऽयस्तेष्वप्युक्तैव ॥ यस्मान्नोद्विजतइत्यत्रापिसचेत्यनेनभक्तिरनुष
ज्यते ॥ धर्मसाधनंधर्म्यंतदेवामृतसाधनममृतंधर्म्यामृतम् ॥७॥ इतिश्रीमदानंदतीर्थभगवत्पा
दाचार्यविरचितेश्रीमद्भगवद्गीतातात्पर्यनिर्णयेद्वादशोऽध्यायः ॥ १२ ॥

हरिःॐ॥सर्वार्थसंक्षेपोयम्॥हिंसाहेतुश्चजीवस्यपरेणप्रेर्यतेचयत् ॥अव्यक्तादिशरीरंतुतत्क्षेत्रंक्षीय
तेत्रयत्॥इच्छाद्वेषःसुखंदुःखंदेहोऽध्यासिश्चचेतसः॥तद्विकाराइतिज्ञेयाश्चिद्रूपेच्छादिमिश्रिताः॥
विकारेच्छादिनिर्मुक्तश्चिन्मात्रेच्छादिसंयुतः ॥ मुक्तइत्युच्यतेजीवोमुक्तिश्चद्विविधामता ॥

चिन्मात्रद्वेषदुःखेचदेहोमिथ्यादृगात्मकः ॥ निषिद्धेच्छाचयत्रस्युर्नित्यासामुक्तिरासुरी ॥ चि
न्मात्रावैष्णवीभक्तिर्देहःसम्यग्दृगात्मकः ॥ सुखमिच्छानुकूलाचधृतिर्दैवीतिसामतेतिनारायण
श्रुतिः ॥ क्षेत्रज्ञोभगवान्विष्णुर्नह्यन्यःक्षेत्रमंजसा ॥ वेद्यसौभगवान्ज्ञेयोव्यक्ताव्यक्तविलक्षणः॥
सतुजीवेषुसर्वेषुबहिश्चैवव्यवस्थितः ॥ विलक्षणश्चजीवेभ्यःसर्वेभ्योपिसदैवच ॥ सर्वतःपाणिपा
दादिर्यतःपाण्यादिशक्तिमान् ॥ केशादिष्वपिसर्वत्रकृष्णकेशोह्ययादवः ॥ अणोरणुतरैरूपैःपा
णिपादादिसंयुतैः ॥ सर्वत्रसंस्थितत्वाद्वासर्वतःपाणिपादवान् ॥ सर्वेंद्रियाणांविषयान्वेत्तिसोप्रा
कृतेंद्रियः ॥ यतोतोनिंद्रियःप्रोक्तोयन्नभिन्नेंद्रियोथवा ॥ गुणैःसत्वादिभिर्हीनःसर्वकल्याणमू
र्तिमान् ॥ अन्यथाभावराहित्यादचरश्चरएवच ॥ चरणात्सर्वदेशेषुव्याप्तोणुर्मध्यमस्तथा ॥ सर्व
गत्वात्समीपेचदूरेचैवांतरेचसः ॥ अनंताव्ययशक्तित्वात्तदन्यत्रविरोधिनः ॥ संतिसर्वेगुणास्त
त्रनचतत्रविरोधिनइतिच ॥ नजीवस्यक्षेत्रज्ञनाम ॥ क्षेत्रज्ञएतामनसोविभूतीर्जीवस्यमायार
चिताअनित्याः ॥ आविर्हिताश्चापितिरोहिताश्चशुद्धोविचष्टेत्यविशुद्धकर्तुरितिभागवते ॥ अ
वएतद्योवेत्तीत्युक्तेजीवस्यापिकिंचिज्ज्ञानात्तत्प्राप्तेस्तन्निराकरणार्थंक्षेत्रज्ञंचापिमांविद्धीत्याह॥
अन्यथैतद्योवेत्तीत्युक्तेनैवसिद्धत्वात्क्षेत्रज्ञंचापीतिव्यर्थम् ॥ भेदपक्षेतुनामनिरुक्त्यर्थमेतद्योवे
त्तीति ॥ सर्वाभेदमपिकेचिद्वदंतीतिक्षेत्रंचज्ञश्चेतिव्युत्पत्तिंनिवारयति ॥ क्षेत्रज्ञंमांसर्वक्षेत्रेषु
स्थितत्वेनविद्धीत्यर्थः ॥ तत्पक्षेतुयोवेत्तीत्युक्तईश्वरस्यापिक्षेत्रज्ञत्वंसिद्धमेव ॥ सर्वाभेदविव
क्षायांचसर्वक्षेत्रमितिवक्तव्यंक्षेत्रेष्वितिव्यर्थम् ॥ नचतत्पक्षेमामित्यस्यकश्चिद्विशेषः ॥ किंत्वे

कएवक्षेत्रज्ञइतिवक्तव्यम् ।। यतश्चयत् ।। यतःपरमेश्वरानुमतेरिदंयातिप्रवर्ततेसचानुमंतायः ।।
अनुसारिणीमतिरनुमतिःप्रेरणरूपा ।। प्रेरणानुमतिःप्रोक्ताक्वचित्संवादउच्यते ।। प्रेरकत्वात्तुभ
गवाननुमंताप्रकीर्तितइतिच ।। उपद्रष्टानुमंताचेत्यनेनैवानुमतिरनुमंताचोक्तः ।। ज्ञेयंयत्तदि
त्यादिनायत्प्रभावइत्यपि।। चेतनाचित्तव्याप्तिः ।। संघातोदेहउद्दिष्टश्चित्तव्याप्तिस्तुचेतनेतिच ।।
तत्त्वज्ञानविषयस्यविष्णोरपरोक्षदर्शनंतत्त्वज्ञानार्थदर्शनम् ।।ज्ञायतेनेनेतिज्ञानम् ।। ज्ञप्तिर्ज्ञानमि
तिव्युत्पत्त्याएतज्ज्ञानमितिप्रोक्तमितिज्ञानसाधनंज्ञानंचोक्तम् ।। अनादीत्युक्तेस्वयंकारणंनभव
तीत्याशंकास्यादितितन्निवृत्त्यर्थमनादिमदित्याह ।। मुख्यतोगुणपूर्णत्वात्परंब्रह्मजनार्दनः ।। मू
र्तामूर्तव्यतीतत्वान्नसन्नैवासदुच्यतइतिच।।मूर्तंसदवगम्यत्वादज्ञेयत्वादसत्परम् ।। पुंसामर्थ्यादग
म्यत्वात्सर्ववेदप्रसिद्धितः ।। विलक्षणःसदसतोर्भगवान्विष्णुरव्ययइतिच ।। ज्ञानेनमुक्तौप्राप्यत्वा
ज्ज्ञानगम्यम्।।स्वयमेवात्मनात्मानंवेत्थेतिस्वज्ञेयत्वाज्ज्ञेयम्।।अन्यज्ञेयत्वस्यज्ञेयंयत्तदितिपूर्वमेव
सिद्धत्वात् ।। कर्तृकर्मविरोधवादिमतंनिराकरोत्युत्तरज्ञेयशब्देन।। स्ववेत्तावेदनंचस्वंस्वेनवेद्यश्चकेश
वः ।। परस्यवेत्तावित्तिश्चवेद्यश्चस्यात्परैःक्वचित् ।।तत्प्रसादंविनाकश्चिन्नैववेत्तुंहिशक्नुयात्।।स्ववेदने
न्यवित्तौवानासावन्यदपेक्षते ।। स्वप्रकाशइतिप्रोक्तस्तेनैकःपुरुषोत्तमः ।। जीवानांस्वप्रकाशत्वंत
त्प्रसादात्स्ववेदनमितिच ।। मद्भावायमयिभावाय ।। प्रकृतिंपुरुषंचेत्यत्रपुरुषशब्देनजीवपरयोः
प्रकृतिशब्देनचेतनाचेतनप्रकृत्योःस्वीकारायोभावपीति।।विकाराणांसत्वादीनांचोपादानत्वविवक्ष
याप्रकृतिसंभवत्वम्।। स्वातंत्र्यंतुपरमेश्वरस्यैव।।उपद्रष्टानुमंताचेत्यादिवक्ष्यमाणत्वात्।।गुणानांच

विकारत्वेप्यधिकविकारत्वविवक्षयान्येषांविकारांश्चगुणांश्चेतिपृथगुक्तिः॥ स्वदेहेंद्रियहेतुत्वंयज्जी
वस्यस्वकर्मभिः ॥ आप्तत्यविष्णुतत्त्वंतद्धेतुश्चित्प्रकृतिर्मता॥जीवस्यसुखदुःखानांभोगशक्तिप्र
दःसदा ॥ परमःपुरुषोविष्णुःसर्वकर्तापिसन्सदा ॥ विशेषकर्ताकेषांचिदुक्तोयद्वद्विकुंठपः ॥
उच्यतेसर्वपालोपिविशेषेणस्वकर्मणेतिच ॥ परमेश्वरस्यैवसर्वकर्तृत्वेपिभोक्तृत्वदानेदेव्याअ
ल्पप्रवृत्तिरितिदर्शयितुमुच्यतइतिस्थानद्वयेप्युक्तम् ॥ कर्तृत्वेपिसएवमुख्यहेतुः ॥ तथापिभो
क्तृत्वापेक्षयातस्याअधिकप्रवृत्तिरितिकर्तृत्वेहेतुःप्रकृतिरुच्यतइतिसर्वहेतुत्वेपिविष्णोःप्रकृतेर्जी
वंप्रतिभोक्तृत्वदानेऽल्पप्रवृत्तिरितिपुरुषोभोक्तृत्वेहेतुरुच्यतइतिविशेषहेतोरेवमुच्यते ॥ मुख्यत
स्तुसर्वहेतुत्वंविष्णोरेवेतिभावः ॥ पुरुषःप्रकृतिस्थइत्यत्रपुरुषशब्दोजीवे ॥ उभयोरपिपुरुषश
ब्देनपूर्वंप्रस्तुतत्वात् ॥ यथायोग्यमुपपत्तेः ॥ कार्यकारणसंबंधंभोगंचमिथ्येतिवदतांनिराकर
णायाह ॥ पुरुषःप्रकृतिस्थोहीति ॥ हीत्यनुभवविरोधंदर्शयतितेषाम् ॥ नहिज्ञानाज्ञानसु
खदुःखादिविषयस्यांतरानुभवस्यभ्रांतित्वंक्वचिद्दृष्टम् ॥ नचास्यमिथ्यात्वेकिंचिन्मानम् ॥ शरी
रमारभ्यैवह्यपरोक्षभ्रमोदृष्टः ॥ तत्रापिबलवत्प्रमाणविरोधादेवभ्रांतित्वंकल्प्यम् ॥ साक्षिसि
द्धस्यापिभ्रांतित्वांगीकारेयेनसर्वस्यभ्रांतित्वमभ्रांतित्वंचात्मनोवगतंतदपिप्रमाणमात्मैव ॥ व्य
वहारतोप्यस्तीत्यत्रप्रमाणाभावात् ॥ भ्रांतिरभ्रांतिर्वानकिंचित्सिध्यति ॥ अनुभवोभ्रांतइ
त्युक्तेभ्रांतत्वेप्रमाणंतत्प्रामाण्यंचकुतःसिद्ध्येत् ॥ व्यवहारतःसर्वमंगीकुर्मइत्युक्तेव्यवहारोव्यवह
र्ताचकुतःसिद्धः ॥ प्रतीतितइत्युक्तेसैवकुतः ॥ स्वतइत्युक्तेस्वस्यभ्रांतित्वेप्रतीतिंविनैवप्रती

तिरस्तीति भ्रांतिःस्यात् ॥ स्वाभावोपिस्यात् ॥ स्वयमस्तीतिच भ्रमःस्यात् ॥ निरालंबनोभ्रमो
नोपपद्यतइत्यस्यापि भ्रमत्वोपपत्तेः ॥ तत्प्रमाणमप्यप्रमाणमेव ॥ प्रमाणत्वभ्रमइतिनकिंचि
त्सिध्यति ॥ भ्रमइत्यस्यैवभ्रमत्वेन्यस्याभ्रमत्वमेवभवति ॥ सुखदुःखादिविषयंज्ञानमात्म
स्वरूपमेवेतितस्यभ्रमत्वेछद्मनाविनैवशून्यवादोभवति ॥ नहिरत्तिज्ञानविषयभ्रमज्ञानादिकंते
षामपि ॥ भ्रमस्यचाविद्याकार्यत्वांगीकारात् ॥ आत्मस्वरूपस्याप्यविद्याकार्यत्वंस्या
त् ॥ दुर्घटत्वंभूषणमित्युक्तेदुर्घटत्वंसुघटत्वंचोभयंभूषणमस्माकमित्युत्तरम् ॥ नहिप्रमाण
सिद्धस्यदुर्घटत्वेसुघटत्वेवापवादोदृष्टः ॥ दुर्घटत्वंभूषणमितिवदद्भिरात्मनोप्यविद्यात्वमंगीकृ
त्यतदयुक्तमित्युक्तेतत्रापिभूषणत्वंकिमितिनांगीक्रियते ॥ अतिसुकरत्वात् ॥ नचात्मनोप्य
विद्यात्वंवदतांतेषामुत्तरम् ॥ अतोनंतदोषदुष्टत्वाद्धीतिप्रसिद्धैवभगवतानिराकृताः ॥ अस्यजी
वस्यसदसद्योनिजन्मसुकारणंसत्वादिगुणसंगः ॥ स्वतंत्रकारणंतुपरमेश्वरएवेत्याह ॥ उपद्रष्टानु
मंतेति ॥ सर्वेभ्यउपरिद्रष्टायदुपद्रष्टृनामकः ॥ स्वातंत्र्यास्वानुकूल्येनमत्याप्रेरयतिस्मयत् ॥
अनुमंतेतिकथितःस्वयंप्रभुरजोहरिः ॥ महाशक्तिर्यतोविष्णुर्महेश्वरइतीरितः ॥ परमत्वाच्चतस्य
वह्यनुमंतृत्वमुच्यते ॥ सएवसर्वदेहेषुदेहिनोन्योव्यवस्थितइतिच ॥ मांविद्धिसर्वक्षेत्रेष्वितिदेहे
प्युक्तः ॥ तेनाहमेवसइतिदर्शयति ॥ द्विविधंपुरुषंचैवप्रकृतिंद्विविधामपि ॥ सहतत्तद्गुणैःसम्य
ग्ज्ञात्वापश्ययियःपुमान् ॥ सर्वथावर्तमानोपिनसभूयोभिजायते ॥ अनादियोग्यताभेदात्पुंसांद
र्शनसाधनम् ॥ नानैवतत्रविष्णोस्तुप्रसादाद्वैष्णवंवपुः ॥ स्वयंविज्ञायतेकिंचिच्छ्रूयतेकिंचिदन्य

तः ॥ तथाज्ञात्वाहरिंध्यात्वास्वांतःपश्यंतिकेचन ॥ ऋषयःकेचिद्दृषयोनारदाद्याबहिस्त्वपि ॥
देवाविष्णुप्रसादेनलब्धसत्प्रतिभावलात् ॥ सर्वंक्रमेणविज्ञायप्रतिभास्पष्टताक्रमात् ॥ पश्यंतिब
हिरंतश्चविष्णुंध्यानमृतेपितु ॥ येषांध्यानमृतेदृष्टिस्तेषांध्यानेपिदर्शनम् ॥ स्यादेवसांख्ययोगा
स्तेदेवाब्रह्माधिकोत्रच ॥ केचित्तुक्षत्रियवराअश्वमेधादिकर्मभिः ॥ यजंतोभक्तिमंतश्चयक्षभा
गार्थमागतम् ॥ श्रवणप्रतिभाभ्यांचस्मरंतःपुरुषोत्तमम् ॥ पश्यंत्यन्येतथान्येभ्यःसर्वंश्रुत्वानुम
त्यच ॥ उपास्यैवतुपश्यंतिनान्यथातुकथंचन ॥ ऋषीन्द्राज्ञस्तथारभ्यप्रतिभाभ्यधिकाक्रमात् ॥
यावद्ब्रह्माब्रह्मणस्तुप्रायोनाप्रतिभासितम् ॥ विष्णोःप्रीत्यर्थमेवास्यश्रोतव्यंप्रायशोहरेः ॥ अन्ये
षांश्रवणाज्ज्ञानंक्रमशोमानुषोत्तरम् ॥ अत्यल्पप्रतिभानत्वान्मानुषाःश्रुतवेदिनः॥सर्वेतेदर्शनात्त
स्मात्स्वयोग्यान्मुक्तिगामिनइतिच ॥ अन्येषामपिकिंचिच्छ्रवणेविद्यमानेपिमनुष्याणामत्यल्प
प्रतिभानत्वाच्छ्रुत्वान्येभ्यइतिविशेषणम् ॥ मनुष्याणांप्रतिभामूलप्रमाणापेक्षाप्रायोनसम्यगु
त्पद्यतेल्पाचेतिश्रुतिपरायणाइति ॥ अश्रुतप्रतिभायस्यश्रुतिस्मृत्यविरोधिनि ॥ विश्रुतानृषुजा
तंचतंविद्याद्देवसत्तमम्॥ यश्चस्वमुखमानेननबाधोदेहवान्पुमान् ॥ अष्टमानवतीस्त्रीचषण्णवत्यं
गुलौपुनः॥दशतालौसप्तपादौविद्यात्तौचसुरोत्तमौ ॥यावत्पंचांगुलोनंतद्देवमानंक्रमात्परम्॥पादेत्वं
गुलमात्रोनंतदूनंचतुरंगुलम्॥यावदेवोपदेवानांपादेचोनागुलंपुनः ॥ तावन्मनुष्यमानंस्यात्ततोध
स्त्वासुरंस्मृतम् ॥ द्विचत्वार्यधिकंतस्मात्षण्णवत्यंगुलादधः ॥ ज्ञेयमंगुलमानंतदुपदेवादिषुस्फु
टम् ॥ देवेष्ववरवज्ज्ञेयमृषीणांचक्रवर्तिनां॥ यावद्यावत्प्रियोविष्णोस्तावत्स्त्रीपुंस्वरूपिणः ॥ हरेः

सादृश्यमस्यस्यादनादिकमसुस्थिरमितिच ॥ क्षेत्रक्षेत्रज्ञसंयोगादित्यत्रक्षेत्रंश्रीः ॥ ममयोनिर्म
हद्ब्रह्मतस्मिन्गर्भंदधाम्यहमितिवक्ष्यमाणत्वात् ॥ अव्यक्तंचमहद्ब्रह्मप्रधानंक्षेत्रमित्यपि ॥ उच्य
तेश्रीःसदाविष्णोःप्रियानिर्दोषचिद्घना ॥ साहिनव्यज्यतेविष्णुरत्रक्षेतिमहागुणा ॥ जीवोत्तमा
चतेनैतैःशब्दैरेकाभिधीयते ॥ महान्ब्रह्माजीवमहान्परात्मप्रेरिताःक्रियाः ॥ अहंकर्तेतियेनायंजी
वोमंस्यत्यसौशिवः ॥ अहंकारइतिप्रोक्तोजीवाहंमतिकृद्यतः ॥ उमाबुद्धिरितिज्ञेयाशब्दादि
ज्ञानदायतः ॥ मतिदोमनउद्दिष्टइंद्रःस्कंदोपितत्सुतः ॥ श्रोत्रंतुश्रावयंश्चंद्रःस्पर्शोवायुसुतोमरुत्॥
चक्षुःसूर्यश्चक्षयतिजिह्वावारिपतिर्ह्वतेः ॥अश्विनौघ्राणमाघ्रातेर्वागग्निर्वचनादपि ॥ हस्तौवायुसु
तौज्ञेयौमरुतौहानिलाभयोः॥पादौतुविष्णुनाविष्टौयज्ञशंभूशचीसुतौ॥पदनादेववायुश्चभुक्तस्यैवा
प्ययाद्यमः ॥ संतत्युपस्थितिकृत्तैरुपस्थःसशिवोमनुः ॥ विनायकस्तथाकाशोनिरावृत्याप्रकाश
नात् ॥ प्रधानवायुजोभूतवायुर्नाम्नामरीचिकः ॥ अग्निश्चपृथिवीचैवप्रसिद्धौवरुणोजलम् ॥ अ
दनात्प्रथनाज्जन्मलयहेतोस्तथाभिधाः ॥ शब्दाद्याःपंचशिवजाःशब्दनात्स्पर्शनादपि ॥ रूपणाद्र
सनाच्चैवगंधनाच्चतथाभिधाः ॥ सुखंधृतिश्चेतनाचसुखनाद्विधृतेरपि ॥ चेतोनेतृत्वतश्चैवमुख्यवा
युःसरस्वती ॥ श्रीश्चेच्छाचैवसावायोःपत्नीत्वेवंधृतिर्मता ॥ इच्छादानात्तुसैवेच्छास्थानभेदात्तु
देवताः ॥ पृथक्पृथक्कथ्यंतेलक्ष्म्याद्याउदिताअपि ॥ दुःखद्वेषौकलिश्चैवद्वापरौब्रह्मणःसुतौ ॥
प्रवरावसुराणांतौसंघातश्चेतनाःपरे ॥ एतैरभिमतंयच्चतत्तन्नाम्नाभिधीयते ॥ चेतनाचेतनंत्वेतत्स
र्वंक्षेत्रमितीरितम्॥क्षितिरेतद्भगवतोयदतःक्षेत्रमीर्यते॥क्षिणोतित्रातिचैवैतदतोवाक्षेत्रमुच्यते ॥

क्षितिंकृत्वात्रातिचैतदतोवाक्षेत्रमीरितम्॥एतस्मात्क्षीणमेतेनत्रातमित्यथवापुनः॥इच्छाद्यानांक्षेत्रनाम्नामपिनामांतरंस्मृतम्॥विकाराइतियस्मात्तेविशेषविकृतिस्थिताः॥ विशेषात्क्रियतेयस्माद्विकारःकार्यमंतिमम्॥विगतंकारणंचात्रपुनर्नाशमृतेयतःतत्संबंधाद्विकाराख्यादिच्छाद्याअभिमानिनः॥एतत्सर्वंसर्वदेवनिर्दोषेणैवचक्षुषा॥प्रेरयन्नेवजानातितत्क्षेत्रज्ञोहरिस्तुतइतिच॥यस्यात्माशरीरमित्यादिश्रुतेश्चेतनस्यापीदंशरीरंकौंतेयेतिशरीरत्वोक्तिर्युज्यते॥सत्वंजीवःक्वचित्प्रोक्तःक्वचित्सत्वंजनार्दनः॥सत्वंनामगुणःक्वापिक्वचित्साधुत्वमुच्यतइतिशब्दनिर्णये॥तयोरन्यःपिप्पलंस्वाद्वत्तीतिसत्वमितिचपैंगिश्रुतिः ॥ जनीप्रादुर्भावइतिधातोर्जीवस्यापिशरीरव्यक्त्यपेक्षयाजनिर्युज्यते ॥ जीवेषुदुःखयोगादिरूपेणविनश्यत्स्वप्यतथाभूतम् ॥ दुःखयोगादिरूपेणजीवेषुविनशत्स्वपि ॥ दुःखयोगादिरहितःसर्वजीवेष्ववस्थितः ॥ गुणैःसर्वैःसमोनित्यंनहीनोहीनगोपिसन् ॥ इतिपश्यतियोविष्णुंसएवनतमोव्रजेदितिपाद्मे ॥ प्रकृत्यस्वयमेवप्रारभ्यविष्णुनाक्रियमाणानि ॥ विष्णोर्नान्यःपूर्वप्रेरकइति ॥ पूर्वंतुबादरायणोहेतुव्यपदेशादितिभगवद्वचनात् ॥ द्रव्यंकर्मचकालश्चेतिच ॥ स्वयंप्रकृत्याभगवान्करोतिनिखिलंजगत् ॥ नैवकर्ताहरेःकश्चिदकर्तातेनकेशवइतिचस्कांदे ॥ तेनेतिप्रस्तुतत्वादेवसिद्धम् ॥ अहंसर्वस्यप्रभवः ॥ सहिकर्ता ॥ कर्तारमीशंपुरुषंब्रह्मयोनिम् ॥ जन्माद्यस्ययतः ॥ मत्तएवेतितान्विद्धीत्यादिसकलप्रमाणविरोधश्चान्यथा ॥ प्रकृत्यैवचेतिचशब्दात्तेनैवेतिसिध्यति ॥ प्रकृतेनक्रियायोगंचशब्दःक्वचिदीरयेत् ॥ क्वचित्समुच्चयंब्रूयात्क्वचिद्धीर्लभ्यवाचकइतिशब्दनिर्णये ॥ प्रकृतेःकर्तृत्वंरचनानुपपत्तेश्चनानुमानमित्यादिभगव

द्वचनेननिरस्तम् ॥ नकृतेत्वक्रियतेकिंचनारइतिच॥ केवलप्रकृतेःकर्तृत्वांगीकारेचशब्दोऽप्यर्थः॥
ततएवचविस्तारमितिवाक्यशेषविरोधश्च ॥ अहंबीजप्रदःपितेतिवक्ष्यमाणमत्रापिक्षेत्रक्षेत्रज्ञ
संयोगादितिप्रकृतमितितेनापिविरोधः ॥ अचेतनंकरोतीतिस्वोक्तिविरोधश्च ॥ इच्छापूर्वंक्रिया
दानंकर्तृत्वंमुख्यमीरितमितिपैंगिश्रुतिः ॥ विकारलक्षणंकर्तृत्वंतुप्रकृतेरंगीकृतमेव ॥ तथापिल
क्ष्मीपरमेश्वरमुक्तचेष्टासुतदभावात्सर्वशइत्यस्यसंकोचप्राप्तिः ॥ अचेतनाश्रितंकर्मविकारात्म
कमीरितम् ॥ यत्तुकेवलचित्संस्थंप्रत्यभिज्ञाप्रमाणतः ॥ अविकारात्मकंज्ञेयंतच्चतत्प्राकृतंभवे
दितिच ॥ एकविष्ण्वाश्रितानांतुजीवानांभेदमेवयः ॥ ततःपरस्परंचैवतारतम्येनपश्यति ॥ वि
ष्णोरेवचविस्तारंजगतःसविमुच्यतइतिच ॥ शरीरस्थोजीवः ॥ स्वप्नेनशारीरमभिप्रहत्यासुप्तःसु
प्तानभिचाकशीतीतिश्रुतेः ॥ शरीरस्थस्तुसंसारीशरीराभिमतेर्मतः ॥ विष्णुःशरीरगोप्येषनशरी
रस्थउच्यते ॥ शरीराभिमतिर्यस्मान्नैवास्यास्तिकदाचन ॥ तद्गतानांतुदुःखानांभोगोभिमतिरु
च्यते ॥ तदभावान्नाभिमानीभगवान्पुरुषोत्तमइतिच ॥ अनादित्वान्निर्गुणत्वात्परमात्माजी
वोपिनकिमुतजडंनभवतीति ॥ शरीरोत्पत्तिलक्षणमप्यादिमत्त्वंपरस्यनास्तीतिविशेषः ॥ जीव
स्यहितदस्तीति ॥ सत्वादिगुणसंबंधश्च ॥ सर्वंकरोतिपरमात्मातथापिनलिप्यते ॥ वादिप्रसिद्ध
त्वादेवेष्टापूर्तंमन्यमानावरिष्ठमित्यादिवन्निषेधः ॥ कुर्वाणोपियतःसर्वंपुण्यपापैर्नलिप्यते ॥ ज
न्ममृत्यादिरहितःसत्त्वादिगुणवर्जितः ॥ विष्णुस्तद्विपरीतस्तुजीवोतस्तौपृथक्सदेतिच ॥ सएष

नेतिनेतीत्यादिच ॥ जीवानामचेतनप्रकृतेर्मोक्षंभूतप्रकृतिमोक्षम् ॥ ॥ इतिश्रीमदानंदती
र्थभगवत्पादाचार्यविरचितेश्रीमद्भगवद्गीतातात्पर्यनिर्णयेत्रयोदशोऽध्यायः ॥ १३ ॥
हरिःॐ ॥ क्षेत्रक्षेत्रज्ञसंयोगस्पष्टीकरणपूर्वकंत्रैगुण्यंविविच्यदर्शयति ॥ योनिर्भार्यातथास्थानं
योनिःकारणमेवचेतिशब्दनिर्णये ॥ अत्रयोनिर्भार्या ॥ तस्मिन्गर्भंदधाम्यहमितिवाक्यशेषा
त् ॥ एतेभ्यःसत्वादिगुणेभ्योन्यंकर्तारमीशंयदापश्यतितदैवायंनापुरुषः ॥ अन्यथापशुसमः ॥
नकेवलमन्यत्वेनपश्यन्ना ॥ तंकर्तारंविष्णुंकिंतुगुणेभ्यउत्तमत्वेनच ॥ कथंसएवना ॥ य
स्मान्मद्भावंसोधिगच्छति ॥ महालक्ष्मीरितिपराभार्यानारायणस्ययया ॥ प्रकृतिर्नामसाज्ञेया
प्रकर्षेणकरोतियत् ॥ तस्यास्तुत्रीणिरूपाणिसत्वंनामरजस्तमः ॥ सृष्टिकालेविभज्यंतेसत्त्वं
श्रीःसद्गुणप्रभा ॥ रजोरंजनकर्तृत्वाद्भूःसासृष्टिकरीयतः ॥ यदावेशादियंपृथ्वीभूमिरित्येवक
थ्यते ॥ जीवानांग्लपनाद्दुर्गातमइत्येवकीर्तिता ॥ एताभिस्तिसृभिर्जीवाःसर्वेबद्धाअमुक्ति
गाः ॥ सर्वान्बध्नंतिसर्वाश्चतथापितुविशेषतः ॥ श्रीर्देवबंधिकानॄणांभूर्दैत्यानांतथापरा ॥ ए
ताभ्योन्यंपरंचैवविष्णुंज्ञात्वाविमुच्यते ॥ सामर्थ्यातिशयादासांनैताभ्योविद्यतेपरः ॥ इति
यावद्विजानातितावत्तंनृपशुंविदुः ॥ तस्मादाभ्योधिकगुणोविष्णुर्ज्ञेयःसदैवचेतिमहाविष्णुपु
राणे ॥ रजसस्तुफलंदुःखमित्यत्रदुःखमितिदुःखमिश्रंसुखम् ॥ दुःखंदुरितिसंप्रोक्तंखंनामसु
खमुच्यतइतिशब्दनिर्णये ॥ कर्मणोराजसस्योक्तंदुःखमिश्रंसुखंफलम् ॥ अज्ञानजंतामसस्य
नित्यदुःखंफलंविदुरितिस्कांदे ॥ लोकस्थितान्प्रकाशादीन्प्रायोनद्वेष्टिनेच्छति ॥ स्वयंप्रकाशी

मोहोज्ञस्तथापिपुनरिच्छति ॥ विष्णोःप्रकाशंतंचापिनित्यभक्त्याभिसेवते ॥ सुखदुःखादिभा
वेपिविष्णुभक्तौसमःसदा । अर्थार्थंवाप्रियार्थंवानिंदादीनांभयादपि ॥ नविष्णुभक्तिह्रासोस्यकिं
तुसाम्यमथोन्नतिः ॥ अवैष्णवारंभवर्जीविष्णुंयातिनसंशयइतिच ॥ उदासीनवदित्युक्तेश्चनके
वलोदासीनत्वम् ॥ नेंगतइत्युदासीनवृत्तिनिषेधः ॥ सर्वारंभपरित्यागीतिविशेषप्रयोजनापेक्षया
पिनावैष्णवारंभइति ॥ इंगनंक्षणिकंकर्मदीर्घमारंभउच्यतइतिशब्दनिर्णये ॥ लक्ष्म्यादिभिःकृतो
बंधोयोऽनादिःपुरुषस्यतु ॥ तमत्येतीहयोविद्वान्सविज्ञेयोगुणात्ययीतिचप्रवृत्ते ॥ तत्कृतबंधा
त्ययात्तदधिकविष्णुप्राप्तेश्चतदत्ययीत्युच्यते ॥ यथाद्वारपालमतीत्यराजानंगच्छतीति ॥ ब्रह्म
णिभूयंब्रह्मभूयम् ॥ ब्रह्मेतिप्रकृतामहालक्ष्मीः ॥ अतीत्यत्रीणिरूपाणिमहालक्ष्मींप्रपद्यते ॥ त
यात्वनुगृहीतोसौवैष्णवोविष्णुगोभवेदितिच ॥ ब्रह्मप्राप्तोमत्प्राप्तएवभवतीत्याह ॥ ब्रह्मणोहीति॥
मदवियोगात्तस्याअपिमत्स्थएवभवतीत्यर्थः ॥ तथापिमत्प्राप्तिक्रमविवक्षयातदुक्तिः ॥ एकां
तिकस्यसुखस्यमोक्षस्य ॥ इतिश्रीमदानंदतीर्थभगवत्पादाचार्यविरचितेश्रीमद्भगवद्गीतातात्प
र्यनिर्णयेचतुर्दशोऽध्यायः ॥ १४ ॥ ॥ ॥

हरिःॐ ॥ त्रयोदशोक्तंविविच्यदर्शयति ॥ पृथङ्मूलंहरिस्तस्यजगद्वृक्षस्यभूमिवत् ॥ सत्वादि
युक्तेचिदचित्प्रकृतीमूलभागवत् ॥ अत्रापिचिदचिद्योगोवृक्षवत्संप्रकीर्तितः ॥ पृथिवीदेवतावत्त
द्धरिर्मृद्वदचेतना ॥ उत्तमत्वात्तुमूलानामूर्ध्वमूलस्त्वयंस्मृतः ॥ नीचास्ततोमहदहंबुद्ध्योभूतसं
युताः ॥ शाखाश्छंदांसिपर्णानिकाममोक्षफलेप्सतः ॥ कारणेषुस्थितंकार्यंऽयासंकार्येषुकारणम् ॥

णे ॥ तत्त्ववेदिषुकोपाच्चतमस्तेषांनदुर्लभम् ॥ अक्षागमानुमानांचस्वोक्तेरपिविरोधिनः ॥ यस्मा
त्ततोसुराज्ञेयाएवमन्येपिताहृशाः ॥ येतुविष्णुंपरंज्ञात्वायजंतेनान्यदेवताः ॥ प्रत्यक्षाद्यविसंवा
दिज्ञानादेवविमुक्तिगाइतिब्रह्मवैवर्ते ॥ निबंधायनीचस्थानेंधतमसिबंधाय ॥ सर्गाणांसुबहुत्वेपि
शुभाशुभफलाधिकौ ॥ देवासुराख्यौद्वावेवगंधर्वाद्यास्तदंतराः ॥ मुक्तिगाएवविज्ञेयादेवाएवविमु
क्तिगाइतिच ॥ विमोक्षायेत्यत्रवीत्युपसर्गादेवमोक्षनानात्वंज्ञायते ॥ देवासुरनरत्वाद्याजीवानांतु
निसर्गतः ॥ निसर्गोनान्यथैतेषांकेनचित्कचिदेववा ॥ देवाःशापबलादेवप्रह्लादादित्वमागताः ॥
अतःपुनश्चदेवत्वंतेयांतिनिजमेवतु ॥ हेतुतःसोन्यथाभावोरक्तनास्फाटिकेयथा ॥ अतोनित्यश्च
नाप्येषस्वभावविनिवर्तकः ॥ किंत्वाकम्प्यैवतंतिष्ठेद्देवसर्गस्ततोहिसः ॥ अशोच्यएवविज्ञेयोमोक्ष
योग्योहरेःप्रियइतिच ॥ ७ ॥ इतिश्रीमदानंदतीर्थभगवत्पादाचार्यविरचितेश्रीमद्भगवद्गीताता
त्पर्यनिर्णयेषोडशोऽध्यायः ॥ १६ ॥ ॥ ॥

हरिःॐ ॥ सदसत्कर्मविवेकः ॥ सत्वानुरूपाजीवानुरूपा ॥ अतोयेसात्विकश्रद्धास्तेसात्विकाइ
तिज्ञेयाअन्येन्यइति ॥ श्रद्धामयःश्रद्धारूपः ॥ श्रद्धास्वरूपंजीवस्यतस्माच्छ्रद्धाविभेदतः ॥
उत्तमाधममध्यास्तुजीवाज्ञेयाःपृथक्पृथक् ॥ स्वरूपभूताश्रद्धैवतमोगानांविमोक्षिणाम् ॥ शि
ष्यतेसंसृतिस्थानांश्रद्धारूपंमनोपरम् ॥ तत्रस्वरूपश्रद्धैवव्यज्यतेप्रायशःक्वचित् ॥ सात्विकस्य
तमोरूपाश्रद्धांतःकरणात्मिका ॥ सात्विकीतामसस्यापिभूयस्त्वात्तद्द्विविच्यते ॥ श्रद्धेत्यास्ति
क्यनिष्ठोक्तासायेषांदेवतोत्तमे ॥ विष्णौतद्भक्तबुद्ध्यैवरमाब्रह्मादिकेषुच ॥ तेसात्विकाइतिज्ञेया

अन्योन्यसंयुताःशाखामूलानितुसदैवतु ॥ विषयादर्शनीयत्वात्प्रवालसदृशामताः ॥ जगद्वृक्षोय
मश्वत्थोह्यश्ववच्चंचलात्मकः ॥ अव्ययोयंप्रवाहेणस्वसक्तज्ञानहेतिना ॥ विष्णोःसम्यक्पृथग्दृ
ष्टिनाभच्छेदनभाक्सदा ॥ अव्यक्तादिसमस्तंतुनेतिनेत्यादिवाक्यतः ॥ बोधेनैवपृथग्विष्णोःकृ
त्वामृग्यःसकेशवः ॥ तमेवाद्यंप्रपद्येतयदंशाभासकोह्ययम् ॥ जीवराशिःसमस्तोपिब्रह्मरुद्रेंद्रपूर्व
कः ॥ किंचित्सादृश्यमात्रेणभिन्नोप्यंशइवोच्यते ॥ ईश्वरस्तुयदात्वस्यशरीरंविशतिप्रभुः ॥ मनः
षष्ठानींद्रियाणिप्रकृतिस्थानिकर्षति ॥ शब्दादीन्प्रत्यथयदाजीवमादाययात्यतः ॥ गृहीत्वैतानि
संयातिवायुर्गंधानिवाशयात् ॥ भुंक्तेहरिःशुभान्भोगानिंद्रियेषुव्यवस्थितः ॥ पूर्णानंदोपिभगवा
न्क्रीडयाभुंक्तएवतु ॥ सौम्यत्वात्सोमनामासौसोममंडलगःसदा ॥ सएवाग्निस्थितोविष्णुर्नाम्ना
वैश्वानरःसदा ॥ सर्वेषांसनराणांयदुपजीव्यःसदैवच ॥ सएवव्यासरूपेणवेदांतकृदुदाहृतः ॥ ब्रह्म
रुद्रादयःसर्वेशरीरक्षरणात्क्षराः ॥ श्रीरक्षरात्मेत्युदितानित्यचिद्देहकायतः ॥ चेतनाचेतनस्यास्य
राशेःसंस्थापकत्वतः ॥ कूटस्थआत्मासाज्ञेयापरमात्माहरिःस्वयम् ॥ क्षराक्षरात्मनोर्यस्मादुत्तमः
ससदानयोः ॥ पुरुषोत्तमनामातःप्रसिद्धोलोकवेदयोरितिनारायणश्रुतिः ॥ ७ ॥ इतिश्रीमदानं
दतीर्थभगवत्पादाचार्यविरचितेश्रीमद्भगवद्गीतातात्पर्यनिर्णयेपंचदशोऽध्यायः ॥ १५ ॥

हरिःॐ ॥ देवासुरलक्षणम् ॥ येऽतिमानेनमन्यंतेपरमेशोहमित्यपि ॥ मिथ्याजगदिदंसर्वंभ्रम ॥२१॥
जत्वान्नतिष्ठति ॥ मिथ्यात्वान्नेश्वरोस्यास्तिपरेभ्योपिनजायते ॥ स्वस्मिन्नपितथान्यस्मिन्नि
यंतान्यइतीरिते ॥ प्रद्विषंत्यसुरास्तेतुसर्वेयांत्यधरंतमः ॥ अयोग्येशत्वकामाच्चलोभाच्चात्मसमर्प

स्तैरिष्टंविष्णुरेवतु ॥ श्रीश्वसाध्यक्षविद्याख्याब्रह्मेंद्राद्याश्वदेवताः ॥ विबुधत्वात्तुमन्वाख्याभुंज
तेप्रीतिपूर्वकम् ॥ व्यामिश्रयाजिनोयेतुविष्णवाधिक्येससंशयाः ॥ स्वरूपमात्रेदेवानांश्रद्धायु
क्ताश्वसर्वदा ॥ राजसास्तेतुविज्ञेयास्तैरिष्टंयक्षराक्षसाः ॥ दीनत्वाद्देवनामानोब्रह्मेंद्रादिसनाम
काः ॥ गृह्णंतियेहरिंत्वन्यदेवादिसममेवतु ॥ नीचंब्रह्माद्यनन्यंवामन्यंतेनेतिचाखिलम् ॥ तत्त
च्छ्रद्धायुतास्तेतुतामसाःपरिकीर्तिताः ॥ भूतप्रेतास्तुतैरिष्टंशिवस्कंदादिनामकाः ॥ साक्षाच्छि
वपरीवाराभुंजतेह्यतितामसाः ॥ मोक्षःसांकल्पिकःस्वर्गोभूतादित्वंफलंक्रमात् ॥ त्यक्त्वापिशा
स्त्रविहितंमिथ्याज्ञानविवर्जिताः ॥ भक्त्याविष्णुंयजंतेयेनिषिद्धाचरणोज्झिताः ॥ तेपियांतिह
रिंशास्त्रविधानस्थाःकुतःपुनः ॥ अशास्त्रविहितंघोरंतप्यंतेयेतपोजनाः ॥ दंभाहंकारसंयुक्ताः
कामरागबलान्विताः ॥ अकुशानपिलक्ष्म्यादीन्देवान्विष्णुपरायणान् ॥ विष्णुंचसर्वदेहस्थंक्
शत्वेनविजानते ॥ तेषामल्पगुणत्वेनकल्पनात्तेतमोध्रुवम् ॥ यांतिज्ञेयाश्वतेदैत्याःपिशाचावा
थराक्षसाः ॥ अन्नैश्वैवाथयज्ञाद्यैःप्रायोज्ञेयाइमेनराः ॥ सात्विकाःसात्विकान्कुर्युर्यस्मादन्येतथे
तरान् ॥ ॐतत्सदितियद्विष्णोर्नामत्रयमुदाहृतम् ॥ प्रसिद्धंवैदिकंतस्मात्कर्मतद्विषयंहिसत् ॥
तत्राश्रद्धाकृतंतस्मादसदित्येवकीर्त्यते ॥ विप्रावेदाश्वयज्ञाश्वयस्मादोताःपरस्परम् ॥ विहिताविः
ष्णुनातेनविष्णुरोमितिकीर्तितः ॥ ओतमस्मिन्निदंसर्वमितिचोक्तःसओमिति ॥ तस्मादोमिति
यज्ञादीन्प्रवर्तंतेहिवैदिकाः ॥ अनोंकृतंह्यासुरंस्याद्यत्तस्मादोंकृतंत्वपि ॥ ॐकारार्थंहरेःसम्यग्ज्ञा
नादासुरंभवेत् ॥ फलंत्वनभिसंधायतद्ब्रह्मस्यान्ममास्पदम् ॥ इतियत्क्रियतेकर्मतन्नामातोजनार्द

नः ॥ अभिसंधितंहितत्प्रोक्तंततंवास्वगुणैःसदेत्यादिच ॥ मयंप्रधानमुद्दिष्टंस्वरूपंकार्यमेवचेतिश
ब्दनिर्णये ॥ शास्त्रविहितमपिभगवच्छ्रद्धाविहीनमसदेवेतिवक्ष्यति ॥ अश्रद्धयाहुतमिति ॥ भ
गवच्छ्रद्धाविरहितत्वादेवचाशास्त्रविहितंभवति ॥ विष्णुभक्तिविधानार्थंसर्वंशास्त्रंप्रवर्ततइतिपैंगि
श्रुतिः ॥ स्थिराःस्थिरगुणघृतादयः ॥ कट्वादीनामप्यारोग्यरसार्थत्वेनसात्विकत्वमेव ॥ रस्यादी
नामपिराजसत्वमनारोग्यादिहेतुत्वे ॥ दुःखशोकामयप्रदाइत्युक्तेः ॥ सत्त्वंसाधुभावः ॥ भवतिहि
सोपिशुच्यन्नात् ॥ ह्यद्यंपश्चान्मनोहारिप्रियंतत्कालसौख्यदम् ॥ सुखंतुदीर्घसुखदंरस्यमभ्यास
सौख्यदमितिशब्दनिर्णये ॥ रूक्षंनीरसंतीक्ष्णंसर्षपादि ॥ यामांतरितपाकंतुयातयामइतीर्यते ॥
क्वचित्त्वगतसारंस्यान्नियम्यंयातमस्ययदितिच ॥ पूर्वंस्वादुपश्चादन्यथाजातंगतरसम् ॥ शुद्धभा
गवतानांतुस्वभावापेक्षयैवतु ॥ स्वादुत्वादिविजानीयात्पदार्थानांनचान्यथेतिसूदशास्त्रे ॥ यागा
त्तुराजसात्स्वर्गःसांकल्पिकउदाहृतः ॥ लोकःसदीनदेवानांसनाम्नांवासवादिभिः ॥ विष्णावश्र
द्धयाऽयोग्यकामाच्चैषांपुनर्भवेत् ॥ नरकंचविनायज्ञंराजसंनरलोकगाः ॥ निषिद्धंकर्मकुर्युश्चेदीयु
स्तेनरकंध्रुवम् ॥ कदाचित्सात्विकाःकुर्युःकर्मराजसतामसम् ॥ अन्येन्यच्चतथाप्येषांस्थितिःस्वा
भाविकीपुनः ॥ स्वंस्वंकर्मतुसर्वेषांसदैवस्यान्महत्फलम् ॥ अन्यदल्पफलंचैवबाहुल्यंतेषुलक्ष
णमितिपाद्मे ॥ मौनंमननम् ॥ युक्तैर्भगवदर्पणादियोगयुक्तेः ॥ युक्तैरितिदानादिषुसर्वत्रसमम् ॥
सत्संबंधित्वादेवकर्मादिसत् ॥ ॐतत्सदितिनाम्नांविष्णौप्रसिद्धत्वात् ॥ स्रवत्यनोंकृतंब्रह्मपरस्ता
च्चविशीर्यते ॥ अनोंकृतमासुरमितिश्रुतेरनोंकृतस्यासुरत्वप्रसिद्धेः ॥ अनर्थज्ञोदितोमंत्रोनिरर्थ

स्त्रातिमानतः ॥ यन्मंत्रस्तेनकथितोमंत्रार्थोज्ञेयएवतदितिपैंगिश्रुतेश्च ॥ तदर्थत्वेनफलानभिसं
धिपूर्वककर्मणएवसात्विकत्वाच्च ॥ तद्भक्त्यातत्स्मरणपूर्वकमेवकर्मसदन्यदसदेवेतिभावः ॥
राजसस्याप्यसदंतर्भावएव ॥ विष्णुश्रद्धारहितत्वात् ॥ सात्विकंमोक्षदंकर्मराजसंसृतिदुःखदम् ॥
तामसंपातदंज्ञेयंतत्कुर्यात्कर्मवैष्णवमित्याग्नेये ॥ ॐ ॥ इतिश्रीमदानंदतीर्थभगवत्पादाचार्यविर
चितेश्रीमद्भगवद्गीतातात्पर्यनिर्णयेसप्तदशोऽध्यायः ॥ १७ ॥ ॥ ॥ ॥
हरिःॐ ॥ सर्वाध्यायोक्तधर्मस्यसमासतोनिर्णयात्मकोनुक्तत्रैगुण्यवादीचायम् ॥ मनीषिणइत्यु
क्तत्वात्तेप्यनिंद्याः ॥ अतस्त्याज्यंदोषवदित्यस्यार्थःसंगंत्यक्त्वाफलंचेति ॥ द्रव्ययज्ञादीनांमध्ये
स्वोचितोयज्ञोविद्यादानादिषुस्वोचितंदानंस्वोचितंतपश्चसर्वैर्वर्णाश्रमिभिरन्यैश्चकार्यमेवेत्यर्थः॥
विष्णुनामस्वाध्यायोत्थानांसत्योपवासादितपश्च ॥ संगफलत्यागमृतेस्वरूपत्यागःकार्यइतिमि
थ्याज्ञानाख्यमोहात् ॥ स्वयज्ञादीन्परित्यज्यनिरयंयात्यसंशयमितिपाद्मे ॥ मोहंविनादृष्टदुःख
मित्येव ॥ दुःखशब्देनकेवलंमानसम् ॥ कायक्लेशस्यपृथगुक्तेः ॥ दुःखंतुमानसंज्ञेयमायासोबाह्य
उच्यते ॥ विशेषस्यविवक्षायामन्यथासर्वमेवत्वितिशब्दनिर्णये ॥ नद्वेष्टयकुशलंकर्मकेवलंदृष्टदुः
खदम् ॥ जन्मांतरकृतेपुण्येनसज्जेत्सात्विकश्चले ॥ यःसम्यक्तत्त्वविद्विष्णोस्तदर्पणधियैवतु ॥ फ
लेच्छावर्जितस्तस्यकर्मबंधायनोभवेत् ॥ बहुलंचेदल्पदोषंयावदेवापरोक्षदृगितिच ॥ अन्येषा
मिष्टम् ॥ अस्यतुत्यागित्वादेवनेष्टम् ॥ ज्ञानादेर्मोक्षभोग्याच्चनान्यत्स्यात्कर्मणःफलम् ॥ त्यागि
नस्तत्त्वसंवेत्तुरन्येषांतदृतेफलमितिच ॥ केवलकाम्यकर्मणांपरापेक्षयाप्यकरणमित्येतावांस्त्या

गात्संन्यासस्यविशेषइत्यत्यागिनांप्रतियोगित्वेनन्यासिनउक्ताः ॥ त्यागित्वंतेषामपिह्यस्ति ॥ परे
च्छयापियेकाम्यंकर्मकुर्युर्नतुकचित् ॥ न्यासिनोनामतेन्येभ्यःफलत्यागिभ्यउत्तमाइतिच ॥
कथितंपरमंसांख्यंकपिलाख्येनविष्णुना ॥ सेश्वरंदैविकंसाक्षाज्ज्ञेयमन्यदवैदिकमितिच ॥ अ
धिष्ठानंशरीरादि ॥ स्वातंत्र्यमीश्वरेवेत्तिनैवात्मनिकदाचन ॥ ईश्वराधीनमेवात्मस्वातंत्र्यंतु
जडान्प्रति ॥ तारतम्येनलक्ष्म्यादेर्जीवान्प्रतिचसर्वशः ॥ यस्तदर्थंसमुत्पन्नोयथारुद्रोयथाय
मः ॥ हत्वापिसइमाँल्लोकान्नहंतिननिबध्यते ॥ अज्ञस्तदर्थंजातोपिबध्यतेदैत्यवद्ध्रुवम् ॥
अपरोक्षदृङ्नजातोयस्तदर्थंमुक्तिगंसुखम् ॥ हसेत्तस्यपरोक्षज्ञःकिंचिद्दोषेणलिप्यतइतिच ॥
अस्वातंत्र्यज्ञानाद्धन्मीतिभावोप्यस्यनास्तीतिनहंति ॥ अन्यस्यभावोस्तीतिविशेषः ॥ बुद्धिर्य
स्यनलिप्यतइति ॥ रागान्नहंतिकिंतुधर्मबुद्ध्या ॥ स्वातंत्र्यंमन्यमानस्यरागाद्धर्मंचकुर्वतः ॥
तन्निमित्तस्तुदोषःस्याद्गुणस्तुस्यात्स्वकर्मजइतिच ॥ संप्रेरयतुरीशस्यकर्मस्वखिलचेतना ॥
ज्ञातृज्ञेयज्ञानरूपाप्रेरणासासएवयत् ॥ स्वरूपेणैवनित्यासाविशेषात्मतयाभवेत् ॥ विशेषोपि
स्वरूपेणनित्यश्चस्याद्विशेषतः ॥ स्वनिर्वाहकतायस्मान्नानवस्थाविशिष्टवत् ॥ विशेष्यस्य
विशिष्टस्याप्यभेदेप्यविवादिनि ॥ विशेषोस्त्वेवनात्रास्तिह्यनवस्थाकदाचन ॥ ज्ञातुरन्योहमि
तितुकस्याप्यनुभवोनहि ॥ अस्मिज्ञातैवाहमितिभेदस्तस्मात्तयोःकुतः॥ पश्यामीतिविशेषोयमि
दानींमेसमुत्थितः॥ इत्याद्यनुभवाद्भेदोनविशेष्यविशिष्टयोः॥ विशेषणंतुद्विविधंविशेषाख्यंतथेतर
त् ॥ विशेषमणयेद्येनप्रोक्तंतेनविशेषणम्॥विशेषोपिविशेषस्यस्वस्यैवगमकोभवेदित्यादितत्त्ववि

वेके॥संग्रहः पंचकरणानांसंक्षेपः॥ अधिष्ठानस्यकरणेंतर्भावात् ॥ दैवशब्दोदितेश्वरस्यैवमुख्यकर्तृ
त्वात्स्वतंत्रास्वतंत्रकर्त्रोः कर्तृशब्देनैवोक्तेस्त्रैविध्यम्॥ कर्मचेष्टा॥एवंगुणसंख्यानेपरमसांख्यशास्त्रे॥
अस्तित्वाद्भूतनामभ्यःसर्वजीवेभ्यएवच ॥ मुक्तेभ्योपिपृथक्त्वेनविष्णोःसर्वत्रगस्यच ॥ ऐक्येनच
स्वरूपाणांप्रादुर्भावादिकात्मनाम् ॥ तारतम्येनजीवानांभेदेनैवपरस्परम् ॥ जडेभ्यश्चैवजीवानां
जडानांचपरस्परम् ॥ तेभ्योविष्णोश्चसम्यक्तल्लक्षणज्ञानपूर्वकम् ॥ ज्ञानंसात्विकमुद्दिष्टंयत्साक्षा
न्मोक्षकारणम् ॥ विष्णोरन्यस्ययाथार्थ्यज्ञानंराजसमुच्यते ॥ यदिविष्णुंनजानातियदिवामिश्र
तत्त्ववित् ॥ अन्यथाकरणीयत्वात्कार्याख्यंजीवमेवयः ॥ अकार्यंब्रह्मजानातिसएवाखिलमित्य
पि ॥ एकजीवपरिज्ञानात्कृत्स्नज्ञोस्मीतिमन्यते ॥ युक्तिविज्ञानराहित्यात्स्वपक्षस्याप्ययुक्ततः॥
अयुक्ततामेवगुणंमन्यतेचाल्पदर्शनः ॥ अतत्त्वार्थंजगद्भुतेतत्त्वार्थज्ञानवर्जनात् ॥ समुख्यताम
सज्ञानीत्येकैकेनापिकिंपुनः ॥ सर्वै रेतैर्विशेषैश्चयुक्तःपापतमाधिकइतिपाद्मे ॥ पृथक्त्वेनतुयज्ज्ञा
नमित्यस्यव्याख्यानानाभावानित्यादि ॥ सर्वगतमेकमीश्वरंनजानातीत्येतावतैवराजसत्वम् ॥
एकस्यकृत्स्नवज्ज्ञानमेवतामसम् ॥ मुक्तत्वादिरूपेणान्यथाकरणीयत्वात्पराधीनत्वेनाल्पस्यजी
वस्यस्वातंत्र्यादिगुणपूर्णत्वात्कृत्स्नेनब्रह्मणैक्यज्ञानंचमहातामसम् ॥ किंपुनस्तावन्मात्रंसर्वमिति
ज्ञानम्॥ किंपुनस्तत्राप्येकजीवादन्यत्किमपिनास्तीत्यहेतुकंज्ञानंसर्वमपितामसम् ॥ किमुतदेवो
क्तलक्षणम् ॥ अतत्त्वार्थवत्सदसद्वैलक्षण्याद्यन्यथार्थकल्पनायुक्तमेवतामसम् ॥ किमुतदेवोक्तवि
शेषणैर्युक्तम् ॥ प्रायोल्पज्ञानमपितामसम् ॥ अज्ञानबहुलत्वात्किमुतदेवोक्तमिथ्याज्ञानबहुल

मित्यपुनरुक्तिः ॥ एकस्मिन्सर्वज्ञानंकार्येजीवेपूर्णब्रह्मेतिसक्तंज्ञानंनिर्युक्तिकंच ॥ अतत्त्वार्थक
ल्पनायुक्तमल्पज्ञानंचपृथक्पृथक्कृतामसानीतिवा ॥ मायावादेत्वेतानिसमस्तानि ॥ अन्यत्रा
पित्वहैतुकत्वादिकंविरुद्धवादेषुसमंसर्वेषु ॥ मयिसर्वाणिकर्माणिसंन्यस्याध्यात्मचेतसोयुक्तत्वा
त् ॥ येमेमतम् ॥ येत्वेतदितिच ॥ तस्यमोक्षसाधनस्याकरणेप्रत्यवायस्याचोक्तेर्भगवदर्पितत्वेन
सर्वकर्मकरणंतस्यविष्णोःसर्वपरमत्वज्ञानंचनियतमेवेतिज्ञायते ॥ अध्यात्मचेतसेत्युक्तत्वात्तत्स्व
रूपयाथार्थ्यज्ञानादि ॥ येतुसर्वाणिकर्माणीत्येतस्मिञ्छ्लोकेऽध्यात्मचेतस्त्वस्य मत्पराअनन्ये
नैवयोगेनध्यायंतइतिव्याख्यातत्वात् ॥ एवंसर्वमपिभगवद्भक्तियुक्तमेवसात्विकम् ॥ सर्वस्य
भगवदधीनत्वज्ञानादेवानहंवादी ॥ भगवद्भक्तिसामर्थ्यात्प्रकृष्टोनकृतोह्ययः ॥ सप्राकृतोदीर्घ
सूत्रीकुर्यात्पश्चादितिस्मरन्निितिशब्दतत्त्वे ॥ प्राप्तकालस्यकर्मणोदीर्घकालेनैवकृतिंसूचयन्दीर्घ
सूत्रीत्यर्थः ॥ अलसोदीर्घसूत्रीचसत्वयुक्तामसोमतः ॥ अयुक्तोराजसःस्तब्धःप्राकृतोनैकृतिः
शठः ॥ एकैकेनैवदोषेणप्रोक्तस्तामसतामसः ॥ दुर्नरत्वंचतिर्यक्त्वंतमश्चैतत्फलंक्रमादि
तिच ॥ किंचिद्यथावद्धर्मादीनयथावच्चपश्यति ॥ ययाबुद्ध्याराजसीसामिथ्यादृक्त्वेवतामसी
तिच ॥ वैष्णवोभक्तियोगोयस्तद्युक्तासात्विकीधृतिरितिच ॥ विहितविषयैवेत्यव्यभिचारि
णी ॥ स्वप्नंभयमित्यादिसर्वंनिषिद्धोपलक्षणम् ॥ तत्तत्सात्विकमेवस्याद्यद्यवृद्धाःप्रचक्षते ॥ निं
दंतितामसंतत्तद्राजसंतदुपेक्षितमितिभागवते ॥ महात्मानस्तुमांपार्थ ॥ अभयंसत्वसंशुद्धिरि
त्यादिनावृद्धाश्चोक्ताः ॥ विष्णोःप्रसादात्स्वमनःप्रसादात्सात्विकंसुखमितिपाद्मे ॥ सत्वंजीवजा

नम् ॥ मुक्तानांगुणातीतत्वात्पृथिव्यांदिविदेवेषुचेतिविशेषः ॥ यथेष्टंसंचरंतोपिमुक्ताभूम्यादि
गानतु॥ग्रामस्थाअपिनग्राम्यावैलक्षण्याद्धिसज्जनाः॥नराधमास्तामसेषुसात्विकास्तत्रराजसाः॥
दैत्यभृत्यामहादैत्यामुख्यतामसतामसाः ॥ राजसास्तुनरास्तत्रविप्राराजससात्विकाः ॥ तत्रस्थ
शुद्धसत्त्वास्तुपरहंसाःप्रकीर्तिताः ॥ हंसोबहूदःकुटिजोवनस्थोनैष्ठिकोगृही ॥ क्रमाद्रजोधिका
बाह्यंकर्मैषामधिकंयतः ॥ धर्माःपरमहंसानांब्राह्माएवशमादिकाः ॥ देवादेःकर्मबाहुल्यंनलिंगं
रजसःक्वचित् ॥ नहिविष्णोश्चलेत्तेषांमनःकर्मकृतामपि ॥ अन्येषांचलचित्तत्वात्प्रायःस्यात्क
र्मराजसम् ॥ यदितत्स्मारकंविष्णोर्विद्यात्सात्विकमेवतु ॥ धर्मार्थहिंसनाग्निश्चविशेषोब्रह्मचा
रिणः ॥ पैतृकंचापियतिनोदारास्तुगृहिणस्ततः ॥ असंगोग्राम्यसंत्यागःपश्वाहिंसागृहस्थतः ॥
वनस्थस्यविशेषोयंसर्वेषामितरत्सममितिच ॥ सात्विकाःस्वल्परजसःक्षत्रियाःसत्वराजसाः ॥ वै
श्याःशूद्राअतिस्वल्पसत्वाधिक्येनतामसाः ॥ येतुभागवतावर्णास्तेषांभेदोयमीरितः ॥ सत्वाधि
कपुल्कसोपियस्तुभागवतःसदा ॥ त्रैविद्यमात्राविष्णोर्येसर्वाधिक्येससंशयाः ॥ अन्याधिक्यंन
मन्यंतेश्रीशाद्राजसतामसाः॥ अज्ञाविष्णोर्द्वेषहीनाःसर्वेराजसतामसाः॥पितृगंधर्वपूर्वाश्चमुनयोदे
वताइति ॥ सात्विकास्त्रिविधास्तत्रश्रेष्ठाएवोत्तरोत्तराः ॥ देवाइंद्रोविरिंचाद्याइतित्रेधैवदेवताः ॥
क्रमोत्तराःशिवोवाणीब्रह्माचैवोत्तरोत्तराः॥सत्वसत्वमहासत्वसूक्ष्मसत्वश्चतुर्मुखः ॥ यस्माद्यावद्धि
मुक्तिःस्यान्मुक्तावेवंसुखक्रमइतिच॥ विष्णौकिंचित्प्रीतियुक्तास्तामसमध्येसात्विकानराधमाइत्य
र्थः ॥ राजसानांमध्येसात्विकाएवभागवताविप्रादयः ॥ राजसस्थसात्विकेष्वेवशुद्धसात्विकाःकिं

चिद्रजोयुक्तसात्विकाःसमरजोयुक्तसात्विकाःसत्वात्किंचिदूनतमोयुक्तसात्विकाइतिवर्णभेदः॥स
त्त्वप्रधानत्वादेतानारभ्योत्तरोत्तरंसर्वेपिमोक्षयोग्याः॥सत्वात्संजायतेज्ञानमित्यादेः ॥ सत्वाधिको
मोक्षयोग्योयोग्योंधतमसस्तथा॥तमउत्तरोरजोभूयान्समोवासृतिपात्रकइति॥शमोदमस्तपःशौ
चंक्षांतिरार्जवमेवच॥ज्ञानंविज्ञानमास्तिक्यंविप्रकर्मस्वभावजम्॥एतेगुणाःकिंचिदूनाविप्रात्क्षत्रि
यएवच ॥ अधिकावाब्राह्मणेभ्यःकेषुचिच्चक्रवर्तिषु॥ऋषयस्त्वेवविज्ञेयाःकार्तवीर्यादयोनृपाः ॥
शौर्यंतेजोधृतिर्दाक्ष्यंयुद्धेचाप्यपलायनम् ॥ दानमीश्वरभावश्चक्षात्रियेन्येगुणाअपि ॥ क्षत्रियो
नब्रह्मगुणोवैश्यःकृष्यादिजीवनः॥ततऊनःशमाद्यैर्यःशुश्रूषुःशूद्रउच्यते ॥अधिकाश्चेद्गुणाःशूद्रेब्रा
ह्मणादिःसउच्यते॥ब्राह्मणोप्यल्पगुणकःशूद्रएवेतिकीर्तितः॥नरोपियोदेवगुणोदेवोज्ञेयोनृतांगतइ
तिच॥स्वकर्मणातमभ्यर्च्यैतिवचनात्क्षत्रियादिष्वपिशमाद्यनुवृत्तिर्ज्ञायते॥नहिशमादिकंविनात
स्याभितोर्चनंभवति॥सम्यक्शमादिभिरर्चनंह्यभ्यर्चनम्॥नचशमादीन्विनासिद्धिंविंदति॥यज्ञदा
नतपःकर्मनत्याज्यमित्युक्तत्वाच्च॥शमोमन्निष्ठताबुद्धेर्दमइंद्रियनिग्रहइतिभागवते ॥नचक्षत्रिया
दिभिरपिशौचतपःशमादिभिर्हीनैर्भवितव्यमितितत्त्वद्धर्मेषूच्यते॥युक्ताह्येतैःसर्वगुणैर्जनकतुलाधा
रादयः ॥ अतोयुद्धेऽपलायनमैश्वर्यंचक्षत्रियस्यविशेषगुणौ ॥ तौचकृष्यादयोजीवनार्थंशुश्रूषा
याजनंजीवनार्थंप्रतिग्रहश्चेत्येतएवान्येषांपरधर्माः ॥ शौर्यंतेजोधृतिर्दाक्ष्यंदानंचक्षत्रियेधिकाः ॥
तद्धीनाब्राह्मणेतस्माद्वैश्येशूद्रेततोल्पकाः ॥ अध्यापनंचशुश्रूषाजीवनार्थमृतेसताम् ॥ विप्रादि
षुक्रमाज्ज्ञेयाःशूद्रस्याध्यापनंविना ॥ तस्माच्छूद्रोल्पशुश्रूषुःस्वभावाज्जीवनंविना ॥ एतेनैसर्गि

काभावाःस्याद्भावोन्योपिकुत्रचित् ॥ बलाद्विरुद्धभावस्तुहेयःस्वाभाविकोपियः ॥ अनिसर्गो
पिहिशुभोवर्धनीयःप्रयत्नतः ॥ याजनैश्वर्यपूर्वास्तुनान्यैःकार्याशुभाअपि ॥ अपलायनंचशूद्रा
णांब्रह्मक्षत्रार्थमिष्यतइतिच ॥ प्रसह्यवित्ताहरणंशारीरोदंडएवच ॥ अशिष्याणांशासनंचतथै
वार्थविनाशनम् ॥ एषईश्वरभावःस्यान्नकार्यःक्षत्रियेतरैः ॥ सर्वेविधर्मिणःशास्याःक्षत्रियैर्यत्नतः
सदा ॥ अंगाद्यहानिकृद्दंडःशिष्येषुब्राह्मणादिभिः ॥ कार्योदेहेपिशिष्यश्चस्वामिनास्वेनवार्पितः ॥
पुत्रानुजादयःसर्वेशिष्याएवनिसर्गतः ॥ गुरवश्चैवमित्राणिसखिसब्रह्मचारिणः ॥ संबंधिनश्चसर्वे
पितत्तद्योग्यतयाखिलैः॥शिक्षणीयेषुभावेषुशिक्षणीयाःप्रयत्नतः॥उन्मादेबंधनाद्यैर्वाताडनंनगुरोः
क्वचित्॥पापंचरंतस्त्वन्येपिसर्वेदृष्टिपथंगताः॥शक्तितोवारणीयाःस्युर्देशकालानुसारतः ॥ तदुत्तम
विरोद्धारःसंत्याज्यागुरवोपितु॥यथाशक्त्यनुशास्यैवकालतोपिनचेच्छुभाः॥ विष्णोपरमभक्तस्तुन
त्याज्यःशास्यएवच॥शिक्षयंश्चगुरूञ्छिष्योगुरुवन्नैवशिक्षयेत्॥महांतोनानुशास्याश्चविरुद्धाचरि
ताअपि॥यदिचस्वाधिकानांतेविरोधंनैवकुर्वतइत्यादिच॥ आपत्सुविप्रःक्षात्रंतुविशांवाधर्ममाचरे
त्॥क्षात्रासिद्धौनशूद्रस्तुविप्रक्षत्रिययोःक्वचित्॥क्षत्रियोब्राह्ममापत्सुतदापत्सुविशामपि॥ क्षत्रि
योविप्रधर्मोपिनैवभैक्ष्यप्रतिग्रही॥वैश्यआपत्सुशौद्रंतुधर्ममेकंनचापरम् ॥शूद्रआपत्सुविड्धर्मांतदा
पत्सुचकारुकः ॥ शूद्रस्तुवैश्यधर्मोपिनैववेदाक्षरोभवेत् ॥ अत्यापदिक्षत्रियोपिपादशुश्रूषणंवि
ना ॥ शौद्रधर्मंचरन्विप्रक्षत्रियेषुनदुष्यति ॥ येषुकर्मसुयाच्यःस्यात्स्वामिनापिनयाचिता ॥ शौ
द्राण्यपिस्वधर्मत्वेक्षत्रियस्यापदोयदि ॥ आत्मनश्चेद्बलाधिक्यंसानुबंधादपिप्रभोः । धर्मार्थंसेव

तोर्थार्थैविप्रधर्मादिकादरः ।। प्रभुणाथाप्यवृत्तिस्तुविशेषेणापिधर्मभाक् ।। बाह्नोर्बलाधिकोयः
स्यात्क्षत्रियोविद्ययाधिकः ।। विप्रोभागवतौचैतौसेशाह्लोकास्तयोरिमइत्यादिव्यासस्मृतौ ।। नै
ष्कर्म्यंसिद्धिमनिष्टसर्वकर्मनाशाख्यासिद्धिम् ।।वक्ष्यमाणप्रकारेणवर्तमानस्तदनंतरंनैष्कर्म्यांसिद्धिं
प्राप्तोभूत्वाब्रह्माख्यायामहालक्ष्म्याःसकाशंयथाऽऽप्नोतितथानिबोध ।। ममयोनिर्महद्ब्रह्म ।। ब्र
ह्मणोहिप्रतिष्ठाहमित्युक्तत्वात् ।। ब्रह्मभूतःप्रसन्नात्मेत्युक्तामद्भक्तिंलभतेपरामितिवक्ष्यमाण
त्वाच्च ।। सर्वपापक्षयादेहंत्यक्तादेवान्क्रमाद्व्रजन् ।। प्राप्यलक्ष्मींतत्प्रसादात्पुनःस्पष्टाहरौयदा।।
भक्तिस्तयापुनर्ज्ञानेस्पष्टेविष्णुंप्रपद्यते ।। अपरोक्षदृशोविष्णोःशरीरेपिसतःपुरा ।। त्यक्तदेहादि
कस्यापियावद्विष्णुंप्रपद्यते ।। तावद्गुणाविवर्धंतेस्थिताःस्युःप्राप्यकेशवमितिमहावाराहे ।। विमु
च्यनिर्ममःशांतोनैष्कर्म्यसिद्धिंप्राप्तोभूत्वाब्रह्मणिभूयायभवतीत्यर्थः ।। विहितानिसर्वकर्माण्य
पिमद्व्यपाश्रयोभूत्वासदाकुर्वाणः ।। नहियथेष्टचरणेतात्पर्यमत्र ।। तथासतिविहितकरणेपिसम
त्वात् ।। मामनुस्मरयुध्यच ।। ततःस्वधर्मंकीर्तिंचेत्यादिप्रस्तुतविरोधः ।। अपिशब्दस्त्वेकमपि
कर्मतदाश्रयेणनकार्यमित्यर्थं ।। भगवत्संश्रितस्यत्रैविद्यस्यचमनसैवविशेषइत्याह ।। चेतसास
र्वकर्माणीति।।सएवसर्वस्मात्परमइतिभावोस्येतिमत्परः ।।तत्रचित्तवृत्तिनिरोधोपि।।बुद्धियोगःप्र
त्याहारादिः।।प्रकृतिरीश्वरेच्छा।।प्रकृतिर्वासनेत्येवतवेच्छानंतकथ्यतइतिवचनात्।।एषातुप्रकृत्येव
चकर्माणीत्यादिष्वपियुज्यते।।तस्याएवहिमुख्यतोनियोक्तृत्वम् ।। स्वभावकर्मादिभिर्बद्धा ।।तदे
वाह।।ईश्वरःसर्वभूतानामिति।।निश्चितार्थःसतुज्ञेयोयआत्मैवपरोक्षतः।।उच्यतेविष्णुनायद्वत्तद्वद्ब्रह्मे

त्यादिकथ्यतइतिशब्दनिर्णये॥मन्मनाइत्युपसंहाराच्च॥शाश्वतंस्थानंवैकुंठादि॥श्रीरेवलोकरूपेण
विष्णोस्तिष्ठतिसर्वदा॥अतोहिवैष्णवालोकानित्यास्तेचेतनाअपीत्याग्नेये॥नवर्ततेयत्ररजस्तमस्त
योःसत्वंचेत्याद्युक्तम्॥तत्त्वसारकथनंद्वाविमौपुरुषावित्यत्रैवोपसंहृतम्॥तत्त्वप्रशंसार्थमेवतद्बुद्धिप्र
शंसाकृता॥अत्रतुसाधनसारोपसंहारःसर्वगुह्यतममिति॥मन्मनाइत्यादेःपूर्वमेवोक्तत्वात्॥भूयइत्य
र्थतस्त्वत्रापिविष्ण्वाधिक्यमेवोक्तंभवति॥ अन्यसर्वधर्मान्परित्यज्येत्युक्तशेषत्वेनसर्वधर्मानितिव
चनम्॥मामेकंशरणंव्रजेत्यपि॥मन्मनाइत्याद्युक्तनियमनात्मनातद्व्याख्यानम्॥सर्वोत्तमत्वविज्ञाप
पूर्वंतत्रमनःसदा॥सर्वाधिकप्रेमयुक्तंसर्वस्यात्रसमर्पणम्॥अखंडात्रिविधापूजातद्रत्यैवस्वभावतः॥
रक्षतीत्येवविश्वासस्तदीयोहमितिस्मृतिः॥ शरणागतिरेषास्याद्विष्णौमोक्षफलप्रदेतिमहाविष्णु
पुराणे॥ अनादिजन्मकृतसर्वपापेभ्यः॥ अत्रप्राप्त्यभावात्॥ धर्मपरित्यागेपापपरित्यागस्यकै
मुत्येनैवसिद्धत्वात्॥ अतपस्कायैवनवाच्यम्॥ अशुश्रूषवेपुनश्चेतिदोषाधिक्यमशुश्रूषोर्दर्शयि
तुंचशब्दः॥ एवमभक्तायकदापिनवाच्यम्॥ कदाचिदल्पतपसोल्पशुश्रूषोरपिभक्त्याधिक्ये
वाच्यंभवतीतिकदाचनेतिशेषः॥ अभक्ताच्चनवाच्यमसूयोरितितत्रापिचशब्दः॥ समुच्चये
तथाधिक्येन्यूनत्वेचःप्रयुज्यतइतिशब्दनिर्णये॥ अभक्तादपिपापःस्यादसूयुर्दोषदृग्यतइतिचपा
द्मे॥ सोपिमुक्तः॥ नचतस्मान्मनुष्येष्वित्युक्तेश्चमुक्तानांमहत्तारतम्यंज्ञायते॥ मनुष्येष्वितिवि
शेषणात्तत्रापिदेवानामाधिक्यंच॥ मुक्तिर्ज्ञात्वापिविष्णुंस्याच्छास्त्रंश्रुत्वाततोधिकम्॥ मुक्तौसु
खंतत्पठतस्ततोप्यधिकमिष्यते॥ व्याख्यातुस्तुसमंमुक्तौसुखंनान्यस्यकस्यचित्॥ ततोधिकंतुदे

वानांमुख्यन्याख्याकृतोयतइतिच ॥ यथेच्छसितथाकुर्वित्याक्षेपपरिहारायकरिष्येवचनंतवेत्य
नुसरतिभगवंतम् ॥ ७ ॥ नमस्तेवासुदेवायप्रेयसांमेप्रियोत्तम ॥ समस्तगुणसंपूर्णनिर्दोषानंददा
यिने ॥ यस्यत्रीण्युदितानिवेदवचनेरूपाणिदिव्यान्यलंबट्तद्दर्शनमित्थमेवनिहितंदेवस्यभर्गो
महत् ॥ वायोरामवचोनयंप्रथमकंपृक्षोद्वितीयंवपुर्मध्वोयत्तुतृतीयमेतदमुनाग्रंथःकृतःकेशवे ॥
निःशेषदोषरहितकल्याणाशेषसद्गुण ॥ भूतिस्वयंभुशर्वादिवंद्यंत्वांनौमिमेप्रियम् ॥ ॥ इतिश्री
मदानंदतीर्थभगवत्पादाचार्यविरचितेश्रीमद्भगवद्गीतातात्पर्यनिर्णयेऽष्टादशोध्यायः ॥ १८ ॥
श्रीमद्भगवद्गीतातात्पर्यनिर्णयःसमाप्तः ॥





॥इति श्रीमद्भगवद्गीतातात्पर्यनिर्णयः॥२६॥

श्रीमन्मध्वहृदंतवर्तिश्रीलक्ष्मीनारायणायनमः ॥ ॥हरिःॐ ॥ चेतनाचेतनजगन्नियंत्रेशेषसंवि
दे ॥ नमोनारायणायाजशर्वशक्रादिवंदित ॥ कृत्वाभाष्यानुभाष्येहमपिवेदार्थसत्पतेः ॥ कृष्ण
स्यसूत्रानुव्याख्यासन्यायविवृतिंस्फुटम् ॥ करोमिमंदबुद्धीनांबुधानांचोपकारिकाम् ॥ प्रीत्यै
तस्यैवदेवस्यतत्प्रसादपुरःसरः ॥ जीवव्यतिरिक्तेश्वराभावात्तस्यचस्वप्रकाशत्वान्नजिज्ञास्यतेति
प्राप्ते ॥ अथातोब्रह्मजिज्ञासेत्याह ॥ तद्विजिज्ञासस्वतद्ब्रह्मेतिब्रह्मशब्देनपूर्णगुणत्वोक्तेर्नानुभव
सिद्धाल्पगुणजीवाभेदः ॥ अथकस्मादुच्यतेब्रह्मेतिबृहंतोह्यस्मिन्गुणाइतिश्रुतेः ॥ १ ॥ नजी
वएवायंब्रह्मशब्दः ॥ यतोवाइमानिभूतानिजायंतइत्यादिनाजन्मादिकारणत्वस्यैवब्रह्मलक्षण
त्वोक्तेः ॥ २ ॥ नचरुद्रादौसममेतल्लक्षणम् ॥ शास्त्रैकसमधिगम्यत्वात्कारणस्य ॥ ३ ॥ नचपा
शुपतशास्त्रोदितत्वादिशास्त्रप्रतिपाद्यत्वेकारणम् ॥ किंतूपक्रमादिलक्षणःसमन्वयएव ॥ ४ ॥
नचतस्यावाच्यत्वंश्रुत्यभिप्रायः ॥ सर्वेवेदायत्पदमामनंतीत्यादिश्रुतिसहितानुभवस्यबलवत्त्वा
त् ॥ नचावयवत्वविरोधः ॥ नेहनानास्तिकिंचनेतिश्रुतेरवयवाद्यभेदात् ॥ ६ ॥ नचब्रह्मेंद्रमग्निं
जगतःप्रतिष्ठांदिवआत्मानंसवितारंबृहस्पतिम् ॥ चतुर्होतारंप्रदिशोनुकॢप्तंवाचोवीर्यंतपसान्वविंद
दित्यादिशब्दानामन्यविषयत्वम् ॥ श्रुतिसंदेहेऽनन्यथासिद्धलिंगेननिर्णयोपपत्तेः ॥ ७ ॥ अधि
भूताध्यात्माधिदेवगतानामपिशब्दानामचेतनत्वजीवान्वयव्यतिरेकित्वनित्यत्वेषुविद्यमानेष्वपि
भगवद्विषयत्वमेवानन्यथासिद्धलिंगैः ॥ तावानस्यमहिमाततोज्यायांश्चपुरुषइत्यादिशब्दसहित
लिंगैश्च ॥ संदिग्धश्रुतिलिंगाभ्यामुक्ताभ्यामप्यसंदिग्धयोःकेवलयोरेवबलवत्त्वात् ॥ ११ ॥

नचानन्यथासिद्धत्वमन्यत्रश्रुतिर्लिंगादेः ॥ अन्यगतलिंगादीनामपितद्गतभगवदपेक्षयायुक्तेः
॥ १२ ॥ ॥ इतिश्रीमदानंदतीर्थभगवत्पादाचार्यविरचितेश्रीमद्ब्रह्मसूत्रानुव्याख्यान्यायवि
वरणेप्रथमाध्यायस्यप्रथमःपादः ॥ १ ॥ १ ॥ ॥ ॥
हरिःॐ ॥ बहुलिंगसहितश्रुतेरपिसावकाशायानिरवकाशश्रुत्यादीनामेवबलवत्त्वम्॥ बहवोह्यत्रा
दित्यशब्दाः ॥ क्षित्यादिषूक्त्वाआदित्येनुक्तिरित्यादिलिंगंच ॥ तथापिनिरवकाशाएतमेवेत्यवधार
णादयः॥१॥संदिग्धश्रुतिर्लिंगाभ्यांनिश्चितलिंगप्रकरणयोरेवबलवत्त्वम् ॥ संदिग्धश्रुतिर्लिंगंचादि
तिशब्दोऽदितित्वंच॥२॥द्विवचनश्रुतेरपिबलंनिरवकाशत्वंनास्ति॥ विष्णोरेवद्विरूपत्वात्॥३॥सो
हमस्मिसएवाहमस्मीत्याद्यभ्यासार्थवादसहितबहुश्रुतिभ्योपिनिरवकाशोपपत्तेरेवप्राबल्यम्॥४
पृथिव्यादिशरीरत्वंचननिरवकाशम् ॥ यौगिकशरीरत्वोपपत्तेर्विष्णोरपि ॥ ५ ॥ अक्षरात्परतःपर
इतिश्रुतेरपिनाक्षरात्संभवतीत्यस्यानिरवकाशत्वम् ॥ अक्षरात्परतःपरस्याप्यक्षरांतत्ववचनात् ॥
श्रुतिसाधारण्येविशेषश्रुत्यादेर्निश्चयः ॥ उभयत्रविशेषश्रुत्यादौपुनः ॥ सावकाशत्वनिरवकाश
त्वबलान्निश्चयः ॥ ७ ॥ इतिश्रीमन्न्यायविवरणेप्रथमाध्यायस्यद्वितीयःपादः ॥ १ ॥ २ ॥
हरिःॐ ॥ प्राणानांग्रंथिरसि ॥ रुद्रोवैलोकायतनम् ॥ वायुनावैगौतमसूत्रेणायंचलोकःपरश्चलो
कःसर्वाणिभूतानिसंदृब्धानिभवंति ॥ सर्वेवाएतेप्राणाश्चप्राणिनश्चदेवाश्चदिव्यानिचलोकाश्चलो
किनश्चालोकाश्चालोकिनश्चविष्णावेवोताश्चप्रोताश्चभवंतीत्यादेर्द्युभ्वाद्यायतनत्वमज्ञानांसाधार
णंलिंगम् ॥ १ ॥ प्राणोवाआशायाभूयान्विष्णुर्वैदेवेभ्योभूयांस्तस्माद्भूयान्नामेत्यादेर्भू

मशब्दोऽज्ञानांसाधारणः ॥ २ ॥ विष्णोश्चेतनप्रकृतेश्चाविनाशित्वसाम्यादक्षरशब्दःसाधारणः ॥ ३ ॥ कारणत्वसाम्याद्विष्णोरचेतनप्रकृतेश्चसदेवसोम्येदमग्रआसीदित्यादिसृष्टिस्थानंसाधारणम् ॥४॥ लिंगंहृत्पद्मस्थितत्वंसाधारणम्॥५॥ कथंनुतद्विजानीयामित्यानुकूल्येनग्रहणंकस्येतिविचार्यमनुग्रहः॥६॥ पुनःशब्दाईशानोवज्रोज्योतिराकाशइति॥७।१०।११।१२॥लिंगंस्वभादिदर्शनंकस्येति ॥ १३ ॥ शब्दोब्राह्मणइति ॥१४॥ यस्मिन्द्यौःपृथिवीचांतरिक्षमोतंमनओतंप्राणाओताइत्यत्रोक्तानांलिंगानामन्यत्ररुद्रादिविषयत्वेशब्दबाहुल्यम् ॥ प्राणानांग्रंथिरसिरुद्रोमाविशांतकः ॥ प्राणेश्वरःकृत्तिवासाःपिनाकीमनोवैरुद्रओतंचप्रोतंचरुद्रोवावलोकाधारइत्यादिकंशब्दबाहुल्यम् ॥ १ ॥ प्राणोवाआशायाभूयानित्युक्त्वाप्राणाद्भूयसोनुक्तिः ॥ २ ॥ अत्तेत्युक्त्वानतदश्नातिकिंचनेतिविरुद्धता ॥ ३ ॥ बहुस्यांप्रजायेयेत्यन्यस्यान्यभावादृष्टिः ॥ ४ ॥ दहरोस्मिन्नंतरआकाशस्तस्मिन्यदंतस्तदन्वेष्टव्यमित्यनेनयावान्वाअयमाकाशस्तावानेषोंतर्हृदयआकाशइत्यस्यान्वयाभावः ॥ ५ ॥ तदेतदितिमन्यंतेकथंनुतद्विजानीयामितितेषांसुखंशाश्वतमित्युक्तज्ञानिसुखग्रहणमितिविपरीतश्रुतिभ्रमः ॥ ६ ॥ ऊर्ध्वंप्राणमुन्नयतीत्यादिलिंगानांप्राणादन्यत्रावकाशराहित्यमितिभ्रमः ॥ एवमेवैषप्राणइतरान्प्राणान्पृथक्पृथगेवसन्निधत्तइत्यादिवाक्याद्भ्रमः ॥ ७ ॥ वज्रशब्दउद्यतत्वलिंगंचतादृग्द्वयम् ॥ १० ॥ आदित्यादिज्योतिष्ट्वमुभयलोकसंचरणमादित्येनैवायंज्योतिषास्तइत्यवधारणमित्यादीनांपरमात्मन्यवकाशाभावोबहुतादृक्त्वम् ॥११॥ वैनामेतिप्रसिद्धिद्योतकनिपातद्वयंरूढित्यागेनोक्तयौगिकार्थस्वीकारेविरोधि

॥१२॥जीवेश्वराभेदेईश्वरोक्तावप्यर्थाज्जीवएवोच्यतइत्यर्थात्तथागतिः ॥१३॥ ब्राह्मणशब्दस्य
पापालेपलिंगस्यचचतुर्मुखेनसहपरमात्मनोभेदंविनावकाशराहित्यादर्थादभेदप्राप्तिरितिसमस्तमे
तत् ॥ १४ ॥ तेषामेवलिंगशब्दानांप्राणानांग्रंथिरसीत्यादीनांविष्णौमुख्यवृत्तिरितिबलवत्त्वम्॥
तस्यहिरुग्द्रावणादिकर्तृत्वंमुख्यम् ॥ १ ॥ प्राणस्यविष्णोःसकाशाद्भूयस्त्वानुक्तिश्चशब्देनएषतु
वाअतिवदतियःसत्येनातिवदतीतिप्राणाद्विष्णोर्भूयस्त्वोक्तिश्च ॥ २ ॥ सर्वाधारप्रकृत्याधारत्वंवि
ष्णोरन्यस्यविरुद्धम् ॥ पतिंविश्वस्यात्मेश्वरम् ॥ विश्वात्मानंपरायणमित्यादिश्रुतेः ॥ अ
नशनोक्तिस्त्वनुपजीवनार्थत्वेनैवसावकाशा ॥ ३ ॥ अचेतनस्येक्षणादृष्टिः ॥ बहुभावश्रुति
स्त्वन्यभावंविनातत्तन्नियामकतयास्वरूपबहुत्वार्थत्वेनैवयुज्यते ॥ ४ ॥ आकाशपक्षएवान्वया
भावः ॥ विष्णुपक्षेतुयोन्वेष्टव्योभगवांस्तस्यांतर्हृदयेयावान्वाअयमाकाशस्तावानाकाशस्तस्मि
न्द्यावापृथिवीअंतरेवसमाहितेसभगवानपहतपाप्मेत्यन्वयः ॥ ५ ॥ यज्ज्ञानाच्छाश्वतंसुखंसभ
गवान्यद्ब्रह्मानिर्देश्यंसुखमितिवदंतितदेतत्स्वरूपमितिमन्यंते ॥ अतःपूर्ववादविपरीतैवश्रुतिः ॥
पूर्ववादोक्तयोजनातुभ्रमएव ॥ ६ ॥ लिंगानांपरमात्मन्यवकाशोविद्यतएवेतितद्राहित्यंभ्रमए
व ॥ वामनश्रुतेरेवानवकाशइतिईशानशब्दोक्तोविष्णुरेव ॥ ७ ॥ वज्रशब्दस्योद्यतत्वस्यचविष्णा
वेवावकाशः ॥ उद्यमित्वमेवोद्यतत्वमिति ॥ १० ॥ अयंपुरुषइतिसंसारी ॥ आत्मशब्दोदितए
वविष्णुः ॥ अतआदित्यादिज्योतिष्ट्वंसंसारिणएव ॥ आदित्येनैवेत्यवधारणंबाह्यज्योतिष्षुप्रा
धान्यापेक्षयेत्यादि ॥ लोकसंचरणंतुजीवमादायतस्यैवादुःखेनस्वातंत्र्यात् ॥ ११ ॥ वैनामेति

निर्वहितृत्वेश्रुत्यादिप्रसिद्धिबाहुल्यंप्रसिद्धाकाशस्योक्तमनामरूपत्वंविरुद्धम् ॥ सुषुप्त्युत्क्रांत्यो
जीवेश्वरयोर्भेदोक्तेरसंगत्वादिचेश्वरस्यैवेत्यर्थाद्भेदएवभवति ॥ जीवस्यतदयुक्तेरीशेसावकाश ११४
॥ ३ ॥ त्वाच्च ॥ १३ ॥ ब्रह्मणावेदेनगम्यतइतिब्राह्मणशब्दोविष्णावेवयुज्यतइत्यर्थादजशब्दोपित
स्मिन्नेव ॥ चतुर्मुखस्यकर्मफलाभावायुक्तेस्तयोर्भेदोर्थादापद्यते ॥ उक्तविरोधश्चतत्रैव ॥ भे
दश्रुतिबाहुल्यात् ॥ तल्लिंगंसशब्दश्चचतुर्मुखेऽनवकाशइतिसमस्तमेतत् ॥ इतिश्रीमन्न्यायवि
वरणेप्रथमाध्यायस्यतृतीयःपादः ॥ १ ॥ ३ ॥ ॥ छ ॥

हरिः ॐ ॥ अवरत्वादिधर्मनियंतृत्वंतत्तादात्म्यवत्त्वंचेतिद्विविधंह्यवरत्वादि ॥ निरनिष्ठोनिरवद्य
इत्यादिश्रुतेस्तत्तद्दोषतादात्म्यात्यस्पृष्टिनियमाद्विष्णोर्नामानिसर्वाणियमाविशंतीतिश्रुतिबलाच्च
नियंतृत्वमवरत्वादिकमित्यापतति ॥ श्रुतिद्वयस्यापिनिरवकाशत्वात् ॥ मृत्युशब्दादिषुप्रसिद्धे
श्च ॥ प्रसिद्धत्वात्कर्तृव्युत्पत्तेः ॥ तमेवमृत्युममृतंतातदैवंसर्वात्मनावैह्रिपरंपरायणमित्यादेश्च ॥
उपचारकल्पनायाश्चक्लिष्टत्वात् ॥ प्रमाणाभावाच्च ॥ नाव्यक्तादिशब्दानांपरमात्मविषयत्वांगी
कारेसर्वमाननिरोधः ॥ १ ॥ रूढोरूढियोगोमहायोगोमहारूढियोगोरूढोपचारोरूढलक्षणोपचारो
लक्षणेतिशब्दवृत्तिभेदाद्रूढिपूर्वकत्वेनमहायोगवृत्त्यापरमेश्वरेऽखिलशब्दव्युत्पत्त्युपपत्तेः ॥ बहु
रूपत्वादधिकरणाधेयत्वादितस्यैवयुज्यते ॥ व्यक्त्यपेक्षयाकार्यत्वंच ॥ इतिश्रीमन्न्यायविवर ॥ ३ ॥
णेप्रथमाध्यायस्यचतुर्थःपादः ॥ १ । ४ ॥ इतिप्रथमोऽध्यायः ॥ १ ॥ ॥छ॥

हरिःॐ ॥ रुद्रादीनांसकाशाद्विष्ण्वादीनामेवासत्त्वम् ॥ श्रुत्यनुसारित्वात् ॥ १ ॥ नश्रुतेरुद्रादि

स्मृतिसाम्यम् ॥ किंतुसाक्षिप्रत्यक्षसाम्यमेव ॥ निरपेक्षत्वात् ॥ २ ॥ नमृदादीनांवचनाद्यदृष्टिः
श्रुत्यप्रामाण्यकारणम् ॥अपितुवचनादिशक्तायादेवतायामृदादिशब्दवाच्यत्वद्योतिकैव ॥३ ॥
ईश्वरस्यस्रष्टृत्ववदसतोपिस्रष्टृत्वंश्रूयतइतिनास्ति॥सोऽसच्छब्दोब्रह्मशब्दवदेवब्रह्मवाचकइतिश्रु
तेःसाम्यम् ॥ ४ ॥ कर्माणिविज्ञानमयश्चआत्मापरेऽव्ययेसर्वएकीभवंतीतिश्रुतिबलान्नैक्यम् ॥
किंतुभेदापादकमेवैतत् ॥ निरंजनःपरमंसाम्यमुपैति ॥ परात्परंपुरिशयंपुरुषमुपैतिदिव्यमितिस
न्निहितवाक्यबलात् ॥ एकीभावशब्दस्तुसान्निध्येपिभवति ॥ एकीभूतानुसासेनापांडवानभ्यव
र्ततेतिवत् ॥ यथोदकंशुद्धेशुद्धमासिक्तंतादृगेवभवति ॥ एवंमुनेर्विजानतआत्माभवतिगौतमे
तिवाक्यांतराच्च ॥५॥ नलौकिकसर्वकार्यानुसारेणाकर्तृतंत्रत्वंसर्वानुसारः ॥ किंतर्हितद्वैलक्षण्ये
नसर्वकर्तृविलक्षणसर्वशक्तित्वमेवाशेषयुक्तिश्रुत्यनुसारि ॥ एषसर्वेश्वरइत्यादिश्रुतेः ॥ युक्तिमा
त्राच्छ्रुतियुक्ताहियुक्तिर्बलवती ॥६॥ नचेश्वरत्यागेनजीवस्यैवकर्तृत्वांगीकारेकल्पनालाघवम् ॥
श्रुतिसिद्धत्वेनाकल्पनात् ॥ अश्रुतजीवकर्तृत्वांगीकारेगौरवमेव ॥ तदभावेसिद्धांतेलघुता ॥
नान्यःकर्तासहिस्वतंत्रः ॥ परमात्परमोहरिरित्यादेश्च ॥ अभेदपक्षस्तुनिराकृतः॥श्रुत्यनुभवविरो
धाच्च ॥ ७ ॥ शब्दैकसमधिगम्यत्वसर्वशक्तित्वादीनांविशेषाणामदर्शनंजीवे ॥ नजीवाद्विशेषा
दर्शनंपरमेश्वरे ॥ विशेषश्रुतेरेव ॥ ८ ॥ नचप्रयोजनाभावोकर्तृत्वेकारणम् ॥ अशेषकर्तृत्वापवा
दकश्च ॥ फलापेक्षिणस्त्वपूर्णत्वादेवनसर्वकर्तृत्वादिशक्तिः ॥ इतरस्यपूर्णत्वादेवानंतशक्तित्वाल्ली
लयैवकर्तृत्वम् ॥ ९ ॥ नेशस्यपूर्णत्वासिद्धिः ॥ कर्मसापेक्षत्वेऽनीशत्वमनपेक्षत्वेश्रुतेरप्रामाण्य

मिति ॥ कर्मणोपितदधीनत्वम् ॥ तथापितदनुसारेणफलदानमित्यंगीकारएवइष्टश्रुतिप्रामाण्या
सिद्धिः ॥ १० ॥ सर्वचेतनाअपूर्णगुणाइतिनियमोन ॥ स्वतंत्रस्यचपूर्णगुणत्वनियमात् ॥ अपू
र्णोयंजीवसंघोऽस्वतंत्रःपूर्णोहरिर्यःस्वतंत्रःसदैव ॥ नहिस्वतंत्रोऽपूर्णतांकामयीतपूर्णोयदिस्या
दस्वतंत्रःकुतःसइतिश्रुतेः ॥११॥ इतिश्रीमन्न्यायविवरणेद्वितीयाध्यायस्यप्रथमःपादः॥२॥१॥
हरिःॐ ॥ उक्तविरोधिनस्तत्तत्समयसिद्धाःपूर्वपक्षन्यायास्तद्विरोधिनोन्यइतिप्रसिद्धाएव ॥ ॥
इतिश्रीमन्न्यायविवरणेद्वितीयाध्यायस्यद्वितीयःपादः ॥ २ ॥ २ ॥ ॥

हरिः ॐ ॥ नचवियतउत्पत्तिमत्त्वेनुभूतियुक्तिबहुवाग्विरोधोस्ति ॥ व्यवस्थायोगात् ॥ अव
काशमात्रस्याव्याकृतात्मकत्वादनुत्पत्तिवचनानांतद्विषयत्वम् ॥ उत्पत्तिवचनानामसितवर्णभू
तनदभिमानिशरीरविषयत्वम् ॥ पराधीनविशेषवत्त्वमात्रविषयत्वंचेतिव्यवस्था ॥ आकाशोनी
लिमोदेतिनप्रदेशःकथंचन ॥ अभावोहिप्रदेशस्यनह्यत्राभावइत्यपीतिपैंगिश्रुतिः ॥ १ ॥ ततो
धिकमेतत्सर्वमनुभूत्यादिविरुद्धत्वंवायूत्पत्ताविति नवायोरेवमुख्यानुत्पत्त्यनुपपत्तेः ॥ पराधीनवि
शेषमात्रंह्युत्पत्तिः ॥ तदभावेउभयोःस्वातंत्र्यंविरुद्धमेव॥सर्वोत्तमत्वानुपपत्तेः ॥ उभयोरपिपरा
धीनत्वप्राप्तेश्चान्योन्यानुरोधे ॥ अननुरोधेतुनसर्वैश्वर्यम् ॥ ज्ञानाविस्मृत्यावायावपिव्यवस्थेत्य
तिदेशः ॥ अनुपपत्तिस्तुतत्प्रापिका ॥ पराधीनविशेषवत्त्वमात्रंत्वव्याकृताकाशस्यतदभिमानि
प्रकृतेश्चसममेव ॥ २ ॥ नचसतःपराधीनविशेषवत्त्वंस्वातंत्र्यात् ॥ ३ ॥ नचविष्णोरेवतेजसउत्प
त्तौद्वारकारणवैयर्थ्यम् ॥ द्वारमनुसृत्यैवविष्णोःप्रवृत्तेः ॥ ४ ॥ नचतेजसएवापामुत्पत्त्यंगीकारेघ

मांस्वेदादिदृष्ट्यनुसारित्वमितिगुणाधिक्यम् ॥ मुख्यार्थपरित्यागप्रासेः ॥ ५ ॥ नचाद्भ्योवान्न
मुत्पद्यतइत्याद्युक्तप्रसिद्धान्नाख्यान्यार्थाविरोधेनप्रसिद्धान्ननामस्वीकारेबहुवाक्यानुवर्तितेतिगु
णः ॥ अन्नशब्दस्यप्रयोगबाहुल्यात्पृथिव्यामपिशक्तिमत्त्वात् ॥ अधिकारादीनांनिरवकाशत्वा
च्च ॥ बहुवाक्यानुरोधोप्यत्रैवेति॥६॥नचरुद्रादीनांलयकारित्वांगीकारेपितुरन्यस्यैवमारकत्वदृष्टे
र्लौकदृष्ट्यनुसारित्वमितिगुणः ॥ लोकपितृवैरूप्याद्विष्णोर्यथावाक्यमंगीकारोपपत्तेः॥अन्यथा
नविष्णोरन्योविलयकृन्नविष्णोरन्योविमुक्तिदइत्यादिश्रुतिविरोधात् ॥ रुद्रस्यतुकचित्संहारद्वा
रत्वेनैवतद्वाक्यानांसावकाशत्वात् ॥ ७ ॥ नचलोकानुसारित्वंक्रमादुत्पद्यतेक्रमाद्विलीयतेक्रमेणै
वोत्पत्तिर्विलयश्चक्रमेणैवह्यस्योत्पत्तिविलयावित्यादिलोकानुसारिबहुवाक्यानुरोधश्चयथोत्पत्ति
विलये ॥ द्विविधःक्रमउद्दिष्टोव्युत्क्रमोनुक्रमस्तथा ॥ सृष्टावन्योलयेचान्यइतिवेदविदोविदुरिति
श्रुतेः ॥ क्रमवाक्यस्यसावकाशत्वाद्वैरूप्यंबहुप्रकारत्वंक्रमस्य ॥ ८ ॥ नचकेषांचित्क्रमाल्लयः
केषांचिद्व्युत्क्रमाल्लयइत्यंगीकारेलोकदृष्ट्यनुसारादंतराविज्ञानमनसीव्युत्क्रमः ॥ सर्वंवाएतत्क
मादुत्पद्यतेव्युत्क्रमाल्लीयतइतिश्रुतौसर्वस्यापिव्युत्क्रमाल्लयसंग्रहात् ॥ तल्लिंगस्यतुचराचरव्य
पाश्रयविज्ञानादिविषयत्वेनैवसावकाशत्वात् ॥ ९ ॥ नचचेतनत्वेनसाम्याद्विष्णोरपिदे
हलयः ॥ सर्वेवाएतेचिदात्मानोब्रह्मँल्लयमनुप्राप्यविष्णोरुदरेसंविशंतीतितस्योदरेसर्वसंग्रहणा
दिश्रुतिभ्योनित्यत्वावगमात्तद्देहस्य ॥ अश्रुतत्वाच्चान्यथा ॥ १० ॥ नचानादित्वाज्जी
वस्यपराधीनविशेषाप्राप्तिः ॥ इदंसर्वमसृजतेतिसर्वस्मिन्गृहीतत्वात् ॥ पराधीनविशेषत्वेप्यनादि

त्वस्याविरोधात् ॥ ११ ॥ नचसर्वदेहस्पर्शज्ञानाद्रसादीनांचतत्रतत्रपरिज्ञानाज्जीवस्यानणुत्वम् ॥ उत्क्रांतिगत्यादेः ॥ आदिशब्देनसूक्ष्मतेजोरूपेणव्याप्त्यास्पर्शादिज्ञानोपपत्तिः ॥ अतोणुत्वमनणुत्वंचेतिभावः ॥ १२ ॥ नचजीवस्यबहुरूपत्वशक्तावीशेनगुणसाम्यम् ॥ ईशशक्त्यैवबहुरूपत्वादेः ॥ १३ ॥ नचश्रुत्याजीवेश्वरैक्यम् ॥ सर्वमानविरोधात् ॥ श्रुतेःसादृश्यैक्यादिनासावकाशत्वात् ॥ बहुमानविरोधेएकस्यदौर्बल्याच्च ॥ धर्मिग्राहकविरोधाच्च ॥ १४ ॥ नचोत्पत्तिमत्त्वाद्विनाशित्वंजीवस्य ॥ अनित्यत्वेतदभीष्टमोक्षाद्यसिद्धेः ॥ नहिपराधीनविशेषत्वमात्रेणविनाशित्वम् ॥ तादृशानामेवनित्यत्वश्रुतिविरोधात् ॥ १५ ॥ नचस्वगुणाननुभूत्यनुपपत्तेःपूर्वज्ञानादीनांसामस्त्येनाभावः ॥ पूर्वमव्यक्तानांपश्चात्सुव्यक्त्युपपत्तेः ॥ १६ ॥ नचेश्वरस्यैवकर्तृत्वेकल्पनालाघवम् ॥ जीवस्याकर्तृत्वेशास्त्रवैयर्थ्यात् ॥ तस्यापिकर्तृत्वेशास्त्रार्थासिद्धेश्च ॥ १७ ॥ नचनानाश्रुतेरप्रामाण्यम् ॥ दृष्टभेदानुसारेणतासामर्थोपपत्तेः ॥ अप्रामाण्यकल्पनस्यविपरीतज्ञानमूलत्वात् ॥ १८ ॥ नचवैचित्र्यमनाभासत्वेकारणम् ॥ जीवानांसामान्यतआभासत्वेपिविशेषादृष्टाद्वैचित्र्योपपत्तेः ॥ १९ ॥ इतिश्रीमन्न्यायविवरणेद्वितीयाध्यायस्यतृतीयःपादः ॥ २ ॥ ३ ॥

हरिः ॐ ॥ नचप्राणानामुत्पत्त्यंगीकारेप्राणाएवानादयइत्यादिस्पष्टार्थवद्विशेषश्रुतिविरोधः ॥ आत्मैवेदमग्रआसीत्सप्राणमसृजतसप्राणानित्यादिवचनादनादित्वएवस्पष्टार्थविशेषश्रुतिविरोधात् ॥ इदंसर्वमसृजतेतिसामान्यवचनस्याधिक्यंसिद्धांतेविशेषमात्रश्रुतेःसावकाशायाउभयश्रुतेःप्राबल्यात् ॥ १ ॥ नचनित्यंमनोनादित्वादितिविशेषश्रुतिविरोधः ॥ एतस्माज्जायतेप्राणोम

नःसर्वैंद्रियाणिचेतिविशेषश्रुतेः ॥ नचवाग्वावनित्येतिविशेषश्रुतिविरोधः ॥ मनसोवावचागुत्प
द्यतेवाचोव्याहरणमितिविशेषश्रुतेः ॥३ ॥ नचदशेमेपुरुषेप्राणाआत्मैकादशःसप्तप्राणाःप्रभवंति
तस्मादितिसंख्याविशेषश्रुत्योरेवपरस्परंविरोधः ॥ गुहाशयांनिहिताःसप्तसप्तेतिसप्तभावस्यबुद्धीं
द्रियविषयत्वेनविशेषितत्वात्संख्याश्रुत्योर्विषयवैलक्षण्यात् ॥ ४ ॥ नचदिवीवचक्षुराततमितिव्या
प्त्याख्यविशेषवाचकश्रुतिविरोधः ॥ अणूनिवाइंद्रियाणितेषांप्रकाशोव्याततइतिततोप्यणुत्ववाच
कविशेषश्रुतिविरोधात् ॥५॥ नचयत्प्राप्तिर्यत्परित्यागउत्पत्तिर्मरणंतथा ॥ तस्योत्पत्तिर्मृतिश्चैवक
थंप्राणस्ययुज्यतइत्यादिमाहात्म्यवचनान्मुख्यप्राणस्यनोत्पत्तिरितिवाच्यम् ॥ महत्त्वान्महतां
विष्णुःकर्ताप्राणस्यचैकराट् ॥ किंनामनसृजेदेषयेनशक्त्येदमावृतमितिश्रुतेस्ततोपिमाहात्म्या
द्विष्णोः ॥ ६ ॥ नचप्राणादिपंचकस्यव्यक्तसद्गुणत्वान्मुख्यप्राणवृत्तित्वमेव ॥ अशेषगुणपूर्णानि
मुख्यरूपाणिपंचच ॥ तद्दासाःपंचचान्येपिप्राणाद्याःसद्गुणैर्युताइतिश्रुतेर्मुख्यप्राणस्यततोपिव्य
क्तसद्गुणत्वात् ॥ ७ ॥ नचाणुत्वेप्राणस्यमहान्वैमुख्यप्राणोयेनव्याप्तंचराचरमितिदृष्टायुक्तिः ॥
अणुर्वैमुख्यप्राणोयउत्क्रामतिनाडीभिरितिदृष्टायुक्तिरनणुत्वेप्राणस्य॥८॥ नचेंद्रियाणांजीवाकर
णत्वेदृष्टायुक्तिः ॥ क्वचिदतद्वशत्वस्यापिदृष्टत्वात् ॥ यश्चक्षुषितिष्ठन्नित्यादिदृष्टायुक्तेरीशाधीन
त्वानंगीकारे ॥ लौकिकदृष्टेस्त्वीशेनैवजीवानुसारित्वकुम्भ्योपपत्तेः ॥ ९ ॥ नचेशवशत्वसाम्यान्मु
ख्यप्राणस्याप्यन्यसाम्यम् ॥ यदस्मिन्निदंसर्वमध्याभ्रौत् ॥ प्राणस्यैतद्वशेसर्वंत्रिदिवेयत्प्रतिष्ठि
तमित्यादिश्रुतेरीशसाम्यस्यापिभावात् ॥ प्राणस्यैतद्वशेसर्वंप्राणःपरवशेस्थितइतिश्रुतेर्मध्यमत्वो

पपत्तेः ॥ १० ॥ नचविरिंचस्यापिकर्तृत्वशक्तेः ॥ सएवशरीरादिस्रष्टा ॥ त्रिवृत्क्रियायतोविष्णो
रूपंचतदपेक्षया ॥ रूपापेक्षंतथानामव्यवहारस्तदात्मकः ॥ अतोरूपस्यनाम्नश्चव्यवहारस्यचै
कराट्॥हरिरेवयतःकर्तापितालोभगवान्प्रभुरित्यादेस्तस्यैवकर्तृत्वशक्तेः॥ विरिंचस्यतुद्वारतयोपप
त्तेः ॥ ११ ॥ नचमिश्रत्वाद्भूतानांविमिश्रतायामविशेषः॥ अन्नमशितंत्रेधाविधीयतइत्यादिना
मिश्रतायामपिविशेषोक्तेः ॥ सर्वंचभौतिकंमिश्रंमिश्रत्वेचविशेषिता ॥ भौमंमांसमसृग्वारितेजो
मज्जाविशेषतइत्यादेश्च ॥ १२ ॥ इतिश्रीमदानंदतीर्थभगवत्पादाचार्यविरचितेश्रीमद्ब्रह्मसूत्रानु
व्याख्यान्यायविवरणेद्वितीयाध्यायस्यचतुर्थःपादः ॥ २ ॥ ४ ॥ इतिद्वितीयोऽध्यायः ॥ २ ॥
हरिःॐ ॥ भूतबंधस्तुसंसारोमुक्तिस्तेभ्योविमोचनमितिवचनात्स्वाभाविकमरणमेवमुक्तिरितिन
मंतव्यम् ॥ मुक्तिसाधनत्वेनज्ञानादिगुणाधिक्योपदेशात् ॥ मरणेभूतवियोगस्यैवाभावात् ॥ भू
तयुक्तःपरंलोकमिमंलोकंचगच्छतीत्यादिवचनाच्च ॥ १ ॥ इतितुपंचम्यामाहुतावापःपुरुषवच
सोभवंतीत्यत्रभूतानीतिसामान्यनामानुक्त्वाऽऽपइतिविशेषनामकथनादपामेवसहगतिरितिनवा
च्यम् ॥ त्र्यात्मकत्वादपामर्थतःसर्वभूतानांगतिप्राप्तेः ॥ २ ॥ नचभूतानिगच्छंतीतिसहैवा
नुक्तेस्तदभावः ॥ प्राणगतेरुपपत्तितउक्तत्वात् ॥ ३ ॥ नचाग्निंवागप्येतीत्याद्यन्यथोक्तेः
प्राणानांचनसहगतिः ॥ द्विरूपत्वात्प्राणानाम् ॥ ४ ॥ नचप्रथमतोभूतानिजुह्वतीतिविशेषानु
क्तेर्भूतानामसहगतिः ॥ भूतानिजुह्वतीत्युपक्रमादपिइतितुपंचम्यामाहुतावापःपुरुषवचसोभ
वंतीत्युपसंहारस्याधिक्यात्तदनुसारेणोपक्रमोक्तश्रद्धाशब्दस्यापिताएवार्थइत्यापत्तेः ॥ उपक्रम

विरोधेनोपसंहारानुपपत्तेः ॥ उपक्रमप्रामाण्यार्थमेवोपसंहारानुसारित्वमंगीकर्तव्यम् ॥ व्याख्या
नस्यपश्चात्तनत्वानियमात् ॥ उपक्रमानुसारित्वनियमेप्युपसंहारस्योपसंहारेणैवोपक्रमार्थोज्ञाय
ते ॥ ५ ॥ नचविशेषाश्रवणमियमएवबलवान् ॥ स्थानांतरश्रवणस्याप्येतदनुरूपत्वात् ॥ आ
र्थिकश्रवणमप्यनुक्तिंबाधतएवकिमुस्थानांतरगतंस्पष्टश्रवणमितिकैमुत्यार्थमेवनेष्टादिकारिणां
प्रतीतेरितिपरिहारांतरमुक्तम् ॥ ६ ॥ नचापामसोमममृताअभूमेतिविशेषतएवमोक्षफलस्या
प्युक्तेःकर्मैवमोक्षसाधनमितिमंतव्यम् ॥ नान्यःपंथाअयनायविद्यते ॥ सयआत्मानमेवलोकमुपा
स्ते ॥ यावदिंद्रोयावन्मनुरित्यादिश्रुतिबलादमृतशब्दस्ययथायोग्यमेवार्थकल्पनोपपत्तेः ॥७॥
नचानुशयस्यसहभावात्स्वर्गएवफलदत्वंभुक्तशेषानुशयवानित्यादिवचनाद्यथायोग्यमेवफलदा
नोपपत्तेः ॥८॥ नचमार्गस्यापिसहभावाद्यथागतमेवागमनमितिनियमः॥ वचनबलाद्यथायोग्य
मेवागमनोपपत्तेः ॥ ९ ॥ नचेष्टापूर्तेदत्तमित्युपासतइत्युपशब्देनेष्टादिभिराचारस्यसहपाठाच्चरण
फलंपुनरावृत्तिंकरणफलत्वेनभ्रमाद्ददंतीतिवाच्यम् ॥ नान्यःपंथाइत्यादिवचनादेवोभयोरपिच
रणशब्देनैवोक्तेर्योग्यत्वात् ॥ १० ॥ नचभयफलकामादिमिश्रबुद्धित्वादिष्टादिकारिणांसंसारः॥
अनिष्टादिकारिणांतदभावान्मुक्तिरितिवाच्यम् ॥ तेषांप्रबलदोषश्रुतेः ॥ ११॥ नचनरकभोग
स्यानित्यत्वकथनान्नित्यनरकोक्तिर्विरुद्धा ॥ रौरवोथमहांश्चैववह्निर्वैतरणीतथा ॥ कुंभीपाकइ
तिप्रोक्तान्यनित्यनरकाणितु ॥ तामिस्रश्चांधतामिस्रोद्वौनित्यौसंप्रकीर्तिताविति विभागात् ॥१२॥
नचसहस्थानादीशस्यापिनरकदुःखप्राप्तिः ॥ स्वातंत्र्यात्कारणाभावात् ॥ १३ ॥ नचसाधनेन

सहश्रुतेस्तद्वत्फलेपिजीवस्यस्वातंत्र्यम्।। अविहितत्वेनकारणाभावात् ॥ अथैतयोःपथोरित्य
स्यचसाधनार्थत्वात् ॥ १४ ॥ नचदुःखसहस्थायित्वादंधेतमस्यपिसुखम् ॥ ईशस्याप्रियत्वेनैव
कारणाभावात् ॥ १५ ॥ नचधूमादिदेवतासहावस्थानात्कर्मिणोपितत्पदप्राप्तिः ॥ तन्निमित्तवि
द्याख्यकारणाभावात् ॥ १६ ॥ नचतैस्तैःसहावस्थानादतिचिरत्वम् ॥ वत्सरात्पूर्वमेवत्विति कूप
कालादधिकावस्थानेकारणाभावात् ॥ १७ ॥ नचव्रीह्यादिजीवैःसहानवस्थानाद्दुःखप्राप्तिः ॥ श
ब्दविहितत्वेनपापाख्यकारणाभावात्॥ १८ ॥नचवैयर्थ्यंपितृशरीरागमनेईशकृपयैवपितरंप्रविश्या
यातिमातरमितीशकृपत्ववचनात् ॥ १९ ॥ नचपितुःसकाशादन्यतोवोदर्यगर्भस्थशरीरमेवप्रवेष्टु
मुपपत्तेर्योनिप्रवेशाभावइतिवाच्यम्।।योनिद्वारेणदेहंचप्राप्नोतिप्रायशोनरइतिवचनात्सामान्यतो
गत्यंतराभावात् ॥ विशेषकारणादेवविशेषाज्जनिरिष्यते ॥ सामान्यजननंचैवनृणांसामान्यहेतु
तइतिवचनाच्च ॥ २० ॥ इतिश्रीमन्न्यायविवरणेतृतीयाध्यायस्यप्रथमःपादः ॥ ३ ॥ १ ॥

हरिःॐ ॥ पश्चाददृष्टेःस्वप्नविषयस्यासत्त्वंनवाच्यम्।।अशक्त्यकारणशक्तिमत्त्वादीश्वरस्यसंस्का
रेणसृष्ट्वापुनःसंस्कारमात्रतामापाद्यतस्यापितिरोधानोपपत्तेः ॥ जाग्रत्त्वप्रतीतिमात्रस्यभ्रांतित्वा
त् ॥ १ ॥ नचाविज्ञानमात्रेणस्वप्नप्रतीत्याज्ञानशक्त्यैवस्वप्नतिरोधानंनेशेनेतिवाच्यम् ॥ बोधेजी
वस्यास्वातंत्र्यात् ॥ ज्ञानाज्ञानयोस्तदन्यत्वेजडत्वात्कैमुत्येनास्वातंत्र्यात् ॥ तत्स्वरूपत्वेतेनैवव्या
ख्यातत्वात् ॥ उभयात्मकत्वेदोषद्वयापातात् ॥ अनुभयात्मकत्वेस्वव्याहतेः ॥ तावन्मात्रनिमि
त्तत्वेमानाभावात् ॥ सर्वस्येशवशत्वेमानाच्च॥२॥नचकालापेक्षयैवजागरितम् ॥ अचेतनत्वादेव

कात्स्न्य ॥ चेतनांतरस्याप्यस्वातंत्र्यात् ॥ ३ ॥ नचपरमात्मनोऽन्यत्रावस्थानेदुःखित्वप्रासे
नाडीषुसुप्तिर्नभवति ॥ उभयस्वीकारोपपत्तौमानस्यकुस्यकारणमित्यनवस्थितिदोषादतिप्रसंगा
त्॥४॥नचप्रबोधस्यपृथगपिकारणदृष्टेःक्वचित्तदेव ॥ नकृतेत्वत्क्रियतइतिश्रुतेस्तत्रापीशकृतत्वे
सम्यग्ज्ञानात् ॥ नचराजादीनांपृथग्दर्शनादीशांतरकल्पना ॥ देशकालाविशेषेपिस्वमादीनां
सएवहि ॥ तिरस्कर्ताचकर्ताचनखंडेशःसराजवदितिश्रुतिमानात् ॥ ६ ॥ नचमोहेब्रह्मप्रा
प्तिरेवपृथगवस्थानत्वादितिवाच्यम् ॥ परिशेषमानादर्थप्राप्तित्वावगमात् ॥ ७ ॥ नचस्थानभे
दाद्विष्णोरपिभेदः ॥ अयमेवसः ॥ नेहनानास्तिकिंचनेत्यादिश्रुतिबलात्स्थानानांभेदस्तस्या
भेदइतिव्यवस्थोपपत्तेः ॥ ८ ॥ नचरूपवत्त्वारूपवत्त्ववचनयोर्विरोधादप्रामाण्यम् ॥ अप्रा
कृतरूपवत्त्वमितिव्यवस्थोपपत्तेः ॥ ९ ॥ नचपरमात्मनोऽचेतनत्वन्यायसाम्येनजीवस्याप्यभे
दः ॥ अल्पगुणत्वादिविरोधात् ॥ १० ॥ नचसादृश्यसत्त्वात्साधनंविनैवजीवस्यतादृक्त्वव्यक्तिः॥
अनादितःसंसारस्यानिवृत्तत्वेनभावात् ॥ ११ ॥ नचमुक्तात्वादिगुणसाम्याद्ब्रह्मादीनांभक्त्यादि
गुणसाम्यम् ॥ यथायथाधिकारोविशिष्यतेएवंज्ञानंभक्तिर्बलंचविशिष्यते ॥ मुक्तावानंदएते
चगुणाविशिष्यंतेअतआहुर्ब्रह्मणेमुक्ताबलिंहरंतीत्यादिविशेषदृष्टेः ॥ १२ ॥ नचसंहारकर्तुरसं
हारादन्यरक्षायाअयोगः ॥ ससृजतिसपालयतिसविनाशयतीत्यादिविशेषवाक्यात् ॥ अन्न
दानाद्युपपत्तेश्च ॥ १३ ॥ नचाव्यक्तस्वभावस्यदर्शनेतर्कबाधः ॥ अनंतशक्तित्वाद्विष्णो
स्तच्छक्त्याअव्यक्तस्यापिदर्शनोपपत्तेः ॥ १४ ॥ नचगुणानांगुणिस्वरूपत्वंविरुद्धम्॥कालादि

दृष्टांतात् ॥ १५ ॥ नचब्रह्मानंदादीनामन्यथात्वात्तदतच्छब्दत्वंतच्छब्दत्वेलोकोपमत्वंचेतिवि
लोमता ॥ अलौकिकास्तस्यशब्दास्तथार्थाअलौकिकोह्येषविष्णुःपरत्वात् ॥ तथापिशब्दालौ
किकाअप्यमुष्मिन्प्रवर्तमानाअधिकार्थान्वदंतीत्यादिश्रुतिभ्योऽलौकिकत्वावगमात् ॥ १६ ॥
नचब्रह्माद्यानंदवैचित्र्येबिंबभूतविष्ण्वानंदवैचित्र्यम् ॥ आदित्यादिवदाधिक्यात् ॥ नहिसूर्य
कांतप्रतिबिंबस्याग्निजनकत्वशक्तिर्नजलगतस्येत्येतावतासूर्यवैचित्र्यम्॥ आधिक्यंहितत्रनिमि
त्तम् ॥ सूर्यचंद्रादिप्रतिबिंबंविनान्यत्रतथाविशेषादृष्टेः ॥ १७ ॥ नचनानाभावाद्विष्णोर्विचित्रप्र
तिबिंबरूपता ॥ आधिक्यादेव ॥ प्रतिबिंबेहिदोषाश्चप्रतीयंते ॥ अतोहिश्रुतिःप्रतिषेधति ॥ ने
दंयदिदमुपासतइति ॥ १८ ॥ नचनानावतारकौतुकदर्शनाद्विष्णोःक्वचिद्देशकालांतरेकौतुकादेव
सृष्ट्यादिकुर्वन्नन्यमेवसामस्त्येननियोजयति ॥ सर्वत्रसर्वमेतस्मादित्यादिश्रुत्याक्रीडायामपि
स्वातंत्र्यात् ॥ स्वातंत्र्यात्क्रीडतेविष्णुर्नचस्वातंत्र्यमन्यगम् ॥ करोतिक्वापिनियताक्रीडासृष्ट्या
दिकास्यच ॥ नियतक्रीडनादेवकर्तानान्योस्तिकस्यचित् ॥ अस्वतंत्रोहिचलतिचलचित्तादश
क्तितः ॥ स्वतंत्रःपूर्णशक्तिःसन्कुतोसौनियतिंत्यजेदितिश्रुतेश्च ॥ १९ ॥ नचकर्मान्वयव्यतिरे
कात्फलस्येश्वरःफलदातेतिप्रलोभमात्रम् ॥ तस्यैवस्वातंत्र्यात् ॥ कर्माण्यनंतानियथेष्टमीशःसं
पाद्यतेषांफलमिच्छयैव ॥ क्वचिद्ददातिक्वचनोददातिनह्यानंत्यात्कर्मणांभोगनाशः ॥ स्वातंत्र्यंचे
त्कर्मणांसर्वभोगस्यान्नह्येवंक्वापितत्केनचित्स्यात् ॥ अतोहिसःस्वस्वेच्छयाकिंचिदेवफलंकुर्याद्धि
फलंप्रायशश्च ॥ क्वचिदज्ञानंजनयन्भस्मकुर्यात्स्वेच्छावृत्तिस्त्वस्यविष्णोःसदैवेतिब्रह्मांडे॥ स्वतं

त्रईशएवैकस्तद्वशंकर्मसर्वदा ॥ अतईशत्वमीशस्यनह्यीशोन्यःकथंचनेतिश्रुतेः ॥ अतःप्रलोभ
कल्पनेश्रुतहानिरश्रुतकल्पनाचेतिहरिरेवफलप्रदः ॥ २० ॥ ॥ इतिश्रीमन्न्यायविवरणेतृती
याध्यायस्यद्वितीयःपादः ॥ ३ ॥ २ ॥

हरिःॐ ॥ नचप्रतिशाखमुच्यमानानामर्थानांपृथक्त्वात्तत्तच्छाखिभिरेवतत्रतत्रोक्तंज्ञेयमि
तिनियमः ॥ नानावेदैरितिहासैःपुराणैःसुज्ञेयएकोभगवान्युक्तिभिश्चेतिश्रुतेःसुष्ठुज्ञेयत्वाद्विष्णोः
॥ १ ॥ नचाशक्यतयाकस्यापिसर्वगुणोपसंहारोनास्ति ॥ सर्वैगुणाःसर्ववेदेषूपास्यास्तेनैवविद्वा
न्विधिकृन्नान्यथास्यादितिश्रुतेर्विहितक्रियालोपप्रसंगात् ॥ केषांचित्सर्वगुणोपसंहारस्यकर्तव्य
त्वेसर्वेषामपितथास्यात ॥ २ ॥ अनेनोपसंहर्तव्याइतिअनेननोपसंहर्तव्याइतिअनिर्णीतेरि
तिनमंतव्यम् ॥ यस्ययावद्गुणाःस्पष्टंप्रतिभासंत्युपासने ॥ युगपत्स्वभुजौयद्वद्ध्यायेत्तावतएव
सः ॥ युगपद्ब्रह्मणःसर्वेभासंतेहिगुणाहरेः ॥ तदन्येषांयथायोग्यंस्वमाहात्म्यानुसारतइतिश्रु
तेर्युगपद्गुणप्रतीत्यादिमाहात्म्यान्निर्णयोपपत्तेः ॥ ३ ॥ नचफलानिर्णीतिः ॥ माहात्म्येनैवान्य
त्फलंमहतामितिनिर्णयोपपत्तेः ॥ ४ ॥ आनंदादीनांकेषांचित्समुच्चयेभासेसर्वगुणसमुच्चयःसर्वेषां
स्यादितिनमंतव्यम् ॥ अल्पशक्तित्वात्तेषांपुंसाम् ॥५॥ प्रियशिरस्त्वादीनामानंदादिविशेषत्वे
नैवदर्शनात्तेषामपिसर्वोपसंहार्यत्वमितिनमंतव्यम् ॥ यथायोग्यानुगुणपूगानुपास्यफलंभवेन्मुक्ति
गंनान्यथास्यात् ॥ नित्यैकाग्र्यव्यंग्यताहेतुतश्चसाक्षाद्दर्शिनौतद्विशेषैःस्मृतैश्चेतिश्रुतेः ॥ स्वयो
ग्यगुणैरेवभावात् ॥ ६ ॥ तर्हिब्रह्मणोन्येषांदेवादीनामपिबहुगुणोपासनयाकार्यंनास्ति ॥ मध्ये

नियमात्सिद्धेरितिनमंतव्यम् ॥ तेषांभाव्युत्कर्षंज्ञात्वातदभिज्ञस्यब्रह्मणएवगुणनियमोपदेशोपप
त्तेः ॥ योयोभावोदेवतानांविमुक्तौतत्तत्प्राप्तौसुगुणानीशितुश्च ॥ ब्रह्मादिशत्यथतांस्तेविचिंत्य
तत्तद्भावंप्राप्नुवंत्यात्मशक्त्येतिश्रुतेः ॥ ७ ॥ नचनानास्थानेषूक्तगुणानामनुपासनार्थत्वम् ॥
विप्रकीर्णान्गुणान्पिंडीकृत्योपासितुस्तत्सदृशफलप्राप्तेस्तथाध्यानार्थमेवगुणानामुक्त्युपपत्तेः
॥ ८ ॥ नचाश्वापरोक्ष्यायानंदादीनामपिलोपेनात्मेत्येतावतापूर्यते ॥ आत्मशब्दार्थविशेषत्वादा
नंदादीनाम् ॥ ९ ॥ नचात्मशब्दोविभ्रमकरः ॥ गुणाधिकानामधिकारिणांभगवद्गुणानधिकान्प्र
काशयतीत्यवधारणत्वोपपत्तेः ॥ १० ॥ अलौकिकगुणानामप्रतीतेर्लौकिकगुणाध्यानेतदप्राप्त
तिरेवभवतीतिनमंतव्यम् ॥ लौकिकविलक्षणाअत्युत्तमाइतिध्यानस्यैवप्राधान्यात् ॥ ११ ॥ ब्र
ह्मणश्चब्रह्माण्याश्चस्थानैक्यंगुणतारतम्यंचयथागुणोपासनंमुक्तावाधिक्यंनभवतीत्यत्रलिंगम् ॥
समविषमोपासनायुक्तेरितिनमंतव्यम् ॥ यथाशक्तिस्मृतान्धात्रागुणान्विष्णोःसरस्वती ॥ स्मरे
त्रैविक्रमाद्यांस्तुनित्यविक्रांतिपूर्वकैः ॥ कदाचिल्लोपयेद्देवीस्थानैक्यंनगुणैस्ततः ॥ साम्यंतयो
र्यथाविष्णोर्गुणोपासाफलंभवेदित्यध्यात्मवचनाद्यथाशक्तिक्रियादेव्याः ॥ १२ ॥ नचात्मशब्दे
नास्यपुरुषस्यैतावंतोगुणाउच्यंतइतिव्यवस्थित्यभावः ॥ यस्ययावंतोर्थायुगपद्ध्यातुंशक्यंतेतस्य
तावंतइतिसंधेः ॥ १३ ॥ नचमुमुक्षवइवइत्यविशेषाद्धरणस्यद्युतेश्चसर्वेषामपेक्षितत्वाच्चसंभृति
द्युव्याप्तीअपिसामान्ये ॥ सत्योज्ञानंपरमानंदरूपआत्मेत्येवंनित्यदोपासनंस्यात् ॥ नान्यत्किंचि
त्समुपासीतधीरःसर्वैर्गुणैर्देवगणाउपासते ॥ गुण्याकारस्मृतेरेवद्युतिमात्रंप्रतीयते ॥ नव्याप्तिर्जगद

स्मृत्यानानाशक्तिर्यतोमता ॥ देवानांयुगपज्ज्ञानंमनुष्याणांतथानतु ॥ पर्यायेणैवसत्याःस्यु
नैवान्येषांकथंचनेत्यादिप्रमाणबलात् ॥ १४ ॥ क्वचिद्बहुगुणाःक्वचिदल्पगुणाःश्रुतिष्वेवोच्यंतइ
त्युपसंहारस्याप्रयोजनतेतिनवाच्यम्॥ गुणाःसर्वैर्ब्रह्मणैवह्युपास्यानान्यैर्देवैःकिमुसर्वैर्मनुष्यैरित्या
दिश्रुतेः॥ सर्वगुणोपासकस्याप्यधिकारिणोभावादेकत्रापृथक्सर्वगुणानुक्तेश्चबलादुपसंहारानुपप
त्तेः॥ १५॥नचमुक्तावुपासनाभावेफलादिकमपिस्यादित्यतिप्रसंगः॥ उपासनायाःसंस्काराख्यका
रणस्यसत्त्वात् ॥ नहीयतेयत्रगत्वायत्रगत्वानवर्धतइत्यत्रवृद्धिप्रमाणभावाच्च ॥ १६ ॥ नचकर्मक
रणशक्तेरप्यदूरत्वात्तत्संश्रयनियमः ॥ उपासनाख्येकार्येनित्यकृतिसंस्कारोनतथाकर्मणीतिका
र्यवैशेष्यात् ॥ १७ ॥ नचायोग्यताख्यविशिष्टकारणाज्ज्ञानिष्वपिकेषांचिन्मोक्षोनभवतीतिनि
यमः॥ ज्ञानिनांमोक्षंददात्येवेश्वरःस्वभावात् ॥ अयोग्यानांज्ञानस्यैवोत्पत्त्यनुपपत्तेः ॥ १८ ॥
नचप्रयत्नानुसारिणोमुक्तावाधिकारिकानंदादयः ॥ अधिकारानुसारित्वात्प्रयत्नस्य ॥ कथंचिद
धिकेयत्नेतत्साधनादिवस्तूनांदूषणप्राप्तेः ॥ स्वाधिकाराधिकोयत्नःप्रायशोनोपपद्यते ॥ कथं
चिदधिकेयत्नेदोषःकश्चित्समापतेदितिवचनाच्च ॥ १९ ॥ नचैकस्मादेकोविशिष्टोदृष्टएवेति
प्राणाद्विशिष्टजीवाभावेदृष्टवैरूप्यमितिदोषः ॥ यःसर्वमवजानीयादृतेदेवंनारायणंदेवींचपरमां
श्रियम्॥ सप्राणानवरुध्येमंमंत्रमावर्तयीत॥ आत्मादेवानांभुवनस्यगर्भोयथावशंचरतिदेवएषः॥
घोषाइदस्यशृण्विरेनरूपंतस्मैवातायहविषाविधेमेति ॥ सह्येषांभूतानांवरिष्ठोनह्येतस्मात्कश्चनो
परिविनादेवंनारायणंदेवींचपरमांश्रियमितिप्रतिक्रियाविधानादविरोधात् ॥ २० ॥ अस्तिभगवः

प्राणाद्भूयइतिप्रश्नाद्यभावात्प्राणस्यैवोन्नतिप्रतीतेर्नविष्णोरपिततःपरत्वमितिनमंतव्यम् ॥ एषतु
वाअतिवदतीतिविशेषणात्प्रश्नप्रतिवचनप्रतिसंधानोपपत्तेः ॥२१॥ नचसत्यादीनामभेदानुक्तेरन्य
त्वम् ॥ सत्यंपूर्णंविज्ञानंपूर्णंरतिःपूर्णानिष्ठापूर्णाश्रद्धापूर्णामतिःपूर्णासुखंपूर्णंभूमापूर्णोऽहंपूर्ण
आत्मापूर्णोनात्रकिंचिदूनंपूर्णमेवाधस्तात्पूर्णमुपरिष्टात्पूर्णमध्यमःपूर्णसर्वतः ॥ तदेषश्लोकोभ
वति ॥ पूर्णमदःपूर्णमिदंपूर्णात्पूर्णमुदच्यते ॥ पूर्णस्यपूर्णमादायपूर्णमेवावशिष्यतेइतिश्रुतेः
सर्वेषामनूनत्वात् ॥ सत्याद्याअहमात्मांतायद्गुणाःसमुदीरिताः ॥ तस्मैनमोभगवतेयस्मादेवविमु
च्यतइतिवचनाच्च ॥ २२ ॥ नचश्रियोऽप्रयत्नत्वादनुपासनंसंसारोवा ॥ नित्यंभगवदुपस्थितेररति
प्रियत्वात्संस्कारापाटवान्नित्योपासोपपत्तेश्च ॥२३॥ नचबंधदार्ढ्यैश्रवणादीनामफलता ॥ अन्य
थोपासांविनैवश्रवणादिज्ञानमात्रेणमुक्तिरितिदोषः॥श्रवणादित्रयोत्पन्नदृष्टैवस्वेच्छयाहरिः ॥
प्रसन्नोमुक्तिदोनित्यमन्यथानकथंचनेतीश्वरेच्छानियतिश्रुतेः॥२४॥ नचगुर्वधीनत्वेज्ञानमोक्षयो
र्ज्ञानिनोपिकदाचिद्गुरुकोपाज्ज्ञानपराभावेनामुक्तिप्रसंगान्नगुर्वधीनत्वमिति ॥ ज्ञानिनोगुरुशापेपि
नामुक्तिःसंसृतेःक्वचित् ॥ आनंदह्रासदोषेणसैवमुक्तिर्विदुष्यतीतिवचनान्मुक्तिदूषणेनैवगुरुकोपा
देःकृतार्थत्वात् ॥ ज्ञानिनोब्रह्मवस्तुवैभवेनमुक्तिःस्यादितिगुरोर्वरेणवामुक्त्युपपत्तेः ॥२५॥ शिष्य
स्यापिपुरुषत्वसाम्याद्धारणादेस्तत्प्रयत्नस्यनदौर्बल्यमितिनमंतव्यम् ॥ गुरुप्रसादोबलवानित्या
दिविशेषोक्तेः ॥२६॥ नचोत्तमगुरुस्वीकारार्थत्वेनप्राप्तसंत्यागनिमित्तदोषः ॥ तत्रदोषेमानाभावा
त् ॥ २७ ॥ नचविद्याकर्मवासंसारनिवृत्तिकारणमितिकारणानिर्णयः ॥ नान्यःपंथाअयनायवि

द्यतइत्यवधारणाद्विद्यावचनस्यप्राधान्यात्॥ २८॥ नचविद्यावचनस्यप्राधान्यंभ्रमः॥ प्रियोहिज्ञा
निनोत्यर्थमहंसचममप्रियइतिभगवतस्तस्मिन्नेवाभ्यधिकप्रीतिवचनात्।यमेवैषवृणुतेतेनलभ्यइ
तितत्प्रतीतेरेवमोक्षवचनाच्च॥ २९॥नचकस्यचिद्विशेषज्ञानोपपत्तेर्भक्त्यादिकंविनामुक्तिः॥भक्त्यै
वैनंजानातिभक्त्यैवैनंपश्यतिभक्त्यैवबंधाद्विमुच्यते ॥ भक्त्यैवानंदीभवति ॥ यमेवैषवृणुतेतेनल
भ्यः॥भिनत्तिकर्मसंघातंप्रसन्नोभगवान्हरिरित्याद्यागमात् ॥३०॥नचदृष्टश्चैवतंमुच्यतेनापरेण॥
यावान्यश्चास्मितत्त्वतः॥ततोमांतत्त्वतोज्ञात्वेत्यादिसामान्यालापमात्रेणदर्शनस्याविशेषः॥ यथा
योग्यमेवैषआत्मानंदर्शयतियथाधिकारंदेवेभ्योतोब्रह्मैवैनमभिपश्यत्यथात्मैवात्मानमभिपश्य
तिसुस्थिरोह्येषनियमइतिदर्शनविशेषनियमस्यसुस्थिरत्ववचनात् ॥ यावान्यश्चास्मीतिब्रह्मणए
वज्ञानोपपत्तेः ॥ यावानित्यत्रापिसामान्यविशेषज्ञानोपपत्तेश्च ॥ ३१ ॥ नचभगवतःसर्वत्रगुण
साम्याद्यस्यकस्यापिरूपस्यदर्शनात्सर्वेषांमुक्तिः ॥ समोपिभगवान्स्वबिंबदर्शनएवैनंमोचयति ॥
यथासमेष्वपिकर्मसुखकृतमेवैनंभोजयतीतिश्रुत्युक्तस्वकृतप्राप्तिदृष्टांतात् ॥ ३२ ॥ भक्तिरेवैन
मितिभक्तेरेवपृथङ्मोचकत्वदर्शनान्नेशकृत्यमितिनमंतव्यम् ॥ अनादितोगुणाःसंतोभक्त्याद्यान
ह्यमूमुचन् ॥ जीवंतद्गुणसुव्यक्तिंकृत्वैनंमोचयेद्धरिः॥ कंचिन्नमोचयेद्दासौस्वालंव्येतेनतस्यहि ॥
भक्तिवाक्करणत्वेनसावकाशेशवागथ ॥ भक्त्यैनंमोचयेद्विष्णुरितिमानत्वमेष्यतीतिब्रह्मतर्कवच
नादनादिगुणविस्तरेसत्यप्यव्यक्त्यादिनातदिच्छांविनामोक्षाप्राप्तेः ॥ ३३ ॥ नचांशिमार्गस्यांशे
नागम्यत्वात्तयोर्भेदः ॥ साधनोत्तमस्यादृष्टस्यांशिकृतस्यांशेनभुज्यमानत्वात् ॥ अन्यथादृष्टं

विनाशरीरानुपपत्तेः ॥ ३४ ॥ नचगुणांतरसंधानस्यकापिदर्शनमात्रेणसमाधिकांगदेवतांतरगुणा अप्यंगदेवतांतरेउपसंहर्तव्याः ॥ नानागुणत्वेनतेषांश्रुतिदृष्टेः ॥ अनिषिद्धगुणानांवाक्यान्वयन्यायेनोपसंहारान्नशाखास्वित्यादिविशेषः ॥ उत्तमेष्वधमगुणापेक्षयामंत्रादिवद्वेति ॥ ३५ ॥ नचभूमगुणस्योपासकंप्रतिविशेषाभावेपितत्तदिष्टगुणानुसारेणफलोपपत्तिरित्यविशेषः ॥ भूमैवदेवःपरमोह्युपास्यानैवाभूमाफलमेषांविधत्तइत्यादिशिष्टेः ॥ ३६ ॥ नचभूमगुणउपासकानामेकप्रकारेणैवप्रतीयतइत्यंगीकार्यम् ॥ विशेषस्यकल्पनोपपत्तेरितिनमंतव्यम् ॥ यावानेवाधिकारेषुविशेषोनूनएवहि ॥ ततोभूमत्वदृष्टौचब्रह्मादीनांपृथक्पृथगितिविशेषस्यानूनत्ववचनात् ॥ ३७ ॥ नचशुद्धमोक्षसाधनवैरूप्यान्मोक्षसाधनत्वेनोपदिष्टंविनाविष्णावेवोपासनांतरस्याकर्तव्यता ॥ अविघ्नतासाधनत्वात् ॥ ३८ ॥ नचकाम्यसाधनानामपिगुणानामंगत्वादेवोपसंहर्तव्यतानियमः ॥ अनुपसंहारेविरोधाभावात् ॥ काम्यानामनियतांगत्वाच्च ॥ अर्थादिधर्मसिद्धौहिननियत्यांगमिष्यतइतिब्रह्मतर्कें ॥ ३९ ॥ नचदेवादीनामितितत्रैवविशेषवचनाभावाद्ब्रह्माशिरसिल्लाटेरुद्रइत्यादीनांनावश्योपास्यतादेवादीनामेव ॥ ध्यायेदंगेष्वंगदेवताःपरस्यविशिष्टाहिगुणामुक्तौदेवानांभवंतितेहितादृशास्तेहिहरेरनुरूपाइतिश्रुतेर्गुणवैशेष्यात् ॥ ४० ॥ नचक्रियात्वादुपासनायाअग्निष्टोमादिवत्प्रतिशाखंवक्तव्यता ॥ उपासनायजनंचेतिसाम्यंतत्तद्विशेषानुसंहरेत्सर्वतश्च ॥ तथाकर्तॄणांतत्फलानांविशेषाद्यर्थाहिशाखाअन्यथैवंचसार्थाइत्युपासनाविशेषाणांत्वाधिकारिविशेषाणांचागमेऽवगमात् ॥ ४१ ॥ इतिश्रीमन्न्यायविवरणेतृतीयाध्यायस्यतृतीयःपादः ॥ ३ ॥ ३ ॥

हरिःॐ ॥ नचज्ञानिनऔदार्यान्मोक्षादन्यफलेच्छायाएवासंभवात्तदुक्तिःप्रशंसामात्रमिति
वाच्यम् ॥ प्रायशोनसंभवत्येव ॥ कस्यचित्सौभर्यादिवद्भवतिचेज्ज्ञानेनैवाशेषमीप्सितंभवती
तिव्यवस्थोपपत्तेः ॥ १ ॥ २ ॥ नचाधिकारेसमेपितेषामेवोच्चावचशक्तियोगात्फलभे
दोपपत्तेरधिकारविशेषकल्पनंव्यर्थम्॥ भक्त्याद्यधिकारानुसारेणशास्त्रात्फलप्राप्तेःसर्वेषामविशेषा
त् ॥ दृश्यमानत्वाच्चभक्त्याद्यधिकारतारतम्यस्य ॥ उच्चावचशक्तेरपितन्निबंधनत्वात् ॥ ३ ॥ न
चज्ञानिनामात्मस्वरूपदार्ढ्यात्सत्प्रवृत्तिविपरीतप्रवृत्त्योरविशेषः ॥ एतावतोधिकानास्तिप्राप्तिरि
त्यंततःस्थिता ॥ यास्थितिस्तांसमाप्नोतियथाशक्तिप्रयत्नतः ॥ विपरीतप्रवृत्तेस्तुतस्यह्रासोधि
कंभवेदितिवचनात्स्थितिविशेषोपपत्तेः ॥ ४ ॥ नचसर्वजीवानामेकप्रकारएवनिजस्वभावश्चैत
न्यमितिफलेप्यविशेषः ॥ निषेधसामान्यविधिक्रियाणांविभक्तत्वात् ॥ नादेवोदेवपदमन्विच्छेद
न्विच्छन्यात्यधरंतमः॥नदेवःस्वीयंपदमन्विच्छन्विदुष्यति ॥ तदेवह्यस्यस्वमितिनिषेधविभागः॥
स्थिरंज्ञानंस्थिरोहरावभिषंगःस्थिरमोजोबलंविरागएतद्धिसामान्यंदेवानाम्॥अन्येषामस्थिराण्ये
तानिसर्वाण्यथापियथायोगंविनेयानीतिसामान्यविभागः॥ज्ञानदानमेवदेवानांविहितम् ॥तपएव
र्षीणामाचारएवमनुष्याणांतदविरोधेनान्यानिकरणीयानीतिविधिविभागः॥चरंतिदेवाविहितंसम
स्तमर्धमेवमुनयोदशांशतोमनुष्याइतिक्रियाविभागः ॥ ५ ॥ ६ ॥ नचस्वातंत्र्याद्देवानामेवज्ञाना
दिफलंनकिंचिदन्येषामितिवाच्यम् ॥ त्वरयैवमनुष्याणांसिद्धिरत्वरयैवतु ॥ देवानांतत्प्रसादेन
मुक्तिरेवसतांनृणामितिमानुषमुक्त्यर्थमेवदेवानामत्वरयासिद्धिश्रुतेः ॥ ७ ॥ नचगृहस्थानामशे

षकर्मविशेषयोग्यत्वादाधिक्यंमुक्तौ ॥ त्वरयैवगृहिणःसाधयंतिमुक्तिमत्वरयैवयतयस्तेभ्यश्चात्व
रयादेवास्तेषुचब्रह्मा ॥ तदेषश्लोकः ॥ शतंपरानभिपश्यैवदेवंब्रह्माचरद्दुश्चरंयत्तपोग्यम् ॥ विहा
यरागंमनसश्चोपरिष्टंततोभवत्परमेष्ठीसमुक्ताविति ॥ योहित्वरयासाधयेत्समंदंतुखमामुयात् ॥
योह्यत्वरयासमहदितिश्रुतेर्गृहिभ्योयतीनांतेभ्योदेवानामत्वरयासिद्धेः ॥ बहुकालसाधनाद्बहुक
र्माधिकारमात्रस्यदुर्बलत्वात् ॥ ८ ॥ नचाविष्कारेणकथनादशेषतोपियोग्याज्ञानिनोभवंतीत्या
स्थानचत्वरादिषुस्थित्वैवप्रकथनीयम् ॥ नह्येवंत्वरमाणेसिद्धिर्भवति ॥ अयोग्यानामपिश्रवण
प्रसंगात् ॥ तस्माद्विचार्ययोग्यानामेवात्वरयैवकथयित्वासिद्धिर्भवति ॥ त्यक्त्वात्वरांब्रह्मविद्यां
वदेतजनाययोग्यायसदैवविद्वानितिश्रुतेः ॥ मानस्तेनेभ्यइत्यादेश्च ॥ ९ ॥ नचविरोधाभावा
त्साधनानुष्ठानजन्मन्येवापरोक्षज्ञानंमुक्तिश्चेतिनियमः ॥ प्रतिबंधेसतितन्निरासेनात्वरयैवसिद्ध्यु
पपत्तेः ॥ यद्यारब्धंकर्मनिबंधकंस्यात्प्रेत्यैवपश्येद्योगमेवान्ववेक्ष्येत्यादिश्रुतेः ॥ अनेकजन्मसंसि
द्धस्ततोयातिपरांगतिमितिभगवद्वचनम् ॥ १० ॥ ११ ॥ इतिन्यायविवणेतृ०च० ॥ ३ ॥ ४ ॥
हरिःॐ ॥ नचश्रवणाद्यनाद्यत्याऽपरोक्षज्ञानोदयेसर्वेषांसुशक्यत्वमितिगुणः ॥ महाफलत्वात्सर्वे
षामशक्यतायाएवोपपन्नत्वात् ॥ अन्यथासर्वसुशक्यस्यैवसाधनतयासर्वेषांमोक्षापत्तेः ॥ १ ॥
नचशश्वदतिप्रसिद्धत्वादात्मशब्दोदितंस्वामित्वंननित्यशउपास्यम् ॥ अन्येभ्योधिकफलत्वेनस
विशेषत्वादात्मत्वस्य ॥ २ ॥ तर्हिविशेषवत्त्वादेवप्रतीकमपीश्वरइत्युपास्यमितिन ॥ यत्रसंधि
रुपपत्तिर्विद्यतेतस्यैवग्राह्यत्वात् ॥ अन्यस्येशत्वग्रहणस्यमिथ्याज्ञानत्वादेवानुपपत्तेः ॥ ३ ॥

नचप्रदिनंविविधगुणन्यासेनभगवत्प्रीत्युपपत्तेर्नब्रह्मताद्दष्टिनियमइतिवाच्यम् ॥ अशेषगुणांत
र्भावेनतस्यैवाधिकसाधनत्वात् ॥ ४ ॥ नचविविधस्थानेष्वादित्यादीनांचरणाद्विष्णवंगेष्वादि
त्यादिमतिनियमोनास्तीतिवाच्यम् ॥ तत्कृतावेवकृत्यस्यासत्वादादित्यादीनाम् ॥ ५ ॥ नचज्ञा
नस्यसम्यक्तद्विषयत्वमात्रेणपूर्तैरासनादिनानकार्यमितिवाच्यम् ॥ आसनादिनानिश्चलत्वादि
विशेषकार्योपपत्तेः ॥ ६ ॥ नचान्यस्यापिसाधनस्यकर्तुंशक्यत्वान्नयावन्मुक्तिध्यानंकार्यमिति
वाच्यम् ॥ ध्यानंविनाऽपरोक्षज्ञानाख्यविशेषकार्यानुपपत्तेः ॥ ७ ॥ नचज्ञानोदयेऽशेषकर्मक्षये
कृतकृत्यत्वात्तदैवमुक्तिः नचेत्कर्मक्षयइतिवाच्यम् ॥ प्रारब्धस्यैवकृतस्ययावद्भोगंसंस्थितेः ॥
कर्माणिक्षपयेद्विष्णुरप्रारब्धानिविद्यया॥प्रारब्धानितुभोगेनक्षपयन्स्वंपदंनयेदितिवचनाच्च ॥८॥
इतिश्रीन्यायविवरणेचतुर्थाध्यायस्यप्रथमःपादः ॥ ४ ॥ १ ॥
हरिःॐ ॥ नचवाक्पूर्वरूपंमनउत्तररूपंमनःपूर्वरूपंवागुत्तररूपमित्युक्तेर्व्यामिश्रत्वादनिर्णीतिरेव॥
वाक्पूर्वरूपंमनउत्तररूपमितिवाचःपूर्ववर्णदेवतात्वनिर्देशमात्रेणमनःपूर्वमित्यनेनसाम्यम् ॥ मन
सावाअग्रेसंकल्पयत्यथवाचाव्याहरतीतियुक्तितोविशेषोमनःपूर्वकत्वस्यैवश्रुतइतिप्राधान्यंमनस
एवेतिज्ञायते ॥ सृष्टौचविलयेचैवसदापूर्वप्रवर्तने ॥ नियंतृत्वेचवचसोमनोधीशंशिवोहितदिति
श्रुतेश्च ॥ १ ॥ नचमनःपूर्वकत्वनियमादशेषदृष्टादृष्टव्यापाराणांतस्यप्राणादनूनता ॥ इंद्रिय
स्थैःस्वरूपैस्तुज्ञानानिजनयत्यसौ ॥ मनःस्थेनविशेषेणकामैःकर्मवदेवच ॥ पृथक्स्थितेनरूपेण
जीवंधारयतिप्रभुः ॥ जीवस्थितेनरूपेणवेदयत्यहमित्यपि ॥ प्राणएकोवशीनित्यंबाह्यांतःकर

णेश्वरः ॥ तान्येतान्यवशान्येवतथापिक्रपयैवसः ॥ पृथक्शक्तोपितद्भेस्तुस्वरूपैस्तद्गकार्यंकृत् ॥
तस्येशोभगवान्विष्णुरेवमेषयथान्यगइत्यादिश्रुतेःप्राणस्यैवाढ्यतावगमात् ॥ २ ॥ सोध्यक्षेइत्य
स्याप्येवमेवाशंकापरिहारश्च ॥ श्रुतिबाहुल्यमेवशंकायांपरिहारेचाविशेषहेतुः ॥ ३ ॥ ४ ॥ न
चभूतानामुत्पत्तिक्रमवैपरीत्येनलयोक्तेर्मुक्तिलययोर्विशेषाभावाच्चैकस्मिन्नेवभूतेसर्वेषांलयोर्थतः
कूसइतिवाच्यम् ॥ तत्तद्भूतोद्भवत्वात्तत्तद्देवानांतत्समानानांचाविशेषवचनाभावेस्वसमानलय
स्थानएवलयोपपत्तेः ॥ विशेषश्रुतेश्च ॥ ५ ॥ नचप्रकृतेःसंसाराभावादिनेशेनाप्यन्यथाकर्तुमश
क्यत्वेनसुदृढत्वात्सर्वसाम्यमेवेश्वरेण ॥ नचेत्संसारित्वमितियुक्तम् ॥ ईश्वरस्यमहामहिमत्वात् ॥
नित्यमसंसारित्वस्यनित्यंतदनुग्रहेणैवोपपत्तेः ॥ सदाऽनित्यतयाऽनित्यंनित्यंनित्यात्मनायतः ॥
नित्ययैवस्वशक्त्येशोनियामयतिनित्यदा ॥ द्रव्यंकर्मचकालश्चस्वभावश्चेतनाधृतिः ॥ प्रकृतिःपु
रुषश्चैवनसंतियदुपेक्षयेत्यादिश्रुतेश्च ॥ ६ ॥ नचान्यदेवादीनांप्राणाधीनत्वात्तत्प्राप्तिनियमात्पर
प्राप्तिर्नास्त्येव ॥ प्राणंप्राप्यापरंदेवास्तदन्येचैवतद्गताः ॥ प्राप्नुवंतिपरंदेवंवसंतिचयथासुखमि
तिविशेषश्रुतेः ॥ ७ ॥ नचसत्यसंकल्पत्वादेरीश्वरसंकल्पाद्यनुसारित्वनियमेसंसारसमानधर्मत्वं
मुक्तेरितिवाच्यम् ॥ कृतार्थत्वेनैवविशेषोपपत्तेः ॥ अपूर्णतादिभावोवादुःखंवानास्तिकिंचन ॥
मुक्तस्यपारतंत्र्येपितारतम्येप्यतःसुखीतिचश्रुतिः ॥ ८ ॥ नचप्रारब्धकर्मशेषवत्त्वादुत्क्रांतावविशेषोज्ञानिनः ॥ ज्ञानोदयानंतरंसर्वदाज्ञानफलस्यानुवृत्तेः ॥ प्रारब्धकर्मशेषस्तुविरजातरणावधिः ॥ स्वोदयात्फलदंज्ञानमादेहंकर्मवारवे ॥ तथापिप्रकृतेर्बंधोब्रह्मणासहभिद्यतइतिश्रुतिः ॥

शरीरेपाप्मनोहित्वासर्वान्कामान्समश्नुते ॥ सतेजसिसूर्येसंपन्नोयथापादोदरस्त्वचाविनिर्मुच्य
तएवंहैवपाप्मनाविनिर्मुक्तःसप्राप्नोतिविरजांनदीम् ॥ तत्सुकृतदुष्कृतेविधूनते ॥ तेब्रह्मलो
केतुपरांतकालेपरामृतात्परिमुच्यंतिसर्वइतिच ॥ अन्यथाभावनियमोऽनृतताकार्यकारणइति
च ॥ ९ ॥ नचकृष्यादिलौकिकसाधनस्यफलस्मरणानपेक्षत्वात्स्वर्गमोक्षयोरपितथात्वमितिवा
च्यम् ॥ क्रियानुवृत्तिर्लौकिकेसाधनेतुमनोनुवृत्तिर्वैदिकेसाधनेस्यात् ॥ फलंभवेत्सर्वथेत्ये
वतस्मात्स्मरेत्सदानिश्चिनत्वेनविद्वानितिश्रुतेस्तदनुसार्यनुवृत्तेर्लौकिकवैदिकयोःसाम्यात्॥ अतो
त्रफलानुस्मरणंलवनादिकृष्यनुवृत्तिवद्द्रष्टव्यम् ॥ वचनप्रामाण्यात् ॥ १० ॥ इतिश्रीमन्न्याय
विवरणेचतुर्थाध्यायस्यद्वितीयःपादः ॥ ४ ॥ २ ॥
हरिःॐ ॥ नचतत्रतत्रमार्गस्यान्यथोक्तेरधिकारिभेदेनपृथङ्मार्गसुक्रमोपपत्तिरितिवाच्यम् ॥ स
र्वेवाएतेउत्क्रामंतितेर्चिषमेवाभिसंयंतिततोवायुंततोहःपूर्वपक्षमित्येषउएवब्रह्मपथः ॥ द्वेस्रुतीअ
शृणवंपितॄणामहंदेवानामुतमर्त्यानाम् ॥ ताभ्यामिदंविश्वमेजत्समेतियदंतरापितरंमातरंचेतिवि
शेषश्रुतितोज्ञानिनामेकमार्गस्यैवप्राप्तेः ॥ एषएवब्रह्मपथइत्यवधारणविरोधादन्यथा ॥ एजदिति
वैदिकानुष्ठानवतउक्तेर्नाधोगतिविरोधः ॥ पुनरावर्तिनोयेतुतेषांधूमपथोध्रुवः ॥ अन्येषामर्चिरा
दिश्चदक्षेदोमध्यसंस्थितिः ॥ धूमार्चिरादिदेवेभ्यःप्राप्यानुज्ञांतुमध्यगाः ॥ विहृत्यस्वेष्टदेशेषु
तदूर्ध्वंयातिचाधरम् ॥ अत्यल्पनामविज्ञाताप्यनुज्ञावर्तिनांभवेत् ॥ पुंद्वारेणस्वदृष्ट्याचावायथायो
ग्यंविमुच्यताम् ॥ अतोनमार्गभेदोस्तिनहिमार्गोत्रसंभवः ॥ प्रेतत्वंचाधरोमार्गःपापजत्वात्तयोः

पृथगितिस्मृतेश्च ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ नचसोमादग्निमग्नेरिंद्रमितिसोमादग्नेरेवमस्या
पिप्राप्तेःप्रधानवायोरप्यवरोन्यःप्राप्योस्त्वितिवाच्यम् ॥ उत्तमत्वात्तस्यैवब्रह्मप्रापयितृत्वशक्तेः ॥
वायुरेवब्रह्मगमयतितस्यह्येषाशक्तिः ॥ नह्यन्योब्रह्मगमयतिप्रियोह्येनद्गमयति ॥ नह्यन्यःप्रि
योब्रह्मणइतिश्रुतेः ॥ मार्गैत्ववरस्यापियथामार्गपश्चात्प्राप्तिर्भवतिलोकवत् ॥ नहिराजानंयः
कश्चित्प्रापयतिकृत्स्नमर्तिप्रियंचापहाय ॥ नचचतुर्मुखमुक्तिपर्यंतंसंततत्वानियमाद्बंधस्यतावद्भ
गवत्प्राप्तिर्नास्तीतिनियमः ॥ यांतिदेवंपरंकेचित्पूर्वंकेचिल्लयेविभुम् ॥ योग्यतातारतम्येनविशेषो
यमपीष्यतइतिश्रुतेस्तथाप्राप्तत्वात् ॥ नचपरब्रह्मणएवब्रह्मशब्दमुख्यार्थत्वेनप्रथमप्राप्तत्वादपो
ह्यायुक्तेस्तस्यैवप्राप्तिनियमः ॥ यांतिदेवंपरंकेचिदितिप्रमाणप्राप्तत्वादेव ॥ नचपरप्राप्तिर्यस्याभी
ष्टातस्यतत्प्राप्तिरितिनियमः ॥ क्रमानुरागीभगवान्क्रमात्पुंभिरवाप्यते ॥ अतःक्रमात्समृद्धेतु
ज्ञानेब्रह्मलयेनरैः ॥ प्राप्यतेनियमेनैवकैश्चिदेवाप्यतेमृताविति भगवतःक्रमानुरागित्वश्रुतेः ॥ न
चबहुधाश्रुतेर्यथासौकर्यंचतुर्मुखस्यपरस्यवाप्राप्तिरितिवाच्यम् ॥ श्रुत्युक्तानुवृत्तेरेवन्याय्यत्वा
त् ॥ सप्रतीकाश्चतुर्मुखमप्रतीकाःपरममुहैतेगच्छंत्यागच्छंतिचचतुर्मुखात्परमंपराच्चतुर्मुखंयावद्वि
लयमथसहचतुर्मुखेनविमुच्यंतेआनंदिनोभवंतीतिहिश्रुतिः ॥ अंतर्भेदाधिकरणत्वात्समुदायो
क्तिः ॥ ५ ॥ ६ ॥ इतिश्रीमन्न्यायविवरणेचतुर्थाध्यायस्यतृतीयःपादः ॥ ४ ॥ ३ ॥
हरिःॐ ॥ नचैतंसेतुंतीर्त्वेत्यत्रातिक्रमोक्तेर्मुक्तोब्रह्मतीर्त्वागच्छति ॥ तरतीतिसामान्यप्रतीतेर्ब्र
ह्मतीर्त्वाइदंगच्छतीतिविशेषानुक्तेः ॥ इमांघोरामशिवांनदींतीर्त्वाब्रह्मसंपद्यतइतिविशेषोक्तेश्चै

तंसेतुंप्रत्यन्यत्तीर्वैत्यन्यथोपपत्तेः ॥ १ ॥ नचकृत्रिमत्वादमुक्तएवोच्यते ॥ सतत्रपर्यैती
त्यादौस्वेनरूपेणाभिनिष्पद्यतइतिमुक्तस्यस्पष्टंप्रतिभातत्वाच्छ्रुतौ ॥ सतत्रपर्यैतीतिश्रुत्यैक्य
प्रतीतेश्चैवंभूतस्यापिप्रकरणत्वंप्रकल्प्यश्रुतिबाधांगीकारेसाश्रुतिरप्येवंविभज्यकिंयोजयितुंन
शक्यतइतिश्रुतेरेवाभावप्रसंगः ॥ सत्यंज्ञानमित्यादावपिसत्यमित्यस्यान्यमित्यनेनान्वयइत्या
दिप्रसंगात् ॥ २ ॥ नचपरंज्योतिःशब्देनादित्यज्योतिरंगीकारेसतेजसिसूर्यसंपन्नोयथापादोदर
स्त्वचाविनिर्मुच्यतएवंहैवसपाप्मनाविनिर्मुक्तइत्यादिनैकार्थतेतिप्रयोजनम् ॥ अथकिमुच्यते
परंज्योतिरित्यात्मैवपरंज्योतिःसहिपरमोद्योततेजीवाच्चाजीवाच्चतस्मादाहुःपरंज्योतिरितितमेवै
षजीवोभिसंपद्यस्वेनरूपेणाभिनिष्पद्यतइतितस्यैवपरंज्योतिष्ट्वोक्तेः ॥ सावकाशलिंगान्निरवका
शश्रुतेरेवबलवत्त्वात् ॥ ३ ॥ नचपरमगतित्वादीश्वराभुक्ताअपिभोगामुक्तोभवंति ॥ ईश्वर
स्यत्वतएवपूर्णानंदत्वादभोगस्यापिसंभवादितिवाच्यम् ॥ पूर्णानंदःपूर्णभुक्पूर्णकर्तापूर्णज्ञानः
पूर्णभाःपूर्णशक्तिः ॥ पूर्णैश्वर्याद्भगवान्वासुदेवोविरुद्धशक्तिर्नचदोषस्पृगीशइत्याश्चर्यंतथैव
ब्रह्मणउभयोक्तेः ॥ सावकाशोपपत्तिमात्रान्निरवकाशश्रुतियुक्तोपपत्तेरेवबलवत्त्वात् ॥ ४ ॥ न
चपारंगतत्वान्मुक्तस्यचिन्मात्रदेहोपिनास्तीतिवाच्यम् ॥ अकृत्रिमत्वात्तद्देहस्यानपगमात् ॥
अथविमुक्तस्यचिन्मात्रएवदेहोभवतिचिन्मात्राणिकरणानितैरीशानुगृहीतैर्भोगानुभुङ्क्तइतिश्रु
तेः ॥ ५ ॥ नचभगवदोकसिस्थितत्वान्मुक्तस्यतस्याप्योकस्त्वसाम्येनतत्तदुपायसाध्यभोगसा
धनत्वंवाच्यम् ॥ निर्दोषत्वात्तदोकसोमुक्तस्यचसंकल्पादेवेतिश्रुत्यनुसारेणोपपत्तेः ॥ ६ ॥ नच

परगृहगतत्वादस्यराजगृहगतस्येवस्वाधमाअपिकदाचिदीशते ॥ निर्दोषत्वादेवमुक्तस्येश्वरस्यत
त्रस्थानांमुक्तांतराणांचराजदोषवद्दोषासंभवाद्यथायोग्यमेवस्वीकारोपपत्तेः ॥ मुक्तानांपतयोदे
वादेवानांचप्रजापतिः ॥ तस्यविष्णुर्नैवेदंपारावर्यंविनश्यतीतिश्रुतिः ॥ ७ ॥ नचदेहभावेतत्का
र्यदुःखादिस्तदभावेभोगासंभवइतिदोषः ॥ देहाभावाच्चभावाच्चनिर्भोगित्वंचदुःखिताम्॥यांत्यमु
क्तानोभयंचमुक्तानांवशितायतइतिश्रुत्यैवविशेषकॢप्तेः॥८॥ नचसंकल्पादेवसमस्तसंभवात्सृष्ट्या
दिसमस्तकार्यसंभवः॥व्यापारोजगतोविष्णोर्मुक्तानांतुस्वभोगगः ॥ नहिस्वर्णशुद्धमपिवह्निकाय
करंभवेत्॥अयोग्यशक्तिलस्त्वेवनाधिकानंदसंभवः॥ नहिकश्चित्सुशक्तोपिचकाराचेतनंचितिम्॥
नचकामस्तथाभूयात्ततःस्यात्सत्यकामितेतिश्रुत्याविशेषकॢप्तेरेव ॥ मुक्तानांनजगद्यत्नस्तथापि
विबुधाःसदा ॥ मुक्तानांतुनियंतारस्तेषांब्रह्मास्यवैहरिरितिचविशेषकॢप्तिः ॥ ९ ॥ नचवशित्वा
न्मुक्तस्यापिसिद्धिः ॥ कृतकृत्यत्वेननिःश्रमत्वादुपासनादावभ्यासपाटवान्निर्दोषत्वात्स्नेहाधिक्या
च्चतस्यैवपरमसुखरूपत्वेनफलरूपत्वात् ॥ अभ्यासपाटवात्स्नेहादश्रमत्वादुपासना॥भक्तिश्चसुख
रूपैवमुक्तानांनतुसाधनमितिश्रुतिः॥१०॥ नचानंतत्वात्कालस्यत्रयोदशीपंचदशीवत्कदाचित्सम
स्तस्यापिसंभवात् ॥ मुक्तस्यापिपुनरावृत्त्याशंकेतिवाच्यम् ॥ सत्यकामत्वादिमाहात्म्यात् ॥
अशेषकामसत्यत्वान्मुक्तानांनपुनर्भवः ॥ यस्मात्सकामयेदेवनित्यमात्मापुनर्भवमितिचश्रुतिः
॥ ११ ॥ इत्यनंतमहान्यायमीमांसापारवारिधेः ॥ उत्तारणात्यशक्त्यैवव्याकुलीकृतचेतसा
म् ॥ मंदानामुपकारायमहतांचोच्छ्रितात्मनाम् ॥ तद्विशेषपरिज्ञानप्रदीप्ताकोभचेतसाम् ॥ वि

शेषगाढेमनसिनितरामुपकारकः ॥ न्यायप्लवोमयाऽकारिसंक्षेपात्प्रमिताक्षरैः ॥ विस्तारोप्ययमेव स्यात्तद्विशेषातिवेदिनाम् ॥ व्याख्यानुव्याख्ययोरेवविस्तारोयदुदीरितः ॥ अनल्पचेतसांपुंसाम लंविज्ञानसिद्धये ॥ तन्न्यायोद्धरणेशक्ताअपिह्येतेनसुस्थिरम् ॥ न्यायानुगंमनःकुर्युरितिसंग्रहल्ला लसाः ॥ कोनामाशेषविद्योरुसागरोन्मथनोद्धृतम् ॥ साक्षाद्विद्याधिराजेनन्यायामृतमनुत्तमम् ॥ अशेषतोधिगच्छेतवंद्योवृंदारकोपिसन् ॥ एवंसुदुर्लभेप्यद्धामहान्यायपरामृते ॥ केचनाधिक्रियं तेत्रतत्प्रसादानुरंजिताः ॥ ब्रह्माद्याअमृतेयद्वत्सागरोन्मथनोद्धृते ॥ अहंतुतत्प्रसादैकमहास्पदब लोद्धतः ॥ न्यायामृतार्णवमिममवगाह्यविभज्यच॥ संक्षेपविस्तराभ्यांचचकारव्याकृतिंकृतिम्॥ तत्प्रसादमृतेकस्यशक्तिःसंसारसागरे ॥ मग्नस्यचेतनस्यस्यात्तत्कृतानुकृतौक्वचित् ॥ नित्यानंदा मृतस्यंदितत्कटाक्षैर्धितस्यतु ॥ कानुशक्तिर्भवेन्नैवततःकोत्रातिविस्मयः ॥ विद्याविद्येसुखंदुः खमशक्तिःशक्तिरेवच ॥ उत्पत्तिस्थितिनाशाश्चविशेषाश्चपरेखिलाः ॥ चेतनाचेतनस्यास्यसम स्तस्ययदिच्छया ॥ सममस्त्वकृतेनैवप्रीयतांपुरुषोत्तमः ॥ यस्यत्रीण्युदितानिवेदवचनेरूपाणि दिव्यान्यलंबट्तद्दर्शनमित्थमेवनिहितंदेवस्यभर्गोमहत् ॥ वायोरामवचोनयंप्रथमकंपृक्षोद्वितीयं वपुर्मध्वोयत्तुतृतीयमेतदमुनाग्रंथःकृतःकेशवे ॥ नमोजभवभूर्यक्षपुरःसरसुराश्रय ॥ नारायणार णंमह्यंमापतेप्रेयसांप्रिय ॥ इतिश्रीमद्ब्रह्मसूत्रानुव्याख्यान्यायविवरणेचतुर्थाध्यायस्यचतुर्थःपा दः ॥ ४ ॥ ४ ॥ चतुर्थोध्यायः॥ न्यायविवरणंसंपूर्णम् ॥



॥ नरसिंहनखस्तोत्रं २८ यमकभारतं २९ द्वादशस्तोत्रं
३० कृष्णामृतमहार्णवश्च ॥ ३१ ॥

श्रीमन्मध्वहृदंतर्वर्तिश्रीलक्ष्मीनारायणायनमः ॥ ॥ पांत्वस्मान्पुरुहूतवैरिबलवन्मातंगमाद्यद्घटा
कुंभोच्चाद्रिविपाटनाधिकपटुप्रत्येकवज्रायिताः ॥ श्रीमत्कंठीरवास्यप्रततसुनखरादारितारातिदूरप्रध्वस्तध्वांतशांतप्रविततमनसाभाविताना किवृंदैः ॥ १ ॥ लक्ष्मीकांतसमंततोविकलयन्नैवेशितुस्तेसमंपश्याम्युत्तमवस्तुदूरतरतोऽपास्तंरसोयोष्टमः ॥ यद्रोषोत्करदक्षनेत्रकुटिलप्रांतोत्थिताग्निस्फुरत्खद्योतोपमविष्फुलिंगभसिताब्रह्मेशशक्रोत्कराः ॥ २॥ इतिश्रीमदानंदतीर्थभगवत्पादाचार्यविरचितंनरसिंहनखस्तोत्रंसंपूर्णम् ॥ ॥ ॥ ॥ ॥

श्रीहयग्रीवायनमः ॥ ध्यायेत्तंपरमानंदंयन्मातापतिमयदपरमानंदम् ॥ उज्झितपरमानंदंपत्याद्याद्याश्रमैःसदैवपरमानंदम् ॥ १ ॥ यस्यकरालोलंचक्रंकालःपरःसहिकरालोलम् ॥ यस्यगदापवमानःसन्योऽयासोभवत्सदापवमानः ॥ २ ॥ यस्यरमानमनोगंजगृहेविश्वंभरापिनमनोगम् ॥ यस्यपुमानानंदंभुंक्तेयद्धामकपतिमानानंदम् ॥ ३ ॥ परमेषुयदातेजःपरमेषुचकारवासुदेवोजः॥ मानधिबिभ्रत्सुमनोमानधिमासीन्नवासुदेवोजः ॥ ४ ॥ सोऽजनिदेवक्यंतेयस्मादनुकंपनावदेवक्यंते ॥ अवदन्देवक्यंतेभुवनंहिसुराःसदैवदेवक्यंते ॥ ५ ॥ नीतोवसुदेवेनस्वततेनसगोकुलंसुवसुदेवेन ॥ तत्रयशोदातनयंमेनेकृष्णंस्वकीयमवदातनयम् ॥ ६ ॥ ववृधेगोकुलमध्यायोदेवोविश्वमद्भुताकुलमध्यात् ॥ तत्रचपूतनिकायावधमकरोद्यन्निजाभवंतिसपूतनिकायाः ॥ ७ ॥ अधुनोच्छकटंलोलीपादांगुष्ठेनवातपेशशकटंलोली ॥ अतनोद्रक्षामस्यस्वाज्ञानाद्गोपिकासदेरक्षामस्य ॥ ८ ॥ मुखलालनलोलातन्मुखगंजगदचष्टसालनलोलातत् ॥ नाध्येन्मायामस्यजगत्प

भोःस्वधिकततमायामस्य ॥ ९ ॥ तस्यसुशर्माण्यकरोदरिणोगर्गःसदुक्तिकर्माण्यकरोत् ॥ अ
वदन्नामानमयंजगदादिंवासुदेवनामानमयम् ॥ १० ॥ तस्यसखाबलनामाज्येष्ठोभ्राताथयन्नि
जाबलनामा ॥ यस्यचपर्यंकोयंपूर्वतनोविष्णुमज[illegible]र्यंकोयम् ॥ ११ ॥ तेनहतोवातरयस्तृ
णचक्रोनामदितिसुतोवातरयः ॥ हरमाणोबालतमंस्वात्मानंकंठरोधिनाबालतमम् ॥ १२ ॥
सोवनिमध्येरंगन्नरिदरयुग्बालरूपमध्येरंगन् ॥ अमुषन्नवनीतमदःस्वगोकुलेगोपिकासुनवनी
तमदः ॥ १३ ॥ तन्मातकोपमितातमनुससारात्मवादवाकोपमिता ॥ जगृहेसानमनंतंदेवंत
च्चिंतयैवसानमनंतम् ॥ १४ ॥ अथसांतरितामानंविष्णुंविश्वोद्भवंसदांतरितामानम् ॥ अ
नयद्दामोदरतांयोऽरमयत्सुंदरींनिजामोदरताम् ॥ १५ ॥ चक्रेसोर्जुननाशंप्राप्नोतियत्स्मृतिः
सदार्जुननाशम् ॥ तौचगतौनिजमोकस्तेनैवनुतेनयन्निजानिजमोकः ॥ १६ ॥ अथवृं
दावनवासंगोपाश्चक्रुर्जगत्क्षितावनवासम् ॥ तत्रबकासुरमारःशौरिरभून्नित्यसंश्रितासुरमारः
॥ १७ ॥ अहनद्वत्सतनुकंयोपाह्लोकंस्वयत्नवत्सतनुकम् ॥ सोपाद्वत्सानमरःसहोन्यजोगोपव
त्सुवत्सानभरः ॥ १८ ॥ सविभुःश्रीमानहिकेननर्तयस्यश्रमानमामानहिके ॥ अकरोन्नद्युदकां
तंकांतंनीत्वोरगंसनाद्युदकांतम् ॥ १९ ॥ हत्वाधेनुकमूढंबलात्प्रलंबंचखेटसधेनुकमूढम् ॥ व्रजमा
वीदमृताशःपीत्वावह्निंचरस्थिरादमृताशः ॥ २० ॥ गिरिणारक्षापिकृताव्रजस्यतेनस्वरक्षरक्षापि
कृता ॥ शक्रायव्यंजयतास्वांशक्तिंविश्वमात्मनाव्यंजयता ॥ २१ ॥ रेमेगोपीष्वरिहासमन्मथा
क्रांतसुंदरीपीष्वरिहा ॥ पूर्णानंदैकतनुःसविश्वरुक्पावनोप्यानंदैकतनुः ॥ २२ ॥ अथहतयोर्ग

लिकेश्योः श्वफल्कजप्रापितःपुरींगल्लिकेश्योः ॥ भङ्क्त्वाधनुराजवरंजघानतेनैवचस्वयंराजवरम् ॥ २३ ॥ मृद्नन्गजमुग्रबलंसबलोरंगंविवेशसूतिमुग्रबलम् ॥ हत्वामल्लौबलिनौकंसंचविमोक्षितौत तोरौबलिनौ ॥ २४ ॥ प्रादात्सांदीपनयेमृतपुत्रंज्ञानदीपसांदीपनये ॥ गुर्वर्थेज्ञानतमःप्रभेदिता नित्यसंभृताज्ञानतमः ॥ २५ ॥ जित्वामागधराजंतोषितमकरोत्सदात्मयोगधराजम् ॥ अनुकुर्व न्निजसदनंचक्रेरम्यंपुरंसुबोधनिजसदनम् ॥ २६ ॥ प्रसभंसगजबलस्यक्षत्रस्योच्चैःसमगधराज बलस्य ॥ मानंशिशुपालवरंहत्वाभैष्मीमवापशिशुपालवरम् ॥ २७ ॥ हंसोडिभिकश्चपलावमुना संसूदितौयवनकश्चपला ॥ कीर्तिर्विमलाविरताप्रतताविश्वाधिपावनीलाविरता ॥ २८ ॥ सत्या जांबवतीयाभार्याविंदाद्याभानुसांबवतीर्याः ॥ प्रद्युम्नंमोदरतःप्रापज्येष्टंहरिःसुतंस्वमोदरतः ॥ २९ ॥ यत्परिवारतयेशाजातादेवानृपात्मनारतयेशाः ॥ यद्भरितंविषसर्पप्रभृतिध्वांतंनमारु तिंविषसर्प ॥ ३० ॥ येनहिडिंबबकाद्यारक्षोधीशानिपातिताबबकाद्याः ॥ भीमेप्रीतिममेयांव्यं जयतातेनैवशेषपातिममेया ॥ ३१ ॥ अथकृष्णावरणेतान्प्रासान्त्राज्ञोऽशृणोत्सदावरणेतान् ॥ द्रष्टुंयातःसबलस्तांश्चानैषीत्पृथासुतांस्ततःसबलः ॥ ३२ ॥ तानिंद्रस्थलवासांश्चक्रेकृष्णःपरोनि जस्थलवासान्॥स्वबलोद्रेचितमानैर्जुगोपधर्मंचतैःपरांचितमानैः॥३३॥ वालिवधानुनयायप्रणयी सख्यंसुसंदधेनुनयाय॥वासवजेनविशेषात्तेनैवपुनर्नृजन्मजेनविशेषात्॥३४॥ मातुःपरिभवहान्यै राज्ञाद्युसदामितश्चपरिभवहान्यै ॥ अभवन्नरकमुरारिर्योवासीदत्समस्तनरकमुरारिः ॥३५॥ नीतोदिविदेववरैरेमेसत्यासमन्वितोदेववरैः ॥ सर्वर्तुवनेशशिनानिशिसत्यांवासरेवनेशशिना ॥३६॥

सुरतरुमापालिमतात्प्रकाशयञ्छक्तिमात्मनः पालिमतात् ॥ सुरवरवीरेषुदरीप्रधानजीवेश्वरः परेषुद
री॥ ३७ ॥ पुरमभियायारिदरीदत्त्वाभद्रांपृथासुतायारिदरी ॥ शक्रपुरीमभियातः प्रादाद्दहे
वनंसतामभियातः ॥ ३८ ॥ शिवभक्तप्रवराद्यंपुमान्नसेहेगिरीशविप्रवराद्यम् ॥ तंस्वात्मे
न्द्रवरेणऽधुनोद्भीमेनधूतरुद्रवरेण ॥ ३९ ॥ यस्याज्ञाबलसारैः पार्थैर्दिग्भ्योऽहृतंधनंबलसा
रैः ॥ जित्वाक्ष्मामविशेषांप्रसह्यभूपान्समस्तकामविशेषाम् ॥ ४० ॥ अथपार्थान्क्रतुराजंप्राप
यदमरेट्सरुद्रशक्रतुराजम् ॥ पूजातेनावापिच्छिन्नश्चैद्यः सूतिंगतेनावापि ॥ ४१ ॥ निहतौसौ
भकरूशौशीतोभातश्चयेनतौभकरूशौ ॥ अजयद्द्वंद्वंचरणेबाणार्थैर्वानिपतितकचंद्रंचरणे ॥ ४२ ॥
असृजज्ज्वरमुग्रतमः क्षयप्रदोलीलयाधिवरमुग्रतमः ॥ क्रीडामात्रंविश्वंप्रकाशयन्नात्मनः सविहरक
मात्रंविश्वम् ॥ ४३ ॥ यस्यावेशोरुबलान्व्यहनत्पार्थोसुरान्प्रजेशोरुबलान् ॥ वरदानादस्यैवज
गत्प्रभोरीरणात्समनुगतनादस्यैव ॥ ४४ ॥ यस्यावेशात्सबलः प्रचकर्षपुरंप्रसह्यचेशात्सबलः ॥
कुरुपतिनामनुयमुनाकृष्टायेनाहुरर्ष्यमतनुयमुना ॥ ४५ ॥ यद्बलवान्क्रोधवशान्निनायनाशंवृको
दरः क्रोधवशान् ॥ लेभेचान्यागम्यंस्थानंपुष्पाणिधामचान्यागम्यम् ॥ ४६ ॥ यद्बलभारवहत्वा
न्नाचलदुरगादिभिः सुभारवहत्वात् ॥ धर्मादरिहापिपदंभीमोयेनैवसाहसंरिहापिपदम् ॥ ४७ ॥
नहिनहुषोलंनहितुंधर्मोद्रौणिस्तथेतरोलंनहितुम् ॥ नोराट्कृष्णोब्रह्मवरीयेनध्वस्तोस्त्रभग्नहीताब्रह्म
वरी॥४८॥क्षात्रंधर्मंस्ववतागुरुरस्यैकेशवाज्ञयाचरमंस्ववता॥ सर्वंसेहेमनसाभीमेनेशैकमानिनाहे
मनसा ॥४९॥ यद्भक्तप्रवरेणप्रोतस्त्वस्मिन्सकीचकः प्रवरेण॥पतितास्तस्यसहायाः कृष्णार्थेमानि

नःसमस्यसहायाः ॥५०॥ यद्भक्त्यानुगृहीतौपार्थौभीमश्वगोनृपौनिगृहीतौ ॥ ऋणमुक्त्यैसुन्य
त्यस्त्यैक्रमशोवीरामुंचतांसुन्यत्यस्त्यै ॥ ५१ ॥ यद्भक्त्यामितयालंकृष्णाकार्येविवेशकृष्णाका
र्ये ॥ यामीरार्धतनुत्वान्नापाद्भीमाद्दतेपिनापाद्भीमात् ॥ ५२ ॥ यांस्प्रष्टुमिच्छंतमजातशत्रुंन्य
वारयत्स्वस्थमजातशत्रुम् ॥ शंरूपानेनित्यरतेरियंश्रीरितिस्मदेवेड्यदितेरियंश्रीः ॥ ५३ ॥ मन
सामनसामनसामनसायमनंतमजस्रमवेदनुया ॥ विलयंविलयंविलयंविलयन्निखिलंत्वशुभंप्रच
कारचयः ॥५४॥ सोगाहूतमुखेनप्रभुणेदंवर्तनेयदूतमुखेन ॥ पार्थार्थैबहुतनुतांयत्रप्रकाशयत्स्व
यंसबहुतनुताम् ॥ ५५ ॥ गुरुकर्णनदीजादीनवधीच्चक्षुर्बलेनजनदीजादीन् ॥ शक्त्यानिजया
परवान्स्वजनामुद्रेचयन्ननंततयापरवान् ॥ ५६ ॥ यस्यमुनीतिसहायान्नारिपून्मेनेर्जुनःसमेतसहा
यान् ॥ अकरोच्चासुपरासुप्रततिंसेनासुधावतासुपरासु ॥ ५७ ॥ येनजयद्रथमारःपार्थःशत्रूनवाप
तद्रथमारः ॥ यद्विरहादपिदेहेसरथःशश्वत्स्थितेःसदादपिदेहे ॥ ५८ ॥ यद्भरितोभरताभःप्रभुरं
भाभावितोभिभरताभः ॥ भीमोरभसाभिभवीप्रसभंभाभाभिभूर्भासाभिभवी॥५९॥यदनुग्रहपू
र्णत्वाद्भीमःसर्वानरीननहिपूर्णत्वात् ॥ अदहद्बाहुबलेनक्रोधाग्नावाहितान्निजाहुबलेन ॥ ६० ॥
कृष्णाभीमाप्ततमःशीर्णयेनस्वकीयहृदयमाप्ततमः ॥ धृतराष्ट्रसुतानवधीद्भीमेनस्थापितोमनसि
सुसुतानवधीत् ॥ ६१ ॥ भीमविपाटितदेहानदर्शयत्स्वानरीन्विपाटितदेहान् ॥ कृष्णायाहितका
रीसम्यग्गीरप्रियःसदाहितकारी ॥ ६२ ॥ अथहरिणापीतबलंद्रौणेरस्त्रंमहारिणापीतबलम् ॥ दध
तावासोमरणंनीतंचक्रेभिमन्युजंसोमरणम् ॥ ६३ ॥ तस्यचरक्षामुक्ताजनार्दनेनेशशेषकेक्षासुक्त

ता ॥ पार्थेषुप्रेमवतानित्यंभर्त्रासुतासुविप्रेमवता ॥ ६४ ॥ ज्ञानंपरमंप्रादाद्भीष्मगतःमूतिविमो
क्षचरमंप्रादात् ॥ पांडुसुतानामधिकंचकेवेदंगुणोत्तरंस्वनामधिकम् ॥ ६५ ॥ तेनावापिसुजातै
र्हयमेधस्तुरगवर्तनोपसुजातैः ॥ पांडुसुतैःसवसूकैःप्राप्तैर्व्यासात्मनासुसवसूकैः ॥ ६६ ॥ तदनुसु
पांडुतनूजैरेमेक्ष्मापालयन्सुपांडुतनूजैः ॥ अनुपमसुखरूपोजःपरमःश्रीवल्लभःसतिसुखरूपोजः
॥६७॥ सुगतिंचरमामददान्निजयोग्यांज्ञानिसुततिंपरमामददात् ॥ पार्थानांसयदूनांसपितृप्रेष्या
दिनामिनांसयदूनाम् ॥६८॥ रेमेतत्रापिसुखीपरमोनंतोननंदतत्रापिसुखी ॥ प्राणेनेंदिरयाचप्रथु
तोनित्यंमहागुणेंदिरयाच ॥ ६९ ॥ एवंसर्वाणिहरेरूपाणिश्रीपतेःसुपर्वाणिहरेः ॥ पूर्णसुखानिसु
भांतिप्रततानिनिरंतराणिसुभांति ॥ ७० ॥ रामराममहाबाहोमायातेसुदुरासदा ॥ वादसाददको
लोकेपादावेवतवासजेत् ॥ ७१ ॥ जेत्सवातववेदापाकेल्लोकोददसादव ॥ दासरादुसुतेयामाहो
बाहाममरामराः ॥ ७२ ॥ देवानांपतयोनित्यंमतंयस्यनजानते ॥ तस्मैदेवनमस्येहंभवतेऽसुर
मारये ॥ ७३ ॥ समस्तदेवजनकवासुदेवपरामृत ॥ वासुदेवपरामृतज्ञानमूर्तेनमोस्तुते ॥ ७४ ॥
देवादेदेवलोकपपूर्णानंदमहोदधे ॥ सर्वज्ञेशरमानाथदेवादेदेवलोकप ॥ ७५ ॥ योनिर्ममेशेषपुरा
णविद्यांयोनिर्ममेशेषपुराणविद्याम् ॥ योनिर्ममेशेषपुराणविद्यांयोनिर्ममेशेषपुराणविद्याम् ॥७६॥
अनंतपारामितविक्रमेशप्रभोरमापारमनंतपार ॥ महागुणाढ्यापरिमेयसत्वरमालयाशेषमहागुणा
ढ्य ॥ ७७ ॥ भाभाभाभाभाभाभाभाभाभाभाभाभाभा ॥ भाभाभाभाभाभाभाभा
भाभाभाभाभाभाभा ॥ ७८ ॥ नैवपरःकेशवतःपरमादस्मात्समश्चसुकेशवतः ॥ सोयंशपथवरोनः

शश्वत्संधारितःसुशपथवरोनः ॥ कृष्णकथेयंयमितासुखतीर्थेनोदितोनेयंयमिता ॥ भक्तिमताप
रमेशेसर्वोद्रेकात्सदानुतापरमेशे ॥ ८० ॥ इतिनारायणनामासुखतीर्थपूजितःसुरायणनामा ॥
पूर्णगुणैरधिकज्ञानेच्छाभक्तिभिःस्वधिकपूर्णः ॥ ८१ ॥ इतिश्रीमदानंदतीर्थभगवत्पादाचार्यवि
रचितंयमकभारतंसंपूर्णम् ॥ ॥७॥



श्रीमन्मध्वहृदंतर्वर्तिश्रीलक्ष्मीनारायणायनमः॥ ॥ हरिःॐ॥ वंदेवंद्यंसदानंदंवासुदेवंनिरजंनम्॥
इंदिरापतिमाद्यादिवरदेशवरप्रदम् ॥ १ ॥ नमामिनिखिलाधीशकिरीटाघृष्टपीठवत् ॥ हृत्तम
श्शमनेर्काभंश्रीपतेःपादपंकजम् ॥ २ ॥ जांबूनदांबराधारंनितंबांचिंत्यमीशितुः ॥ स्वर्णमंजीरसं
वीतमारूढंजगदंबया ॥ ३ ॥ उदरंचिंत्यमीशस्यतनुत्वेप्यखिलंभरम् ॥ वलित्रयांकितंनित्यमुप
गूढंश्रियैकया ॥ ४ ॥ स्मरणीयमुरोविष्णोरिंदिरावासमीशितुः ॥ अनंतमंतवदिवभुजयोरंतरंग
तम् ॥ ५ ॥ शंखचक्रगदापद्मधराश्चिंत्याहरेर्भुजाः ॥ पीनवृत्ताजगद्रक्षाकेवलोद्योगिनोनिशम्
॥ ६ ॥ सततंचिंतयेत्कंठंभास्वत्कौस्तुभभासकम् ॥ वैकुंठस्याखिलावेदाउद्गीर्यंतेऽनिशंयतः॥७॥
स्मरेतयामिनीनाथसहस्रामितकांतिमत् ॥ भवतापापनोदीड्यंश्रीपतेर्मुखपंकजम् ॥ ८ ॥ पूर्णा
नन्यसुखोद्भासिमंदस्मितमधीशितुः ॥ गोविंदस्यसदाचिंत्यंनित्यानंदपदप्रदम् ॥ ९ ॥ स्मराभि
भवसंतापहानिदामृतसागरम् ॥ पूर्णानंदस्यरामस्यसानुरागावलोकनम् ॥ १० ॥ ध्यायेदजस्र
मीशस्यपद्मजादिप्रतीक्षितम् ॥ भ्रूभंगंपारमेष्ठ्यादिपददायिविमुक्तिदम् ॥११ ॥ संततंचिंतयेऽ
नंतमंतकालेविशेषतः ॥ नैवोदापुर्गृणंतोतंयद्गुणानामजादयः ॥ १२ ॥ ॥ इतिश्रीमदानंदती
र्थभगवत्पाचार्यविरचितेद्वादशस्तोत्रेप्रथमोऽध्यायः ॥ १ ॥ ॥ ॥ ॥
सुजनोदधिसंवृद्धिपूर्णचंद्रोगुणार्णवः ॥ अमंदानंदसांद्रोनःप्रीयतामिंदिरापतिः ॥ १ ॥ रमा
चकोरीविधवेदुष्टदर्पोदवह्नये ॥ सत्पांथजनगेहायनमोनारायणायते ॥ २ ॥ चिदचिद्भेदमखि
लंविधायाधायभुंजते ॥ अव्याकृतगृहस्थायरमाप्रणयिनेनमः ॥ ३ ॥ अमंदगुणसारोपिमंदहा

सेनवीक्षितः ॥ नित्यमिंदिरयानंदसांद्रोयोनौमितंहरिम् ॥ ४ ॥ वशीवशेनकस्यापियोऽजितो
विजिताखिलः ॥ सर्वकर्तानक्रियतेतंनमामिरमापतिम् ॥५ ॥ अगुणायगुणोद्रेकस्वरूपायादिका
 रिणे ॥ विदारितारिसंघायवासुदेवायतेनमः ॥ ६ ॥ आदिदेवायदेवानांपतयेसादितारये ॥ अना 
द्यज्ञानपारायनमोवरवरायते ॥ ७ ॥ अजायजनयित्रेस्यविजिताखिलदानव ॥ अजादिपूज्य
पादायनमस्तेगरुडध्वज॥८॥ इंदिरामंदसांद्राग्यकटाक्षप्रेक्षितात्मने ॥ अस्मदिष्टैककार्यायपूर्णा
यहरयेनमः ॥ ९ ॥ ॥ इतिश्रीम०श्रीमद्द्वादशस्तोत्रेद्वितीयोऽध्यायः ॥ २ ॥ ॥ छ ॥
कुरुभुंक्ष्वचकर्मनिजंनियतंहरिपादविनम्रधियासततम् ॥ हरिरेवपरोहरिरेवगुरुर्हरिरेवजगत्पितृमा
तृगतिः ॥१ ॥ नततोस्त्यपरंजगतीड्यतमंपरमात्परतःपुरुषोत्तमतः ॥ तदलंबहुलोकविचिंतनया
प्रवणंकुरुमानसमीशपदे ॥२॥ यततोपिहरेःपदसंस्मरणेसकलंह्यघमाशुलयंव्रजति ॥ स्मरतस्तु
विमुक्तिपदंपरमंस्फुटमेष्यतितत्किमपाक्रियते ॥३॥ शृणुतामलसत्यवचःपरमंशपथेरितमुच्छ्रित
बाहुयुगम् ॥ नहरेःपरमोनहरेःसदृशःपरमःसतुसर्वचिदात्मगणात् ॥४॥ यदिनामपरोनभवेत्सहरिः
कथमस्यवशेजगदेतदभूत् ॥ यदिनामनतस्यवशेसकलंकथमेवतुनित्यसुखंनभवेत्॥५॥ नचकर्म
विमामलकालगुणप्रभृतीशमचित्तनुतद्धियतः ॥ चिदचित्तनुसर्वमसौतुहरिर्यमयेदितिवैदिकम
स्तिवचः ॥ ६ ॥ व्यवहारभिदापिगुरोर्जगतांनतुचित्तगतासहिचोद्यपरम् ॥ बहवःपुरुषाःपुरुष
प्रवरोहरिरित्यवदत्स्वयमेवहरिः ॥ ७ ॥ चतुराननपूर्वविमुक्तगणाहरिमेत्यतुपूर्ववदेवसदा ॥ निय 
तोच्चविनीचतयैवनिजांस्थितिमापुरितिस्मपरंवचनम् ॥ ८ ॥ आनंदतीर्थसन्नाम्नापूर्णप्रज्ञाभि

धायुजा ॥ कृतंहर्यष्टकंभक्त्यापठतःप्रीयतेहरिः ॥ ९ ॥ इतिश्रीमद्द्वादशस्तोत्रेतृतीयोऽध्यायः॥३॥
निजपूर्णसुखामितबोधतनुःपरशक्तिरनंतगुणःपरमः ॥ अजरामरणःसकलार्तिहरःकमलापतिरी
ड्यतमोवतुनः ॥ १ ॥ यदसुप्तिगतोपिहरिःसुखवान्सुखरूपिणमाहुरतोनिगमाः ॥ स्वमतिप्रभ
वंजगदस्ययतःपरबोधतनुंचततःखपतिम् ॥ २ ॥ बहुचित्रजगद्बहुधाकरणात्परशक्तिरनंतगुणः
परमः ॥ सुखरूपममुष्यपदंपरमंस्मरतस्तुभविष्यतितत्सततम् ॥ ३ ॥ स्मरणेहिपरेशितुरस्यवि
भोर्मलिनानिमनांसिकुतःकरणम् ॥ विमलंहिपदंपरमंस्वरतंतरुणार्कसवर्णमजस्यहरेः ॥ ४ ॥ वि
मलैःश्रुतिशाणनिशाततमैःसुमनोसिभिराशुनिहत्यदृढम् ॥ बलिनंनिजवैरिणमात्मतमोभिदमीश
मनंतमुपास्वहरिम् ॥ ५ ॥ सहिविश्वसृजोविभुशंभुपुरंदरसूर्यमुखानपरानपरान् ॥ सृजतीड्यत
मोवतिहंतिनिजंपदमापयतिप्रणतान्सुधिया ॥ ६ ॥ परमोपिरमेशितुरस्यसमोनहिकश्चिदभून्न
भविष्यतिच ॥ क्वचिदद्यतनोपिनपूर्णसदागणितेड्यनुणागुभवैकतनोः ॥ ७ ॥ इतिदेववरस्यह
रेःस्तवनंकृतवान्मुनिरुत्तममादरतः ॥ सुखतीर्थपदाभिहितःपठतस्तदिदंभवतिध्रुवमुच्चसुखम्
॥ ८ ॥ ॥ इतिश्रीमदानन्द॰श्रीमद्द्वादशस्तोत्रेचतुर्थोऽध्यायः ॥ ४ ॥ ॥ ॥
वासुदेवापरिमेयसुधामन्शुद्धसदोदितसुंदरीकांत ॥ धराधरधारणवेधुरधर्तस्सौधृतिदीधितिवेधृ
विधातः ॥ १ ॥ अधिकबंधरंधयबोधाच्छिधिपिधानंबंधुरमद्धा ॥ केशवकेशवशासकवंदेपाशध
रार्चितशूरवरेश ॥ २ ॥ नारायणामलकारणवंदेकारणकारणपूर्णवरेण्य ॥ माधवमाधवसाधक
वंदेबाधकबोधकशुद्धसमाधे ॥ ३ ॥ गोविंदगोविंदपुरंदरवंदेस्कंदसुनंदनवंदितपाद ॥ विष्णोसृ

जिष्णोग्रसिष्णोविवंदेकृष्णसदुष्णवधिष्णोसुधृष्णो ॥ ४ ॥ मधुसूदनदानवसादनवंदेदैवतमोदित
वेदितपाद ॥ त्रिविक्रमनिष्क्रमविक्रमवंदेसुक्रमसंक्रमहुंकृतवक्र ॥ २ ॥ वामनवामनभामनवं
देसामनसीमनशामनसानो ॥ श्रीधरश्रीधरशंधरवंदेभूधरवार्धरकंधरधारिन् ॥ ६ ॥ हृषीकेशसु
केशपरेशविवंदेशरणेशकल्लेशबल्लेशसुखेश ॥ पद्मनाभशुभोद्भववंदेसंभृतल्लोकभराभरभूरे ॥७॥
दामोदरदूरतरांतरवंदेदारितपारगपारपरस्मात् ॥ ८ ॥ आनंदतीर्थमुनींद्रकृताहरिगीतिरियंपरमा
दरतः ॥ परल्लोकविल्लोकनसूर्यनिभाहरिभक्तिविवर्धनशौंडतमा॥१॥ इतिद्वा० पंचमोध्यायः ॥५॥
मत्स्यकरूपलयोदविहारिन्वेदविनेतृचतुर्मुखवंद्य ॥ कूर्मस्वरूपकमंदरधारिन्लोकविधारकदेववरे
ण्य ॥ १ ॥ सूकररूपकदानवशत्रोभूमिविधारकयज्ञवरांग ॥ देवनृसिंहहिरण्यकशत्रोसर्वभयांत
कदैवतबंधो ॥ २ ॥ वामनवामनमाणववेषदैत्यवरांतककारणरूप ॥ रामभृगूद्वहसूर्जितदीप्तेक्षत्र
कुल्लांतकशंभुवरेण्य ॥ ३ ॥ राघवराघवराक्षसशत्रोमारुतिवल्लभजानकीकांत ॥ देवकिनंदनसुं
दररूपरुक्मिणीवल्लभपांडवबंधो ॥ ४ ॥ देवकिनंदननंदकुमारवृंदावनांचनगोकुलचंद्र ॥ कंदर्फ
लाशनसुंदररूपनंदितगोकुलवंदितपाद ॥ ५ ॥ इंद्रसुतावकनंदकहस्तचंदनचर्चितसुंदरीनाथ ॥
इंदीवरोदरदलनयनमंदरधारिन्गोविंदवंदे ॥ ६ ॥ चंद्रशताननकुंदसुहासनंदितदैवतानंदसुपूर्ण ॥
दैत्यविमोहकनित्यसुखादेदेवसुबोधकबुद्धस्वरूप ॥ ७ ॥ दुष्टकुल्लांतककल्किस्वरूपधर्मविव
र्धनमूलयुगादे ॥ नारायणामलकारणमूर्तेपूर्णगुणार्णवनित्यविबोध ॥ ८ ॥ आनंदतीर्थमुनींद्रकृ
ताहरिगाथापापहराशुभनित्यसुखार्थां ॥१॥ इतिश्रीमदानन्दश्रीमद्द्वादशस्तोत्रेषष्ठोऽध्यायः॥६॥

विश्वस्थितिप्रलयसर्गमहाविभूतिवृत्तिप्रकाशनियमावृतिबंधमोक्षाः ॥ यस्याअपांगलवमात्रत
ऊर्जितासा श्रीर्यत्कटाक्षबलवत्यजितंनमामि॥ १ ॥ब्रह्मेशशक्ररविधर्मशशांकपूर्वगीर्वाणसंततिरियं
यदपांगलेशम्॥आश्रित्यविश्वविजयंविसृजत्यचिंत्याश्रीर्यत्कटाक्षबलवत्यजितंनमामि ॥ २॥ध
र्मार्थकामसुमतिप्रचयाद्यशेषसन्मं ङ्विदधतेतदपांगलेशम् ॥ आश्रित्यतत्प्रणतसत्प्रणताअपी
ड्यश्रीर्यत्कटाक्षबलवत्यजितंनमामि ॥ ३ ॥ षड्वर्गनिग्रहनिरस्तसमस्तदोषाध्यायंतिविष्णुमृ
षयोयदपांगलेशम् ॥ आश्रित्ययानपिसमेत्यनयातिदुःखंश्रीर्यत्कटाक्षबलवत्यजितंनमामि ॥
॥ ४ ॥ शेषाहिवैरिशिवशक्रमनुप्रधानचित्रोरुकर्मरचनंयदपांगलेशम् ॥ आश्रित्यविश्वमखि
लंविदधातिधाताश्रीर्यत्कटाक्षबलवत्यजितंनमामि ॥ ५॥ शक्रोग्रदीधितिहिमाकरसूर्यसूनुपूर्वं
निहत्यनिखिलंयदपांगलेशम् ॥ आश्रित्यनृत्यतिशिवःप्रकटोरुशक्तिःश्रीर्यत्कटाक्षबलवत्यजि
तंनमामि ॥ ६ ॥ तत्पादपंकजमहासनतामवापशर्वादिवंद्यचरणोयदपांगलेशम् ॥ आश्रित्यना
गपतिरन्यसुरैर्दुरापांश्रीर्यत्कटाक्षबलवत्यजितंनमामि ॥ ७ ॥ नागारिरुग्रबलपौरुषआपविष्णो
र्वाहत्वमुत्तमजवोयदपांगलेशम् ॥ आश्रित्यशक्रमुखदेवगणैरचिंत्यंश्रीर्यत्कटाक्षलवत्यजितंनमा
मि ॥ ८ ॥ आनंदतीर्थमुनिसन्मुखपंकजोत्थंसाक्षाद्रमाहरिमनःप्रियमुत्तमार्थम् ॥ भक्त्यापठत्य
जितमात्मनिसन्निधाययःस्तोत्रमेतदभियातितयोरभीष्टम् ॥ ९॥ इतिश्रीमदानन्दतीर्थश्रीमद्द्वाद
शस्तोत्रेसप्तमोऽध्यायः ॥ ७ ॥

वंदिताशेषवंद्योरुवृंदारकंचंदनाचर्चितोदारपी[illegible]म् धृष्णो ॥ ॐ ॥ इंदिराचंचलापागनीराजितंमंदरोद्धा
रिवृत्तोद्धुजाभोगिनम् ॥ प्रीणयामोवासुदेवंदेवतामंडलाखंडमंडनम् ॥ १॥ सृष्टिसंहारलीलावि
लासाततंपुष्टषाड्गुण्यसद्विग्रहोल्लासिनम् ॥ दुष्टनिःशेषसंहारकर्मोद्यतंहृष्टपुष्टानुशिष्टप्रजासंश्र
यम् ॥ प्रीणयामोवासुदेवंदेवतामंडलाखडमंडनम् ॥ २ ॥ उन्नतप्रार्थिताशेषसंसाधकंसन्नतालौ
किकानंददश्रीपदम् ॥ भिन्नकर्माशयप्राणिसंप्रेरकंतन्नकिंनेतिविद्वत्सुमीमांसितम् ॥ प्रीणया
मोवासुदेवंदेवतामंडलाखंडमंडनम् ॥ ३ ॥ विप्रमुख्यैःसदावेदवादोन्मुखैःसुप्रतापैःक्षितीशेश्वरैश्चा
र्चितम् ॥ अप्रतर्क्योरुसंविद्गुणंनिर्मलंसप्रकाशाजरानंदरूपंपरम्॥प्रीणयामोवासुदेवंदेवतामंडला
खंडमंधनम् ॥ ४ ॥ अत्ययोयस्यकेनापिनक्वापिहिप्रत्ययोयद्गुणेषूत्तमानांपरः ॥ सत्यसंकल्पए
कोवरेण्योवशीमत्यनूनैःसदावेददवादोदितः॥प्रीणयामोवासुदेवंदेवतामंडलाखंडमंडनम् ॥ ५ ॥ प
श्यतांदुःखसंताननिर्मूलनंदृश्यतांदृश्यतामित्यजेशार्चितम्॥नश्यतांदूरगंसर्वदाप्यात्मगंवश्यतांस्वे
च्छयासज्जनेष्वागतम्॥प्रीणयामोवासुदेवंदेवतामंडलाखंडमंडनम्॥ ६॥अग्रजंयःससर्जाजमग्र्या
कृतिंविग्रहोयस्यसर्वेगुणाएवहि ॥ उग्रआद्योपियस्यात्मजाग्र्यात्मजःसद्गृहीतःसदायःपरंदैवतम्॥
प्रीणयामोवासुदेवंदेवतामंडलाखंडमंडनम् ॥ ७ ॥ अच्युतोयोगुणैर्नित्यमेवाखिलैःप्रच्युतोशेष
दोषैःसदापूर्तितः ॥ उच्यतेसर्ववेदोरुवादैरजःस्वर्चितोब्रह्मरुद्रेंद्रपूर्वैःसदा ॥ प्रीणयामोवासुदेवंदे
वतामंडलाखंडमंडनम् ॥ ८ ॥ धार्यतेयेनविश्वंसदाजादिकंवार्यतेशेषदुःखंनिजध्यायिनां ॥ पार्य
तेसर्वमन्यैर्नयत्पार्यतेकार्यतेचाखिलंसर्वभूतैःसदा॥प्रीणयामोवासुदेवंदेवतामंडलाखंडमंडनम्॥९

सर्वपापानियत्संस्मृतेःसंक्षयंसर्वदायांतिभक्त्याविशुद्धात्मना ॥ शर्वगुर्वादिगीर्वाणसंस्थानदःकुर्व
तेकर्मयत्प्रीतयेसज्जनाः ॥ प्रीणयामोवासुदेवंदेवतामंडलाखंडमंडनम् ॥ १० ॥ अक्षयंकर्मय
स्मिन्परेस्वर्पितंप्रक्षयंयांतिदुःखानियन्नामतः ॥ अक्षरोयोऽजरःसर्वदैवामृतःकुक्षिगंयस्यविश्वं
सदाजादिकम् ॥ प्रीणयामोवासुदेवंदेवतामंडलाखंडमंडनम् ॥ ११ ॥ नंदतीर्थोरुसन्नामिनोनं
दिनःसंदधातनाःसदानंददेवेमतिं॥ मंदहासारुणापांगदत्तोन्नतिंनंदिताशेषदेवादिवृंदंसदा ॥ प्री
णयामोवासुदेवदेवतामंडलाखंडमंडनम् ॥ १२ ॥ इतिश्रीमद्द्वादशस्तोत्रेअष्टमोऽध्यायः ॥८ ॥
अतिमततमोगिरिसमितिविभेदनपितामहभूतिदगुणगणनिलय ॥ शुभतमकथाशयपरमसदोदि
तजगदेककारणरामरमारमण ॥१ ॥ विधिभवमुखसुरसततसुवंदितरमामनोवल्लभभवममशरणम्
शुभतमकथाशयपरमसदोदितजगदेककारणरामरामरमारमण॥२॥ अगणितगुणगणमयशरीरहे
विगतगुणेतरभवममशरणम् ॥ शुभतमकथाशयपरमसदोदितजगदेककारणरामरमारमण ॥ ३॥
अपरिमितसुखनिधिविमलसुदेहहेविगतसुखेतरभवममशरणम् ॥शुभतमकथाशयपरमसदोदित
जगदेककारणरमारमण ॥ ४॥ प्रचलितलयजलविहरणशाश्वतसुखमयमीनहेभवममशरणम् ॥
शुभतमकथाशयपरमसदोदितजगदेककारणरामरमारमण ॥५ ॥ सुरदितिजसुबलविलुलितमंद
रधरपरकूर्महेभवममशरणम् ॥ शुभतमकथाशयपरमसदोदितजगदेककारणरामरमारमण ॥ ६॥
सगिरिवरधरातलवहसुसूकरपरमविबोधहेभवममशरणम् ॥ शुभतमकथाशयपरमसदोदितजगदे
ककारणरामरमारमण ॥ ७ ॥ अतिबलदितिसुतहृदयविभेदनजयनृहरेऽमलभवममशरणम् ॥

शुभतमकथाशयपरमसदोदितजगदेककारणरामरमारमण ॥ ८ ॥ बलिमुखदितिसुतविजयविनाशनजगदवनाजितभवममशरणम् ॥ शुभतमकथाशयपरमसदोदितजगदेककारणरामरमारमण ॥ ९ ॥ अविजितकुनृपतिसमितिविखंडनरमावरवीरपभवममशरणम् ॥ शुभतमकथाशयपरमसदोदितजगदेककारणरामरमारमण ॥ १० ॥ खरतरनिशिचरदहनपरामृतरघुवरमानदभवममशरणम् ॥ शुभतमकथाशयपरमसदोदितजगदेककारणरामरमारमण ॥ ११ ॥ सुललिततनुवरवरदमहाबलयदुवरपार्थपभवममशरणम् ॥ शुभतमकथाशयपरमसदोदितजगदेककारणरामरमारमण ॥ १२ ॥ दितिसुतमोहनविमलविबोधनपरगुणबुद्धहेभवममशरणम् ॥ शुभतमकथाशयपरमसदोदितजगदेककारणरामरमारमण ॥ १३ ॥ कलिमलहुतवहसुभगमहोत्सवशरणदकल्कीशहेभवममशरणम् ॥ शुभतमकथाशयपरमसदोदितजगदेककारणरामरमारमण ॥ १४ ॥ अखिलजनिविलयपरसुखकारणपरपुरुषोत्तमभवममशरणम् ॥ शुभतमकथाशयपरमसदोदितजगदेककारणरामरमारमण ॥ १५ ॥ ॥ इतितनुतिवरसततरतेर्भवसुशरणमुरुसुखतीर्थमुनेर्भगवन्॥ शुभ०॥१६॥ इतिश्रीमदानन्दतीर्थ०श्रीमद्वादशस्तोत्रेनवमोऽध्यायः ॥ ९ ॥

अवनश्रीपतिरप्रतिरधिकेशादिभवादे ॥ करुणापूर्णवरप्रदचरितंज्ञापयमेते ॥ १ ॥ सुरवंद्याधिपसद्वरभरिताशेषगुणालम् ॥ करुणापूर्णवरप्रदचरितंज्ञापयमेते ॥ २ ॥ सकलध्वांतविनाशकपरमानंदसुधाहो ॥ करुणापूर्णवरप्रदचरितंज्ञापयमेते ॥ ३ ॥ त्रिजगत्पोतसदार्चितचरणाशापतिधातो ॥ करुणापूर्णवरप्रदचरितंज्ञापयमेते ॥ ४ ॥ त्रिगुणातीतविधारकपरितोदेहिसुभक्तिम् ॥

करुणापूर्णवरप्रदचरितंज्ञापयमेते ॥ ५ ॥ शरणंकारणभावनभवमेतातसदात्म् ॥ करुणापूर्ण
वरप्रदचरितंज्ञापयमेते ॥ ६ ॥ मरणप्राणदपालकजगदीशावसुभक्तिम् ॥ करुणापूर्णवरप्रदचरि
तंज्ञापयमेते ॥ ७ ॥ तरुणादित्यसवर्णकचरणाब्जामलकीर्ते॥ करुणापूर्णवरप्रदचरितंज्ञापयमेत
॥ ८ ॥ सलिलप्रोत्थसरागकमणिवर्णोच्चनखादे ॥ करुणापूर्णवरप्रदचरितंज्ञापयमेते ॥ ९ ॥ क
जतूणीनिभपावनवरजंघामितशक्ते ॥ करुणापूर्णवरप्रदचरितंज्ञापयमेते ॥ १० ॥ इभहस्तप्र
भशोभनपरमोरःस्थलमाले ॥ करुणापूर्णवरप्रदचरितंज्ञापयमेते ॥ ११ ॥ असनोत्फुल्लसुपुष्पक
समवर्णावरणांते ॥ करुणापूर्णवरप्रदचरितंज्ञापयमेते ॥ १२ ॥ शतमोदोद्भवसुंदरवरपद्मोत्थित
नाभे ॥ करुणापूर्णवरप्रदचरितंज्ञापयमेते ॥ १३ ॥ जगदागूहकपल्लवसमकुक्षेशरणादे ॥ करु
णापूर्णवरप्रदचरितंज्ञापयमेते ॥ १४ ॥ जगदंबामलसुंदरगृहवक्षोवरयोगिन् ॥ करुणापूर्णवरप्रद
चरितंज्ञापयमेते ॥ १५ ॥ दितिजांतप्रदचक्रदरगदायुग्वरबाहो ॥ करुणापूर्णवरप्रदचरितंज्ञाप
यमेते ॥ १६ ॥ परमज्ञानमहानिधिवदनश्रीरमणेंदो ॥ करुणापूर्णवरप्रदचरितंज्ञापयमेते॥१७॥
निखिलाघौघविनाशकपरसौख्यप्रददृष्टे ॥ करुणापूर्णवरप्रदचरितंज्ञापयमेते ॥ १८ ॥ परमानं
दसुतीर्थसुमुनिराजोहरिगाथाम् ॥ कृतवान्नित्यसुपूर्णकपरमानंदपदैषी ॥ १९ ॥ इतिश्रीमदान
न्दतीर्थविरचितेश्रीमद्द्वादशस्तोत्रेदशमोऽध्यायः ॥ १० ॥ ॥ ७१ ॥
उदीर्णमजरंदिव्यममृतस्यंद्यधीशितुः ॥ आनंदस्यपदंवंदेब्रह्मेंद्राद्यभिवंदितम् ॥ १ ॥ सर्ववेदप
दोद्गीतमिंदिरावासमुत्तमम् ॥ आनंदस्यपदंवंदेब्रह्मेंद्राद्यभिवंदितम् ॥ २ ॥ सर्वदेवादिदेवस्य

॥ १ ॥

विदारितमहत्तमः ॥ आनंदस्यपदंवंदेब्रह्मेंद्राद्यभिवंदितम् ॥ ३ ॥ उदारमादरान्नित्यमनिंद्यं सुंदरीपतेः ॥ आनंदस्यपदंवंदेब्रह्मेंद्राद्यभिवंदितम् ॥ ४ ॥ इंदीवरोदरनिभंसुपूर्णवादिमोहदम् ॥ आनंदस्यपदंवंदेब्रह्मेंद्राद्यभिवंदितम् ॥ ५ ॥ दातृसर्वामरैश्वर्यविमुक्त्यादेरहोवरम् ॥ आनंदस्य पदंवंदेब्रह्मेंद्राद्यभिवंदितम् ॥ ६ ॥ दूराद्दूरतरंयत्तुतदेवांतिकमंतिकात् ॥ आनंदस्यपदं वंदेब्रह्मेंद्राद्यभिवंदितम् ॥ ७ ॥ पूर्णसर्वगुणैकार्णमनाद्यंतंसुरेशितुः ॥ आनंदस्यपदंवंदेब्रह्में द्राद्यभिवंदितम् ॥ ८ ॥ आनंदतीर्थमुनिनाहरेरानंदरूपिणः ॥ कृतंस्तोत्रमिदंपुण्यंपठन्नानं दतामियात् ॥ ९ ॥ इतिश्रीमदा०श्रीमद्द्वादशस्तोत्रेएकादशोऽध्यायः ॥ ११ ॥ ॥ ७ ॥



आनंदमुकुंदअरविंदनयन ॥ आनंदतीर्थपरानंदवरद ॥ १॥ सुंदरीमंदिरगोविंदवंदे ॥ आनंदतीर्थपरानंदवरद ॥ २ ॥ चंद्रसुरेंद्रसुवंदितवंदे ॥ आनंदतीर्थपरानंदवरद ॥ ३ ॥ चंद्रकमंदिरनंदक वंदे ॥ आनंदतीर्थपरानंदवरद ॥ ४ ॥ वृंदारकवृंदसुवंदितवंदे ॥ आनंदतीर्थपरानंदवरद ॥ ५ ॥ मंदारसूनुसुचर्चितवंदे ॥ आनंदतीर्थपरानंदवरद ॥ ६ ॥ इंदिरानंदकसुंदरवंदे ॥ आनंदतीर्थपरानंदवरद ॥ ७ ॥ मंदिरस्यंदनस्यंदकवंदे ॥ आनंदतीर्थपरानंदवरद ॥ ८ ॥ आनंदचंद्रिकास्यंदकवंदेआनंदतीर्थपरानंदवरद ॥ ९ ॥ इतिश्रीमदानंदतीर्थभगवत्पादाचार्यविरचितेद्वादशस्तोत्रेद्वादशोऽध्यायः ॥ १२ ॥ ॥ इति श्रीमद्द्वादशस्तोत्रम् ॥ ॥ ॥ ॥





श्रीमन्मध्वहृदंतर्वर्तिश्रीलक्ष्मीनारायणायनमः ॥ ॐ ॥ अर्चितःसंस्मृतोध्यातःकीर्तितःकथितः
श्रुतः ॥ योददात्यमृतत्वंहिसमांरक्षतुकेशवः ॥ १ ॥ तापत्रयेणसंतप्तंयदेतदखिलंजगत् ॥ वक्ष्या
मिशांतयेह्यस्यकृष्णामृतमहार्णवम् ॥ २ ॥ तेनराःपशवोलोकेकिंतेषांजीवनेफलम् ॥ यैर्नलब्धा
हरेर्दीक्षानार्चितोवाजनार्दनः ॥ ३ ॥ संसारेस्मिन्महाघोरेजन्मरोगभयाकुले ॥ अयमेकोम
हाभागःपूज्यतेयदधोक्षजः ॥ ४ ॥ सनामसुकृतीलोकेकुलंतेनाभ्यलंकृतम् । आधारःसर्वभूता
नांयेनविष्णुःप्रसादितः ॥ ५ ॥ यज्ञानांतपसांचैवशुभानांचैवकर्मणाम् ॥ तद्विशिष्टफलंनृणांस
दैवाराधनंहरेः ॥ ६ ॥ कलौकलिमलध्वंसिसर्वपापहरंहरिम् ॥ येर्चयंतिनरानित्यंतेपिवंद्यायथाह
रिः॥७॥ नास्तिश्रेयस्तमंनृणांविष्णोराराधनान्मुने॥युगेस्मिंस्तामसेलोकेसततंपूज्यतेनृभिः॥८॥
अर्चितेसर्वदेवेशेशंखचक्रगदाधरे ॥ अर्चिताःसर्वदेवाःस्युर्यतःसर्वगतोहरिः ॥ ९ ॥ स्वर्चितेसर्व
लोकेशेसुरासुरनमस्कृते ॥ केशवेकंसकेशिघ्नेनयातिनरकंनरः॥१०॥सकृदभ्यर्च्यगोविंदंबिल्वपत्रे
णमानवः ॥ मुक्तिभागीनिरातंकीविष्णुलोकेचिरंवसेत् ॥ ११ ॥ शंकरः ॥ सकृदभ्यर्चितोयेनदेव
देवोजनार्दनः ॥ यत्कृतंतत्कृतंतेनसंप्राप्तंपरमंपदम्॥१२॥सकृदभ्यर्चितोयेनहेलयापिनमस्कृतः॥
सयातिपरमंस्थानंयत्सुरैरपिदुर्लभम् ॥१३॥ नारदः ॥ समस्तलोकनाथस्यदेवदेवस्याशार्ङ्गिणः ॥
साक्षाद्भगवतोविष्णोःपूजनंजन्मनःफलम् ॥ १४ ॥ पुलस्त्यः ॥ भक्त्यादूर्वांकुरैःपुंभिःपूजितःपु
रुषोत्तमः ॥ हरिर्ददातिहिफलंसर्वयज्ञैश्चदुर्लभम् ॥१५॥ विधिनादेवदेवेशःशंखचक्रधरोहरिः ॥
फलंददातिसुलभंसलिलेनापिपूजितः ॥ १६ ॥ नरकेपच्यमानस्तुयमेनपरिभाषितः ॥ किंत्व

घानार्चितोदेवःकेशवःक्लेशनाशनः ॥ १७ ॥ धर्मः ॥ द्रव्याणामप्यभावेतुसलिलेनापिपूजितः ॥ नि
योददातिस्वकंस्थानंसत्वयाकिंनपूजितः ॥ १८ ॥ नारसिंहोहृषीकेशःपुंडरीकनिभेक्षणः ॥ स्मर
णान्मुक्तिदोनृणांसत्वयाकिंनपूजितः ॥ १९ ॥ ब्रह्मा ॥ गर्भस्थितामृतावाहिमुषितास्तेसुदूषि
ताः ॥ नप्राप्तायैर्हरेर्दीक्षासर्वदुःखविमोचनी ॥ २० ॥ मार्कंडेयः ॥ सकृदभ्यर्चितोयेनदेवदेवोज
नार्दनः ॥ यत्कृत्यंतत्कृतंतेनसंप्राप्तंपरमंपदम् ॥२१॥ धर्मार्थकाममोक्षाणांनान्योपायस्तुविद्यते॥
सत्यंब्रवीमिदेवेशहृषीकेशार्चनादृते ॥ २२॥ तस्ययज्ञवराहस्यविष्णोरमिततेजसः ॥ प्रणामंयेऽ
पिकुर्वंतितेषामपिनमोनमः ॥ २३ ॥ मरीचिः ॥ अनाराधितगोविंदैर्नरैःस्थानंनृपात्मज ॥ नहि
संप्राप्यतेश्रेष्ठंतस्मादाराधयाच्युतम् ॥२४॥ अत्रिः ॥ परःपराणांपुरुषस्तुष्टोयस्यजनार्दनः ॥
सचामोत्यक्षयंस्थानमेतत्सत्यंमयोदितम् ॥ २५ ॥ अंगिराः॥यस्यांतःसर्वमेवेदमच्युतस्याऽव्यया
त्मनः ॥ तमाराधयगोविंदंस्थानमन्यंयदीच्छसि ॥ २६ ॥ पुलस्त्यः ॥ परंब्रह्मपरंधामयोसौब्रह्म
सनातनम् ॥ तमाराध्यहरिंयांतिमुक्तिमप्यतिदुर्लभाम् ॥२७॥ पुलहः ॥ ऐंद्रमिंद्रःपरंस्थानंयमा
राध्यजगत्पतिम् ॥ प्रापयज्ञपतिंविष्णुंतमाराधयसुव्रत ॥२८॥ प्रामोत्याराधितेविष्णौमनसाय
द्यदिच्छति ॥ त्रैलोक्यांतर्गतंस्थानंकिमुलोकोत्तरोत्तरम् ॥ २९ ॥ येस्मरंतिसदाविष्णुंशंखच
क्रगदाधरम् ॥ सर्वपापविनिर्मुक्ताःपरंब्रह्मविशंतिते ॥३०॥ ततोऽनिरुद्धंदेवेशंप्रद्युम्नंचततःपरम्॥
ततःसंकर्षणंदेवंवासुदेवंपरात्परम् ॥ ३१ ॥ वासुदेवात्परंनास्तिइतिवेदांतनिश्चयः ॥ वासुदेवंप्रवि
ष्टानांपुनरावर्तनंकुतः ॥ ३२ ॥ आत्रेयः ॥ योयानिच्छेन्नरःकामान्नारीवावरवर्णिनी ॥ तान्स

माप्नोतिविपुलान्समाराध्यजनार्दनम्॥ ३३॥ब्रह्मा॥बाहुभ्यांसागरंतर्तुंकइच्छेतिपुमान्भुवि॥वासु
देवमनाराध्यकोमोक्षंगंतुमिच्छति ॥३४॥ कौशिकः ॥अनाराधितगोविंदायेनरादुःखभागिनः ॥
आराध्यवासुदेवंस्युर्नित्यानंदैकभागिनः ॥ ३५ ॥ शंकरः ॥ कृतेपापेऽनुतापोवैयस्यपुंसःप्रजाय
ते॥प्रायश्चित्तंतुतस्योक्तंहरिसंस्मरणंपरम्॥ ३६॥ ब्रह्मा ॥ नह्यपुण्यवतांलोकेमूढानांकुटिलात्मना
म् ॥ भक्तिर्भवतिगोविंदेस्मरणंकीर्तनंतथा ॥३७॥ तदैवपुरुषोमुक्तोजन्मदुःखजरादिभिः॥जितें
द्रियोविशुद्धात्मायदैवस्मरतेहरिम् ॥३८॥ प्राप्तेकलियुगेघोरेधर्मज्ञानविवर्जिते ॥ नकश्चित्स्मरते
देवंकृष्णंकलिमलापहम्॥ ३९॥ नकलौदेवदेवस्यजन्मदुःखापहारिणः ॥ करोतिमर्त्योमूढात्मास्म
रणंकीर्तनंहरेः।४०।येस्मरंतिसदाविष्णुंविशुद्धेनांतरात्मना॥तेप्रयांतिभयंत्यक्त्वाविष्णुलोकमना
मयम् ॥४१॥ गर्भजन्मजरारोगदुःखसंसारबंधनैः॥ नबाध्यतेनरोनित्यंवासुदेवमनुस्मरन्॥४२॥
यममार्गंमहाघोरंनरकाणियमंतथा ॥ स्वप्नेपिनैवपश्येतयःस्मरेद्गरुडध्वजम् ॥४३॥ हृदिरूपंमुखे
नामनैवेद्यमुदरेहरेः॥ पादोदकंचनिर्माल्यंमस्तकेयस्यसोच्युतः ॥४४॥ गोविंदस्मरणंपुंसांपापरा
शिमहाचलम्॥ असंशयंदहत्याशुतूलराशिमिवानलः॥४५॥ अगस्त्यः॥ स्मरणादेवकृष्णस्यपाप
संघातपंजरः ॥ शतधाभेदमायातिगिरिर्वज्रहतोयथा ॥ ४६ ॥ कृष्णेरताःकृष्णमनुस्मरंतितद्भा
वितास्तद्गतमानसाश्च ॥ भिन्नेपिदेहेप्रविशंतिकृष्णंहविर्यथामंत्रहुतंहुताशे ॥ ४७ ॥ साहानिस्त
न्महच्छिद्रंसाचांधजडमूकता ॥ यन्मुहूर्तंक्षणंवापिवासुदेवोनाचिंत्यते ॥ ४८ ॥ नारायणोनाम

नरोनराणांप्रसिद्धचोरःकथितःपृथिव्याम् ॥ अनेकजन्मार्जितपापसंचयंहरत्यशेषंस्मृतमात्रएव
॥४९॥ यस्यसंस्मरणादेववासुदेवस्यचक्रिणः ॥ कोटिजन्मार्जितंपापंतत्क्षणादेवनश्यति॥५०॥
किंतस्यबहुभिस्तीर्थैःकिंतपोभिःकिमध्वरैः ॥ योनित्यंध्यायतेदेवंनारायणमनन्यधीः ॥ ५१ ॥
येमानवाविगतरागपरावरज्ञानारायणंसुरगुरुंसततंस्मरंति ॥ ध्यानेनतेनहतकिल्बिषचेतनास्तेमा
तुःपयोधररसंनपुनःपिबंति ॥ ५२ ॥ हेचित्तचिंतयस्वेहवासुदेवमहर्निशम् ॥ नूनंयश्चिंतितःपुंसां
हंतिसंसारबंधनम् ॥ ५३ ॥ आलोड्यसर्वशास्त्राणिविचार्यचपुनःपुनः ॥ इदमेकंसुनिष्पन्नंध्येयो
नारायणःसदा ॥ ५४ ॥ स्मृतेसकलकल्याणभाजनंयत्रजायते ॥ पुरुषस्तमजंनित्यंव्रजामिशर
णंहरिम् ॥ ५५ ॥ वेदेषुयज्ञेषुतपस्सुचैवदानेषुतीर्थेषुव्रतेषुयच्च ॥ इष्टेषुपूर्तेषुचयत्प्रदिष्टंपुण्यंस्मृ
तेतत्खलुवासुदेवे ॥ ५६ ॥ आराध्यैवनरोविष्णुंमनसायद्यदिच्छति ॥ फलंप्राप्नोतिविपुलंभूरि
स्वल्पमथापिवा ॥ ५७ ॥ यन्नामकीर्तनंभक्त्याविलापनमनुत्तमम् ॥ मैत्रेयाशेषपापानांधातूना
मिवपावकः ॥ ५८ ॥ कलिकल्मषमत्युग्रंनरकार्तिप्रदंनृणाम् ॥ प्रयातिविलयंसद्यःसकृत्संकीर्ति
तेच्युते ॥५९॥ अनायासेनचायांतिमुक्तिंकेशवसंश्रिताः ॥ तद्विघातायजायंतेशक्राद्याःपरिपंथि
नः ॥ ६० ॥ चतुःसागरमासाद्यजंबूद्वीपोत्तमेक्वचित् ॥ नपुमान्केशवादन्यःसर्वपापचिकित्सकः
॥ ६१॥ यदभ्यर्च्यहरिंभक्त्याकृतेवर्षशतैरपि ॥ फलंप्राप्नोतिविपुलंकलौसंकीर्त्यकेशवम्॥६२॥
क्षीयतेतुयदाधर्मःप्रासेघोरेकलौयुगे ॥ तदानकीर्तयेत्कश्चिन्मुक्तिदंदेवमच्युतम् ॥ ६३ ॥ अ
वशेनापियन्नाम्निकीर्तितेसर्वपातकैः ॥ पुमान्विमुच्यतेसद्यःसिंहत्रस्तैर्मृगैरिव ॥ ६४ ॥ नाराय

णेतिमंत्रोस्तिवागस्तिवशवर्तिनी ॥ तथापिनरकेघोरेपतंतीत्येतदद्भुतम् ॥ ६५ ॥ आर्ता
विषण्णाशिथिलाश्चभीताघोरेषुचव्याधिषुवर्तमानाः ॥ संकीर्त्यनारायणशब्दमात्रंविमुक्तदुःखाः
सुखिनोभवंति ॥ ६६ ॥ कौशिकः ॥ सकृदुच्चरितंयैस्तुकृष्णेतिनविशंतिते ॥ गर्भागारगृहंमातु
र्यमलोकंचदुःसहम् ॥ ६७ ॥ क्वनाकपृष्ठगमनंपुनरावृत्तिलक्षणम् ॥ क्वजपोवासुदेवेतिमुक्तिबीज
मनुत्तमम् ॥ ६८ ॥ बुद्ध्याबुद्ध्याभ्यसेदेतद्धरिरित्यक्षरद्वयम् ॥ स्मरणात्कीर्तनाद्यस्यनपुनर्जाय
तेभुवि ॥ ६९ ॥ हेजिह्वेममनिःस्नेहेहरिंकिंनानुभाषसे ॥ हरिंवदस्वकल्याणिसंसारोदधिनौर्हरिः
॥ ७० ॥ असारेखलुसंसारेसारात्सारतरोहरिः ॥ पुण्यहीनानविंदंतिसारंगाश्चयथाजलम् ॥ ७१ ॥
कुरुक्षेत्रेणकिंतस्यकिंकाश्यापुष्करेणकिम् ॥ जिह्वाग्रेवर्ततेयस्यहरिरित्यक्षरद्वयम् ॥ ७२ ॥ ब्र
ह्मा ॥ असारेखलुसंसारेसारेसारमेकंनिरूपितम् ॥ समस्तलोकनाथस्यसारमाराधनंहरेः ॥ ७३ ॥
साजिह्वायाहरिंस्तौतितच्चित्तंयत्तदर्पणम् ॥ तावेवकेवलौश्लाघ्यौयौतत्पूजाकरौकरौ ॥ ७४ ॥
यस्तुविष्णुपरोनित्यंदृढभक्तिर्जितेंद्रियः ॥ स्वगृहेपिवसन्यातितद्विष्णोःपरमंपदम् ॥ ७५ ॥
शंकरः ॥ साधुसाधुमहाभागसाधुदानवनाशन ॥ यन्मांपृच्छसिधर्मज्ञकेशवाराधनंप्रति ॥ ७६ ॥
निमिषंनिमिषार्धंवामुहूर्तमपिभार्गव ॥ नादग्धाशेषपापानांभक्तिर्भवतिकेशवे ॥ ७७ ॥ किंते
नमनसाकार्यंयन्नतिष्ठतिकेशवे ॥ मनोमुक्तिफलावाप्तौकारणंसुप्रयोजितम् ॥ ७८ ॥ रोगोनाम
नसाजिह्वाययानस्तूयतेहरिः ॥ गर्तौनामनतौकर्णौयाभ्यांतत्कर्मनश्रुतम् ॥ ७९ ॥ नूनंतत्कंठशा
लूकमथवाप्युपजिह्विका ॥ रोगोनामनसाजिह्वायानवक्तिहरेर्गुणान् ॥ ८० ॥ भारभूतैःकरैःका

यैःकिंतस्यनृपशोर्द्विज ॥ यैर्हिनक्रियतेविष्णोर्गृहसंमार्जनादिकम् ॥ ८१ ॥ चरणौतौतुसुफलौ
केशवालयगामिनौ ॥ तेचनेत्रेमहाभागयाभ्यांसंदृश्यतेहरिः ॥ ८२ ॥ किंतस्यचरणैःकार्यंद्व
थासंचरणैर्द्विज ॥ यैर्हिनव्रजतेजंतुःकेशवालयदर्शने ॥ ८३ ॥ वेदवेदांगविदुषांमुनीनांभावि
तात्मनाम् ॥ ऋषित्वमपिधर्मज्ञविज्ञेयंतत्प्रसादजम् ॥ ८४ ॥ विचित्ररत्नपर्यंकेमहाभोगेचभो
गिनः ॥ रमंतेनाकिरामाभिःकेशवस्मरणात्फलम् ॥ ८५ ॥ अश्वमेधसहस्राणांयःसहस्रंसमा
चरेत् ॥ नासौतत्फलमाप्नोतितद्भक्तैर्यदवाप्यते ॥ ८६ ॥ रेरेमनुष्याःपुरुषोत्तमस्यकरौनक
स्मान्मुकुलीकुरुध्वम् ॥ क्रियाजुषांकोभवतांप्रयासःफलंहियत्तत्पदमच्युतस्य ॥ ८७ ॥
विष्णोर्विमानंयःकुर्यात्सकृद्भक्त्याप्रदक्षिणम् ॥ अश्वमेधसहस्रस्यफलंप्राप्नोतिमानवः ॥ ८८॥
प्रदक्षिणंतुयःकुर्याद्धरिंभक्तिसमन्वितः ॥ हंसयुक्तविमानेनविष्णोर्लोकंसगच्छति ॥ ८९ ॥
तीर्थकोटिसहस्राणिव्रतकोटिशतानिच ॥ नारायणप्रणामस्यकलांनार्हंतिषोडशीम् ॥ ९० ॥ उर
साशिरसादृष्ट्यामनसावचसातथा ॥ पद्भ्यांकराभ्यांजानुभ्यांप्रणामोष्टांगईरितः ॥ ९१ ॥ शा
ठ्येनापिनमस्कारंकुर्वतःशार्ङ्गपाणये ॥ शतजन्मार्जितंपापंनश्यत्येवनसंशयः ॥ ९२ ॥ संसारा
र्णवमग्नानांनराणांपापकर्मणः ॥ नान्योद्धर्ताजगन्नाथंमुक्त्वानारायणंप्रभुम् ॥ ९३ ॥ रेणुकुंठि
तगात्रस्यकणायावंतिभारत ॥ तावद्वर्षसहस्राणिविष्णुलोकेमहीयते ॥ ९४ ॥ पावनंविष्णुनैवे
द्यंसुभोज्यमृषिभिःस्मृतम् ॥ अन्यदेवस्यनैवेद्यंभुक्त्वाचांद्रायणंचरेत् ॥ ९५ ॥ कोट्यैंदवसहस्रै
स्तुमासोपोषणकोटिभिः ॥ तत्फलंलभतेपुंभिर्विष्णोर्नैवेद्यभक्षणात् ॥ ९६ ॥ विष्णोर्नैवेद्यशेषे

णयोभुनक्तिदिनेदिने ॥ सिक्थेसिक्थेलभेत्पुण्यंचांद्रायणशताधिकम् ॥ ९७ ॥ नैवेद्यशेषंतुल
सीविमिश्रितंविशेषतःपादजलेनसिक्तम् ॥ योश्नातिनित्यंपुरतोमुरारेःप्राप्नोतियज्ञायुतकोटिपु
ण्यम् ॥ ९८ ॥ त्रिरात्रफलदानद्योयाःकाश्चिदसमुद्रगाः ॥ समुद्रगास्तुपक्षस्यमासस्यसरितांप
तिः ॥ ९९ ॥ षण्मासफलदागोदावत्सरस्यतुजाह्नवी ॥ विष्णुपादोदकस्यैताःकलांनार्हंतिषोड
शीम् ॥ १०० ॥ गंगाप्रयागगयपुष्करनैमिषाणिसंसेवितानिबहुशःकुरुजांगलानि ॥ कालेनतीर्थ
सलिलानिपुनंतिपापंपादोदकंभगवतःप्रपुनातिसद्यः ॥ १ ॥ यानिकानिचतीर्थानिब्रह्मांडांतर्ग
तानिच ॥ विष्णुपादोदकस्यैताःकलांनार्हंतिषोडशीम् ॥ २ ॥ स्नात्वापादोदकंविष्णोःपिबन्शिर
सिधारयेत् ॥ सर्वपापविनिर्मुक्तोवैष्णवींसिद्धिमाप्नुयात् ॥ ३ ॥ यथापादोदकंपुण्यंनिर्माल्यंचानु
लेपनम् ॥ नैवेद्यंधूपशेषश्चआरार्तिश्चतथाहरेः ॥ ४ ॥ तुलस्यास्तुरजोजुष्टंनैवेद्यस्यचभक्षणम् ॥
निर्माल्यंशिरसाधार्यंमहापातकनाशनम् ॥ ५ ॥ भक्त्यावायदिवाभक्त्याचक्रांकितशिलांप्रति ॥
दर्शनंस्पर्शनंवापिसर्वपापप्रणाशनम् ॥ ६ ॥ शालग्रामशिलायत्रतत्रसन्निहितोहरिः ॥ तत्रस्नानं
चदानंचवाराणस्याःशताधिकम् ॥ ७ ॥ म्लेच्छदेशेशुचौवापिचक्रांकोयत्रतिष्ठति ॥ योजना
नितथात्रीणिममक्षेत्रंवसुंधरे ॥ ८ ॥ शालग्रामोद्भवोदेवःशैलंचक्रांकमंडलम् ॥ यत्रापिनीयतेत
त्रवाराणस्याःशताधिकम् ॥ ९ ॥ शालग्रामोद्भवोदेवोदेवोद्वारवतीभवः ॥ उभयोःसंगमोयत्रमु
क्तिस्तत्रनसंशयः ॥ ११० ॥ हरिणामुक्तिदानीनिमुक्तिस्थानानिसर्वशः ॥ सयस्यसर्वभावेषुतस्य
तैःकिंप्रयोजनम् ॥ ११ ॥ हरिर्यातिहरिर्यातिदस्युव्याजेनयोवदेत् ॥ सोपिसद्गतिमाप्नोतिगतिंशु

कृतिनोयथा ॥ १२ ॥ वासुदेवंपरित्यज्ययोन्यंदेवमुपासते॥ त्यक्त्वामृतंसमूढात्माभुंक्तेहालाहलं
विषम्॥ १३॥त्यक्त्वामृतंयथाकश्चिदन्यपानंपिबेन्नरः॥तथाहरिंपरित्यज्ययोन्यंदेवमुपासते ॥१४
स्वधर्मंतुपरित्यज्यपरधर्मंचरेद्यथा॥तथाहरिंपरित्यज्ययोन्यंदेवमुपासते ॥१५॥ यथागंगोदकंत्य
क्त्वापिबेत्कूपोदकंनरः॥तथाहरिंपरित्यज्ययोन्यंदेवमुपासते ॥१६॥गांचत्यक्त्वासमूढात्मागर्दभीं
वंदतेयथा ॥ तथाहरिंपरित्यज्ययोन्यंदेवमुपासते ॥१७॥स्वमातरंपरित्यज्यश्वपाकींवंदतेयथा॥
तथाहरिंपरित्यज्ययोन्यंदेवमुपासते ॥१८॥ वासुदेवंपरित्यज्ययोन्यंदेवमुपासते॥तृषितोजाह्नवी
तीरेकूपंखनतिदुर्मतिः ॥ १९ ॥ यावत्स्वस्थमिदंपिंडंनिरुजंकरणान्वितम् ॥ तावत्कुरुष्वात्महि
तंपश्चात्तापेनतप्यसे ॥ १२० ॥ यावत्स्वास्थ्यंशरीरेषुकरणेषुचपाटवम् ॥ तावदर्चयगोविंदमायु
ष्यंसार्थकंकुरु ॥ २१ ॥ स्मर्यतांतुहृषीकेशोहृषीकेषुदृढेषुच ॥ अदृढेषुहृषीकेषुहृषीकेशंस्म
रंतिके ॥२२॥यावच्चिंतयतेजंतुर्विषयान्विषसन्निभान् ॥ तावच्चेत्स्मरतेविष्णुंकोनमुच्येतबंधनात्
॥ २३ ॥ यावत्प्रलपतेजंतुर्लोकवार्तादिभिःसदा ॥ तावच्चेद्वदतेविष्णुंकोनमुच्येतबंधनात्
॥ २४ ॥ श्रीसूतः ॥ ज्ञात्वाविप्रैस्तिथिंसम्यग्दैवज्ञैःसमुदीरिताम् ॥ कर्तव्यउपवासस्तुअन्य
थानरकंव्रजेत् ॥ २५ ॥ क्षयेवाप्यथवावृद्धौसंप्रासेवादिनक्षये ॥ उपोष्याद्वादशीपुण्यापूर्ववि
द्धांपरित्यजेत् ॥ २६ ॥ पूर्वविद्धांप्रकुर्वाणोनरोधर्मान्निकृंतति ॥ संततेस्तुविनाशायसंपदोहर
णायच ॥ २७ ॥ कलावेधेतुविप्रेंद्रदशम्यैकादशींत्यजेत् ॥ सुरायाबिंदुनास्पृष्टंगंगांभइवसंत्य
जेत् ॥ २८ ॥ श्वदृतौपंचगव्यंचदशम्यादूषितांत्यजेत् ॥ एकादशींद्विजश्रेष्ठाःपक्षयोरुभयो

रपि ॥ २९ ॥ तस्माद्विप्रानविद्धाह्यिकर्तव्यैकादशीक्वचित् ॥ विद्धाहंतिपुरापुण्यंश्राद्धंचवृषली
पतिः ॥ १३० ॥ जप्तंदत्तंहुतंस्नातंतथापूजाकृताहरेः ॥ तत्सर्वंविलयंयातितमःसूर्योदयेयथा
॥ ३१ ॥ एकादश्यांयदाब्रह्मन्दिनक्षयतिथिर्भवेत् ॥ उपोष्याद्वादशीतत्रत्रयोदश्यांतुपारणम्
॥ ३२ ॥ प्रतिपत्प्रभृतयःसर्वाउदयादुदयाद्रवेः ॥ संपूर्णाइतिविज्ञेयाहरिवासरवर्जिताः
॥३३॥अरुणोदयकालेतुदशमीयदिदृश्यते॥पापमूलंतदाज्ञेयमेकादश्युपवासनम्॥३४॥ अरुणो
दयवेलायांदशमीयदिदृश्यते ॥ नतत्रैकादशीकार्याधर्मकामार्थनाशिनी ॥ ३५ ॥ चतस्रोघटिका
प्रातररुणोदयउच्यते॥ यतीनांस्नानकालोयंगंगांभःसदृशःस्मृतः॥ ३६॥उदयात्प्राग्यदाविप्रामुहूर्त
द्वयसंयुता ॥ संपूर्णैकादशीनामतत्रैवोपवसेद्गृही॥ ३७॥ उदयात्प्राक्त्रिघटिकाव्यापिन्येकादशी
यदा ॥ संदिग्धैकादशीनामवर्ज्याधर्मार्थनाशनी ॥३८॥ पुत्रपौत्रप्रवृद्ध्यर्थंद्वादश्यामुपवासयेत् ॥
तत्रक्रतुशतंपुण्यंत्रयोदश्यांतुपारणम् ॥ ३९ ॥ उदयात्प्राग्द्विघटिकाव्यापिन्येकादशीयदा ॥
संकीर्णैकादशीनामवर्ज्याधर्मार्थकांक्षिभिः ॥ १४० ॥ पुत्रराज्यप्रवृद्ध्यर्थंद्वादश्यामुपवासनम् ॥
तत्रक्रतुशतंपुण्यंत्रयोदश्यांतुपारणम् ॥ ४१ ॥ दशमीशेषसंयुक्तागांधार्यासमुपोषिता ॥ तस्याः
पुत्रशतंनष्टंतस्मात्तांपरिवर्जयेत् ॥ ४२ ॥ अपीषद्दशमीविद्धासदातांपरिवर्जयेत् ॥ सुराबिंदु
समायुक्तांप्रवदंतिमनीषिणः ॥ ४३ ॥ बह्वागमविरोधेषुब्राह्मणेषुविवादिषु ॥ उपोष्याद्वादशी
तत्रत्रयोदश्यांतुपारणम् ॥ ४४ ॥ एकादश्यांतुविद्धायांसंप्राप्तेश्रवणेतथा ॥ उपोष्याद्वादशीपु
ण्यापक्षयोरुभयोरपि ॥ ४५ ॥ उपरागसहस्राणिव्यतीपातायुतानिच ॥ अमाालक्षंतुद्वादश्याः

कलांनार्हतिषोडशीम् ॥ ४६ ॥ शुद्धापिद्वादशीग्राह्यापरतोद्वादशीयदि ॥ विषंतुदशमीज्ञेया
मृताचैकादशीतिथिः ॥ ४७ ॥ विषप्रधानावर्ज्यासामृताग्राह्याप्रयत्नतः ॥ द्वादश्यांभोजनंचैव
विद्धायांहर्युपोषणम् ॥ ४८ ॥ यःकुर्यान्मंदबुद्धित्वान्निरयंसोधिगच्छति ॥ यानिकानिचवा
क्यानिविद्धोपोषपराणिच ॥ ४९ ॥ धनदाचापराणिस्युर्वैष्णवीनदशायुता ॥ अथवामोहना
र्थायमोहिन्याभगवान्हरिः ॥ १५० ॥ अर्थितःकारयामासव्यासरूपीजनार्दनः ॥ धनदार्चाविष्ट
द्ध्यर्थंमहावित्तलयस्यच ॥ असुराणांमोहनार्थंपाषंडानांविवृद्धये ॥ ५१ ॥ आत्मस्वरूपावि
ज्ञप्त्यैस्वलोकाप्रापयेत्तथा ॥ एवंविद्धांपरित्यज्यद्वादश्यामुपवासयेत् ॥ ५२ ॥ कोटिजन्मार्जि
तंपापमेकधैवविनश्यति ॥ ततःकोटिगुणंचापिनिषिद्धस्यैतैरर्जनैः ॥ ५३ ॥ यदनादिकृतंपापं
यदूर्ध्वंयत्करिष्यति ॥ तत्सर्वंविलयंयातिपरेषामुपवासनात् ॥ ५४ ॥ नचतस्मात्प्रियतमःकेश
वस्यममापिच ॥ एकादश्यांह्यवेधेतुद्वादशींनपरित्यजेत् ॥ ५५ ॥ पारणेमरणेचैवतिथिस्ता
त्कालिकीस्मृता ॥ ब्रह्मचारीगृहस्थोवावानप्रस्थोयतिस्तथा ॥ ५६ ॥ ब्राह्मणःक्षत्रियोवैश्यः
शूद्रोभर्तृमतीतथा ॥ अभर्तृकानथान्येचसूतवैदेहिकादयः ॥ ५७ ॥ एकादश्यांनभुंजीतप
क्षयोरुभयोरपि ॥ एकादश्यांतुयोभुंक्तेमोहेनाहृतचेतसा ॥ ५८ ॥ शुक्लायामथकृष्णायां
निरयंयातिसध्रुवम् ॥ विवेचयतियोमोहाच्छुक्लाकृष्णेतिपापकृत् ॥ ५९ ॥ एकादशींसवैया
तिनिरयंनात्रसंशयः ॥ यथागौर्नैवहंतव्याशुक्लाकृष्णेतिभामिनि ॥ १६० ॥ एकादश्यांनभुं
जीतपक्षयोरुभयोरपि ॥ यानिकानिचवाक्यानिकृष्णैकादशिवर्जने ॥ ६१ ॥ भरण्यादिनि

षेधेचतानिकाम्यफलार्थिनाम् ॥ कामिनोऽपिहिसिद्ध्यर्थंकुर्युरेवोपवासनम् ॥ ६२ ॥ प्रीणनार्थं
हरेर्नित्यंनतुकाम्यव्यपेक्षया ॥ तस्माच्छुक्लामथोकृष्णांभरण्यादियुतामपि ॥६३॥ प्रत्यवायनिषे
धार्थामुपवासीतनित्यशः ॥ प्रीणनार्थंहरेश्चापिविष्णुलोकस्यचाप्तये ॥ ६४ ॥ कलावार्धकलावा
पिपरतोद्वादशीयदि ॥ द्वादशद्वादशीर्हंतिपूर्वेद्युःपारणेकृते ॥ ६५ ॥ अतिरिक्ताद्वादशीचेद्य
स्तांनोपोषयेद्यदि ॥ द्वादशद्वादशीर्हंतिद्वादशीचातिलंघिता ॥ ६६ ॥ द्वादश्यामतिरिक्तायां
योभुंक्तेपूर्ववासरे ॥ द्वादशद्वादशीर्हंतिद्वादशींवापरित्यजेत् ॥ ६७ ॥ द्वादशींश्रवणोपेतांयोनो
पोष्यात्सुमंदधीः ॥ पंचसंवत्सरकृतंपुण्यंतस्यविनश्यति ॥ ६८ ॥ एकादशीमुपोष्याथद्वादशी
मप्युपोषयेत् ॥ नतत्रविधिलोपःस्यादुभयोर्दैवताहरिः ॥ ६९ ॥ अल्पायामपिविप्रेंद्रपारणं
तुकथंभवेत् ॥ पारयित्वोदकेनापिभुंजानोनैवदुष्यति ॥ अशितानशितायस्मादापोविद्वद्भिरी
रिताः ॥ १७० ॥ अंभसाकेवलेनैवकरिष्येव्रतपारणम् ॥ तद्विशिष्टंमुनिप्रोक्तमशितानशितंच
यत् ॥ ७१ ॥ नकाशीनगयागंगानरेवानचपुष्करम् ॥ नचापिकौरवंक्षेत्रंतुल्यंभूपहरेर्दिनात्
॥ ७२ ॥ अश्वमेधसहस्राणिवाजपेयशतानिच ॥ एकादश्युपवासस्यकलांनार्हंतिषोडशीम्
॥ ७३ ॥एकादशीसमुत्थेनवह्निनापातकेंधनम्॥भस्मीभवतिराजेंद्रअपिजन्मशतोद्भवम् ॥ ७४॥
नेदृशंपावनंकिंचिन्नराणांभुविविद्यते ॥ यादृशंपद्मनाभस्यदिनंपातकहानिदम् ॥ ७५ ॥ ताव
त्पापानिदेहेस्मिंस्तिष्ठंतिमनुजाधिप ॥ यावन्नोपोषयेज्जंतुःपद्मनाभदिनंशुभम् ॥ ७६ ॥ एका
दशेंद्रियैःपापंयत्कृतंभवतिप्रभो ॥ एकादश्युपवासेनतत्सर्वंविलयंव्रजेत् ॥ ७७ ॥ एकादशीस

मंकिंचित्पवित्रंनहिविद्यते ॥ व्याजेनापिकृताराजन्नदर्शयतिभास्करिम् ॥ ७८ ॥ श्रीव्यासः ॥
अन्नंनिवेदयेन्मह्यंप्राप्तेमद्वासरेशुभे ॥ तस्यापिनरकप्राप्तिःकिंपुनर्भोजनेकृते ॥ ७९ ॥ सब्रह्म
हासगोघ्नश्चसस्तेनोगुरुतल्पगः ॥ एकादश्यांतुभुंजानःपक्षयोरुभयोरपि ॥ १८० ॥ वरंस्वमातृ
गमनंवरंगोमांसभक्षणम् ॥ वरंहत्यासुरापानमेकादश्यन्नभोजनात् ॥ ८१ ॥ एकादशीदिनेपु
ण्येभुंजतेयेनराधमाः ॥ अवलोक्यमुखंतेषामादित्यमवलोकयेत् ॥ ८२ ॥ पृथिव्यांयानिपा
पानिब्रह्महत्यादिकानिच ॥ अन्नमाश्रित्यतिष्ठंतिसंप्राप्तेहरिवासरे ॥ ८३ ॥ रुग्मांगदः ॥ अ
ष्टवर्षाधिकोयस्तुह्यशीतिर्नहिपूर्यते ॥ योभुंक्तेमानवःपापोविष्णोरहनिचागते ॥ ८४ ॥ पिता
वायदिवापुत्रोभार्यावापिसुहृज्जनः ॥ पद्मनाभदिनेभुंक्तेनिग्राह्योदस्युवद्भवेत् ॥ ८५ ॥ ब्रह्मा॥
उपोष्यद्वादशीं पुण्यांसर्वपापक्षयप्रदाम् ॥ नपश्यंतियमंवापिनरकाणिनयातनाम् ॥ ८६ ॥ शं
करः ॥ रटंतीहपुराणानिभूयोभूयोवरानने ॥ नभोक्तव्यंनभोक्तव्यंसंप्राप्तेहरिवासरे ॥ ८७ ॥
द्वादशीनप्रमोक्तव्यायावदायुःप्रवर्तते ॥ अर्चनीयोहृषीकेशोविशुद्धेनांतरात्मना ॥ ८८ ॥
भक्त्याग्राह्योहृषीकेशोनधनैर्धरणीसुराः ॥ भक्त्यासंपूजितोविष्णुःफलंधत्तेसमीहितम् ॥ ८९ ॥
जलेनापिजगन्नाथःपूजितःक्लेशनाशनः ॥ परितोषंप्रयात्याशुतृषार्तस्तुयथाजलैः ॥ १९० ॥
आसीनस्यशयानस्यतिष्ठतोव्रजतोपिवा ॥ रमस्वपुंडरीकाक्षनृसिंहहृदयेमम ॥ ९१ ॥ कराव
लंबनंदेहिश्रीकृष्णकमलेक्षण ॥ भवपंकार्णवेघोरेमज्जतोममसर्वदा ॥ ९२ ॥ सर्वगश्चैवसर्वा
त्मासर्वावस्थासुचाच्युत ॥ रमस्वपुंडरीकाक्षनृसिंहहृदयेमम ॥ ९३ ॥ एकादश्यांनभुंजीत

नसुरांवापिबेत्क्वचित् ॥ ब्राह्मणोनैवहंतव्यइत्येषावैदिकीस्मृतिः ॥ १४ ॥ त्राहित्राहिजग
न्नाथवासुदेवाच्युताव्यय ॥ मांसमुद्धरगोविंददुःखसंसारसागरात् ॥ १५ ॥ एतत्पुण्यमिदंगु
ह्यंपवित्रंपापनाशनम् ॥ आयुष्यंचयशस्यंचधन्यंदुःस्वप्ननाशनम् ॥ १६ ॥ कलौपापंकियन्मा
त्रंहत्यास्तेयादिसंभवम् ॥ स्मृतेमनसिगोविंदेदह्यतेतूलराशिवत् ॥ १७ ॥ कलौकेशवभक्तानां
नभयंविद्यतेक्वचित् ॥ स्मृतेसंकीर्तितेध्यातेसंक्षयंयातिपातकम् ॥ १८ ॥ अध्येतव्यमिदंशा
स्त्रंश्रोतव्यमनसूयया ॥ भक्तेभ्यश्चप्रदातव्यंधार्मिकेभ्यःपुनःपुनः ॥ १९ ॥ अधीयानाइदंशा
स्त्रंविष्णोर्माहात्म्यमुत्तमम् ॥ सर्वपापविनिर्मुक्ताःप्राप्नुवंतिपरंपदम् ॥ २०० ॥ श्रुत्वाधर्मंविजा
नातिश्रुत्वात्यजतिदुर्मतिम् ॥ श्रुत्वाज्ञानमवाप्नोतिश्रुत्वामोक्षंचगच्छति ॥ १ ॥ तस्मादि
दंसदासेव्यंश्रोतव्यंचसदैवहि ॥ कुतर्कदावदग्धेभ्योनदातव्यंकथंचन ॥ २ ॥ संसारविषपा
नेनयेमृताःप्राणिनोभुवि ॥ अमृतायस्मृतस्तेषांकृष्णामृतमहार्णवः ॥ ३ ॥ क्लिन्नंपादोदकेनै
वयस्यनित्यंकलेवरम् ॥ तीर्थकोटिसहस्रैस्तुस्नातोभवतिप्रत्यहम् ॥ ४ ॥ तीर्थकोटिसहस्रै
स्तुसेवितैःकिंप्रयोजनम् ॥ तोयंयदिपिबेन्नित्यंशालग्रामशिलाच्युतम् ॥ ५ ॥ शालग्राम
शिलास्पर्शंयेकुर्वंतिदिनेदिने ॥ वांछंतिकरसंस्पर्शंतेषांदेवाःसवासवाः ॥ ६ ॥ दुःसहोनारकोव
ह्निर्दुःसहायमकिंकराः ॥ विषमश्चांतकपथःप्रेतत्वंचातिदारुणम् ॥ ७ ॥ संचिंत्यमनसाप्ये
वंपातकाद्विनिवर्तयेत् ॥ स्मरणंकीर्तनंविष्णोःसदैवनपरित्यजेत् ॥ ८ ॥ अच्युतानंतगोविंद
नामोच्चारणभेषजात् ॥ नश्यंतिसकलारोगाःसत्यंसत्यंवदाम्यहम् ॥ ९ ॥ सकृदुच्चरितंयेनह

रिरित्यक्षरद्वयम् ॥ बद्धःपरिकरस्तेनमोक्षायगमनंप्रति ॥ २१० ॥ एवंब्रह्मादयोदेवाऋषयश्चत
पोधनाः ॥ कीर्तयंतिपरंश्रेष्ठंदेवंनारायणंप्रभुम् ॥ ११ ॥ किंतस्यदानैःकिंतीर्थैःकिंतपोभिःकिम
ध्वरैः॥योनित्यंध्यायतेदेवंनारायणमनन्यधीः॥१२॥ नित्योत्सवोभवेत्तेषांनित्यश्रीर्नित्यमंगलम् ॥
येषांहृदिस्थोभगवान्मंगलायतनंहरिः॥१३॥जीवंश्चतुर्दशादूर्ध्वंपुरुषोनियमेनतु ॥१४ ॥ दशावरा
णांदेहानांकारणानिकरोत्ययम् ॥ स्त्रीवाप्यनूनदशकंदेहंमानुषमार्जयेत्॥१५॥चतुर्दशोर्ध्वजीवी
निसंसारश्चादिवर्जितः ॥ अविदित्वापरंदेवंमोक्षाशाकामहामुने ॥ १६ ॥ आचतुर्दशमाद्वर्षात्पुरु
षोनियमेनतु ॥ दशावराणांदेहानांकारणानिकरोत्ययम् ॥ १७ ॥ अतःकर्मक्षयान्मुक्तिःकुतएव
भविष्यति ॥ समानांविषमापूजाविषमाणांसमातथा ॥ १८ ॥ क्रियतेयेनदेवोपिस्वपदाद्भ्रश्यते
हिसः ॥ वित्तंबंधुर्वयःकर्मविद्याचैवतुपंचमी ॥ एतानिमान्यस्थानानिगरीयोह्युत्तरोत्तरम् ॥१९॥
गुणानुसारिणींपूजांसमांदृष्टिंचयोनरः॥सर्वभूतेषुकुरुतेतस्यविष्णुःप्रसीदति॥२२०॥ यथासुहृत्सु
कर्तव्यंपितृभ्रातृसुतेषुच ॥ तथाकरोतिपूजांहिसमबुद्धिःसउच्यते ॥२१ ॥ तिर्यक्पुंड्रंनकुर्वीतसं
प्रासेमरणेतथा ॥ २२ ॥ नचान्यंनामविब्रूयात्परान्नारायणादृते ॥ नैवेद्यशेषंदेवस्ययोभुनक्तिदि
नेदिने ॥ २३ ॥ सिक्थेसिक्थेभवेत्पुण्यंचांद्रायणशताधिकम् ॥ ऊर्ध्वपुंड्रमृजुंसौम्यंललाटेयस्य
दृश्यते ॥ २४ ॥ सचंडालोपिशुद्धात्मापूज्यएवनसंशयः ॥ २५ ॥ अशुचिर्वाप्यनाचारोमनसा
पापमाचरन् ॥ २६ ॥ शुचिरेवभवेन्नित्यमूर्ध्वपुंड्रांकितोनरः ॥ ऊर्ध्वपुंड्रविहीनस्यश्मशानसदृशं
मुखम् ॥ २७ ॥ अवलोक्यमुखंतस्यआदित्यमवलोकयेत् ॥ यज्ञोदानंतपश्चैवस्वाध्यायःपितृ

तर्पणम् ॥ २८ ॥ व्यर्थंभवतितत्सर्वमूर्ध्वपुंड्रंविनाकृतम् ॥ गोपीचंदनलिप्तांगोयंयंपश्यतिचक्षुषा
॥ २९॥ तंसंशुद्धंविजानीयान्नात्रकार्याविचारणा ॥ आस्फोटयंतिपितरःप्रनृत्यंतिपितामहाः
॥ ३० ॥ वैष्णवोस्मत्कुलेजातःसनःसंतारयिष्यति ॥ जीवितंविष्णुभक्तस्यवरंपंचदिनान्यपि
॥ ३१ ॥ नतुकल्पसहस्रैस्तुभक्तिहीनस्यकेशवे ॥किंतेनजातमात्रेणभूभारेणान्नशत्रुणा॥३२॥
योजातोनार्चयेद्विष्णुंनस्मरेन्नापिकीर्तयेत् ॥ योददातिद्विजातिभ्यश्चंदनंगोपिमर्दितम् ॥ ३३॥
अपिसर्षपमात्रेणपुनात्यासप्तमंकुलम् ॥ ज्ञानीचकर्माणिसदोदितानिकुर्यादकामःसततंभवेत
॥ ३४ ॥ अतीतानागतज्ञानीत्रिलोक्युद्धरणक्षमः ॥ एतादृशोपिनाचारंश्रौतंस्मार्तंपरित्यजेत्
॥ ३५ ॥ यदेवविद्ययाकरोतिश्रद्धयोपनिषदातदेववीर्यवत्तरंभवति ॥ कुर्वन्नेवेहकर्माणिजिजी
विषेच्छतंसमाः ॥ ३६ ॥ एवंत्वयिनान्यथेतोस्तिनकर्मलिप्यतेनरे ॥ आचारश्चैवसाधूनामात्मन
स्तुष्टिरेवच ॥ ३७ ॥ वेदप्रणिहितोधर्मोह्यधर्मस्तद्विपर्ययः ॥ निष्कामंज्ञानपूर्वंतुनिवृत्तमिहचो
च्यते ॥ ३८ ॥ निवृत्तंसेवमानस्तुब्रह्माभ्येतिसनातनम् ॥ ३९ ॥ श्रीमदानंदतीर्थार्यसहस्रकि
रणोत्थिता ॥ गीततिःसततंसेव्यागीर्वाणैःसिद्धिदाभवेत् ॥ २४० ॥ यस्यत्रीण्युदितानिवेदवच
नेरूपाणिदिव्यान्यलंबट्तद्दर्शनमित्थमेवनिहितंदेवस्यभर्गोमहत् ॥ वायोरामवचोनयंप्रथमकंपृ
क्षोद्वितीयंवपुर्मध्वोयत्तुतृतीयमेतदमुनाग्रंथःकृतःकेशवे ॥ ४१ ॥ यःसर्वगुणसंपूर्णःसर्वगुदोषविव
र्जितः ॥ प्रीयतांप्रीतएवालंविष्णुर्मेपरमःसुहृत् ॥२४२॥ इतिश्रीमदानंदतीर्थभगवत्पादाचार्यवि
रचितःकृष्णामृतमहार्णवःसंपूर्णः ॥ ॥ श्रीकृष्णार्पणमस्तु ॥ ॥

॥ इति नरसिंहनखस्तोत्रं २८ यमकभारतं २९ द्वादश-
स्तोत्रं ३० कृष्णामृतमहार्णवश्च ॥ ३१ ॥

॥ अथ तन्त्रसारसंग्रहः । ३२ । सदाचारस्मृतिः ३३ ॥

श्रीमन्मध्वहृदंतवर्तिश्रीमल्लक्ष्मीनारायणायनमः॥ ॥ हरिः ॐ ॥जयत्यब्जभवेशेंद्रवंदितःकमला
पतिः ॥ अनंतविभवानंदशक्तिज्ञानादिसद्गुणः ॥ १ ॥ विधिंविधायसर्गादौतेनपृष्टोब्जलोचनः॥
आहदेवोरमोत्संगविलसत्पादपल्लवः ॥ २ ॥ अहमेकोखिलगुणोवाचकःप्रणवोमम ॥ अकारा
द्यतिशांतातःसोयमष्टाक्षरोमतः ॥ ३ ॥ सविश्वतैजसप्राज्ञतुरीयात्मांतरात्मनाम् ॥ यस्मात्मज्ञा
नात्मयुजांमद्रूपाणांचवाचकः ॥ ४ ॥ तद्रूपभेदाःपंचाशन्मूर्तयोममचापराः ॥ पंचाशद्वर्णवा
च्यास्तावर्णास्ताराणभेदिताः ॥ ५ ॥ द्विरष्टपंचकचतुःपंचेत्येवाष्टवर्गगाः ॥ अजआनंदइंद्रेशा
वुग्रऊर्जऋतुंभरः ॥ ६ ॥ ऋघलशौल्जिरेकात्मैरओजोभृदौरसः ॥ अंतोर्धगर्भःकपिलःखपति
र्गरुडासनः ॥ ७ ॥घर्मोङसारश्चार्वंगश्छंदोगम्योजनार्दनः॥ झाटितारिर्ञमष्टंकीठलकोडलकोढरी
॥८॥ णात्मातारस्थपोदंडीधन्वीनम्यःपरःफली ॥ बलीभगोमनुर्यज्ञोरामोलक्ष्मीपतिर्वरः ॥ ९॥
शांतसंवित्षड्गुणश्चसारात्माहंसळाळुकौ ॥ पंचाशन्मूर्तयस्त्वेताममाकारादिलक्षकाः ॥ १० ॥
नारायणाष्टाक्षरश्चताराष्टाक्षरभेदवान् ॥ आद्यैस्तारचतुर्वर्णैर्भिन्नाव्याहृतयःक्रमात् ॥ ११ ॥
अनिरुद्धादिकास्तासांदेवताव्युत्क्रमेणवा ॥ ताश्चतन्मूर्तयस्त्वेवद्वादशार्णपदोदिताः ॥ १२ ॥
नारायणाष्टाक्षराच्चव्याहृतिभ्यस्तथैवच ॥ विभेदोद्वादशार्णानांकेशवाद्याश्चदेवताः ॥ १३ ॥
नारायणाष्टाक्षराच्चव्याहृतित्रिगुणात्पुनः ॥ वेदमातातुगायत्रीद्विगुणाद्वादशाक्षरात् ॥ १४ ॥ च
तुर्विंशन्मूर्तयोस्याःकथितावर्णदेवताः ॥ तद्भेदःपौरुषंसूक्तंवेदाःपुरुषसूक्तगाः ॥ १५ ॥ वैदिकाः
सर्वशब्दाश्चतस्मात्सर्वाभिधोस्म्यहम् ॥ पंचाशद्वर्णभिन्नाश्चसर्वशब्दाअतोपिच ॥ १६ ॥ ऋषि

श्वदेवतैकोहंतारादीनांविशेषतः ॥ छंदोमदीयागायत्रीताराष्टाक्षरयोर्मता ॥ १७ ॥ उद्यद्भास्व
त्समाभासश्चिदानंदैकदेहवान् ॥ चक्रशंखगदापद्मधरोध्येयोहमीश्वरः ॥ १८ ॥ लक्ष्मीधराभ्या
माश्लिष्टःस्वमूर्तिगणमध्यगः ॥ १९ ॥ ब्रह्मवायुशिवाहीशविपैःशक्रादिकैरपि ॥ सेव्यमानोधि
कंभक्त्यानित्यनिःशेषशक्तिमान् ॥ २० ॥ मूर्तयोष्टावपिध्येयाश्चक्रशंखवराभयैः ॥ युक्ताःप्रदीप
वर्णाश्चसर्वाभरणभूषिताः ॥ २१ ॥ तादृग्रूपाश्चपंचाशज्ज्ञानमुद्राभयोद्यताः ॥ टंकीदंडीचधन्वी
चतत्तद्युक्तास्तुवामतः ॥ २२ ॥ वासुदेवादिकाःशुक्लरक्तपीतासितोज्वलाः ॥ चक्रशंखगदाब्जेतः
प्रथमोमुसलीहली ॥ २३ ॥ सशंखचक्रस्त्वपरस्तृतीयःशार्ङ्गबाणवान् ॥ सचक्रशंखस्तुर्यस्तुशं
खचक्रासिचर्मवान्॥२४॥केशवोमधुसूदनःसंकर्षणदामोदरौ॥सवासुदेवःप्रद्युम्नोदक्षोच्चकरशंखि
नः ॥२५॥ विष्णुमाधवानिरुद्धपुरुषोत्तमाधोक्षजाः॥जनार्दनश्चवामोच्चकरस्थितदरामताः॥२६॥
गोविंदश्चत्रिविक्रमःसश्रीधरहृषीकपः॥नृसिंहश्चाच्युतश्चैववामाधःकरशंखिनः॥२७॥ वामनःसना
रायणःपद्मनाभउपेंद्रकः॥हरिःकृष्णश्चदक्षाधःकरेशंखधरामताः ॥२८॥ शंखचक्रगदापद्मधराश्चैते
हिसर्वशः॥क्रमव्युत्क्रमपद्माद्गिदादिव्युत्क्रमस्तथा॥२९॥अर्धक्रमःसांतरश्चषट्सुषट्स्वरिपूर्विणा
म्॥वर्णानांदेवतानांचनित्यत्वान्नक्रमःस्वतः॥३०॥ व्यक्तिक्रमंब्रह्मबुद्धावपेक्ष्यक्रमउच्यते॥समा
सव्यासयोगेनव्याहृतीनांचतुष्टयम्॥३१॥सत्यंचांगानिताम्स्यप्रोच्यंनेष्टाक्षरस्यच॥कृद्भमहावी
रद्युसहस्रसहितोल्ककाः ॥३२॥ चतुर्थ्यंताह्रदादीनिपृथग्रूपाणितानिच॥विष्णोरेवात्यभेदेपितदै
श्वर्यात्तदन्यवत्॥३३॥चक्रशंखवराभीतिहस्तान्येतानिसर्वशः॥मूलरूपसवर्णानिकृष्णवर्णाशिखो

च्यते ॥ ३४ ॥ चतुर्विंशन्मूर्तयश्चमूलरूपसवर्णकाः ॥ आदिवर्णत्रयंनाभिहृच्छिरस्सुयथाक्रमम्॥३५॥ न्यसनीयंचतद्वर्णदेवताध्यानपूर्वकम् ॥ पज्जानुनाभिहृदयवाङ्नासानेत्रकेषुच ॥३६॥ अष्टाक्षराणांन्यासःस्याद्याहृतीनांप्रजापतिः ॥ मुनिश्छंदस्तुगायत्रीदेवताभगवान्हरिः ॥ ३७ ॥ उद्यदादित्यवर्णश्चज्ञानमुद्राभयोद्यतः ॥ तारेणव्याहृतीभिश्चज्ञेयान्यंगानिपंचच ॥३८॥ नाभिहृत्केषुसर्वेषुचतस्रोव्याहृतीर्न्यसेत्॥द्वादशार्णस्यजगतीच्छंदोन्यत्तारवत्स्मृतम् ॥३९॥ अच्छवर्णोभयवरकरोध्येयोमितद्युतिः ॥ पदैर्व्यस्तैःसमस्तैश्चज्ञेयान्यंगानिपंचच ॥४०॥ अष्टाक्षराणांस्थानेषुबाहोरूर्वोश्चविन्यसेत् ॥ विश्वामित्रस्तुसंध्यार्थेतदन्यत्रप्रजापतिः ॥ मुनिर्देवस्तुसवितृनामास्रष्टृत्वतोहरिः ॥ ४१ ॥ प्रोद्यदादित्यवर्णश्चसूर्यमंडलमध्यगः ॥ चक्रशंखधरोंकस्थदोर्द्वयोध्येयएवच ॥ ४२ ॥ सताराश्चव्याहृतयोगायत्र्यंगानिपंचच ॥ दोःपत्संधिषुसाग्रेषुनाभिहृन्मुखकेषुच ॥ ४३ ॥ वर्णन्यासश्चकर्तव्यस्तारवन्निखिलंस्मृतम् ॥ पंचाशदक्षराणांचपुंसूक्तस्यापिसर्वशः ॥ ४४ ॥ अनुष्टुभश्चत्रिष्टुप्चच्छंदोस्यत्रिष्टुभोपिवा ॥ विष्णुशब्दश्चतुर्थ्यंतोहृदयेतःषडक्षरः ॥ ४५ ॥ तारवत्सर्वमस्यापिश्यामोध्येयोहरिःस्वयम् ॥ वर्णाएवषडंगानिषणयोर्भेदयोगत ॥ ४६ ॥ पज्जानुनाभिहृन्नासाकेषुन्यासश्चवर्णशः ॥ एतेतुसर्वमंत्राणांमूलमंत्राविशेषतः ॥४७॥ एतज्ज्ञानात्समस्तंचज्ञातंस्याच्छब्दगोचरम् ॥ एतज्जपात्समस्तानांमंत्राणांजापकोभवेत्॥४८॥ पूज्यश्चभगवान्नित्यंचक्राब्जादिकमंडले॥हृदयेवाचलेवापिजलेवाकेवलस्थले ॥ ४९ ॥ अष्टाक्षरेणसंपूज्यप्रथमंदेवतांपराम् ॥ मध्येसव्येगुरूंश्चैवदक्षिणेसर्वदेवताः ॥ ५० ॥ पुनःसव्येसर्वगुरूनाग्रे

यादिषुचक्रमात् ॥ गरुडंव्यासदेवंचदुर्गांचैवसरस्वतीम् ॥ ५१ ॥ धर्मंज्ञानंचवैराग्यमैश्वर्यंचैवको
णगान् ॥ तदंतःपूर्वदिक्पूर्वमधर्मादींश्चपूजयेत् ॥ ५२ ॥ अपूजिताअधर्मादिदातारस्तेतथा
भिधाः ॥ निर्ऋतिश्चैवदुर्गाचकामोरुद्रश्चदेवताः ॥ ५३ ॥ यमवायुशिवेंद्राश्चज्ञेयाधर्मादिदेवताः॥
परमःपुरुषोमध्येशक्तिराधाररूपिणी ॥ ५४ ॥ कूर्मोनंतश्चपृथिवीक्षीरसागरएवच ॥ श्वेतद्वीपोमं
टपश्चदिव्यरत्नमयोमहान् ॥ ५५ ॥ पद्ममेतत्रयंदेवीरमैवबहुरूपिणी ॥ सूर्यसोमहुताशाश्चपद्मे
श्रीस्त्रिगुणात्मिका ॥ ५६ ॥ आत्मांतरात्मपरमज्ञानात्मानश्चमूर्तयः ॥ विमलोत्कर्षणीज्ञानाक्रि
यायोगातथैवच ॥ ५७ ॥ प्रह्वीसत्यातथेशानानुग्रहाचेतिशक्तयः ॥ अष्टदिक्षुचमध्येचस्वरूपा
ण्येवताहरेः॥५८॥ ततोनंतंयोगपीठस्वरूपंपूजयेद्धरेः ॥ तत्रावाह्यहरिंचार्घ्यंपाद्यमाचमनीयकम्
॥ ५९ ॥मधुपर्कंपुनश्चाचांस्नानंवासोविभूषणम्॥ उपवीतासनेदत्त्वागंधपुष्पेतथैवच॥६०॥ लक्ष्मी
धरेयजेत्तत्रपार्श्वयोरुभयोर्हरेः ॥ हृदयादींस्तथेंद्रादिदिक्ष्वस्त्रंकोणकेषुच॥ ६१ ॥ वासुदेवादिका
न्दिक्षुकेशवादींस्ततःपरम् ॥ मत्स्यकूर्मवराहांश्चनारसिंहंचवामनम् ॥ ६२ ॥ भार्गवंराघवंकृष्णंबु
द्धंकल्किनमेवच॥ अनंतंविश्वरूपंचतद्बहिःपूजयेत्क्रमात्॥६३॥अनंतब्रह्मवाय्वीशान्वीशंचाग्रेप्र
पूजयेत्॥वारुणींचैवगायत्रींभारतींगिरिजामपि ॥६४॥कोणेषुवींद्रवामेचसौपर्णींपूजयेदपि ॥ इ
द्रादीञ्छेषविष्वंतान्सभार्यान्सपरिग्रहान्॥६५॥धूपदीपौततोदत्त्वानैवेद्यंमूलमंत्रतः॥ अनेनक्रम
योगेनजुहुयात्संस्कृतेऽनले॥६६॥पुष्पांजलिश्चहोमश्चमूलेनाष्टोत्तरंशतम्॥सकृत्सकृत्पुष्पमन्यैर्होमं
मस्तस्यचतुर्गुणः ॥ ६७ ॥ विसर्जयित्वानैवेद्यंमूलेनत्रिःसमर्च्यच ॥ धूपदीपौपुनर्दत्त्वापुनर्दर्भ

लेनपूर्ववत् ॥ ६८ ॥ अर्चयित्वाहरिंध्यात्वाजपेदष्टोत्तरंशतम् ॥ पुनर्ध्यायेद्धरिंसर्वदेवदेवेश्वरंप्र
भुम् ॥ ६९ ॥ जपध्यानहुतार्चादीनेवंयःकुरुतेसदा ॥ धर्मार्थकाममोक्षाणांभाजनंस्यात्सएव
हि ॥ ७० ॥ सर्वोत्तमंहरिंज्ञात्वायएवंभक्तिपूर्वकम् ॥ जपध्यानादिभिर्नित्यंपूजयेन्नास्यदुर्लभ
म् ॥ ७१ ॥ भक्तिंकृत्वान्यदेवेषुब्रह्मरुद्रादिकेष्वपि ॥ सर्वोत्कर्षमविज्ञायविष्णोर्यातितमोध्रुवम्
॥ ७२ ॥ नयज्ञानचतीर्थानिनोपवासव्रतानिच ॥ दैवतानिचसर्वाणित्रातुंतंशक्नुयुःकचित्॥७३॥
हरिर्हिसर्वदेवानांपरमःपूर्णशक्तिमान् ॥ स्वतंत्रोन्येतद्वशाहिसर्वेतःसजगद्गुरुः ॥ ७४ ॥ ब्रह्माद
यश्चतद्भक्त्याभागिनोभोगमोक्षयोः ॥ तस्माज्ज्ञेयश्चपूज्यश्चवंद्योध्येयःसदाहरिः ॥ ७५ ॥ इति
श्रीमदानंदतीर्थभगवत्पादाचार्यविरचितेश्रीमत्तंत्रसारसंग्रहेप्रथमोऽध्यायः ॥ १ ॥ ॥छ॥

हरिःॐ ॥ यस्यकस्यापिमंत्रस्यन्यासःपंचाशदक्षरैः ॥ वीर्यदःकेभितोवक्रमक्षिकर्णेषुनासयोः
॥१ ॥ गंडयोरोष्ठयोर्दंतपङ्क्त्योर्मूर्धनिवाचिच॥दोःपत्संधिषुसाग्रेषुपार्श्वयोःपृष्ठगुह्ययोः ॥२॥ तुं
देचहृदिधातूनांसप्तकेप्राणजीवयोः ॥ सक्षकारान्न्यसेद्वर्णान्नृसिंहःक्षस्यदेवता ॥ ३ ॥ जपे
न्यासेचविहितःक्षोक्षराणांसदांततः ॥ प्राणायामोरेचयित्वापूरयित्वाचकुंभके ॥ ४ ॥ तारेस्त्रि
र्द्वादशावृत्तैर्द्वैकद्वादशकेनवा ॥ तत्तन्मंत्रेणवाकार्योगायत्र्यादशतारकैः ॥ ५ ॥ आदावेवजपे
कुर्याच्छोषणंदहनंप्लुतिम् ॥ वाय्वग्निवारुणैर्बीजैर्ध्यात्वातन्मंडलेहरिम् ॥ ६ ॥ एकपंचाशद्व
र्णानांचतुर्विंशतिमूर्तयः ॥ आत्माद्यावासुदेवाद्याविश्वाद्यामत्स्यकच्छपौ ॥७॥ कोलोनृसिंहःस
बटुर्जामदग्न्यरघूद्वहौ ॥ वासिष्ठयादवौकृष्णावात्रेयोबुद्धकल्किनौ ॥ ८ ॥ शिंशुमारश्चेतिशतं

कलाःकलशनामकाः ॥ एताभिःसहितांमूलमूर्तिंकुंभोदकेसुधीः ॥ ९ ॥ पूर्वोक्तविधिनाभ्यर्च्य
प्रतिमांशिष्यमेववा ॥ स्नापयेत्पूर्वमर्चायांजपोनूनःसहस्रतः ॥ १० ॥ मूलमंत्रस्यचांगानांन्या
सःस्थानादनंतरम् ॥ प्रतिमायांसन्निधिकृच्छिष्येमाहात्म्यकृद्भवेत् ॥ ११ ॥ कलशःकीर्तिमा
युष्यंप्रज्ञांमेधांश्रियंबलम् ॥ योग्यतांपापहानिंचपुण्यवृद्धिंचसाधयेत् ॥ १२ ॥ उपसर्गेषुजाते
षुदेवभूतात्महेतुषु ॥ आयुषेवाथशांत्यैवाश्रियेवापुण्यवृद्धये ॥ १३ ॥ योग्यतायैमंत्रसिद्ध्यै
विष्णोःप्रीत्यर्थमेववा ॥ जुहुयात्सहस्रमयुतंलक्षंकोटिमथापिवा ॥ १४ ॥ पूर्ववत्संस्कृतेवह्नौ
ध्यात्वादेवंजनार्दनम् ॥ कृत्वात्रिमेखलंकुंडंचतुर्विंशांगुलोच्छ्रितम् ॥ १५ ॥ तावत्खातं
चतुष्कोणमुच्छ्रितंद्वादशैववा ॥ द्व्यंगुलंत्र्यंगुलंवापिचतुरंगुलमेववा ॥ १६ ॥ विस्तरोमे
खलानांस्याद्दंत्यावाचतुरंगुला ॥ चतुर्विंशांगुलंवातद्विस्तारोद्वादशैववा ॥ १७ ॥ अश्वत्थप
त्राकृतिःस्यान्मूलतोद्वादशांगुला ॥ योनिःखातेचविनताप्रविष्टाद्व्यंगुलंतथा ॥ १८ ॥ तदात्मनि
हरिंध्यात्वाकुंडेदेवींश्रियंतथा ॥ विष्णुवीर्यात्मकंवह्निंनिक्षिपेत्प्रणवेनतु ॥ १९ ॥ ॥ कुर्यात्क्रियाः
षोडशचत्वाहुतीभिःपृथक्पृथक् ॥ वह्नेस्तद्भहरेःप्रीतिंकुर्वन्द्रव्यैर्यजेत्ततः ॥२०॥ आज्येनवापाय
सेनसमिद्भिःक्षीरिणामथ ॥ तिलैर्वातंडुलैर्वापिमधुरैस्त्रिभिरेववा ॥ २१ ॥ ब्रह्मवृक्षसमिद्भिर्वास
मिद्भिर्वामृतोद्भवैः ॥ अमृताःसमिधोज्ञेयाःसर्वत्रचतुरंगुलाः ॥ २२ ॥ एवमेवचदीक्षायामाज्येनै
वाहुतिक्रिया ॥ पूजाचकार्याविधिवत्पूर्वंसर्वंहुतेष्वपि ॥ २३ ॥ गुरवेदक्षिणांदद्याल्लक्षेलक्षेशतं

सुधीः ॥ आत्मनैवकृतेहोमेशक्तितोगुरुदक्षिणाम् ॥ २४ ॥ इतिश्रीमदानंदतीर्थभगवत्पादाचार्य
विरचितेश्रीमत्तंत्रसारसंग्रहेद्वितीयोऽध्यायः ॥ २ ॥ ॥
हरिःॐ ॥ प्रतिष्ठांकारयन्विष्णोःकुर्यात्सुप्रतिमांबुधः ॥ लौहैर्वाशिलयादार्वामृदावापियथाक्र
मम् ॥१॥ षण्णवत्यंगुलांयोगआसीनामथवास्थिताम् ॥ शयानांवामुमुक्षूणांव्याचक्षाणांनिजां
स्थितिम् ॥ २ ॥ मुखादूर्ध्वंद्व्यंगुलोच्चांनवांगुललसन्मुखाम् ॥ सुवृत्तत्र्यंगुलग्रीवामास्तनाच्चषडंगु
लाम्॥ ३॥पंचादशागुलांनाभेरासार्धदशकांगुलाम् ॥ वृषणादामूलतश्चसार्धद्व्यंगुलमायताम्॥४॥
तावदागुदतोदीर्घांचैत्यादष्टादशांगुलाम् ॥ तथाद्व्यंगुलचैत्यांचद्वाविंशज्जंघयायुताम् ॥५॥ आर
भ्यगुल्फमध्यंचसहार्धचतुरंगुलम् ॥ षडंगुलोच्चप्रपदांसार्धत्र्यंगुलमेवच॥६॥ प्रपदोच्चयुतामंतेद्व्यं
गुलप्रपदोच्छ्रयाम् ॥ त्र्यंगुलद्व्यंगुलामर्धहीनमध्यांगुलामपि ॥७॥ त्रिपदांगुलहीनान्यस्ततस्ता
दृशतत्पराम् ॥ पादोनोच्चांगुष्ठनखांतदर्धतदनंतराम् ॥ ८ ॥ क्रमशःपादहीनान्यांरक्तपादनखां
शुभाम् ॥ विस्तारःप्रपदस्यापिषडंगुलउदाहृतः ॥९ ॥ अंगुष्ठपरिणाहस्तुचतुरंगुलईरितः ॥ त्र्यं
गुलस्तुतदन्यस्यत्रीद्व्यर्धोनाःक्रमात्पराः ॥ १० ॥ दशांगुलंजंघमूलंमध्यंचत्र्यंगुलाधिकम् ॥
सप्तादशांगुलंतूर्ध्वंजानुरष्टादशांगुलः ॥ ११ ॥ ऊर्वंतोपितथाज्ञेयोमध्यंद्विद्वादशांगुलम् ॥ चतुरं
गुलाधिकंमूलंगुह्यंसार्धचतुष्टयम् ॥१२ ॥ सार्धत्रयंपरीणाहाद्वृषणंचतुरंगुलम् ॥ सप्तांगुलंपरी
णाहाद्वृत्तं प्रोक्तंसमस्तशः ॥ १३ ॥ अष्टत्रिंशांगुलःकट्याःपरीणाहउदाहृतः ॥ सुवृत्तत्वं
तथाश्रोण्योःपीनत्वंचसमस्तशः॥१४॥विस्तारश्चतथाकट्याःसुप्रतिष्ठिततापदोः ॥ कट्याश्चैवां

गुलाधिक्यंनाभेरधउदाहृतः॥ १५॥ नाभिःसार्धांगुलश्चैवगंभीरोर्धांगुलोन्नतः॥ वृत्तःप्रदक्षिणश्चैवह्दि
चत्वारिंशदंगुलम् ॥ १६ ॥ मध्यंस्तनेपरीणाहःषडंगुलमतोधिकः ॥ एकोनविंशांगुलंतदुरोवि
स्तारलक्षणम् ॥ १७ ॥ पादोनमंगुलंचैवभुजाभ्यांसहसार्धकम् ॥ अंसयोर्विस्तृतिश्चैवपृथग
ष्टांगुलामता ॥ १८ ॥ सप्तांगुलोच्छ्रयःकक्षादुपरिस्कंधयोर्मतः ॥ अष्टत्रिंशांगुलंचैवहस्तयोर्मा
नमुच्यते ॥ १९ ॥ अष्टादशांगुलोबाह्वोःपरीणाहउदाहृतः ॥ क्रमादूनंतदंतेतुसार्धाष्टांगुलमीरि
तम् ॥ २० ॥ सांगुलस्तुतलःसार्धनवांगुलउदाहृतः ॥ समंतदुभयंज्ञेयंतथैवतलविस्तृतिः ॥२१॥
अर्धांगुलोन्नतामध्याद्द्वयोःसार्धांगुलोन्नता ॥ कनिष्ठिकायास्तस्यास्तुव्रीहिमात्राधिकःपरः॥२२
सार्धत्रयपरीणाहौमध्यज्येष्ठावुदाहृतौ ॥ अन्यौव्रीहितदर्धोनावन्यासार्धद्वयांगुला ॥ २३ ॥ पा
दोनातपरीणाहाःसर्वाज्येष्ठांविनास्मृताः ॥ वक्षोविस्तारसदृशःपरीणाहोगलस्यच ॥ २४ ॥ ल
लाटकुक्षिकंठास्तुदीर्घरेखात्रयान्विताः ॥ वृत्तोगलोबाहवश्चस्तनावंगुलयस्तथा ॥ २५ ॥ रक्ता
स्तलनखाश्चैवनेत्रांतोधरएवच ॥ उत्तरोष्ठश्चजिह्वाचनखौपादोनकांगुलौ ॥ २६ ॥ अर्धांगुलौ
तथामध्यावन्येऽष्टांशक्रमोनकाः ॥ नासिकायाअधस्ताच्चनासिकाचरराटिका ॥ २७ ॥ समा
मानेननासायाउच्चत्वेनैवमापने ॥ अर्धांगुलाधिकंसर्वमुखस्यतुभविष्यति ॥ २८ ॥ चतुरंगुलं
तथैवास्यंसार्धंव्रीह्यधरंस्मृतम् ॥ उत्तरंव्रीहिमात्रंतुतदूर्ध्वंचाधरोपमम् ॥ २९ ॥ सार्धांगुल
मथप्रोक्तमधरादधएवच ॥ आस्यपार्श्वद्वयंप्रोक्तमाकर्णात्तुषडंगुलम् ॥ ३० ॥ सप्तांगुलंनासि
कायाःपार्श्वमाकर्णतःस्मृतम् ॥ सपादांगुलमुच्चाचनासिकापरिकीर्तिता ॥ ३१ ॥ अर्धांगुलेपुटे

तस्यामध्यंचसमुदाहृतम् ॥ नासिकावीहिविस्ताराचक्षुषीचांगुलित्रये ॥ ३२ ॥ अंगुलंचैववि
स्तीर्णेफुल्लेऽर्धंचतदन्यथा ॥ चतुरंगुलौभ्रुवौचैवतथार्धांगुलविस्तृतौ ॥ ३३ ॥ असंहतौचनिबि
डौतथापक्ष्मसुनीलकम् ॥ कर्णौचत्र्यंगुलौसार्धद्वयविस्तारसंयुतौ ॥ ३४ ॥ सकुंडलंतावदेवविव
रंसंप्रकीर्तितम् ॥ तथाद्यंगुलविस्तारंलताभ्यांसहकथ्यते ॥ ३५ ॥ कर्णपूरयुतौकर्णावुत्पलाभ्यांच
संयुतौ ॥ नीलालकसहस्रेणयुक्तंतन्मुखपंकजम् ॥३६॥ ललाटंसुविशालंचतथासार्धनवांगुलम्॥
विस्तारोमूर्ध्निवृत्तंचशिरश्छत्राकृतिस्मृतम् ॥ ३७ ॥ दीर्घाश्चकुंचिताग्राश्चनीलाःकेशाहरेर्मताः ॥
मुखमानेनचैवोच्चंकिरीटंकेशवस्यहि ॥ ३८ ॥ कुंडलेमकराकारेवक्षश्चैवसकौस्तुभम् ॥ सश्रीव
त्संदक्षिणतःपीनंतुंगमुदाहृतम् ॥ ३९ ॥ हारग्रैवेयसहितमुपवीतयुतंतथा ॥ बाहवश्चसकेयू
रकंकणांगदमुद्रिकाः ॥ ४० ॥ समध्यबंधंमध्यंचनितंबेपीतमंबरम् ॥ कांचीगुणश्चपदयोर्नू
पुरेचातिसुस्वने ॥ ४१ ॥ अंगुलीयानिचपदोःकृतिभिःसाधुकारयेत् ॥ सोत्तरीयंचचक्राद्यैरायुधै
श्चसमन्वितम् ॥ ४२ अनुन्नतैरविरलैर्दंतैर्युक्तंचसुस्मितम् ॥ समदृष्टियुतंकार्यंश्लक्ष्णंचैवम
नोहरम् ॥ ४३ ॥ प्रतिमार्थंव्रजन्पंचध्वनिभिर्मंगलैर्युतः ॥ गत्वाशुचिस्थलंचैवशिलांतत्रपरीक्षये
त् ॥ ४४ ॥ ध्वनिभेदेनविज्ञायशिलांगर्भवर्तीत्यजेत् ॥ मूलमंत्रंजपन्विष्णुंध्यायंस्तिष्ठेदुपोषि
तः ॥ ४५ ॥ वार्क्षींचेद्यज्ञवृक्षस्यसारेणैवतुकारयेत् ॥ बलिदानंचसंक्षेपविधानेनैवकथ्यते
॥ ४६ ॥ अस्यसंक्षेपशास्त्रत्वान्नविस्तरविरोधिता ॥ दत्त्वोपहारंहरयेतद्भूतेभ्योबलिंहरेत्॥४७॥
प्राच्येभ्योविष्णुभूतेभ्यइत्याद्यखिलदिक्षुच॥ आदायविष्णुभूतेभ्योलोकपेभ्यस्तथाहरेः॥४८॥

अनुज्ञामुद्धरेद्वृक्षंशिलांचप्रतिमाकृते ॥ प्रतिमांपिंडिकांपीठंशिलाभिस्तुत्रिजातिभिः ॥ ४९ ॥
खरेस्थूलत्वभेदेनपुंस्त्र्याद्याजातितःशिलाः ॥ पुंशिलाप्रतिमार्थंतुस्त्रीशिलापीठकर्मणे ॥ ५० ॥
वेदमंगलघोषेणवाद्यैश्चप्रतिमांहरेत् ॥ प्रागुदक्प्रवणेदेशेकुर्याद्देवालयंसुधीः ॥ ५१ ॥ रामावृते
दक्षिणतःपश्चाद्विर्यग्रएववा ॥ मध्येवाग्रामपुरयोर्विशालेसुशुचौतथा ॥ ५२ ॥ ऐशानींदिशमे
कांतुविनोदकविवर्जिते ॥ जलाशयस्यमध्येवाशिलावृक्षादिवर्जिते ॥ ५३ ॥ श्मशानादिकदे
शानांविदूरेसुमनोहरे ॥ किष्कुद्वादशतोनूनंकुर्याद्देवालयस्थलम् ॥ ५४ ॥ द्विगुणंचतुर्गुणंवापि
शतकिष्कुप्रमाणकम् ॥ कृत्वाभूशोधनंसम्यक्साधंपुंमानतस्त्वधः ॥५५ ॥ केशांगारास्थिवल्मी
कलोष्टाश्मादिविवर्जिते ॥ हरिंतत्रापिसंपूज्यबलिंदत्वापिपूर्ववत् ॥ ५६ ॥ मृद्दारुशैलैर्लोहैर्वाकु
र्याद्देवालयंदृढम् ॥ दीर्घस्थकलमास्तिस्रस्तिर्यगष्टयवोदराः ॥ ५७ ॥ अंगुल्यामध्यरेखायाः
समालक्षणतःस्मृताः ॥ स्वांगुल्यामध्यरेखातुप्रतिमादिषुलक्षणम् ॥ ५८ ॥ ह्रस्वमध्योच्चभेदेन
तत्तन्मानंसमस्तशः ॥ प्रादेशहस्तपुरुषमानंसामान्यलक्षणम् ॥ ५९ ॥ प्रतिमाध्यर्धकंद्वारमूर्ध्व
मर्धंचविस्तृतिः ॥ प्रतिमार्धप्रमाणेनपीठस्योच्चत्वमिष्यते ॥ ६० ॥ उन्नतिःपिंडिकायास्तुचतुरंगु
लमानतः ॥ त्र्यंगुलंद्व्यंगुलंवापिग्रहांतःप्रतिमासमम् ॥ ६१ ॥ उच्चंपर्यंकक्रमशउच्चत्वंमध्यतःस्मृ
तम् ॥ तावदुच्चंबहिश्चैवयद्येकंशिखरंभवेत् ॥ ६२ ॥ अर्धोच्चमथवापिस्याद्धस्तात्प्रतिमोन्न
तम् ॥ ततोद्विगुणमानंवासार्धंप्रतिममेववा ॥ ६३ ॥ शिखरांतरेतुप्रतिमामानंतद्दलउच्यते ॥ त
त्रिपादंतदर्धंवातदध्यर्धमथापिवा॥६४॥ वर्तुलंपद्मसदृशंहस्तिपृष्ठसमंतथा ॥ चतुरस्रंचाष्टकोणं

विमानंपरिकीर्तितम् ॥६५॥ प्रतिमायादशगुणंविंशद्गुणमथापिवा॥वर्तुलंशिखरंत्वेकंकिरीटाकृति
मद्भवेत्॥६६॥सभयापिसमेतंवापृथक्सभमथापिवा॥द्विसभंत्रिसभंवापिसगोपुरमथापिवा॥६७॥
प्राकारवृत्तयुक्तंवासप्तप्राकारमेववा॥समवृत्तंकिष्कुमात्रंबहिर्वाचतुरस्रकम्॥ ६८ ॥ततःपरंकिष्कु
मात्रंसभायाअंतरंयदि॥ततस्तावत्तृतीयायाःसार्धमेवह्युदाहृतम्॥६९॥ किष्कुत्रयंचशकादेःस्था
नंतद्वृत्ततःस्मृतम् ॥ ततस्तुमंटपंकुर्यात्प्रतिष्ठायाःसुलक्षणम् ॥ ७० ॥ पूजयेद्वास्तुपुरुषस्योपरि
ष्टांस्तुसर्वदा ॥ देवान्ब्रह्मादिकान्वास्तुर्वराहस्यहरेःसुतः ॥ ७१ ॥ पातितोदैवतैर्भूमौचतुरस्रा
कृतिःस्थितः ॥ कृत्वाष्टकाष्ठकोष्ठानिमध्येब्रह्माचतुष्टये ॥ ७२ ॥ पूज्योद्वयेद्वयेशक्रोयमोवरुण
एवच ॥ सोमश्चपूज्यःकोणेषुवह्न्याद्याःकोणदेवताः ॥ ७३ ॥ पुनस्त्रयस्त्रयेकामंधातारंसविधा
तृकम् ॥ स्कंदंचपूजयेत्कोणेसूर्यंचैवविनायकम् ॥ ७४ ॥ कालंकुबेरंचबहिःप्रत्येकंदिक्षुपूजये
त् ॥ हारंहरिंगभीरंचगाहनंगेहनंगुहम् ॥ ७५ ॥ भातमंगारकंचैवपूर्वस्यांदिशिपूजयेत्॥ दारुणं
विदरिंदूतंप्रद्योतंद्योतनंदरिम्॥७६॥मृत्युंशनैश्चरंचैवदक्षिणस्यांप्रपूजयेत्॥ पुष्करंक्षरणंक्षारंविक्ष
णंक्षोभणंक्षरम् ॥ ७७ ॥ चार्वंगंभार्गवंचैवपश्चिमायांप्रपूजयेत् ॥ चारंविचारंप्रचरंसंचारंचरणं
चरम् ॥ ७८ ॥ बृहस्पतिंबुधंचैवाप्युत्तरस्यांप्रपूजयेत् ॥ एवमेवविमानस्यकृतेःप्रागपिपूजये
त् ॥ ७९ ॥ सप्तपर्णमयंसाधुकारयेन्मंटपंततः ॥ सप्तहस्तंद्विषड्ढस्तमथवाद्विगुणंततः ॥ ८० ॥
चतुर्गुणंवासम्यक्चचतुरस्रंसहाजिरम् ॥ अन्यंचमंटपंदीर्घंपंचहस्तंतुकारयेत् ॥ ८१ ॥ त्रिचतु
ष्कोष्ठकंतत्रमध्येप्रागायतंशुभम् ॥ कारयेन्मंडलंसाधुहस्तमात्रंतुविस्तृतम् ॥ ८२ ॥ तत्रद्वादश

पात्राणिस्थापयेत्पालिकादिकम् ॥ पालिकास्तुचतुर्विंशत्यंगुलोच्छ्रयसंयुताः ॥ ८३ ॥ अष्टाद
शांगुलाश्चैवतथापंचमुखाइति ॥ द्वादशांगुलकाश्चैवशरावाःपश्चिमानुगाः ॥८४॥ तत्रविष्णुंचतु
र्मूर्तिंपूजयेद्भक्तितस्त्रिशः ॥ सप्तधान्यानितेष्वेवपूजयेदंकुरार्थतः ॥ ८५ ॥ तत्रनित्यंबलिंदद्या
द्विष्णवेदशरात्रकम् ॥ ब्रह्मशंकरगीर्वाणपितृगंधर्वयक्षकैः ॥ ८६ ॥ भूतैश्चपायसेनैवतथापद्मा
क्षतेनवा ॥ अन्नापूपेनपुष्पान्नैरन्नलाजाक्षतैरपि ॥ ८७ ॥ सक्तुभिश्चक्रमेणैववेदांतंपायसेन
वा ॥ तदैवप्रतिमायाश्चकारयेदधिवासनम् ॥ ८८ ॥ पंचगव्येसप्तरात्रंक्षिप्त्वापुरुषसूक्ततः ॥ वे
दांश्चचतुरःसम्यक्पारयेयुर्द्विजोत्तमाः ॥ ८९ ॥ प्राच्यादिद्वारगौद्वौद्वावेकैकंतुदशावराः ॥ यथा
लब्धंयथावित्तमथवाविष्णुतत्पराः ॥ ९० ॥ त्रयोदशात्रकुंडानिपरितःकारयेद्बुधः ॥ उक्तलक्ष
णयुक्तानिप्रधानंत्वग्निकोणके ॥ ९१ ॥ साक्षात्तुकोणगाद्धस्तमात्रमंतरतःसुधीः ॥ आज्याहु
तिंतेषुकुर्यात्प्रत्येकंलक्षसंख्यकम् ॥ ९२ ॥ प्रत्येकमयुतंवापिप्रधानेलक्षसंख्यकम् ॥ अर्धंतदर्ध
मथवामूलमंत्रेणमंत्रवित् ॥ ९३ ॥ पंचविंशतितत्त्वार्थंप्रधानेजुहुयात्पुनः ॥ प्रत्येकंतुसहस्रंवाप्र
त्येकंशतमेववा ॥ ९४ ॥ शतंपुरुषसूक्तेनगायत्र्याचसहस्रकम् ॥ कृत्वाजलाधिवासंचपूर्वं
वापंचगव्यतः ॥ ९५॥ चक्राब्जंभद्रकंवापिमंटपेमंडलंशुभम् ॥ पद्मंवृत्तत्रयंचक्रंराशयोवीथिकाल
ताः॥९६॥शोभोपशोभिकाश्चापिचक्राब्जस्यतुलक्षणम्॥चतुरस्रंविनाचक्रंविशेषोभद्रकेस्मृतः९७
सहस्रमर्धपादंवाकलशांस्तत्रपूजयेत् ॥ शतंतदर्धपादंवावित्ताभावेनिगद्यते ॥ ९८ ॥ क्वाथेनक्षी
रवृक्षाणांतथापंचामृतैरपि ॥ पंचगव्येनशुद्धेनजलेनचपृथक्पृथक् ॥ ९९ ॥ पूरयेत्कलशान्मध्यं

शुद्धोदेनैवपूरयेत् ॥ ब्राह्मस्यैवचतुर्दिक्षुगंधोदानांचतुष्टयम् ॥ १०० ॥ चतुर्दलेसितेपद्मचतुष्के
मंडलेस्थिते ॥ पूर्वादिक्रमयोगेनरसकाथशुभोदकान् ॥ १ ॥ गंधांश्चस्थापयेत्पंचगव्यंशुद्धांतरे
न्यसेत् ॥ पृथक्चतुर्दलंपद्मंरक्तंकृत्वाल्पकंसुधीः ॥ २ ॥ पंचाशत्त्वेतुगंधोदंसर्वमध्येनिधापयेत् ॥
ब्राह्मस्यपुरतस्त्वेकंशार्वंसंस्थापयेद्बृहत् ॥ ३ ॥ अष्टदिक्ष्वष्टपद्मेषुपंचकंपंचकंन्यसेत् ॥ अने
नक्रमयोगेनकलशाअखिलाअपि ॥ ४ ॥ तत्तद्द्रव्यमयास्तत्रतत्रस्थाप्यास्तुबाह्यतः ॥ तदेवां
कुरपात्राणिपरितस्तत्रविन्यसेत् ॥ ५ ॥ कुशोदकंचकार्पूरंकौंकुमंचांदनंतथा ॥ तुहिनोदं
हरिद्रोदमौशीरंकोष्ठसार्षपम् ॥ ६ ॥ नदीसंगमजंचैवताटाकंकौप्यमेवच ॥ निर्झरोदमि
तिप्रोक्ताविशेषकलशाइमे ॥७॥ शुद्धोदद्वयमप्येतन्महातीर्थसमुद्भवम् ॥ चतुर्विंशतिमूर्तीनां
वर्णमूर्तीस्तथापराः ॥८ ॥ आवाहयेच्छतत्वेतुक्रमव्युत्क्रमतस्तुताः ॥ वर्णमूर्तीःपुनश्चैवद्विचतुर्वा
रमेववा॥ ९ ॥ सहस्रकलशादित्वेजपेन्मंत्रांश्चशक्तितः ॥ ततस्तुपंचघोषैश्चवेदघोषैस्तथादरात्
॥ ११० ॥ आनीयप्रतिमांस्नानंकारयेत्प्रणवेनतु ॥ मंत्रैःपुरुषसूक्तांतैर्विश्वतश्चक्षुषातथा॥११॥
पुनश्चाष्टाक्षरेणैवप्रणवेनैवभक्तितः ॥ स्नापयित्वागंधजलैर्गंधपुष्पादिभिःपुनः ॥ १२ ॥ अलंकृ
त्यस्थापयेत्तुप्रतिमांप्रणवेनतु ॥ जपेदष्टाक्षरंमंत्रंतत्तन्मूर्तिमनुंतथा ॥ १३ ॥ अष्टोत्तरशतंमंत्री
ध्यायेत्तेजोमयींपुनः ॥ प्रतिमांप्रतिमांतस्यांतन्मध्येपरमंवपुः ॥ १४ ॥ चिदानंदरसंसर्वगुणसंपू
र्णमुत्तमम् ॥ पंचविंशतितत्त्वानांदेवतास्तदनंतरम् ॥ १५ ॥ स्थापयेत्प्रतिमामध्येपरितःकेशव
स्यतु ॥ तत्रत्वाहार्षसूक्तंचघर्मसूक्तंचवैष्णवम् ॥ १६ ॥ सूक्तंचविश्वकर्मीयंपौरुषंसूक्तमेवच॥

जप्त्वाचैवनिजंमंत्रंपुनरष्टाक्षरंसुधीः॥ १७॥प्रणवंचजपेद्विष्णुंध्यायन्नुत्तमरूपिणम्॥ततस्तुकलशै
र्बाह्यक्रमेणैवजनार्दनम्॥ १८॥स्नापयेदुक्तमंत्रैस्तुमध्यमंप्रणवेनतु ॥ अष्टार्णेननिजेनापितथापुरुष
सूक्ततः॥ १९॥आवाहनंचस्नपनंपंचगव्येनमध्यवत् ॥पूर्वाद्युत्तरपर्यंतःकलशक्रमउच्यते॥ १२०॥
जप्त्वापुनश्चतन्मंत्रान्पूजयेच्चविधानतः॥द्वारलोकपतिभ्यश्चबलिंदत्त्वायथाक्रमम्॥ २१॥वस्त्ररत्नहि
रण्याद्यैरलंकृत्यविभूतितः ॥ गुरवेदक्षिणांदद्यात्कोटिंलक्षंसहस्रकम्॥ २२॥शतमर्धंतदर्धंवानिःस्वो
भक्त्याक्षमापयेत्॥तदर्धमृत्विजांचैवतदर्धंपारणाकृताम्॥ २३॥आश्वभ्यआश्वपाकेभ्योदद्यादन्नं
समस्तशः॥पुरस्तात्परतश्चैवसप्तरात्रंनिरंतरम् ॥ २४॥ सुवर्णवस्त्ररत्नाद्यैरागताभ्यागतानपि॥पूजये
च्छक्तितोभक्त्याप्रीयतांभगवानिति॥ २५॥गीतनृत्तैश्चवाद्यैश्चपुराणैरितिहासकैः ॥ सूक्तैर्मंगलघो
षैश्ववैदिकैर्दिनसप्तकम्॥ २६॥नयेत्ततोमहाराजविभूत्यावभृथंसुधीः॥ कारयेद्देवदेवस्यस्वाध्यायै
र्गीतनृत्तकैः॥ २७॥महानदीसंगमेतुतीर्थेचातिप्रशस्तके॥स्नापयेत्पूर्ववन्मंत्रैःपुंसूक्तांतैःस्मरन्हरिम्
॥ २८॥ततःपूर्ववदागत्यप्रवेश्यपुरुषोत्तमम्॥पूजयित्वाविधानेनदत्त्वादामानिशक्तितः॥ २९॥ गुरुं
चभक्त्यासंपूज्यस्वीकुर्यादाशिषस्ततः॥शतप्रस्थादनूनंतुनैवेद्यंपायसोत्तरम्॥३०॥ दिनेष्वेतेषुदा
तव्यंसघृतंससितादिकम्॥पश्चादपियथाशक्तिपूजाकार्याहरेःसदा॥ ३१॥जीर्णालयोद्धृतौचैवतत्त्व
मंत्रान्स्वकंतथा ॥ प्रातिलोम्येनजप्त्वैवमूर्तौसंकोचयेद्धरिम् ॥ ३२ ॥ उक्तेनैवविधानेनतदर्धैर्विभ
वैःसुधीः ॥ पादमात्रैरपिहरिंस्नापयित्वायथोदितम् ॥ ३३ ॥ एतेनैवविधानेनकृत्वादेवालयंपुनः॥
स्थापयेत्पुंडरीकाक्षंद्विगुणेनप्रवाहणात् ॥ ३४ ॥ विभवेनानुलोम्येनजपन्मंत्रान्पुनस्तथा ॥ आ

राधयेज्जगन्नाथंध्यायन्भक्त्यायथोदितम् ॥ ३५ ॥ यात्रापिपूर्ववत्तत्राप्युत्सवेषुचसर्वशः ॥ क
लशोक्तविधानेनपूजाबलिरतिस्तथा ॥ ३६ ॥ उत्सवेषुसदाकार्याकलशश्चोत्सवादनु ॥ यात्रा
स्नानंचकर्तव्यंसम्यगुक्तविधानतः ॥ ३७ ॥ चोरचांडालपतितश्वोदक्यादिप्रवेशने ॥ शवाद्युप
हतौचैवपूजाविच्छेदनेतथा ॥ ३८ ॥ स्नापनोक्तेनमार्गेणप्रायश्चित्तकृतिःस्मृता ॥ सर्वत्रविष्णु
गायत्र्याहोमःस्यादयुतावरः॥ ३९॥ नावाव्याद्यभिधानानुविद्महेधीमहेतथा ॥ प्रचोदयात्प्रतीया
धस्तन्नोगायत्रिनामिका ॥ १४० ॥ दुर्गाशिवस्कंदसूर्यविनायकमुखानपि ॥ स्थापयेदुक्तमार्गे
णतत्तन्मंत्रैःस्मरन्हरिम् ॥४१॥ गोलकद्वितयंविष्णोस्त्रितयंवाप्रकीर्तितम् ॥ अन्यदेवप्रतिष्ठासुत
दंतर्श्चितयेद्धरिम् ॥ ४२॥ विष्णुस्मृतिविहीनातुपूजास्यादासुरीसदा॥गृह्णंतिदेवतानैतांततःस्या
द्देशविप्लवः ॥ ४३ ॥ व्याधिचोरादिभिस्तस्मादंतर्ध्येयोहरिःसदा ॥ विष्णुभक्तिविहीनस्यगतिः
स्यान्नशुभाक्वचित्॥४४॥भक्तस्याप्यन्यदेवेषुतस्माद्ध्येयोहरिःसदा॥ संस्मृतोभगवान्विष्णुःसर्व
मंगलमंगलः॥४५॥समस्ताभीष्टदायीस्यात्तेनध्येयोखिलैर्जनैः॥पुरुषोव्यक्तंचमहानहंकारोमनस्त
था ॥ ४६ ॥ दशेंद्रियाणिशब्दाद्याभूतेताःपचविंशतिः ॥ तत्त्वाख्याकालमायेचनियतिर्मतिरेवच
॥ ४७ ॥ विद्याकलाप्रवृत्तिश्चद्वात्रिंशत्तत्त्वसंग्रहः ॥ स्फूर्तिःसंवित्प्रतिष्ठाचशक्तिरित्यपराणितु
॥ ४८ ॥ महालक्ष्मीस्वरूपाणिह्येकादशविदोविदुः ॥ विष्णोरपिस्वरूपाणितन्नाम्नैकादशैवतु
॥ ४९ ॥ प्रधानोपमवर्णानिद्विभुजान्यप्यशेषतः ॥ कृतांजलिपुटान्येवप्रधानंतंहरिंप्रति ॥ ५० ॥
सर्वाण्येतानितत्त्वानिब्रह्मातुपुरुषःस्मृतः ॥ महांश्चाव्यक्तनाम्नीतुब्रह्माणीसंप्रकीर्तिता ॥५१ ॥ ए

वंवायुरपिज्ञेयोभातिचैवतुतत्रयम् ॥ रुद्रोहंकारउद्दिष्टःस्कंदेंद्रौमनउच्यते ॥ ५२ ॥ अहंकारःशे
षवींद्रावपिविद्वद्भिरीरितौ ॥ दिग्वायुसूनुसूर्याश्ववरुणश्चाश्विनावपि ॥ ५३ ॥ वह्निदक्षाविंद्रसू
नुर्मित्रश्चैवमनुस्तथा ॥ इंद्रियाख्याःशब्दनामाबृहस्पतिरुदाहृतः ॥५४॥ अन्येतुसूनवोवायोरुद्र
स्यापिप्रकीर्तिताः ॥ एतेषुभगवान्विष्णुःप्रधानतनुरेवतु ॥ ५५ ॥ ध्येयःपरात्मनोर्मध्येतत्त्वनामा
तदर्थयोः ॥ जपेन्यासेनमोंतश्चस्वाहांतोहोमकर्मणि ॥ ५६ ॥ त्रिचतुष्षड्दशावृत्तिरेतेषांतुहृता
दिके ॥ न्यासोंगुलीषूरुबाहुमध्येषुव्युत्क्रमेस्मृतः ॥ ५७ ॥ क्रमेविपर्ययेणात्रशक्त्यादित्वंप्रकीर्ति
तम् ॥ ऋषिच्छंदोदेवतांगध्यानानुक्तौप्रधानवत् ॥ ५८ ॥ ज्ञेयामंत्राःसमस्तास्तेपृथङ्मोक्षादिदा
यकाः ॥ तंत्रमार्गास्तुहरिणाह्यसंख्याःकीर्तिताअपि ॥ ५९ ॥ तेष्वयंसुगमोमार्गःसफलश्चानुति
ष्ठताम् ॥ यावतोह्यननुष्ठानेकर्मपूर्तिर्नविद्यते ॥६०॥ तावत्समस्तंकथितमस्मिंस्तंत्रेयथाविधि॥
प्रीयतेनेनमार्गेणपूजितोमुक्तिदोभवेत् ॥ ६१ ॥ कामदश्चस्वभक्तानांभगवान्पुरुषोत्तमः ॥ ६२ ॥
इतिश्रीमदानंदतीर्थभगवत्पादाचार्यविरचितेश्रीमत्तंत्रसारसंग्रहेतृतीयोऽध्यायः ॥ ३ ॥
॥ ॐ ॥ अथविष्णूदितेतंत्रसारेमंत्रगणोह्ययः ॥ उदितःसंग्रहेणासावुच्यतेखिलसाधकः ॥ १ ॥
योष्टमस्तूयुतोंतेनसमेतश्चैवभूभृतः ॥ बीजंनमश्चभगवान्सोद्देशोरूपसंयुतः ॥ २ ॥ सएवताहृ
शोलोकत्रयपालोभुवःपतेः ॥ भावंमेदेहिदांतेतुदापयस्वाहयायुतः ॥ ३ ॥ मनुस्तस्यापरस्तारबी
जोद्देशनमोयुतः ॥ नमःसोद्देशभगवान्महाशब्दयुतश्चसः ॥ तादृशःस्वाहयायुक्तोवराहस्यापरोम
नुः ॥ ४ ॥ श्यामःसुदर्शनदराभयसद्वरेतोभूम्यायुतोखिलनिजोक्तपरिग्रहैश्च ॥ ध्येयोनिजैश्चत

नुभिःसकलैरुपेतःकोलोहरिःसकलवांछितसिद्धयेजः ॥ ५ ॥ वैष्णवानांमुनिर्ब्रह्मामंत्राणांवर्णभे
दतः॥ज्ञेयंछंदोदेवतैकंतत्तद्रूपोहरिःपरः॥६॥प्रणवेनस्वनाम्नाचभूधरेणपरात्मना ॥सर्वज्ञसर्वशक्ति
भ्यांषडंगानिविदोविदुः॥७॥ज्ञानैश्वर्यप्रभानंदतेजःशक्तिभिरेववा ॥पूर्णात्ममध्यगैःसर्ववैष्णवांगा
न्यथोविदुः॥८॥तिष्ठोदादिस्वजायायाःकारणंस्वाहयायुतः॥९॥ श्रीकरोष्टाक्षरोमंत्रोगरुडारूढसं
स्मृतिः॥द्विर्भीषयत्रासयचप्रमर्दयतथैवच ॥१०॥प्रध्वंसयाथोरक्षेतिपंचांगश्चेदुदाहृतः॥क्रूरंवीरंद्व
हद्विष्णुंदीप्यंतंविश्वतोमुखम् ॥११ ॥ पुंमृगेंद्रंभयकरंशुभंमृत्योश्चमारकम् ॥ नमामिस्वयमित्ये
षद्वात्रिंशार्णोमनुर्हरेः ॥ १२ ॥ द्विर्जयस्योपरिनिजंसोहंशंसर्ववित्तथा ॥ महातेजोबलंवीर्यंतादृ
शंस्वाहयायुतम्॥१३॥ चतुर्विंशाक्षरोमंत्रोनिखिलेष्टप्रदायकः॥ विद्महेधीमहेपूर्वंस्वयंचैवमहाब
लः ॥ १४ ॥ प्रेरयेत्तन्नइत्येतन्मध्येनंतःप्रकीर्तितः ॥ पादैर्व्यस्तैःसमस्तैश्चपदैश्चांगंप्रकीर्तितम्
॥ १५ ॥ पूर्वयोस्तत्रपूर्वंतुसर्वज्ञेनषडंगकम् ॥ तृतीयंतुद्विरावृत्तैःपादैरंगसमन्वितम् ॥ १६ ॥
ध्यायेन्नृसिंहमुरुवृत्तरवित्रिनेत्रंजानुप्रसक्तकरयुग्ममथापराभ्याम् ॥ चक्रंदरंचदधतंप्रिययासमे
तंतिग्मांशुकोट्यधिकतेजसमग्र्यशक्तिम्॥१७॥ सर्वेष्वपिहिमंत्रेषुद्वाद्यनंतांतबाहुकः ॥ चेतनां
तस्थमारभ्यसर्वगांतस्थ रूपवान् ॥ १८ ॥ अनंतरूपोध्येयोत्रस्वगुरूक्तानुसारतः ॥ यथा
योग्यंयथाशक्तितत्तदायुधभूषणः ॥ १९ ॥ शंखचक्रगदापद्मखड्गखेटाःसशार्ङ्गकाः ॥ शरोमुस
लवज्रौचहलःपाशांकुशौतथा ॥ २० ॥ शूलंचभिंडिपालश्चपट्टिशोग्निर्वराभये ॥ तर्कमुद्राक्षमा
लाचपुस्तकंचविदारणम् ॥ २१ ॥ इत्यादीन्निखिलान्येवविष्णोश्चिंत्यानिबाहुषु ॥ वियत्सइति

युग्मार्णोविपरीतश्चसंस्मृतः ॥ २२ ॥ ससर्गहीनोवेतश्चबिंदुहीनोत्तरस्तथा ॥ त्रयएतेमहामंत्राः
पुरुषार्थचतुष्टये ॥ २३ ॥ कल्पवृक्षाःप्रियाविष्णोर्विशेषज्ञानदायकाः ॥ तैरेवतुद्विरावृत्तैरंगमेषां
प्रकीर्तितम् ॥२४ ॥ श्वासरूपोजपोनित्यमुभयोर्विद्वदज्ञयोः॥एकविंशत्सहस्रात्मासषट्शतमह
र्निशम् ॥ २५ ॥ अपर्णीयोहरौनित्यंप्रातर्योगोमहानयम् ॥ अशेषदोषदहनस्तत्त्वज्ञानप्रदाय
कः ॥ २६ ॥ अष्टैश्वर्यप्रदश्चैवक्तादौसमुपासताम् ॥ तारयोगोप्येवमेवब्रह्मादावेववर्तते॥ २७॥
ध्यायेद्रवींदुकरमिंदुसहस्रलक्षकांतिंप्रियासहितमास्थितमिंदुबिंबे ॥ शंखारिदोर्द्वयमुदर्कमहेंदु
बिंबात्संसिच्यमानममृतेनरमाधिनाथम् ॥ २८ ॥ अंत्यस्यरक्तवर्णोवाध्येयोविष्णुःसनातनः ॥
विद्युद्वर्णोथवाध्येयःशक्त्येतःपंचमंत्रयुक्॥ २९॥ अष्टाक्षरोमहामंत्रस्तैरेवांगैःसमन्वितः ॥ अंत्य
ध्यानयुतश्चैवनिःशेषपुरुषार्थदः ॥३० ॥ मूलंनःप्रतिषेधश्चसोद्देशोभगवानपि ॥ विष्णुर्भोज्याधि
पःस्वाहायुक्तोष्टादशवर्णकः ॥३१॥ अंगानितत्पदैरेवमंत्रचिंतामणिस्त्वयम् ॥ यथेष्टभक्षभोज्या
दिदातामुक्तिप्रदायकः ॥ ३२ ॥ ध्यायेत्सुशुक्लमरविंददलायताक्षंसौवर्णपात्रदधिभोज्यमथामृतं
च॥दोर्भ्यांदधानमखिलैश्चसुरैःसमेतंशीतांशुमंडलगतंरमयासमेतम्॥३३॥अमृतंस्वयमुद्देशयुक्तः
सहृदयोमनुः ॥ सतारोष्टाक्षरोगानिपदैर्न्यस्तैःसमस्तकैः॥३४॥उद्यद्रविप्रभमरींद्रदरौगदांचज्ञानं
चबिभ्रतमजंप्रिययासमेतम्॥विश्वावकाशमभितःप्रतिभासयंतंभासास्वयास्मरतविष्णुमजादिदं
द्यम्॥३५॥त्रिविक्रमस्तुसोद्देशोविश्वरूपश्चतत्परः॥धीविदौचमहेविष्णुस्तन्नःप्रेरणमध्यगः॥३६॥
स्वयमुद्देशसंयुक्तस्तदाद्यर्णपुरःसरः ॥ सनतिःषडक्षरोमन्त्रोवर्णैरंगक्रियामता ॥३७॥ अंगारवर्णम

भितोंऽबहिःप्रभाभिर्व्यासिंपरश्वधधनुर्धरमेकवीरम् ॥ ध्यायेदजेशपुरुहूतमुखैःस्तुवद्भिरावीतमा
त्मपदवींप्रतिपादयंतम् ॥ ३८ ॥ श्यामंरवींद्वमितदीधितिकांतियुक्तंज्ञानंशरंचदधतंप्रियथासमे
तम् ॥ स्वात्मस्वरूपममितंहनुमन्मुखेषुसंदर्शयंतमजितंस्मरतोरुगीर्भिः ॥ ३९ ॥ निजगोत्रंतुसो
द्देशंपूर्वाक्षरपुरःसरम् ॥ नत्यंतंतारपूर्वंचमनुरष्टाक्षरोमतः ॥ ४० ॥ तेचबीजेबीजभूतेधर्मादीनाम
शेषतः॥एतेविजयदामंत्राज्ञानमोक्षप्रदायकाः ॥ ४१ ॥ हिरण्यरत्नराज्यादिसमभीष्टसुरद्रुमाः॥
कृष्णोगोविच्चकामेतःसोद्देशोबल्लवीजनः ॥ ४२ ॥ प्रियश्चतादृशःस्वाहायुगष्टादशवर्णकः ॥ पदै
रंगानिसंप्रीतिकाममोक्षप्रदोमनुः ॥ ४३ ॥ध्यायेद्धरिन्मणिनिभंजगदेकवंद्यंसौंदर्यसारमरिशंखव
राभयानि ॥ दोर्भिर्दधानमजितंसरसंचभैष्मीसत्यासमेतमखिलप्रदर्मिंदिरेशम् ॥ ४४ ॥ सकामः
स्वयमुद्देशीनत्यंतोयंषडक्षरः ॥ तदादिरपिसर्वेष्टचिंतामणिरुदाहृतः ॥ ४५ ॥ दृष्टार्थएवमंत्राणां
कलौवीर्यंतिरस्कृतम् ॥ तत्राप्युद्दीप्तवीर्याहिमंत्राअत्रप्रकीर्तिताः ॥ ४६ ॥ वासिष्ठवृष्णिप्रवरमं
त्रास्तत्रापिवीर्यदाः ॥ स्वयंदेवपदारूढःपूर्ववर्णपुरःसरः ॥ ४७ ॥ नत्यंतोष्टाक्षरोमंत्रःप्रियोविज्ञा
नगोपतेः ॥ व्याख्याश्रीसर्वविज्ञानकवितादिगुणप्रदः ॥ ४८ ॥ वादेविजयदोनित्यंयथायुद्धेनृ
केसरी ॥ ४९ ॥ विज्ञानरोचिःपरिपूरितांतर्बाह्यांडकोशंहरितोपलाभम् ॥ तर्काभयेतंविधिशर्व
पूर्वगीर्वाणविज्ञानदमाननोस्मि ॥ ५० ॥ ज्ञानानंदपुरःपूर्णोविद्महेधीमहेतथा ॥ तन्नःप्रेरणमध्ये
तुव्यासोमंत्राधिपाधिपः ॥५१॥ आदिबीजंस्थिरशदोषज्ञानबीजंविमुक्तिदम् ॥ सर्वपापक्षयकरंस
र्वव्याधिविनाशनम्॥५२॥ ध्यायेच्छशांकशतकोटचतिसौख्यकांतिंसंसिच्यमानममृतोरुघटैःसुरे

शैः ॥ वर्णाभिमानिभिरजेशमुखैःसदैवपंचाशताप्रतिगिरंतमशेषविद्याः ॥५३ ॥ सोद्देशस्तुस्वयंदी
र्घपूर्वार्णाद्योनमोयुतः ॥ सर्वविद्याप्रदोष्टार्णःप्रतिवादिजयप्रदः ॥ विमुक्तिसाधनःकीर्तिबुद्धिस्थै
र्यप्रदःसदा ॥ ५४॥ वंदेतुरंगवदनंशशिबिंबसंस्थंचंद्रावदातममृतात्मकरैःसमंतात् ॥ अंडांतरंबहि
रपिप्रतिभासयंतंशंखाक्षपुस्तकसुबोधयुताब्जबाहुम् ॥५५॥ नस्तोमुखादपिनिरंतरमुद्गिरंतंविद्या
अशेषतउताब्जभवेशमुख्यैः ॥ संसेव्यमानमतिभक्तिभरावनम्रैर्लक्ष्म्यामृतेनसततंपरिषिच्यमा
नम् ॥ ५६ ॥ स्वयमुद्देशवान्पूर्ववर्णपूर्वोनमोयुतः ॥ सताराष्टाक्षरश्चैवनवार्णश्चमनूस्मृतौ ॥
॥ ५७ ॥ प्रोद्यद्दिवाकरसमानतनुंसहस्रसूर्योरुदीधितिभिरासमस्तलोकम् ॥ ज्ञानाभयांकितक
रंकपिलंचदत्तंध्यायेदजादिसमितिंप्रतिबोधयंतम् ॥ ५८ ॥ अध्येष्यताज्ञानमोक्षप्रदौभक्तेष्विमौ
सदा ॥ सूक्तंदीर्घतमोदृष्टंविष्णोनुकमितिप्रभोः ॥५९ ॥ सर्वार्थदंवात्संमदंयोजातइतिचापरम्॥
वासिष्ठंचपरोमात्रयेतिज्ञानविमुक्तिदम् ॥ ६०॥ भौवनीयंसर्वकाममोक्षदंयइमेत्यपि ॥ एवमेवा
खिलावेदाज्ञातव्याविष्णुतत्पराः ॥ ६१ ॥ स्वदृष्टंसूक्तमखिलकामदंहरितुष्टिदम् ॥ वाचोंभ्रि
ण्याःश्रियोंगानिश्रीर्लक्ष्मीर्मंदिरारमा ॥६२॥ कौशेयपीतवसनामरविंदनेत्रांपद्मद्वयाभयवरोद्यत
पद्महस्ताम् ॥ उद्यच्छतार्कसदृशींपरमांकसंस्थांध्यायेद्विधीशनुतपादयुगांजनित्रीम् ॥ ६३ ॥
लज्जाबीजंचतद्बीजंतस्याएवाभिधायकम् ॥ पाशांकुशौरक्तवस्त्रंलज्जाबीजेविशिष्यते ॥ ६४ ॥
अमध्ययुग्मस्वरगतेनैवंगमुदाहृतम् ॥ सत्ताबीजंचदुर्बीजंतद्वदेवप्रकीर्तितम् ॥ ६५ ॥ वर्णःश्या
मोविशेषोत्रतांबूलंनीलमुत्पलम् ॥ चक्रशंखौतर्जनंचशूलमित्यपरत्रच ॥ ६६ ॥ नमोंतःस्वेनस

हितस्तदेवान्योमनुःस्मृतः ॥ दुर्गात्रिष्टुप्कश्यपोक्तातत्रवर्णोग्निवत्स्मृतः ॥ ६७ ॥ त्रिनेत्रत्वंच
दुर्गायाःप्रायःसर्वत्रकथ्यते ॥ पादैःसमस्तेनतथाषड्वर्णैनांगमुच्यते ॥ ६८ ॥ रमायाएवरूपा
णित्वेतानिहिविदोविदुः ॥ मुख्यतोजामदग्न्यस्तुदेवतास्यमनोःस्मृतः ॥ ६९ ॥ हिरण्यगर्भसूक्तं
चभृगुदृष्टंप्रकीर्तितम् ॥ ब्रह्मधातृविरिंचाजपाग्नैरंगमुदाहृतम् ॥ ७० ॥ ध्यायेन्निषण्णमजम
च्युतनाभिपद्मेप्रोद्यद्दिवाकरसमूहनिकाशमग्र्यम् ॥ मातृप्रकारकरमुत्तमकांतिमद्भिर्वक्त्रैःसृजंतम
खिलैःपरमार्थविद्या ॥ ७१ ॥ स्वयमुद्देशनतिमांस्तस्यपंचाक्षरोमनुः ॥ स्वयमेवापरोष्टार्णस्तादृ
शःसंप्रकीर्तितः॥७२॥ बळाद्यंभृगुणादृष्टंप्राणाग्नेःसूक्तमुच्यते ॥ प्राणाद्यैःपंचभिस्तस्याप्यंगान्यु
क्तानिसूरिभिः ॥ ७३ ॥ उद्यद्रविप्रकरसन्निभमच्युतांकेस्वासीनमस्यनुतिनित्यवचःप्रवृत्तिम् ॥
ध्यायेद्गदाभयकरंसुकृतांजलिंतंप्राणंयथेष्टतनुभुन्नतकर्मशक्तिम् ॥ ७४ ॥ प्राणाद्याःपंचमंत्राश्च
तस्यदेवस्यवाचकाः ॥ उच्यतेहरिरप्येतैःसाक्षान्नारायणादिकः ॥७५॥ ब्रह्माण्याअपिभारत्या
गौरीर्यस्तइतिश्रुतौ ॥ मंत्रौदीर्घतमौदृष्टौसर्वाभीष्टप्रदायकौ॥७६॥ उद्यद्दिवाकरसमूहनिभांस्वभ
र्तुरंकेस्थितामभयसद्वरबाहुयुग्माम्॥मुद्रांचतत्त्वदृशयेवरपुस्तकंचदोर्युग्मकेनदधतींस्मरतात्मवि
द्याम्॥७७॥पादैर्व्यस्तैःसमस्तैश्चतदंगानिविदोविदुः॥स्वयमुद्देशनत्यंतौमंत्रौद्वावपरौतयोः॥७८॥
मंत्राएतेहरेःप्रीतिदायकाःसर्वकामदाः॥इष्टंदैवंहरिःसाक्षाल्लक्ष्मीर्भाग्यस्यदेवताः॥७९॥गुरुर्ब्रह्मा
थवायुर्वाविद्यादेव्यौप्रकीर्तिते॥ तस्मादेतेप्रियाविष्णोरंतरंगतयासदा ॥८०॥ ज्ञेयाश्चैवप्रपूज्याश्च
विष्णोःप्रीतिमभीप्सता ॥ उद्देशनतियुङ्मंत्रःस्वयमेवशिवस्यतु ॥८१॥ वर्णैरेतैस्तदंगानिवामदेवो

मुनिःस्मृतः॥पङ्क्तिशब्दार्थविज्ञानेनहिच्छंदसिसंशयः ॥८२॥ ध्येयःपंचमुखोरुद्रःस्फटिकामलकां
तिमान् ॥ विद्युच्छुभ्रासितरजःश्यामान्यस्यमुखानिच ॥ ८३ ॥ जटाबद्धेंदुकलःप्रियायुङ्नाग
भूषणः॥मंत्रेष्वेतेषुसर्वेषुवाच्यस्तारेणकेशवः ॥ ८४ ॥ अंतर्यामितयाध्येयःसर्वदेवेषुसर्वदा ॥ स
एववनितालिंगःपार्वत्यामनुरुच्यते ॥ ८५ ॥ गौरीवराभयकराध्येयापीतांबराचसा ॥ स्वयमुद्देशन
त्यंतःपूर्वपूर्वःषडक्षरः ॥ ८६ ॥ सनत्कुमारदृष्टोयंमंत्रःशेषस्यकामदः ॥ दधानोहलसौनंदश्वेतव
र्णःकृतांजलिः ॥ ८७ ॥ सहस्रमूर्धाऽद्वितीयकर्णभूषःप्रियायुतः ॥ वनमालीनीलवासाध्येयोवि
ष्णोस्तुपृष्ठतः ॥ ८८ ॥ व्यत्यस्तपक्षितारोचस्वाहांतोगारुडोमनुः ॥ काश्यपोस्यमुनिर्ध्येयःसु
धापूर्णहिरण्मयम् ॥ ८९ ॥ दधानःकुंभमभयंपीतःशुक्लोरुणोहरिः ॥ कृष्णश्चाजानुतोनाभेःकंठा
त्कादंतएवच ॥ ९० ॥ प्रियायुक्पुरतोविष्णोःपक्षतुंडसमन्वितः ॥ जंगमस्थावरविषहृदयंसर्वका
मदः ॥ ९१ ॥ मंत्राश्चलोकपालानांनमोंताःसर्वकामदाः ॥ पीतरक्तासितश्वेतशुक्लरक्ताश्चवर्णतः
॥ ९२॥ सप्रियाःसाभयावज्रशशिदंडासिपाशिनः ॥ गदाकुमुदशूलर्ष्टिखड्गिनोभूषणोज्वलाः ॥
॥ ९३ ॥ अग्निश्चस्वयमुद्देशीसनमस्कंदवाचकः ॥ कौशिकोस्यमुनिर्वह्निवर्णःषण्मुखउज्ज्वलः
॥ ९४ ॥ धनुःशक्तिधरोध्येयःकामदोभयनाशनः ॥ ह्रस्वःकृपालुःसेनश्चस्वयमन्यःस्वयंतथा
॥ ९५ ॥ सतारोष्टाक्षरःसौरःक्रमव्युत्क्रमतःपदैः ॥ अंगानिपद्मयुगलधरोध्येयोरुणोरविः ॥ ९६॥
सर्वव्याधिहरःश्रीदोवृष्टिदोयंमनुःस्मृतः ॥ मोनयदासाप्रभक्षिव्यत्यस्तोविघ्नराणमनुः ॥ ९७ ॥
रक्तांबरोरक्ततनूरक्तमाल्यानुलेपनः ॥ महोदरोगजमुखःपाशदंतांकुशाभये ॥ ९८ ॥ बिभ्रद्ध्येयो

विघ्नहरःकामदस्त्वरयाह्वयम् ॥ तत्रतत्रस्थितोविष्णुस्तत्तच्छक्तीःप्रबोधयन् ॥ ९९ ॥ एकएव
महाशक्तिःकुरुतेसर्वमंजसा ॥ स्वयमुद्देशवान्पूर्वंपूर्वोक्तहृदयसंयुतः ॥ १०० ॥ धान्वंतरोम
हामंत्रःसंसृतिव्याधिनाशनः ॥ अत्रोक्तसर्वमंत्राणांनायकोपलसन्निभः ॥ १ ॥ चंद्रौघकांतिम
मृतात्मकरैर्जगंतिसंजीवयंतममितात्मसुखंपरेशम् ॥ ज्ञानंसुधाकलशमेवचसंदधानंशीतांशुमंडल
गतंस्मरतात्मसंस्थम्॥२॥मूर्ध्निस्थितादमुतएवसुधांस्रवंतंभ्रूमध्यगाच्चततएवचतालुसंस्थात्॥ हा
र्दाच्चनाभिसदनादधरस्थिताच्चध्यात्वाभिपूरिततनुर्दुरितंनिहन्यात्॥३॥ अज्ञानदुःखभयरोगमहा
विषाणियोगोयमाशुविनिहंतिसुखंचदद्यात्॥ उन्मादविभ्रमहरःपरतश्चसांद्रस्वानंदमेवपदमापय
तिस्मनित्यम् ॥ ४ ॥ ध्यात्वैवहस्ततलगंस्वमृतंस्रवंतंदेवंसयस्यशिरसिस्वकरंनिधाय ॥ आवर्तय
न्मनुमिमंसचवीतरोगःपापादपैतिमनसायदिभक्तिनम्रः ॥ ५ ॥ शतंसहस्रमयुतंलक्षंवारोगसंक्ष
यात्॥इममेवजपेन्मंत्रंसाधूनांदुःखशांतये ॥६॥ज्वरदाहादिशांत्यर्थंतर्पयेन्मनुनामुना॥ध्यात्वाह
रिंजलेसमरात्रिजूर्तिर्विनश्यति॥७॥अयुतामृतसमिद्धोमाद्धोघृतक्षीरसंयुतात्॥सर्वेरोगाविनश्यंति
विमुखोनहरेर्यदि ॥ ८ ॥ भूताभिचारशांत्यर्थमपामार्गाहुतिक्रिया ॥ द्विगुणामृतयापश्चात्केवले
नघृतेनवा ॥ ९ ॥ आयुर्विवृद्धयेनित्यंजन्मनक्षत्रएववा ॥ चतुश्चतुर्भिर्दूर्वाभिःक्षीराज्याक्ताभि
रिष्यते ॥ १० ॥ सर्वाःक्रियाहरेर्भक्तैर्हरिभक्तैःस्वनुष्ठिताः ॥ गुरुभक्तैःसदाचारैःफलंत्यद्धानचा
न्यथा ॥ ११ ॥ ब्रह्मांतागुरवश्चैवसंप्रदायप्रवर्तकाः ॥ तत्तद्गुणानुसारेणपूज्यामान्याश्चक्रमशः
॥ १२ ॥ सर्वेभ्योभ्यधिकाभक्तिर्विष्णौस्यादतिनिश्चला ॥ लक्ष्मीब्रह्मादिषुततःक्रमेणस्यात्सुभा

विता ॥ १३ ॥ एवंविद्याःफलिष्यंतिनान्यथातुकथंचन ॥ शुभान्ध्यायंतियेकामानुगुरुदेव
प्रसादजान् ॥ १४ ॥ इतरानात्मपापोत्थांस्तेषांविद्याफलिष्यति ॥ मुक्तावपिचसंसारेनात्मनोवि
ष्णुतांकाचित् ॥ १५॥ ब्रह्मरुद्रादिभावंवासाम्यंवाधिक्यमेववा ॥ अतद्वशत्वमथवायःस्मरेत्सतु
सिद्धिभाक् ॥ १६ ॥ नान्यथासिद्धिमाप्नोतिकल्पकोटिशतैरपि ॥ स्मृत्वागुरुंपूर्वगुरुमादिमूलगु
रूंस्तथा ॥ १७ ॥ देवतांवासुदेवंचविद्याभ्यासीतुसिद्धिभाक् ॥ अवज्ञातागुरूणांचदेवतानांन
सिध्यति ॥ १८ ॥ प्रयातिचतमोघोरंमंत्रावज्ञाकृदेवच ॥ यस्तारतम्यवेत्तास्याद्गुरूणांदेव
तास्वपि ॥१९॥ भक्तिमान्गुरुदेवेषुतद्भक्तेषुचसिध्यति ॥ गुरुदेवप्रतीपानांविमुखस्तत्प्रियेरतः
॥२० ॥ अकामक्रोधलोभश्चनचिरात्सिद्धिमाप्नुयात् ॥ सकामेभ्योमितगुणाह्यकामैस्तुकृताःक्रि
याः ॥ २१ ॥ तस्मादकामएवालंभजेद्विष्णुंसनातनम् ॥ अयंमेहस्तइतिचमंत्रःपूर्वोक्तवत्स्मृतः
॥ २२ ॥ अत्रोक्तास्तुक्रियाःसर्वमंत्रेष्वप्युपलक्षणम् ॥ विजयस्तंभनादीनिनारसिंहैर्विशेषतः
॥२३ ॥ जामदग्न्यैश्चकार्याणिराघवैर्यादवैरपि ॥ वाराहैस्तंभनंक्षिप्रंश्रीकराःकथिताःपुरा॥२४॥
बहुबाहुंमहाकायमुद्युक्तंचोद्यतायुधम् ॥ स्मरन्विजयमाप्नोतिस्तंभनादींश्चकारयेत् ॥ २५ ॥
वसुपूर्णकरंरत्नपर्वतस्थंविभावयन् ॥ वसुसिद्धिमवाप्नोतिसेव्यमानमजादिभिः ॥ २६ ॥ श्रि
याविभूतिभिर्युक्तंभावयन्भूतिमाप्नुयात्॥यद्यन्मनोगतंतस्यतत्तदाप्नोत्यसंशयम्॥२७॥तथातथा
हरिंध्यायन्क्रियास्तास्ताश्चसाधयन्॥श्रियेपद्मानिजुहुयात्संप्रीत्याउत्पलानिच ॥२८ ॥ शरानुज
यायजुहुयादभिमंत्र्यप्रयोजयेत्॥विद्यायैमंत्रितंवारिवचांवातुलसीमपि ॥२९॥ ब्राह्मींघृतंसुवर्णं

वाशतावृत्त्यातुनित्यशः॥अकुर्वंश्चक्रियांभक्त्यानिरपेक्षोभजन्हरिम्॥३०॥सर्वमेतदवाप्नोतिविशेषे
णनसंशयः॥सृष्टिस्थितिलयन्यासाःप्रातिलोम्यानुलोमतः ॥३१॥ स्थित्यंताएववर्णानांश्रेष्ठाए
वंचतुर्दश॥संहृत्यंतामोक्षिणांचएकविंशतिरेववा॥३२॥पादहृत्केषुनाभ्यास्ययुक्तंचसललाटकम्॥
सनासिकासदृग्जान्वासश्रोत्रंसोरुकंतथा ॥ ३३ ॥ सोरस्कंचसकंठचसभुजद्वयमेवच ॥ सगंडयु
ग्मंसालीकंसतुंडकोडकंतथा ॥ ३४ ॥ समूलंचसगुह्यंचसपार्श्वद्वयमेवच ॥ सदोर्द्वयंव्यापकंचग
लपार्श्वद्वयेनच ॥ ३५ ॥ ककुत्स्तनद्वयेनापिपृष्ठमूलेनसर्वशः ॥ न्यासोयथाक्रमंप्रोक्तोमंत्रेष्वेते
षुकृत्स्नशः ॥ ३६ ॥ प्रतिमायामात्मनिचन्यासोयंसन्निधानकृत् ॥ बीजांतःसाध्यमध्यंचवि
भक्तदलमंत्रयुक् ॥ ३७ ॥ वर्णानुप्रातिलोम्येनवृत्तंभूपुरसंयुतम् ॥ बीजसंदृब्धकोणंचयंत्रंरक्षो
दिसाधकम् ॥ ३८ ॥ समंतत्सर्वमंत्रेषुजसंधार्यंतुवाभुवि ॥ विलिख्यमंडलेवातत्पूजयेद्धरिमंजसा
॥ ३९ ॥ प्रतिमालक्षणैर्यावद्युक्तआचार्यउत्तमः ॥ सर्ववित्तपसायुक्तआज्ञाशक्तियुतोहरेः
॥ १४० ॥ यावद्भक्तोथथालब्धैर्गुणैर्युक्तोथवैष्णवः ॥ गुरुःसत्संप्रदायज्ञस्तारतम्येनसिद्धिदः
॥ ४१ ॥ उत्तमादुत्तमासिद्धिर्धर्ममोक्षादिषुस्फुटम् ॥ तस्मादुत्तमआचार्यैलब्धेनातोवरंव्रज
त् ॥ ४२ ॥ एकस्यशिष्यतांप्राप्यतदाज्ञांनविनासमम् ॥ अवरंवाव्रजेदुच्चगुणश्चेन्नैवदुष्यति
॥ ४३ ॥ विशेषतोगुणश्चस्याद्देवेष्वप्येवमेवहि ॥ तस्मादुत्तममाचार्यंदेवेशंचाश्रयेद्धरिम्
॥ ४४ ॥ अपरोक्षदृशेरेवयस्मान्मोक्षोनचान्यथा ॥ अपरोक्षदृशिश्चैवश्रवणान्मननादनु
॥ ४५ ॥ सम्यङ्निश्चिततत्त्वस्यनिदिध्यासनयाभवेत् ॥ द्विविधासाचसंप्रोक्ताविष्णुशास्त्रावमर्श

नम्॥ ४६॥ एकंध्यानंहरेरन्यच्चत्वार्यंगानितस्यच॥यमश्चनियमश्चासौप्राणायामइतीरितः॥४७॥
अहिंसासत्यमस्तेयंब्रह्मचर्यापरिग्रहौ ॥ यमाःशौचंतपस्तुष्टिःस्वाध्यायोहरिपूजनम् ॥ ४८ ॥
नियमावीरपद्मेचस्वस्तिकाद्यानिचासनम् ॥ रेचकःपूरकश्चैवकुंभकश्चत्रिधास्मृतः ॥४९॥ प्राणा
यामःस्मृतिंविष्णोर्विनानियमउच्यते ॥ अधीतिस्मृतियुक्तोहिनिदिध्यासनमेवहि ॥१५०॥ प्रा
णायामेचविष्णोर्यत्स्मरणंध्यानमेवतत् ॥ आसांशौचंप्राणयमोनिष्परिग्रहपूर्वकाः ॥ ५१ ॥ तप
आद्याःक्रमात्सर्वेउत्तरोत्तरतोधिकाः ॥ सर्वतःश्रवणाद्यास्तुमुख्यामुक्तिप्रसाधने ॥ ५२ ॥ अज्ञ
स्यश्रवणंश्रेष्ठमयुक्तेर्मननंतथा॥ध्याननिश्चिततत्त्वस्यतस्माच्छास्त्रावमर्शनम् ॥५३॥ स्वयंदशगु
णंतस्माद्व्याख्यैकस्यशतोत्तरा ॥ अपरोक्षदृशाप्येषाकर्तव्याविष्णुतुष्टिदा ॥ ५४ ॥ यइमंपरमं
गुह्यंमद्भक्तेष्वभिधास्यति ॥ भक्तिंमयिपरांकृत्वामामेवैष्यत्यसंशयः ॥ ५५ ॥ नचतस्मान्मनु
ष्येषुकश्चिन्मेप्रियकृत्तमः ॥ भवितानचमेतस्मादन्यःप्रियतरोभुवि ॥ ५६ ॥ शौचासनेत्वंगमा
त्रंनपृथग्धर्मकारणम् ॥ प्राणायामादयस्तुष्टिपर्यंताद्विगुणाधिकाः॥५७॥स्वाध्यायातःकोटिगुण
स्ततोनंतगुणाहरेः ॥ पूजातत्रिगुणंध्यानमितिधर्मक्रमःस्मृतः ॥५८॥ ऊर्वोरधःपदोरूर्ध्वंविभागे
नेतिचत्रिधा ॥ आसनत्रयमुद्दिष्टंमंत्रस्मरणपूर्वकम् ॥ ५९॥ द्विगुणोत्तरंरेचकादिषोडशादिक्रमे
णतु ॥ मात्राणांह्रस्ववर्णस्यकालोमात्रेतिशब्द्यते ॥ १६० ॥ क्रमेणैवाभ्यसेन्मात्रांवृद्धिमेका
ग्रधीःपुनः ॥ रेचयित्वादक्षिणतःपूरयित्वाचवामतः ॥ ६१ ॥ कुंभकश्चसुषुम्नायांविष्णुंवायुंचसं
स्मरेत् ॥ मूलाधारंसमारभ्यत्वामूर्धानमृजुस्थिता ॥ ६२ ॥ मध्येसुषुम्नाविज्ञेयावज्रीकार्यात्मका

शिका ॥ वैद्युताब्रह्मनाडीतिसैवपंचप्रभेदिनी ॥ ६३ ॥ पृष्ठमेवाग्रदक्षांतभेदास्तेषुक्रमेणतु ॥
हरिर्नीलःसितःपिंगोलोहितश्चात्रकेशवः ॥ प्रद्युम्नादिस्वरूपेणध्येयःसिद्धिमभीप्सता ॥ ६४ ॥
मूलेचनाभौहृदयेंद्रयोनिभ्रूमध्यमूर्धद्विषडंतकेषु ॥ चतुःषडष्टद्विचतुर्द्विषट्कदलेषुपद्मेषुसितारु
णेषु ॥ ६५ ॥ पंचात्मकोसौभगवान्सदैवध्येयोहृदंतान्यरुणानितानि ॥ त्रिकोणवह्नौचषडस्रवा
यौद्विस्तावदस्रविवृत्तशशित्रिवह्नौ ॥ ६६ ॥ वृत्तेविधावपिविचिंत्यमिदंदशार्धरूपंसितंतदखि
लंहृदयात्परस्थम् ॥ इडाचापिंगलाचैववज्रिकाधारिणीतथा ॥ ६७ ॥ सुषुम्नायाश्चतुर्दिक्षुवज्रि
काद्यासुतत्रच ॥ चतुर्मूर्तिःसभगवान्हृदयेसंव्यवस्थितः ॥ ६८ ॥ द्वासप्ततिसहस्राणिनाड्योन्या
स्तुप्रधानतः ॥ बृहतीसहस्रस्पर्शानामृचांवाच्योत्रकेशवः ॥ ६९ ॥ रूपाणांलक्षणंतेषांरहस्य
त्वान्नकथ्यते ॥ १७० ॥ विष्णुनाब्रह्मणेप्रोक्तंग्रंथसंकोचतस्तथा ॥ खंडस्मृतिर्धारणास्यादखं
डाध्यानमुच्यते ॥ ७१ ॥ अप्रयत्नात्समाधिश्चदर्शनंचिरयानया ॥ अथवासततंशास्त्रविमर्शेन
भविष्यति ॥ ७२ ॥ परमस्नेहसंयुक्तयथार्थज्ञानतोभवेत् ॥ साभक्तिरितिविज्ञेयासाधनंभोग
मोक्षयोः ॥ ७३ ॥ मुख्यमेषैवनान्यत्स्यात्सर्वंव्यर्थंतयाविना॥ सैकाप्यभीष्टफलदामोक्षोदर्शनयु
क्तया ॥ ७४ ॥ दर्शनंचतयाहीनंव्यर्थमन्यत्किमुच्यते ॥ योग्यंतुदर्शनंनैवतयाहीनंभविष्यति ॥
॥ ७५ ॥ आनंदचित्सदितिपूर्वगुणैःसमस्तैर्मत्यादिभिर्विधिपरैर्भगवान्क्रमेण ॥ ध्यातोधिकैर
धिगुणोधिकमेवसौख्यंमुक्तौददातिसततंपरमस्वरूपः ॥ ७६ ॥ निर्दोषाखिलसंपूर्णगुणेनहरिणा
स्वयम् ॥ ब्रह्मणेकथितात्तंत्रसारादुद्धृत्यसादरम् ॥ ७७ ॥ आनंदतीर्थमुनिनाकृतोग्रंथोयमंज

सा ॥ ग्रंथोयंपाठमात्रेणसकलाभीष्टसिद्धिदः ॥ ७८ ॥ किमुज्ञानादनुष्ठानादुभयस्मात्पुनःकि
मु ॥ ७९ ॥ यस्यत्रीण्युदितानिवेदवचनेरूपाणिदिव्यान्यलंबद्दत्तद्दर्शनमित्थमेवनिहितंदेवस्यभ
र्गोमहत् ॥ वायोरामवचोनयंप्रथमकंपृक्षोद्वितीयंवपुर्मध्वोयत्तुतृतीयमेतदमुनाग्रंथःकृतःकेशवे
॥ १८० ॥ अशेषदोषोज्झितपूर्णसद्गुणंसदाविशेषापगतोरुरूपम् ॥ नमामिनारायणमप्रतीपंसदा
प्रियेभ्यःप्रियमादरेण ॥ ८१ ॥ इतिश्रीमदानंदतीर्थभगवत्पादाचार्यविरचितेश्रीमत्तंत्रसारसंग्रहे
चतुर्थोऽध्यायःसंपूर्णः ॥ ४ ॥ समाप्तोयंग्रंथः ॥ ॥ छ ॥ ॥ छ ॥



श्रीमद्धनुमद्भीममध्वांतर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवायनमः ॥ हरिः ॐ ॥ यस्मि
न्सर्वाणिकर्माणिसंन्यस्याध्यात्मचेतसा ॥ निराशीर्निर्ममोयातिपरंजयतिसोच्युतः ॥ १ ॥ स्मृ
त्वाविष्णुंसमुत्थायकृतशौचोयथाविधि ॥ धौतदंतःसमाचम्यस्नानंकुर्याद्विधानतः ॥ २ ॥ उद्धृते
तिमृदालिप्यद्विषडष्टषडक्षरैः ॥ त्रिर्निमज्याऽघ्यसूक्तेनप्रोक्षयित्वापुनस्ततः ॥ ३ ॥ मृदालिप्य
निमज्ज्यत्रिस्त्रिर्जपेदघमर्षणम् ॥ स्रष्टारंसर्वलोकानांस्मृत्वानारायणंपरम् ॥ ४ ॥ यतःश्वासोनि
मग्नोप्सुप्रणवेनोत्थितस्ततः ॥ सिंचेत्पुरुषसूक्तेनस्वदेहस्थंहरिंस्मरन् ॥ ५ ॥ वसित्वावासआच
म्यप्रोक्ष्याचम्यचमंत्रतः ॥ गायत्र्याचांजलिंदत्त्वाध्यात्वासूर्यगतंहरिम् ॥ ६ ॥ मंत्रतःपरिहृत्या
थसमाचम्यसुरादिकान् ॥ तर्पयित्वानिपीड्याथवासोविस्तृत्यचांजसा ॥ ७ ॥ अर्कमंडलगंवि
ष्णुंध्यात्वैवत्रिपदींजपेत् ॥ सहस्रपरमांदेवींशतमध्यांदशावराम् ॥ ८ ॥ आसूर्यदर्शनात्तिष्ठेत्तत
स्तूपविशेतवा ॥ पूर्वांसंध्यांसनक्षत्रामुत्तरांसदिवाकराम् ॥ ९ ॥ उत्तरामुपविश्यैववाग्यतःसर्व
दाजपेत् ॥ ध्येयःसदासवितृमंडलमध्यवर्तीनारायणःसरसिजासनसन्निविष्टः ॥ केयूरवान्मकर
कुंडलवान्किरीटीहारीहिरण्मयवपुर्धृतशंखचक्रः ॥ १० ॥ गायत्र्यात्रिगुणंविष्णुंध्यायन्नष्टाक्षरंज
पेत् ॥ प्रणम्यदेवान्विप्रांश्चगुरूंश्चहरिपार्षदान् ॥ ११ ॥ एवंसर्वोत्तमंविष्णुंध्यायन्नेवार्चयेद्ध
रिम् ॥ ध्यानप्रवचनाभ्यांचयथायोग्यमुपासनम् ॥ १२ ॥ धर्मेणेज्यासाधनानिसाधयित्वावि
धानतः ॥ स्नात्वासंपूजयेद्विष्णुंवेदतंत्रोक्तमार्गतः ॥ १३ ॥ वैश्वदेवंबलिंचैवकुर्यान्नित्यंतदर्पण
णम् ॥ इष्टंदत्तंहुतंजसंपूर्तंयच्चात्मनःप्रियम् ॥ १४ ॥ दारान्सुतान्प्रियान्प्राणान्परस्मैसन्निवेद

येत् ॥ भुक्तशेषंभगवतोभृत्यातिथिपुरस्सरः ॥ १५ ॥ भुंजीतहृद्गतंविष्णुंस्मरंस्तद्गतमानसः ॥
आचम्यमूलमंत्रेणकोष्ठंसमभिमंत्रयेत् ॥ १६ ॥ वेदशास्त्रविनोदेनप्रीणयन्पुरुषोत्तमम् ॥ अ
हःशेषंनयेत्संध्यामुपासीताथपूर्ववत् ॥ १७ ॥ यामात्परतएवाथस्वपेद्ध्यायञ्जनार्दनम् ॥ अंत
रालेततोबुद्ध्वास्मरेतबहुशोहरिम् ॥ १८॥कायेनवाचामनसेंद्रियैर्वाबुद्ध्यात्मनावानुसृतःस्वभावम्॥
करोमियद्यत्सकलंपरस्मैनारायणायेतिसमर्पयेत्तत् ॥ १९ ॥ द्वाविमौपुरुषौलोकेक्षरश्चाक्षरएव
च ॥ क्षरःसर्वाणिभूतानिकूटस्थोक्षरउच्यते ॥ २० ॥ उत्तमःपुरुषस्त्वन्यःपरमात्मेत्युदाहृतः ॥
योलोकत्रयमाविश्यबिभर्त्यव्ययईश्वरः ॥ २१ ॥ यस्मात्क्षरमतीतोहमक्षरादपिचोत्तमः ॥ अ
तोस्मिल्लोकेवेदेचप्रथितःपुरुषोत्तमः ॥ २२ ॥ योमामेवमसंमूढोजानातिपुरुषोत्तमम् ॥ ससर्ववि
द्भजतिमांसर्वभावेनभारत ॥ २३ ॥ इतिगुह्यतमंशास्त्रमिदमुक्तंमयानघ ॥ एतद्बुद्ध्वाबुद्धिमा
न्स्यात्कृतकृत्यश्चभारत ॥ २४ ॥ रुद्रंसमाश्रितादेवारुद्रोब्रह्माणमाश्रितः ॥ ब्रह्मामामाश्रितो
नित्यंनाहंकंचिदुपाश्रितः॥२५॥ येमेमतमिदंनित्यमनुतिष्ठंतिमानवाः ॥श्रद्धावंतोनसूयंतोमुच्यं
तेतेपिकर्मभिः ॥ २६ ॥ येत्वेतदभ्यसूयंतोनानुतिष्ठंतिमेमतम् ॥ सर्वज्ञानविमूढास्तान्विद्धिनष्टा
नचेतसः ॥ २७ ॥ द्वौभूतसर्गौलोकेस्मिन्दैवआसुरएवच ॥ विष्णुभक्तिपरोदैवोविपरीतस्तथासु
रः ॥ २८ ॥ स्मर्तव्यःसततंविष्णुर्विस्मर्तव्योनजातुचित् ॥ सर्वेविधिनिषेधाःस्युरेतयोरेवकिंकराः
॥ २९ ॥ धर्मोभवत्यधर्मोपिकृतोभक्तैस्तवाच्युत ॥ पापंभवतिधर्मोपियोनभक्तैःकृतोहरेः ॥३०॥
मन्मनाभवमद्भक्तोमद्याजीमांनमस्कुरु ॥ नित्यंभवेच्चमन्निष्ठोबुभूषुःपुरुषस्तथा ॥ ३१ ॥ एषनि

त्यः सदाचारोगृहिणोवनिनस्तथा ॥ वैश्वदेवंबलिंदंतधावनंचाप्यृतेबटोः ॥ ३२ ॥ एवमेवयतेः
स्वीयवित्तेनतुविनासदा ॥ मूलमंत्रैःसदास्नानंविष्णोरेवचतर्पणम् ॥ ३३ ॥ विशेषोनिष्क्रिययते
रजलांजलिनातथा ॥ तर्पणंतुहरेरेवयतेरन्यस्यचोदितम् ॥ ३४ ॥ समिद्धोमोबटोश्चैवस्मृत्वा
विष्णुंहुताशने ॥ सर्ववर्णाश्रमैर्विष्णुरेकएवेज्यतेसदा ॥ ३५ ॥ रमाब्रह्मादयस्तस्यपरिवारतएव
तु ॥ ३६ ॥ कविंपुराणमनुशासितारमणोरणीयांसमनुस्मरेद्यः ॥ सर्वस्यधातारमचिंत्यरूपमा
दित्यवर्णंतमसःपरस्तात् ॥ ३७ ॥ वेदाहमेतंपुरुषंमहांतमादित्यवर्णंतमसस्तुपारे ॥ सर्वाणि
रूपाणिविचिंत्यधीरोनामानिकृत्वाऽभिवदन्यदास्ते ॥ ३८ ॥ धातापुरस्ताद्यमुदाजहारशक्रःप्र
विद्वान्प्रदिशश्चतस्रः ॥ तमेवंविद्वानमृतइहभवति नान्यःपंथाअयनायविद्यते ॥ ३९ ॥ आनंद
तीर्थमुनिनाव्यासवाक्यसमुद्धृतिः ॥ सदाचारस्यविषयेकृतासंक्षेपतःशुभा ॥ ४० ॥ अशेषक
ल्याणगुणनित्यानुभवसत्तनुः ॥ अशेषदोषरहितःप्रीयतांपुरुषोत्तमः ॥ ४१ ॥ इतिश्रीमदानंद
तीर्थभगवत्पादाचार्यविरचितासदाचारस्मृतिःसंपूर्णा ॥

॥ इति तन्त्रसारसंग्रहः ॥ सदाचारस्मृतिः ॥